# इति श्रीसौभाग्यपञ्चम्यादि पर्वकथा संग्रहः

पुस्तकें मिलने का पताः—

श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय

जैन प्रिंटिंग प्रेस

कोटा ( राज. )

# श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय

## से प्रकाशित सस्ती-सुन्दर और मनोहर पुस्तकें:—

| | | | |
|---|---|---|---|
| ६. बृहत्पर्युषणा निर्णय | भेंट | २५. गौतमपृच्छासार | भेंट |
| ७. षट् कल्याणक निर्णय | ,, | २८. चतुर्विंशति जिनेन्द्र स्तवनानि | ,, |
| ८. आत्मभ्रमोच्छेदनभानुः | ,, | २९. सामायिक जिनदर्शन विधिः | ,, |
| १०. आगमानुसार मुहपत्तिका निर्णय | ,, | ३०. चतुर्विंशति जिनस्तुतिः | ,, |
| १३. कल्पसूत्र हिन्दी भावार्थ | ३) | ३१. राईदेवसी प्रतिक्रमणमूल | ,, |
| १४. दसवैकालिक सूत्र-मूल-मूलार्थ | १) | ३३. आत्म भावना | ,, |
| १६. संस्कृत पर्वकथा संग्रहः | २॥) | ३४. भावारिवारणपादपूर्त्यादि स्तोत्र संग्रहः | ,, |
| १७. अनुत्तरोववाई सूत्र मूल-मूलार्थ | भेंट | ३५. श्रीनेमिदूतम् | १॥) |
| २२. उपासकदशांग सूत्र-मूल-मूलार्थ, टीका-टीकार्थ | २) | द्वादश पर्व व्याख्यान | २) |

॥१२३॥

पुत्रिका अभूवन् , ता महारूपवत्यो गुणवत्यश्चासन् , एकदा वनमध्ये क्रीडन्त्यस्ता गुरुभिः दृष्टा, आलापिताश्च–भो पुत्र्यः ! यूयं धर्मं कुरुध्वम् , युष्माकमायुरेकदिनप्रमाणमेव विद्यते. ताभिरुक्तम्–हे भगवन् ! एकदिनमध्ये को धर्मो भविष्यति, तदा गुरुभिरुक्तम्–यूयमद्य शुक्लज्ञानपंचमीतपः कुरुध्वम् , अद्यैव दिने पंचम्या उपवासं कृत्वा गृहे देवपूजां च कृत्वा पुण्यस्यानुमोदना कुरुध्वम् , ताभिरपि गृहे गत्वा तथैव कृतम्. अथ तस्मिन्नेव रात्रौ विद्युत्पाताच्चतस्रोऽपि मृत्वा प्रथमदेवलोके देवा जाताः, ततश्च्युत्वा तवैताः पुत्र्यः संजाता। अथ ताः सर्वा वार्ताः श्रुत्वा राजा जातिस्मरणं लब्ध्वा सपरिवारो रूप्यकुम्भ–स्वर्णकुम्भगुरूं नत्वा निजगृहे समागतः । कियत्कालानन्तरं राजा राज्ञी पुत्राः पुत्र्यश्च श्रीवासुपूज्यप्रभोः समीपे दीक्षां गृहीत्वा कर्मक्षयं च कृत्वा मोक्षं गताः । उक्तं च–

रोहिणीतप-पंचमीतप, गुरुआ ए तप जाणी । दुःखित होय करी सुखी होवे, पोले केवलनाणी ॥ १ ॥

॥ इति रोहिणी–अशोकराजकथा सम्पूर्णा ॥ १२ ॥

## इति श्रीपर्वकथा संग्रहः ।

दुःखं न वेति, पुनर्हे अशोकराजेन्द्र ! अस्या उपरि तवाधिकः स्नेहः कुतो वर्तते ? तस्यापि कारणं शृणु--सिंहसेननामा नृपतिः स्वयं सुगन्धाख्यं पुत्रं राज्येऽभिषिच्य सुगुरोःपार्श्वे दीक्षां ललौ, अथ सुगन्धराजोऽपि जिनशासनमाराध्य प्रान्ते समाधिना मृत्वा देवभवं गतः. ततश्च्युत्वा इहैव जम्बूद्वीपे विदेहे पुष्कलावत्यां विजये पुण्डरीकिणीनगर्यां विमलकीर्तिराज्ञः सुभद्राख्यायाः सधर्मिण्याः कुक्षौ चतुर्दशमहास्वप्नसूचितः स देवजीवोऽवातरत् । अथ क्रमेण शुभेऽह्नि सा देवी शुभलक्षणं पुत्रं प्रासूत, तस्य पित्रा अर्ककीर्तिरिति नाम निर्मिमृत, क्रमेण स चक्रवर्ती जातः, राज्यं भुंक्त्वा जितशत्रुमुनेः पार्श्वे स दीक्षामादाय दुष्करं तपस्तप्त्वा स्वायुः-क्षये च मृत्वा द्वादशे देवलोकेऽच्युतेन्द्रोऽभूत्, ततश्च्युत्वा त्वमयमशोकराजा जातः, रोहिणशाश्च वल्लभोऽभूः, युवाभ्यां रोहिणीतपःकरणाद् युवयोः परस्परमधिकः स्नेहो जातः अथ त्वं पुत्राणां कारणं शृणु---मथुरायामग्निशर्माख्यो ब्राह्मणो वसति, तस्य सप्त पुत्राः परं ते दरिद्रिणः । एकदा पाटलीनगरे ते सप्ताऽपि भ्रातरो भिक्षार्थं गच्छन्ति, तदा वाटिकामध्ये कश्चिद् राजकुमारः कन्दर्पावतारः क्रीडति. तं दृष्ट्वा शिवशर्मा ब्राह्मणः स्वबान्धवान् वक्ति--भो बान्धवाः ! विधिना कियदन्तरं कृतमस्ति, अयं राजकुमारो मनोवाञ्छितं सुखं भुनक्ति, वयं तु भिक्षार्थं गृहे गृहे भ्रमामः, तदैकेन भ्रात्रोक्तमस्मिन् विषये कस्योपालम्भो दीयते ? पूर्वभवेऽस्माभिः पुण्यं न कृतम्, अनेन राजकुमारेण च सुकृतं कृतम्, अतोऽसौ सुखं भुनक्ति. तदा तैः सर्वैरपि ब्राह्मणपुत्रैः जीवदयायुतं धर्मं पालयित्वा प्रान्ते गुरोः पार्श्वे दीक्षा गृहीता. मृत्वा च ते सप्तमे देवलोके देवा जाताः, ततश्च्युत्वा तव गुणपालादय इमे सप्त पुत्रा अभूवन् । तवाष्टमपुत्रजीवश्च वैताढ्यवासी क्षुल्लकविद्याधरोऽभूत् । स निरन्तरं नन्दीश्वरद्वीपे शाश्वतीं जिनप्रतिमां अपूजयत्, स विद्याधरो मृत्वा सौधर्मे देवो जातः । ततश्च्युत्वा तवायमष्टमो लोकपालाख्यः पुत्रो बभूव. अथ चतसृणां पुत्रीणां सम्बन्धं शृणु--वैताढ्यपर्वते एको विद्याधर आसीत्, तस्य चत्वारः

तदा मुनिर्वदति-सिंहपुरे सिंहसेनो राजा तस्य कनकप्रभाभिधाना राज्ञी वर्तते, तयोर्दुर्गन्धाख्यः पुत्रोऽभूत्, स क्रमेण यौवनं प्राप्तः, परं कस्यापि मनसि न रोचते, एकदा श्रीपद्मप्रभतीर्थंकरस्तत्रागतः। तं पद्मप्रभं वन्दित्वाऽसौ निजदुर्गन्धत्वकर्मणो विपाकं पृच्छति, तदा श्रीसर्वज्ञप्रभुः कथयति—नागोरनगराद् द्वादशे क्रोशे नीलनामा पर्वतोऽस्ति, तस्योपरि एका शिला तत्रैको मुनिर्मासक्षमणादि तपः करोति, तत्तपःप्रभावाच्च आखेटकस्याखेटकं निष्फलं याति, तदा स लुब्धकस्तस्य मुनेरुपरि ईर्षां करोति। एकदा स ऋषिः पारणार्थं ग्राममध्ये प्राप्तः, तस्मिन् समये तेन लुब्धकेन शिलाया अधोऽग्निं प्रज्वाल्य सा शिला अतीवोष्णा विहिता। अथ स ऋषिः पारणकं विधाय शिलाया उपरि स्थितः, बहुतापात् शुद्धध्यानाच्च स ऋषिः केवलज्ञानं प्राप्य मृत्वा मोक्षं गतः, अथ ऋषिघातात् स लुब्धकः कुष्ठी जातः, यतः—

ऋषिहत्याकरो जीवो, दुःखं भुंजति भूतले। संसारसागरे घोरे, पीड्यते च पुनः पुनः ॥ १ ॥

पश्चात् मृत्वा स सप्तमीं नरकावनिं गत्वा ततो मत्स्यो भूत्वा गोपालो जातः, परं स दरिद्री जातः, केनचिद् वणिजा च स नमस्कारं शिक्षितः। पश्चाद् दावानलमध्ये ज्वलितः। नमस्कारप्रभावाच्च त्वं राज्ञः पुत्रोऽयं दुर्गन्धोऽभूः। तत्श्रुत्वा जातिस्मरणं प्राप्य स प्रभुं पृच्छति-हे भगवन्! कथमहमथ सुगन्धो भवामि? तस्योपायं कृपां कृत्वा कथयत, तदा श्रीतीर्थंकरेण भणितम्-त्वं सप्तमासाधिकानि सप्तवर्षाणि यावद् रोहिणीतपः कुरु, पश्चाच्च तस्य तपसः उद्यापनं कुरु, तत्श्रुत्वा तेन रोहिणीतपः कृतम्, यस्य प्रभावात् स सुगन्धोऽभूत्। इति कथां श्रुत्वा सा दुर्गन्धा रोहिणीतपो विधिपूर्वकं कृत्वा सुगन्धा जाता. पश्चाद् मृत्वा सा देवी अभूत्. ततश्च्युत्वा चम्पायां श्रीवासुपूज्यस्य मघवापुत्रस्य पुत्रिकेयं रोहिणी नाम्नी तव राज्ञी जाता, पूर्वभवकृततपःप्रभावाद् इयमाजन्म यावद्

तीर्थं पुण्यपात्रमस्ति, तस्य दर्शनमपि महते पुण्याय. यत उक्तम्—

साधूनां दर्शनं पुण्यं, तीर्थभूता हि साधवः। तीर्थं फलति कालेन, सद्यः साधुसमागमः ॥ १ ॥

तदस्मै निःस्पृहाय मुनिसत्तमाय दत्तं दानं महते फलाय भवेद्, इति ध्यात्वा राजा स्वप्रियां प्राह—हे वरानने! अस्मै मुनये वलित्वा दानं देहि, तच्छ्रुत्वा क्रीडान्तरायं मत्वा बहिःप्रमोदभाग् अन्तश्च दुष्टा सा गृहं प्रति चचले, आगत्य गृहे द्वेषवशात् तया कटुतुम्बिकाशाकं मुनये दत्तम्, मुनिना तेनाहारेण पारणकं कृतम्, तद्भक्षणाच्च मुनिः पंचत्वं प्राप्तः शुभध्यानाच्च स देवलोके देवोऽभूत्, तां वार्तां श्रुत्वा राज्ञा राज्ञी स्वदेशतो निष्कासिता, सा सप्तमे दिने वराकी कुष्ठिनी जाता, चिरं जनैर्निन्द्यमाना सा मृत्वा षष्ठं नरकं जगाम। तत उद्धृत्य तिरश्चां योनौ समुत्पन्ना, ततो दुःखप्रचुरे सप्तमे नरके. एवं सर्वेषु नरकेषु सा पापा भ्रान्ता, ततः सा सर्पिणी, उष्ट्री, शृगाली, कुक्कुटी, तथा शूकरी, ततो गृहगोधा, जलौका, मूषिका, काकी, शुनी, बिलाडी, ततो रासभी, ततो गौः जाता तेषु भवेषु प्रायशः अग्निशस्त्रघाताद्यैः मृतिरभूद्, धेनुभवे स्वान्त्यसमये गुरूदितं नमस्कारं श्रुत्वाऽनुमोदयामास, मृतिं चाप, ततो नमस्कारप्रभावेण सा दुर्गन्धा दुर्भगा च तव तनया अभूत्। ततो दुर्गन्धा निजपूर्वभवं श्रुत्वा करौ योजयित्वा पृच्छति—हे स्वामिन्! एतस्माद् दुःखादहं कथं निःसरिष्यामि? तत् कथ्यतां. तदा मुनिना उक्तम्—त्वं दुःखभंजकं रोहिण्या व्रतं कुरु, तयोक्तम्—हे भगवन्! केन विधिनाहं तद्व्रतं करोमि, मुनिनोक्तम्, शृणु—रोहिणीनक्षत्रदिने श्री वासुपूज्यजिनबिम्बं पूजयित्वा सप्तमासाधिकं सप्तवर्षं यावद् उपवासं कुरु एवं शुभध्यानयुततपःप्रभावात्तव शुभं भविष्यति, पश्चाच्च त्वया तत्तपस उद्यापनं विधेयं येन तव सर्वं दुःखं यास्यति, सुगन्धराजवत्. तच्छ्रुत्वा दुर्गन्धा मुनिं प्रति पृच्छति—हे भगवन्! तस्य सुगन्धराजस्य वृत्तान्तं मयि कृपां विधाय कथयत,

लोकपालाख्यं राजा निजहस्तेन भूमावपातयत्। तदा तत्रस्थाः सर्वेजनास्तं तथा पतन्तं दृष्ट्वा हाहारवं कर्तुं लग्नाः परं रोहिण्या हृदि किंचिन्मात्रमपि दुःखं न जातम्, इतस्तं पतन्तं बालकं नगराधिष्ठितदेवेन धृत्वा सिंहासने स स्थापितः, तद् दृष्ट्वा सर्वे जनाश्चमत्कृताः सन्तो विचारयामासुः- नूतमियं रोहिणी धन्यैव या दुःखस्य वार्तामपि न जानाति।

इतश्च तत्र श्रीवासुपूज्यतीर्थंकरस्य रूप्यकुम्भ-स्वर्णकुम्भनामानौ द्वौ शिष्यौ ज्ञानवन्तौ समागतौ, तदा राजा परिवारयुतस्तौ वन्दितुं गतः, गुरुभ्यां च देशना दत्ता, देशनाश्रवणानन्तरं राज्ञा पृष्टम्-भो भगवन्! अनया रोहिण्यैवंविधं किं तपः कृतं येनेयं दुःखस्य वार्तामपि न जानाति, एतस्या अष्टौ पुत्राः चतस्रश्च पुत्र्यो जाताः सन्ति, तथा ममापि तस्या उपरि-अतीव स्नेहो वर्तते, अतः तस्याः कथां युवां कृपां विधाय कथयतम्, तच्छ्रुत्वा गुरुः कथयति. अस्मिन्नेव नगरे धनमित्रनामा श्रेष्ठी वसति, तस्य धनमित्रा नाम्नी च भार्याऽस्ति, तस्या एका दुर्गन्धा नाम्नी पुत्री, सा कुरूपा दुर्भगा च जाता एवंविधां तां कुरूपां दृष्ट्वा कोऽपि द्रव्येश्वरो नो परिणयति, तदा पित्रा एकं मार्यमाणं श्रीषेणाभिधं चौरं मोचयित्वा तस्या दुर्गन्धायाः स स्वामीकृतः, सोऽपि रात्रौ दुर्गन्धां त्यक्त्वा नष्ट्वा गतः, तदा श्रेष्ठी विषादं करोति, विलपन्ती पुत्रीं प्रति श्रेष्ठी कथयति, हे पुत्रि! त्वं विलापं मा कुरु, गृहद्वारि स्थिता दानं देहि धर्मं च कुरु येन तव दुष्कर्मदोषः प्रलीयते, अथ सा तदंगीकृत्य प्रत्यहं दानं ददाति। अथैकदा कश्चिद् ज्ञानी गुरुस्तत्र समागतः, तदा धनमित्रेण तं गुरुं वन्दित्वा तस्याः कन्यायाः स्वरूपं पृष्टम्. गुरुर्भणति-गिरिनारनगरे पृथिवीपालाभिधो राजाऽऽसीत्, तस्य सिद्धिमत्यभिधाना राज्ञी वर्तते, अथैकदा स राजा निजराज्ञीसहितो वने क्रीडां कर्तुं याति, तस्मिन् समये कश्चिद् मासक्षमणपारणकः सागरनामा मुनिः समागच्छति, भिक्षार्थमायान्तं मुनिं सागरं ऐक्षिष्ट, दृष्ट्वा विचारयति-एष साधुर्गुणाकरो महा-

च जाता । अथ क्रमेण यौवनावस्थां प्राप्ता, ईदृशीं तां दृष्ट्वा राजा चिन्तयति-नूनमियं रोहिणी वरयोग्या जाताऽस्ति. अथ राज्ञा स्वयंवरमण्डपं मण्डयित्वा सर्वेऽपि राजकुमारा आकारिताः तेऽपि च मण्डपे समागत्य स्थिताः । तस्मिन्नवसरे रोहिण्यपि स्नानं विलेपनं च कृत्वा क्षीरोदकसदृशे श्वेतवस्त्रे परिधाय मुक्ताभरणैरलंकृता साक्षाद् देवीव शिबिकायां स्थित्वा सखीभिः परिवृता तत्रागता । अथैका सखी तां रोहिणीं पुरस्कृत्य तस्या अग्रे राजकुमाराणां नाम-गोत्र-बल-वयो-यशः-प्रभृतीनां वर्णनं करोति । अथ तयाऽन्यानपि राजकुमारान् वर्जयित्वा नागपुरराज्ञो वीतशोकस्य पुत्रोऽशोककुमाराभिधो वृतः, तस्य कण्ठे च तस्या निजवरमाला क्षिप्ता, ततोऽन्ये सर्वेऽपि राजकुमाराः सहर्षा मिलित्वा तां च तया सह विवाह्य ततो भोजन-वस्त्र-ताम्बूलादि गृहीत्वा स्वस्वगृहे गताः । अशोककुमारोऽपि तत्र कतिचिद् दिनानि स्थित्वा सवधूको हस्त्यश्ववस्त्राभरणादियुतः प्रस्थाय नागपुरसमीपे समागतः । तदा वीतशोकराज्ञा तस्य पुरप्रवेश-महोत्सवः कृतः । कुमारोऽपि रोहिण्या सह विषयसुखानि भुनक्ति । अथैकदा शुभे दिनेऽशोककुमाराय राज्यं दत्त्वा वीतशोको राजा दीक्षां गृहीतवान् । ततोऽशोकराजा सुखेन राज्यं पालयति । क्रमेण अशोकराज्ञोऽष्टौ पुत्राश्चतस्रश्च पुत्रिका जाताः । अथैकदा रोहिण्या सहितो राजा सप्तम्यां भूम्यां गवाक्षे स्थितो लोकपालाख्यं पुत्रमुत्संगे धृत्वा क्रीडयति । तस्मिन् समये नगरे कस्याश्चित् स्त्रियः पुत्रो मृतः । सा स्त्री रुदती विलापांश्च कुर्वती तस्मिन् मार्गे समागता । तां दृष्ट्वा रोहिण्या राज्ञे पृष्टम्-भो महाराज ! किमिदं नृत्यम् ? राजा जगाद-हे प्रिये ! त्वं साहंकारं वचनं मा ब्रूहि, रोहिण्योक्तम्-स्वामिन्नहमहंकारं न करोमि, एवंविधं नृत्यं मया कदापि न दृष्ट-मतोहं पृच्छामि । तदा राज्ञोक्तम्-एतस्याः स्त्रियः पुत्रो मृतोऽस्ति, अतएवेयं रोदनं करोति । रोहिण्योक्तम्-स्वामिन् ! अस्यै रोदनं केन शिक्षितं भवेत् ?, तत् श्रुत्वा राज्ञोक्तम्-त्वाप्यहं रोदनं शिक्षयामि । इत्युक्त्वा रोहिण्युत्संगस्थं तस्या लघीयांसं पुत्रं

वाचानाचार्यवर्यस्य, रामचन्द्रगणेर्मुदा । शिष्येणाऽऽजिमगंजे च चतुर्मासीस्थितेन वै ॥ ४ ॥
पाठकमेदचन्द्रेण, रायमल्लकवेर्मुदा । पठनार्थमिदं रम्यं, कृतं शुभतराशया ॥ ५ ॥ युग्मम् ।

॥ इति श्रीदीपमालिकाव्याख्यानं सम्पूर्णम् ॥ ११ ॥

## अथ रोहिणी व्याख्यानं प्रारभ्यते ॥ १२ ॥



उच्छिट्ठमसुन्दरयं, भत्तं तह पाणियं च जो देइ । साहूणं जाणमाणो, भुत्तं पि न जिज्जए तस्स ॥ १ ॥

व्याख्या—यो जीव उच्छिष्टमसुंदरं च भक्तं तथा पानीयं जानन् सन साधुभ्यो ददाति, तस्य भुक्तमप्यन्नं न जीर्यते, तस्य शरीरेऽजीर्णरोगो भवति, यथा—श्रीवासुपूज्यस्य मघवाभिधपुत्रस्य पुत्रिकाया रोहिण्या जीवः पूर्वभवे दुर्गन्धाभिधाना कुष्ठिनी जाता, साधोः कटुतुंबकाहारदानात् ॥ १ ॥ रोहिणीकथा चेत्थं—

श्रीवासुपूज्यमानम्य, तथा पुण्यप्रकाशकम् । रोहिण्याश्च कथायुक्तं, रोहिणीव्रतमुच्यते ॥ १ ॥

श्रीचंपानगर्यां श्रीवासुपूज्यस्य पुत्रो मघवाभिधो राजा राज्यं करोति, तस्य लक्ष्मी नाम्नी राज्ञी सुशीला सदाचारा च वर्त्तते, तस्या अष्टौ पुत्राः सन्ति, अष्टानां पुत्राणामुपर्येका रोहिणी नाम्नी पुत्री वर्त्तते, सा चतुःषष्टिकलावती रूपलावण्यवती सौभाग्यगुणवती

तद्रात्रौ भावोद्योतो गतः, ततो लोकैरुद्योतकरणार्थं स्वस्वगृहे रत्नमयी दीपमालिका कृता, तद्दिनाद् लोकमध्ये दीपमालिकापर्वणः प्रसिद्धिर्जाता । अथ यद्रात्रौ वीरप्रभुर्मुक्तिं गतः, तदा समस्तसंघ उद्विग्नः स्थितः, संघस्य मुखाब्जं म्लानतां गतम्, तस्मिन् समये गौतमस्वामिनः केवलज्ञानमुत्पन्नं तदा समस्तोऽपि संघो हृष्टो जातः । इन्द्रः प्रभोर्निर्वाणोत्सवं कृत्वा प्रभोर्देहसंस्कारं करोति, ततः केचिद् देवाः प्रभोर्दंष्ट्रां लात्वा गच्छन्ति, केचिद् देवा दन्तान् गृह्णन्ति, केचिद् भस्म गृह्णन्ति, शेषं क्षीरसमुद्रे प्रवाहयंति, पश्चात् प्रातःकाले गौतमस्वामिनः केवलज्ञानमहोत्सवं कृत्वा सर्वे देवाः संभूय नन्दीश्वरद्वीपेऽष्टाह्निकं महोत्सवं कृत्वा स्वस्मिन् स्वस्मिन् स्थाने गच्छन्ति । अथ द्वितीयादिने सुदर्शना भगिनी शोकदूरीकरणार्थं नन्दिवर्धनं स्वगृहे भोजनं कारयति, तस्माद् एषा द्वितीया 'भाईबीज' इति प्रसिद्धिं प्राप्ता । प्रथमं लोकै रत्नमया दीपाः कृताः पश्चाल्लोकै रूप्यमयाः कृताः । अथ पंचमकालप्रभावतो मृत्तिकामया दीपाः कुर्वन्ति । एवमार्यसुहस्तिसूरिर्वक्ति—हे संप्रते ! इदं दीपमालिकापर्व सर्वेषामुत्तमं कथितम्, यथा वृक्षाणां मध्ये कल्पवृक्षः, देवानां मध्ये इन्द्रः, राज्ञां मध्ये चक्रवर्ती, नक्षत्राणां मध्ये चन्द्रमाः, तेजस्विनां मध्ये सूर्यः, सर्वधातूनां मध्ये सुवर्णम्, काष्ठमध्ये चन्दनम्, वनमध्ये नन्दनवनं तथा सर्वपर्वणां मध्ये दीपमालिकापर्व । अस्मिन् दिने श्रीवीरप्रभुर्मुक्तिं गतः, पुनः श्रीगौतमस्य केवलज्ञानमुत्पन्नम् अतो हे राजन् ! इदं दीपमालिकापर्व सिद्धिदायकं भवतु ।

षण्नन्दवसुचन्द्राब्दे ( १८९६ ), ज्येष्ठमासे सिते दले । चन्द्रघस्रे त्रयोदश्यां, साध्ययोगे हितावहे ॥ १ ॥
दीपालिपर्वणो व्याख्या, गद्यबन्धेन निर्मिता । अपशब्दादिदोषश्चेत्, शोधनीयः सदा बुधैः ॥ २ ॥
स्वच्छे खरतरे गच्छे, श्रीसौभाग्यगणाधिपे । धर्मराज्यं कलावर्ये, प्रकुर्वति सुविस्तरे ॥ ३ ॥

अमावास्यादिने उपवाससहिताः पौषधव्रतमंगीकृतवन्तः तद्रात्रौ भावोद्योततीर्थंकररहितं दृष्ट्वा ते राजाभिः स्वकीयगृहाद् रत्नान्यानाय्य द्रव्योद्योतः कृतः, पौषधः पारितः, यद्रात्रौ तीर्थंकरो मुक्तिं गतस्तद्रात्रौ देवानां गमनागमनेन महानुद्योतः संजातः, अस्मिन्नवसरे देवानां मुखाद् वीरप्रभुर्मोक्षगमनं श्रुत्वा श्रीगौतमस्वामी मनसि चिन्तितवान् "अहो ! भगवता मत्तश्छलं कृतं स्वस्य मुक्तिं ज्ञात्वा अहं दूरीकृतः, ज्ञातं भगवता मम पार्श्वे केवलज्ञानं मार्गयिष्यति, बालवत् कदाग्रहं करिष्यति, वस्त्राञ्चलं गृहीत्वा स्थास्यति, हे स्वामिन् ! मया ईदृग् लोभी त्वं न ज्ञातः, केवलज्ञाने दत्ते तु भवतां किमपि न न्यूनमभविष्यत्, हे स्वामिन् ! तवाहं परमसेवकोऽभूवम्, मां निराशं त्यक्त्वा गतः, हे भगवन् ! महतामेषा वार्ता न युक्ता, हे प्रभो ! बलाद् भवतोऽहं केवलज्ञानं नालप्स्यम् भवता दत्तमेव केवलज्ञानमंग्यकरिष्यम्, तथापि हे स्वामिन् ! अस्मिन्नवसरे अन्तसमये स्वसमीपे रक्षणं युक्तमभूद्, अस्मिन्नवसरे मम प्रेषणं तव न युक्तम्, पुनर्हे प्रभो ! मम केवलज्ञानस्य तृष्णा नासीत्, भवतां दर्शनस्य तृष्णा जाताऽभूत्, अधुना तव दर्शनमपि मम दूरीभूतम्, हे स्वामिन् ! अथाहं कस्य वीर ! इति कथयिष्यामि, मम मनःसंदेह कस्य समीपे पृच्छाविषये करिष्यामि, को मम सन्देहं भंक्ष्यति, हे स्वामिन् ! पुनर्मम हे गौतम ! हे गौतम ! इति कः कथयिष्यति ?" एवं विलापं कुर्वन् मनसि विचारयति-रे जीव ! वराक ! त्वं ग्रथिलो जातः, स तु नीरागी त्वं तु सरागी, वीतरागेण रागकरणं न युक्तम्, एकांगिप्रीतिकरणे दीपे पतंगवद् दुःखी भविष्यति, यस्य नाम वीतरागः स कस्मिन् रागं करोति स भगवान् स्वस्य वीतरागं हि नाम सत्यं कृतवान्, अहमज्ञासिषं भगवान् मम नाम पुनः पुनः ब्रूते तर्हि ममोपरि रागं रक्षति, शरमाश्विनमेघाडम्बरवद् अन्तं दत्त्वा गतः स क्व अहं क कस्य कोऽपि नास्ति, ॥११४॥
एवं मोहनीयं निराकृत्य क्षीणमोहं गुणस्थानकं गत्वा तत्कालमेव श्रीगौतमस्य केवलज्ञानमुत्पन्नम् । अथ यद्रात्रौ प्रभुर्मुक्तिं गतः

पक्षे, उपशमदिने, देवानन्दानाम्न्यां रात्रौ, सर्वार्थसिद्धिमुहूर्त्ते, नागे करणे, पद्मासने स्थिते तुर्यारकान्ते एतत्समये इन्द्रासनं चकम्पे, अवधिज्ञानेन हरिः प्रभोर्निर्वाणकल्याणसमयं ज्ञात्वा आगच्छति, अत्यन्तमश्रुपूर्णाक्षो विषण्णश्च सन् हस्तौ संयोज्य वक्ति—

गर्भे जन्मनि दीक्षायां, केवले च तव प्रभो ! । हस्तोत्तरं क्षणेऽधुना, तद्गन्ता भस्मको ग्रहः ॥ १ ॥

अतो हे स्वामिन् ! करुणानिधान ! एकक्षणमात्रमायुर्वृद्धिं स्वस्य कुरु, किं कारणम् ? भवतो जन्मराशेरुपरि भस्मग्रह आगतोऽस्ति स द्विसहस्रवर्षं यावत् स्थास्यति, अतो जिनशासनस्य पूजा प्रभावना मन्दा भविष्यति, तेन हेतुना आयुर्दीर्घं कुरुष्व, भवतो दृष्टिपाततस्तस्य तेजो निष्फलं यास्यति, तदा भगवान् वक्ति-हे इन्द्र ! एषा वार्ता कदाऽपि नाऽभूत्, न भवति, न चापि भविष्यति, यदायुर्दीर्घतरं भवति, पुनर्भाविपदार्थस्य नाशो नास्ति, तदुत्तीर्णे तु देवा अपि दर्शनं दास्यन्ति, विद्यामन्त्राणि चाल्पेन जापेन प्रभावं दर्शयिष्यन्ति, जातिस्मरणादिभावाः किंचित् प्रकटयिष्यन्ति, तदनन्तरमेकोनविंशतिसहस्रवर्षं यावद् जिनधर्मो वर्तिष्यति, दुःषमकालपर्यन्तम्, एवं कथयित्वा स्थितः, स्वस्य निर्वाणं समीपं ज्ञात्वा पुण्यफलविपाकानि पञ्चपञ्चाशदध्ययनानि तथा पापफलविपाकानि पञ्चपंचाशदध्ययनानि च जगाद, तथा षट्त्रिंशदपृष्टव्याकरणादि [उत्तराध्ययनसूत्राऽध्ययनानि] चाभिधाय प्रधानं नामाध्ययनं [ मरुदेवाऽध्ययनं ] जगद्गुरुरकथयत्, पुनः स्वामिनो मोक्षं समीपे विज्ञाय आसनप्रकम्पतस्तत्र सुराऽसुरेन्द्राः सपरिच्छदाः सर्वेऽपि ईयुः ॥ अथ प्रभुः शैलेशीकरणं कृत्वा पञ्चह्रस्वाक्षरोच्चारमितकालेन तुर्येण ध्यानेन एरण्डफलवद् बन्धाभावाद् ऊर्ध्वगतिः सन् यथास्वभावऋजुगत्या मोक्षमुपाययौ । तस्मिन् समयेऽनुद्धरिककुन्थुराशिः समुत्पन्ना, तदा बहुसाधुभिर्विचारितम्-'अद्यदिनादारभ्य संयमो दुराराध्यो भविष्यति' इति ज्ञात्वाऽनशनं कृतम्, तस्मिन् दिने नवमल्लकि-नवलेच्छकिजातीयाः काशी-कोशलदेशपतयोऽष्टादश गणराजानः

भविष्यन्ति, एकस्तीर्थंकरः, एकश्चक्रवर्ती, एवं द्वौ चतुर्थारके भविष्यतः, द्वयोश्चतुरशीति-पूर्वलक्षवर्षायुर्भविष्यति, ततः कल्पवृक्षोत्पत्तिर्भ-
विष्यति सर्वे युगलिका भविष्यन्ति. पाश्चात्यचतुर्विंशतितमजिनस्याग्रतनप्रथमजिनस्याष्टादशकोटाकोटिसागरोपमानामन्तरं भविष्यति.
उत्सर्पिणी, अवसार्पिणीकाले एकत्रीकृते एकं कालचक्रं भवति, तानि कालचक्राणि अनन्तानि गतानि, पुनरस्मिन् भरतक्षेत्रे अग्रेऽन-
न्तानि कालचक्राणि भविष्यन्ति, एवं श्रीवर्धमानः प्रभुर्गौतमस्य कालस्वरूपं निरूप्य समवसरणाद् निर्ययौ, हस्तिपालनरेन्द्रस्य
शुल्कशालायां च जगाम ॥ स्वामी तद्दिनयामिन्यां आत्मनो मोक्षं विदित्वा दध्यौ-अहो ! गौतमस्य मयि स्नेहोऽधिकः, य एवास्य
महात्मनः केवलज्ञानान्तरायः, स छेद्य इति विज्ञाय गौतममिति जगाद्-अपरस्मिन् ग्रामे देवशर्मा द्विजोऽस्ति, स त्वया प्रतिबोधं
प्राप्स्यति, तस्मात् तत्र हे गौतम ? त्वं गच्छ. हे स्वामिन् ! आदेशः प्रमाणमित्युक्त्वा प्रणम्य च गौतमस्तत्र गच्छति. अथ प्रभोः
परिवारं वदति-स्वहस्तदीक्षिताः साधवश्चतुर्दशसहस्र ( १४००० ) प्रमाणा अभूवन् , षट्त्रिंशत्सहस्र ( ३६००० ) प्रमाणाः साध्व्यश्च
संजाताः, एकोनषष्टिसहस्राधिकलक्ष ( १५९००० प्रमाणाः श्राद्धाश्च संजाताः, द्विगुणाः ( ३१८००० ) श्राविका अभूवन् , चतु-
र्दशाधिकत्रिशत ( ३१४ ) प्रमाणाः चतुर्दश पूर्वधारिणो जाताः, त्रयोदशशत ( १३०० ) प्रमाणा अवधिज्ञानिनो जाताः, सप्तशत
( ७०० ) वैक्रियलब्धिधारिणो मुनयः संजाताः, सप्त शत ( ७०० ) केवलिनः संजाताः, पञ्चशत ( ५०० ) विपुलमतयो संजाताः,
चतुःशत मिता ( ४०० ) वादिनः संजाताः, अष्टशत ( ८०० ) मिता अनुत्तरवासिनः । एवं समस्तसाधुसाध्वीसहितः श्रीवीरप्रभुः
षष्ठतपोयुक्तः त्रिंशद्वर्षाणि गृहवासे तस्थौ, सार्द्धद्वादशवर्षाणि पक्षाधिकानि छद्मस्थावस्थायां स्थितः, त्रिंशद् वर्षाणि यावत् केवलिपर्याये
स्थितः, एवं द्वासप्ततिर्वर्षाणि आयुः प्रपाल्य कार्त्तिकाऽमावास्यानिशायाः पश्चिमे क्षणे स्वातिनक्षत्रे, द्वितीये चन्द्रसंवत्सरे, प्रीतिवर्धन-

पोट्टिलाभिधः ९, दशमो शतकस्य जीवः शतकीर्तिनामा जिनेश्वरः १०, देवकीराज्ञीजीवः एकादशः सुव्रताभिधो जिनो भविष्यति ११, कृष्णवासुदेवस्य जीवः अममाख्योऽर्हन् द्वादशो भविष्यति १२, सत्यकी विद्याधरस्य जीवोऽर्हन् निष्कषायः त्रयोदशः १३, बलभद्रस्य जीवो निष्पुलाकश्चतुर्दशो भविष्यति १४, रोहिणीजीवो निर्ममः पंचदशो जिनः १५, सुलसाश्राविकाया जीवश्चित्रगुप्तो जिनः षोडशो भविष्यति १६, रेवतीश्राविकाया जीवः समाधिनामा सप्तदशो जिनो भविष्यति १७, शतालीश्रावकस्य जीवः अष्टादशोऽर्हन् संवराभिधः १८, द्वीपायनजीवः एकोनविंशोऽर्हन् यशोधरः १९, कपायस्य जीवो विजयो विंशतितमः २०, एकविंशो जिनो मल्लो यः पुरा नारदोऽभवत् २१, अम्बडस्य जीवो द्वाविंशो देव तीर्थंकरः २२, त्रयोविंशः श्राद्धरमस्य जीवोऽनन्तवीर्यो भविष्यति २३, स्वातिजीवश्चतुर्विंशो भद्रकृन्नाम तीर्थंकरो भविष्यति २४, एते आगामिकाले चतुर्विंशति तीर्थंकरा भविष्यन्ति, एषामायुः कल्याणकान्तर–लाञ्छन–वर्णाः पश्चानुपूर्व्या भविष्यन्ति, वर्तमानजिनवत्। अथ भाविनश्चक्रवर्तिनः कथ्यन्ते–दीर्घदन्तः १, गूढदंतः २, शुद्धदंतः ३, श्रीचन्द्र ४, श्रीभूतिः ५, श्रीसोमः ६, पद्मः ७, महापद्मः ८, कुसुमः ९, विमलः १०, विमलवाहनः ११, रिष्टः इत्यपरनामा भरतो द्वादशः १२। अथ वासुदेवानाह–नन्दी १, नन्दमित्रः २, सुन्दरबाहुः ३, महाबाहुः ४, अतिबलः ५, महाबलः ६, बलः ७, द्विपृष्ठः ८, त्रिपृष्ठः ९, इत्यात्मकाः। अथ प्रतिवासुदेवा उच्यन्ते–तिलकः १, लोहजंघः २, वज्रजंघः ३, केशरी ४, बली ५, प्रह्लादः ६, अपराजितः ७, भीमः ८, सुग्रीवः ९, इत्यात्मकाः। अथ बलदेवा उच्यन्ते–जयः १, विजयः २, भद्रः ३, सुप्रभः ४, सुदर्शनः ५, नन्दः ६, नंदनः ७, पद्मः ८, संकर्षणः ९, इत्यात्मकाः। एवमेते त्रिषष्टिशलाकाः * पुरुषा भविष्यन्ति, तेषां मध्ये एकषष्टि शलाकाः पुरुषास्तृतीयारके

*—प्रत्यंतरे त्रिषष्टिशलाकाः पुरुषा नामांतरेण अपि दृश्यते तत्त्वं तु ज्ञानिनो विदन्ति।

पंचत्रिंशतिदिनं यावद् मेघो वर्षिष्यति, तदा वृक्षौषधिलताधान्यप्रमुखाः स्वयं निष्पत्तिं यास्यन्ति. तान् दृष्ट्वा मनुष्या बिलेभ्यो बहिर्निःसरिष्यन्ति, भरतपृथिवी पुष्पफलादियुक्ताभूत्, तदा फलादीनि भक्षिष्यन्ति, अतः परं मांसं न भक्ष्यम्. यथा यथा काल एष्यति तथा तथा रूपसंहननायूंषि धान्यादीनि च भारते वर्धिष्यन्ति, सुखा वाताः ऋतवः सलिलाश्च भविष्यन्ति, तिर्यञ्चो मनुष्याश्च गतरोगाः क्रमेण भविष्यन्ति, द्वितीयारकप्रान्ते मध्यदेशे भरतावन्यां सप्त कुलकरा भविष्यन्ति—तत्र प्रथमो विमलवाहनः, द्वितीयः सुदामः, तृतीयः संगमः, चतुर्थः सुपार्श्वः, पंचमो दत्तः, षष्ठः सुमुखः सप्तमः समुचिः एते सप्त कुलकरा भविष्यन्ति. तत्र जातिस्मृतिपूर्वं विमलवाहनो राज्यहेतवे ग्रामान् , पुरादीनि च निवेशयिष्यति, राजा विमलवाहनो गोऽश्वादिसंग्रहं करिष्यति, शिल्पानि व्यवहारं लिपिर्गणितानि च व्यञ्जयिष्यति, दुग्धदध्यादौ शस्ये ज्वलने चोत्पन्ने सति हितकामी राजा प्रजानां रन्धनाद्युपदेशं दास्यति, एतत्सर्वं द्वितीयारके भविष्यति । अथ तृतीयारकस्य नवाधिकाशीतिपक्षे गते सति द्वारपुरनगरे समुचिराज्ञो भद्रायां महादेव्यां चतुर्दशस्वप्नसूचितो नन्दनः श्रेणिकजीव आदितीर्थकृत् पद्मनाभाभिधो जन्मादिना महावीरतुल्यो भविष्यति, कथंभूतः पद्मनाभ ? सप्तहस्तशरीरोन्नतः काञ्चनवर्णकायः सिंहलांछनो द्वासप्ततिवर्षायुः प्रथमतीर्थकरो भविष्यति, अतः परं पूर्ववत् प्रातिलोम्येन पूर्वार्हत्समा अमी सर्वे क्रमाद् जिनेश्वरा भविष्यन्ति, तत्र श्रेणिकराज्ञो जीवः पद्मनाभो जिनेश्वरः १, श्रीमहावीरस्वामिनः पितृव्यः सुपार्श्वजीवः सूरदेवो द्वितीयः जिनेश्वरः २, तृतीयो कोणिकनृपपुत्र उदायिनो जीवः सुपार्श्वः ३, पोटिलाऽणगारस्य जीवः चतुर्थः स्वयंप्रभः ४, दृढायुःश्रावकस्य जीवः पंचमः सर्वानुभूतिः ५, कार्तिकस्य षष्ठोऽर्हन् देवश्रुताभिधः ६, सप्तमो संवरश्रावकस्य जीव उदयाह्वयः ७, अष्टमः आनंदस्य जीवः पेढाल इति नामा ८, नवम सुनंदस्य जीवः

शिरोऽर्तिप्रमुखा मनुष्याणां महारोगा भविष्यन्ति, अंगारसदृशा भूमिर्भविष्यति, गिरि-नदी-गर्तादिका जलेन समीभविष्यन्ति, जल स्थलचारिणः तिर्यंचो दुःखेन स्थास्यन्ति, क्षेत्र-वनाऽऽराम-लता-तरु-तृणानि क्षयं यास्यन्ति, वैताढ्य-ऋषभकूट-गंगा-सिन्धूर्विमुच्य जलेन सर्वे समा भविष्यन्ति, भरतभूमिः कदाचिद् धूलिबहुला, कदाचिद् सार्द्रकर्दमा भाविष्यति, एकहस्तमानाः, कठोरांगाः, दुष्टवर्णाः निष्ठुरवचनाः, रोगार्ताः, क्रोधिनः, घण्टावच्चिपटनासिकाः, निर्लज्जाः, वस्त्ररहिता नराः स्त्रियश्च भविष्यन्ति, नराणां विंशतिवर्षायुः स्त्रीणां च षोडशवर्षायुर्भविष्यति, षड्वर्षा स्त्री गर्भान् धारयिष्यति दुःप्रसवा च. स्थविरा तु षोडशाब्दा बहुसुतेन मातृका भविष्यति. रथचक्रयोर्मध्ये यत्प्रमाणा धरित्री भवति तत्प्रमाणं गंगासिन्ध्वोः पानीयं वहिष्यति, पुनर्वैताढ्यगिरौ द्वासप्ततिनद्युभयतटभूमिषु बिलानि सन्ति तत्र तिर्यञ्चो मनुष्याश्च बीजमात्रतया भविष्यन्ति मांसाहारनिरताः, निर्घृणाः, निर्विवेकाः तस्मिन् काले मनुष्यादयः समस्ता भविष्यन्ति, बहुमत्स्य-कच्छपादिभिर्व्याप्ते गंगा-सिन्धू भविष्यतः, पुनर्नराद्यास्तत्रैत्य निशायां मत्स्यादीनि कृष्ट्वा स्थले मोक्ष्यन्ति, दिवा सूर्यत्विषा पक्वानि मत्स्यादीनि निशान्तरे खादिष्यन्ति, एवं निरन्तरं भोक्ष्यन्ति, यस्मात् तस्मिन् काले दध्याधिकं नास्ति, न च पुष्पफलादिकं, च चान्नं, न च शय्यासनादिकम्, एवं भरतैरवतेषु दशस्वपि दुःषमकालो भविष्यति। अथाग्रे उत्सर्पिण्यां षष्ठारकसदृशः प्रथममारको भविष्यति, उत्सर्पिण्यामेकविंशतिसहस्रवर्षप्रमाणे प्रथमारके गते द्वितीयारकोऽपि एतत्प्रमाणो भविष्यति। अथ द्वितीयारकप्रान्ते पुष्करावर्तमेघः सप्ताहोरात्र यावद् वर्षिष्यति तस्मात् पृथिवीतापो यास्यति, द्वितीयः क्षीरोदनामा मेघो वर्षिष्यति तस्माद् धान्यनिष्पत्तेर्योग्या भविष्यति, तृतीयो घृतोदकमेघो वर्षिष्यति तस्मात् पृथिवी सचिक्कणा भविष्यति, चतुर्थः शुद्धोदकमेघो वर्षिष्यति, तस्मादौषधिनिष्पत्तिं यास्यति, तदा पंचमो रसोदकमेघो वर्षिष्यति, तस्मात् पृथिव्यां रसोत्पत्तिर्भविष्यति. एवं

केचिदाचार्या एवं वदन्ति—पञ्चभरतै-रवतयोः संघस्य प्रमाणं नत्वेकस्य, केचिदाचार्याः पञ्चभरतस्य संघप्रमाणं वदन्ति, केचित् पुनः एकभरते संघप्रमाणं वदन्ति, तत्त्वं तु ज्ञानिगम्यम्. पुनः पञ्चमारकप्रान्ते द्विहस्तशरीरप्रमाणाः स्वर्गात् च्युत्वा गृहवासे द्वादश वर्षाणि श्रामण्ये चत्वारि वर्षाणि, आचार्यपदे चत्वारि वर्षाणि स्थित्वा विंशतिवर्षायुः प्रपाल्य दुप्पसहसूरयः सौधर्मस्वर्गे गमिष्यंति, कथंभूता दुप्पसहसूरयः ? दशवैकालिक-जितकल्प-आवश्यकाऽनुयोगद्वार-नन्दीसूत्रधारका इन्द्रादिभिर्नताः. षष्ठोग्रतपोधारकाः प्रान्ते कृताष्टमतपसः एकसागरोपमायुः स्वर्गं भुक्त्वा ततो भरतक्षेत्रे जन्मावाप्य मुक्तिं यास्यंति । वीसहजार नवसौ वर्ष, तीनमास, पांच दिन, पांच पहरे, एक घडी, दोपल, ४१ अक्षरोच्चार एतावत्कालप्रमाणो जिनधर्मो भविष्यति, ९० वर्ष, मास ८, दिन २३, प्रहर २, घडी ५॥, पलानि ५७, १९ अक्षरोच्चार एतावन्मध्ये जिनधर्मः स्तोकः स्थास्यति, आरकस्य प्रांते जिनधर्मो विच्छेदं यास्यति, श्रुत-सूरि-संघ-धर्मः पूर्वाह्णे विच्छेदं यास्यति, नृपो विमलवाहनः सुमुखमन्त्री च मध्याह्ने विच्छेदं यास्यतः, अग्निः सन्ध्यायां विच्छेदं यास्यति, पुनः पञ्चमारकान्ते दुप्पसहाख्यः सूरिः, फल्गुश्रीः साध्वी, नागलः श्रावकः, सत्यश्रीः श्राविका, एतदात्मकश्चतुर्विधसंघो भविष्यति, पञ्चमारकस्याग्रे धर्मो वर्त्स्यति इत्यनेन धर्मो नास्ति यः पुनर्वदिष्यति स संघतो बहिः कर्तव्यः, एवमेकविंशतिसहस्रप्रमाणः पंचमारको भविष्यति । एतत्प्रमाणो षष्ठारकोपि भविष्यति । अथ षष्ठारकस्य किंचित् स्वरूपं कथ्यते—धर्मतत्त्वं प्रणाशं यास्यति, जनो हाहाभूतो भविष्यति, पशुवद् मातृपित्रादि व्यवस्थावार्जितश्च भविष्यति, बहुधूलिसहिता अतिनिष्ठुरता अनिष्टा वायवो वास्यन्ति, दिशश्च धूम्रं मोक्ष्यन्ति, चन्द्रमा अतिशीतं स्रावयिष्यति, अर्यमा अत्युष्णं तप्स्यति, अतिशीतोष्णव्याप्तो लोकः क्लेशमवाप्स्यति, भस्म-दृषद-ऽग्निकण-क्षार-विष-मल-विद्युन्मयाः सप्त मेघा वर्षिष्यन्ति, एकैकस्य मेघस्य सप्त सप्त दिनानि यावद् वर्षा भविष्यति, यैः कास-श्वास-शूल-कुष्ट-जलोदर-ज्वर

मिन्द्रः शिक्षयित्वा दत्तनामानं कल्किनः पुत्रं राज्ये स्थापयिष्यति, गुरु संघयोर्नमस्कारं कारयिष्यति, इन्द्रः स्वस्थाने यास्यति, ततो दत्तराजा पितुः पापफलं ज्ञात्वा पुण्ये तत्परो भविष्यति, निरंतरं जिनेश्वराणां चैत्यानि कारयित्वा सर्वपृथ्वीं जिनालयैः शोभायमानां करिष्यति, तदा पुनर्जिनधर्ममहिमा प्रचुरो भविष्यति, । अथाग्रे पञ्चमकाले चतुर्विधश्रावक-श्राविका-साधु-साध्वीनां संख्या कथ्यते— षोडशसहस्राधिका एकादशलक्षा (१११६०००) राजानः पंचमकाले जिनमतभक्ता भविष्यन्ति, एककोटिमिता (१००००००), जिनशासनप्रभावका मन्त्रिणो भविष्यन्ति, पुनः पञ्चमकाले श्रीसुधर्मस्वामिप्रमुखाश्चतुरधिकद्विसहस्रप्रमाणा (२००४) युगप्रधानपद-धारका महोपकारिण आचार्या भविष्यन्ति, तत्रापि सुधर्मजम्बूस्वामिनौ तद्भवे एव मुक्तिं यास्यतः, शेषाः सर्वे एकावतारिणो भविष्यन्ति। ततो युगप्रधानसदृशा आचार्याः प्राणिनां मोहान्धकारे मार्तण्डसदृशाः षोडशाधिकैकादशलक्षैकादशसहस्रमिता (११११०१६) एतावन्तो अन्येऽपि आचार्या-श्चारित्रपालका भविष्यन्ति, पुनः पञ्चमारके तेतीस लाख चालीस हजार चारसौ उन्नीस (३३४०४१९) एतावन्तो मध्यमगुणधारका आचार्या भविष्यन्ति, पुनः पंचावनकोटि पंचावनलक्ष पंचावनसहस्र पंचशत पचवीस (५५५५५५५२५.) अधर्माचार्या भविष्यन्ति, पुनः पंचावनलाखकोटि, पंचावनहजारकोटि चौवनसौ कोटि चउमालीसकोटि एतावन्त उपाध्याया वाचनाचार्या भविष्यन्ति, पुनः सत्तरलाखकोटि नवहजारकोटि एकसौकोटि एकवीसकोटि एकलाख साठहजार एतावन्तः साधवो भविष्यन्ति, पुनः पञ्चमारके दशकोटाकोटि द्वादशशतकोटि बाणवेकोटि बत्तीसलाख निनाणवे हजार एकसौ एतत्प्रमाणाः साध्व्यो भविष्यन्ति, पुनः पञ्चमारके सोलाकोटिलाख तीनकोटिहजार तीनसौकोडी सत्तरकोडी चौरासीलाख एतावत्प्रमाणाः श्रावकाः भविष्यन्ति, पुनः पञ्चमारके पैंतीस-कोडिलाख बाणुहजारकोडी पांचसौकोडी बत्तीसकोडी एतावत्यः श्राविका भविष्यन्ति, एतावत् पञ्चमारके संघस्य प्रमाणम्. अत्र

करिष्यति, पुनर्नवीननवीनकरं करिष्यति ततो लोकानां मस्तकेऽसद्भूतानि कलंकानि दत्त्वा धनवतां धनं ग्रहीष्यति, अनेकच्छलं
कृत्वा लोकानां धनापहारं करिष्यति, यदा सर्वे लोका निर्धना भविष्यन्ति रूप्य–सुवर्णादि सर्वं धनं नाशं यास्यति, तदा चर्ममयीं
मुद्रां प्रवर्तयिष्यति, वैश्यापाखण्डिसर्वदर्शनिनां समीपे कल्की करं लास्यति, तस्य राजमध्ये लोकानां गृहे भोजनार्थं भ्रातुमयं भाजनं न
स्थास्यति, तदा वृक्षपत्रमध्ये भोजनं करिष्यन्ति, पुनः कल्की राजा मार्गे गच्छतः साधून् दृष्ट्वा लुब्धः सन् भिक्षायाः षष्ठांशं मार्गयिष्यति,
तदा सर्वे साधवः एकत्रीभूय कायोत्सर्गं करिष्यन्ति शासनदेवतां चाराधयिष्यन्ति, शासनदेवता प्रकटीभूय साधुभिक्षाषष्ठांशं निवारयि–
ष्यति, पुनर्वेषधारिणो वेषं त्याजयिष्यन्ति, एतादृशो महादुरात्मा भविष्यति, पुनः कियति काले गते भिक्षाषष्ठांशस्य स्मरणं करिष्यति,
यदा धनार्थमाचार्यादीन् सर्वसाधून् संमेल्य वाटके क्षेप्स्यति रोधयिष्यति, तदा संविज्ञाचार्यप्रमुखाः ससंघाः शासनदेवताराधनार्थं कायो-
त्सर्गं करिष्यन्ति, संघकायोत्सर्गात् शासन देवता आगमिष्यति युक्तितः कल्किने उपदेशान् दास्यति तथापि स न मानयिष्यति, तस्मिन्
समये इन्द्रस्यासनं कम्पयिष्यति तदा स वृद्धब्राह्मणरूपं कृत्वा यत्र कल्की सिंहासनोपरि स्थितस्तत्रागमिष्यति, ततः कल्किनं कथयि-
ष्यति–अहो राजन् ! एते निरपराधिनः साधवः किं रुद्धाः एभिस्तवापराधः कः कृतः ? तदा कल्की तं वदिष्यति–अहो ब्राह्मण ! सर्व-
दर्शनिभिर्मम करो दत्तः परमेते भिक्षवो भिक्षाषष्ठांशमपि न ददति, ततो मया एते रुद्धाः सन्ति, तत इन्द्रो वदिष्यति–एषां पार्श्वतस्तव
किमपि न मिलिष्यति एषां पार्श्वे किमपि नास्ति पुनर्भिक्षाषष्ठांशमपि तव न दास्यंति एषामयं व्यवहारो नास्ति, पुनस्त्वं भिक्षा भागं मार्गयन्
लज्जां न यासि, एषां साधूनां त्वं त्यागं कुरु, ईतरथा तव महत्कष्टमुत्पत्स्यति, एतादृशमिन्द्रवचनं श्रुत्वाऽपि न त्यक्ष्यति ततो भाद्रपदशुक्ला-
ष्टम्यां ज्येष्ठानक्षत्रे इन्द्रो रोषं गतः सन् चपेटाप्रहारात् कल्किनं मारयिष्यति सर्वायुः षडशीति ८६ वर्ष प्रपाल्य नरकं यास्यति, ततोऽर्हद्धर्म-

स्य राजधानी भविष्यति, अनहल्लपत्तनस्य द्वितीयं नाम विजयपुरं भविष्यति, मुंजस्योज्जयिनीदेशं दास्यति, अपराजितस्यान्यमण्डलं दास्यति, कल्किनो राज्यावसरे म्लेच्छक्षत्रिययो रुधिरेण पृथिवी स्नानं करिष्यति, तस्यैकोनकोटिसुवर्णानां कोष्ठागारा भविष्यन्ति, चतुर्दशसहस्रप्रमाणा हस्तिनो भविष्यन्ति, सार्द्धचतुर्दशसहस्राधिकसप्ताशीतिलक्षा (८७१४५९००) घोटका भविष्यन्ति, पञ्चकोटिप्रमाणाः पदातयो भविष्यन्ति, दासादीनां तु बह्वीः संख्या भविष्यन्ति, नभःखलनाम त्रिशूलं भविष्यति, दृषन्मयतुरंगमः आरोहणार्थं वाहनं भविष्यति, दुरात्मा अत्यन्तकषायो भविष्यति, यदा कल्की राज्यं करिष्यति, तदा मथुरामध्ये कृष्ण-बलभद्रयोरायतनं पतिष्यति, बहुडम दुर्भिक्षरोगैर्मनुष्याः पीडां प्राप्स्यन्ति, पञ्चसु स्तुम्भिकासु बहु धनमस्तीति लोकानां मुखात् श्रुत्वा आनन्दराज्ञा निष्पादिताः पञ्च सुवर्णमयीः स्तुम्भिकाः कल्की खनयिष्यति, सर्वनिधानं निष्कासयिष्यति, तत्र गोरूपा लवणदेव्या मूर्तिः दृषन्मयी प्रकटीभविष्यति; तां गृहीत्वा राजादिप्रमुखा सर्वलोकाः संभूय नगरचतुष्पथमध्ये स्थापयिष्यंति, कदाचिदवसरे साधवो गोचर्यर्थं चतुष्पथमध्ये निःसरिष्यन्ति, मा साधून् दृष्ट्वा देवानुभावतः श्रृंगाग्रेण साधूनां मारणार्थमुद्यमवती भविष्यति, तदा गीतार्थाः सर्वे साधव एकत्रीभूय विचारं करिष्यन्ति, अत्र जलोपसर्गः प्रचुरो भविष्यति इति ज्ञात्वा सुविहितक्रियाधारका ये साधवो भविष्यन्ति ते सर्वे विहारं करिष्यन्ति, ये भक्तपानलोलुपा भविष्यन्ति गीतार्थवचनं नांगीकरिष्यन्ति अविवेकिनः सन्तः तत्र स्थास्यन्ति, ततः सप्तदशाहोरात्रं यावत् वर्षा भविष्यति, अत्यन्तवृष्ट्या कल्किनो नगरं जलाच्छादितं भविष्यति, गंगाजलं नगरेण सह एकत्री भविष्यति, कल्किनो नगरात् प्रणश्य कुत्रापि उच्चस्थले स्थास्यति, जलोपद्रवनिवर्तनाद् नवीनं नगरं स्थापयिष्यति, जलप्रवाहतो नव नन्दस्य सुवर्णमय्यः डुंगरिकाः प्रकटीभविष्यन्ति, ता दृष्ट्वा प्रचुरलोभी भविष्यति, प्रथमं ये मनुष्याः करं न दत्तवन्तस्तेषामुपरि करं स्थापयिष्यंति, ये करं दत्तवन्तस्तेषां मस्तके बहुकरं

न्ति, पुनर्हे गौतम् ! म्लेच्छकुले पाटलीपुरपत्तने कलंकी * राजा भविष्यति, पुनः पाटलीनगरस्य रुद्रनाम पुनश्चतुर्मुख इति नाम स्थापयिष्यति । जसनामचाण्डालस्य गृहे भार्या यशोदा तत्कुक्षौ त्रयोदश मासान् यावद् कल्किगर्भः स्थास्यति, चैत्रशुक्लाष्टम्यां जयश्रीदिवसस्य रात्रिसमये मकरलग्नस्य षष्ठांशे वहमाने भौमवासरे चन्द्रेऽर्कलग्ने स्थिते चन्द्रनामयोगे आगते अश्लेषाप्रथमपादे कलंकिनो जन्म भविष्यति, त्रिहस्तशरीरोन्नतत्वं भविष्यति, कपिलवर्णाः केशा मस्तके भविष्यन्ति, नेत्रे पीते भविष्यतः, तीक्ष्णस्वरो भविष्यति, महाविद्यावान् दीर्घहृदयो गुणरहितश्च भविष्यति, तस्योत्पत्तेरारभ्य पञ्चमे वर्षे उदरपीडा भविष्यति, सप्तमे वर्षेऽग्निपीडा भविष्यति, एकादशे वर्षे तस्य द्रव्यप्राप्तिः भविष्यति, अष्टादशे वर्षे कार्तिकमासे शुक्लपक्षे प्रतिपदि तिथौ शनिवारे तुलाचन्द्रे स्वातिनक्षत्रे नन्दनदिने सिद्धयोगे बवकरणे रावणमुहूर्त्ते राज्याभिषेको भविष्यति, तस्य आनन्दनामा तुरंगमो भविष्यति, दुर्मासकनामा कुन्तो भविष्यति, मृगांकनामा मुकुटो भविष्यति, दैत्यसूदनखड्ग भविष्यति, तस्य कटिप्रदेशे चन्द्रसूर्यौ भविष्यतः, पुनः कल्की विक्रमादित्य संवत्सरमुत्थाप्य अमितसुवर्णदानात् स्वसंवत्सरं स्थापयिष्यति, एकोनविंशतितमे वर्षे निजभुजबलेनार्धभरतत्रिखण्डं साधयिष्यति, सार्धविंशतिवर्षे अर्बुदराज्ञः पुत्रीं परिणेष्यति, अन्यासां बह्वीनां राज्ञीनां पतिर्भविष्यति, एवं ताभिः सह महाभोगे भुंज्यमाने तस्य महापराक्रमधारिणश्चत्वारः पुत्रा भविष्यन्ति, तन्नामान्याह-दत्त १ विजय २ मुंज ३ अपराजिताख्याः ४. कल्किनः पाटलीपुरे राजधानी भविष्यति, तस्य पाटलीपुरस्य कलंकिपुरमिति द्वितीयं नाम भविष्यति, दत्तस्य प्रथमपुत्रस्य राजधानी भविष्यति, तस्य नगरस्य दत्तपुरं नाम भविष्यति, विजयस्यानहल्लपत्तन-

* पंचमारके धर्मोन्नतिकारका त्रयोविंशतिः उदयाः भविष्यंति तेषु च चतुरधिकद्विसहस्रयुगप्रधाना भविष्यन्ति तथा संप्रति तृतीयोदयो वर्तते परं च अष्टमोदये श्रीप्रभयुगप्रधानसमये कलंकी राजा भविष्यति, इति ज्ञेयम् ।

तस्य भविष्यन्ति, अयुतप्रमाणा रथा भविष्यन्ति, एकादश लक्षाणि तुरंगाणां भविष्यन्ति, अष्टादश लक्षाः पदातयो भविष्यन्ति, स श्रीकुमारपालराजा कस्मिंश्चित् समये वज्रशाखायां मुनिचन्द्रकुलोत्पन्नं श्रीहेमचन्द्रसूरिं प्रतिवन्दिष्यति, आचार्यमुखाद् धर्मोपदेशं श्रुत्वा सम्यक्त्वसहितं श्रावकद्वादशव्रतमंगीकरिष्यति, देवगुरुप्रणतिं विना भोजनं न करिष्यति, दृढव्रतपालको भविष्यति, पृथिवीं जिनप्रासादमण्डितां करिष्यति, एकस्मिन् प्रस्तावे श्रीहेमाचार्यमुखात् व्याख्याने श्रीतीर्थानां व्याख्यां श्रोष्यति, तत्र जीवितस्वामिमूर्तेः संबंधं श्रुत्वा वीतभयपत्तनमार्गे दुर्गकारापने श्रीजिनप्रतिमां मनुष्येभ्यः प्रकटं कारयिष्यति, तां प्रतिमां पत्तने जिनालये स्थापयिष्यति शुभबुद्धया मानयिष्यति, ततः प्रतिमार्थं यदुदायिराज्ञा ग्रामादिदत्तमभूत् तत् प्रकटीभविष्यति, तावन्तं ग्रामशासनादिकं कुमारपालोऽपि दास्यति, सदैवार्चां करिष्यति, सदैव जिनं वन्दिष्यति, स्वदारसंतोषी भविष्यति, वर्षाकालमध्ये त्रिविधं शीलं पालयिष्यति, कदाचिद् मनसः शीलभंगो भविष्यति तर्हि उपवासादि करिष्यति, पुनरष्टादशदेशेऽमारिपटहं दास्यति, वर्षाकाले सेनासमूहं न करिष्यति, जीवरक्षादक्षो भविष्यति, अर्हन्मतभक्तिमान् भविष्यति, शुद्धसम्यक्त्वव्रतधारको भविष्यति, पंचमकाले श्रीकुमारपालं विना अन्यः को भविष्यति ?। पुनर्हे गौतम ! पञ्चमारके कलहकारका भववृद्धिजनका असमाधिस्थाना अनिर्वेदकारका एतादृशाः श्रमणाः पञ्चभरतैरवते च भविष्यन्ति, पुनस्ते श्रमणा मन्त्रतन्त्रयन्त्रादौ नित्यमुद्यमवन्तो भविष्यन्ति, पुनरागमार्थज्ञाता स्तोका एव स्थास्यंति, सिद्धान्तशास्त्रस्य कश्चिदेवाभ्यासं करिष्यंति, धनलोभार्थं ज्योतिष्कादिकं धारयिष्यति, उपकरणवस्त्रपात्रार्थं वर्षाकाले श्रावकैः सह युद्धं करिष्यति, यथा राजा प्रजापार्श्वे कलहं कृत्वा दण्डं लास्यति तथा तेऽपि साधवः श्रावकपार्श्वे धनादिग्रहणं करिष्यन्ति, बहवो मुण्डा अल्पाः श्रमणाश्च भविष्यन्ति, पुनर्हे गौतम ! पञ्चमकाले म्लेच्छराजानो बलवन्तो भविष्यन्ति, उत्तमराजानो हीनबला भविष्य-

मध्ये लज्जा न भविष्यति, निष्कलंककुलजाताः स्तोका भविष्यन्ति,
गवर्णने कथिताः । पुनर्हे गौतम ! कलियुगसंबन्धिनां मानवानां मध्ये लज्जा न भविष्यति, निष्कलंककुलजाताः स्तोका भविष्यन्ति, ब्राह्मणाः
रम्यवस्तूनां धरित्र्यां हानिर्भविष्यति, लघवः सुताः तरुणाश्च मरणं यास्यन्ति, पुनर्मातरः पितरश्च अतिदीर्घायुषो भविष्यन्ति, ब्राह्मणाः
शस्त्रधारका भविष्यन्ति, वेदपाठ-षट्कर्मवर्जिताश्च भविष्यन्ति, सुता मातापित्रोर्विनयं न करिष्यन्ति, पुत्रा मातापितृभ्यो दुःखं दास्य-
न्ति, वध्वः श्वश्रूणां विनयं न करिष्यन्ति, वधूः सर्पिणीतुल्या भविष्यति, श्वश्रूभिः कार्ये कथिते वधू रोषं कृत्वा सर्पिणीवत् प्रत्युत्तर-
वचनरूपं डंकप्रहारं दास्यति, श्वश्रूश्च कालरात्रीतुल्या वधूं हीलयिष्यति; यथा जनानां कालरात्री दुर्लङ्घ्या भवति तथा श्वश्रूरपि वधू-
जनानां ताडनातर्जनादि कुर्वती दुर्लंघ्या ज्ञेया, अपूज्यलोकाः पूजां प्राप्स्यन्ति, अर्चायोग्या गुणवन्तो न पूजां प्राप्स्यन्ति, शिष्या गुरूणां
विनयं न करिष्यन्ति, पुनर्गुरवोऽपि शिष्याणां हितशिक्षाद्युपदेशं न दास्यंति, पुनर्मन्त्रतन्त्रौषधिज्ञानरत्नविद्याधनायुःफलपुष्परसरूपसौभाग्य-
संपत्तिसंहननबलयशःकीर्तिगुणशोभादीनि वस्तूनि पञ्चमारके हानिं यास्यन्ति, ज्ञानादिधर्मो हीनतां यास्यति, वस्तुपानादि विपरीतं जनाः
करिष्यन्ति, धर्मे मूर्खत्वं भविष्यति, देवानां मध्ये देवत्वं न भविष्यति, सतीनां मध्ये सतीत्वं न भविष्यति, निःसंगानां मध्ये वैराग्यं न भवि-
ष्यति, तपस्विनः स्पृहायै तपस्यां करिष्यन्ति, सत्यशौचतपः क्षमादिकानां हानिर्दिने दिने भविष्यति, धरित्र्यामल्पफलादीनि भविष्यन्ति ।
पुनः प्रभुर्वक्ति-हे गौतम ! सौराष्ट्रगुर्जरदेशस्य समीपे अनुक्रमेण अणहिल्लपाटणपुरे मन्निर्वाणात् एकोनसप्तत्यधिकषोडशशतवर्षे
( १६६९ ) व्यतिक्रान्ते श्रीकुमारपालराजा भविष्यति, कीदृशः ? चौलुक्यकुलमध्ये चन्द्रसदृशो महाबलवान् अखण्डजिनाज्ञाधारको ॥१०२॥
भविष्यति, पराक्रमेण, दानेन, कीर्तिगुणेन, न्यायेन, विवेकेन, धैर्येण राज्यलीलया सत्त्वगुणेनाद्वितीयो भविष्यति. उत्तरदिशायां
यवनदेशं यावत्, पूर्वदिशि गंगापर्यन्तं, दक्षिणदिशि पश्चिमदिशि च समुद्रपर्यन्तं देशान् साधयिष्यति, एकादशशतानि हस्तिनः

करिष्यन्ति, पुनरग्रे गच्छता वने एकस्यां शकट्यां हस्तिनौ योजितौ दृष्टौ, एकस्यां शकट्यां गर्दभौ योजितौ दृष्टौ परं हस्तिनौ परस्परममिलितौ चलतः गर्दभौ परस्परं मिलितौ चलतः, एतादृशं विचारं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वदति हे राजन् ! कलियुगे हस्तिसदृशा उत्तमकुले प्रसूता जनाः परस्परं क्लेशं करिष्यन्ति अन्योऽन्यमीर्ष्यां च करिष्यन्ति, पुनर्गर्दभसदृशा नीचकुलोत्पन्ना नीतिधारका भविष्यन्ति परस्परं स्नेहवन्तो भविष्यन्ति, प्रायेण अन्त्यकुलोत्पन्ना धरित्रीपतयो भविष्यन्ति, पुनर्हंससदृशा उत्तमकुलोत्पन्नाः दासत्वं करिष्यन्ति ॥ अन्यदा पंच पाण्डवा अनुक्रमेण वनवासमध्ये स्थिताः सन्तो युधिष्ठिरराज्ञा भीमादीनां चतुर्णां भ्रातॄणां चतुर्षु प्रहरेषु रात्रौ यामिकत्वेन रक्षिता, अथ प्रथमप्रहरे भीमो जागर्ति चत्वारो भ्रातरः सुप्ताः सन्ति तस्मिन् प्रस्तावे कलिरूपपिशाचस्य वचनं श्रुत्वा भीमः क्रोधभाग् बभूव पिशाचरूपकलेर्मारणार्थं धावितः, कलिना सह भीमो युद्धमकार्षीत्, क्रोधेन रक्तनेत्रे कृत्वा लीलया प्रेतरूपकलिना बलवान् भीमो निर्जितः, द्वितीयप्रहरे युद्धं कृत्वा कलिनाऽर्जुनोऽपि जितः, तृतीयप्रहरे नकुलोऽपि जितः, चतुर्थप्रहरे सहदेवोऽपि जितः, अथ चत्वारोऽपि भ्रातरः पराजयं प्राप्ताः सन्तः सुप्ताः सन्ति, अस्मिन्नवसरे पश्चिमरात्रे युधिष्ठिरो जागृतवान् तदा कलिरूपपिशाच आगत्य युधिष्ठिरं वदति, हे राजन् ! भवतः पश्यतो भवद्भ्रातरं मारयिष्यामि, एतादृशं प्रेतवचनं श्रुत्वा राजा युधिष्ठिर किंचिन्मात्रमपि क्रोधं न कृतवान्, प्रतिवचनमपि न दत्तवान्, क्षमां कृत्वा स्थितः, क्षमा कीदृशी ? सर्वकल्याणकारिका सर्वसत्त्वप्रीतिजनिका सर्वधर्मप्रधाना एतादृशी क्षमा राज्ञामंगीकृता, तदा राज्ञ उपशमं दृष्ट्वा प्रेतः शान्तिं गतवान् राज्ञो मुष्टिमध्ये चागतः, भ्रातरः सर्वेऽपि उत्थिताः, तदा रात्रिसंबन्धिनी सर्वाऽपि वार्ता युधिष्ठिरेण भ्रातॄणामग्रे कथिता, राज्ञा मुष्टिमुद्घाट्य प्रेतः स्ववशवर्त्तिभूतो दर्शितः, क्षमाप्रभावतोऽयं वशवर्ती जातः, एतादृशा अष्टोत्तरशतदृष्टान्ता लौकिकपुराणादावपि कलियु-

पुनः राजा युधिष्ठिरोऽग्रे गतः सन् कूपप्रणालिकाजलं कूपे पतत् दृष्ट्वा विस्मयं प्राप्तः सन् पृच्छति, तदा ब्राह्मणो वक्ति—हे राजन्! कृषिवाणिज्यादिभिर्महाक्लेशात् लोका धनमुपार्जयिष्यन्ति तद्धनं सर्वं राजलोका ग्रहीष्यन्ति, सद्युगे राजानः स्वस्य धनं दत्त्वा प्रजां पुत्रवत् ज्ञास्यन्ति कलियुगे राजानः प्रत्युत प्रजाया धनं लास्यन्ति इति वैपरीत्यं भविष्यति। राजा—अग्रे गच्छन् वनखण्डमध्ये महाप्रधानचम्पकवृक्षावृतः पार्श्वतः एकः कण्टकवृक्षो दृष्टः, तदवसरे बहवो लोकाः कण्टकवृक्षस्य सुगन्धचोवाचन्दनविलेपनैः पूजां कुर्वन्तो दृष्टाः, चम्पकवृक्षस्तु सुगन्धपुष्पैर्युक्तः शाखाप्रतिशाखाभ्यां शोभमानोऽस्ति, तं त्यक्त्वा कण्टकवृक्षमर्चितं दृष्ट्वा राजा विस्मयं प्राप्तः सन् ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति—हे राजन्! लोकाः कलियुगे गुणवन्तमुत्तमाचारवन्तं त्यक्त्वा पापीयसो दुर्जनस्य नीचस्य पूजां करिष्यन्ति, एतादृशं श्रुत्वा राजाऽग्रे गतः पुरतः एकां महतीं शिलां बालाग्रे बद्धामाकाशे लम्बायमानां दृष्ट्वा आश्चर्यं प्राप्तः सन् ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति—हे राजन्! कलियुगे पापरूपां शिलामल्पधर्मरूपबालाग्रेण तरिष्यन्ति, अन्यच्च यदा बालरूपं धर्मं त्रोटयिष्यन्ति तदा समकालं मनुष्या ब्रुडिष्यन्ति। पुनः राजाऽग्रे गतः फलार्थं वृक्षस्य पीडां कुर्वन्तः केचिद् पुरुषा दृष्ट्वा राजा ब्राह्मणं पृच्छति—एतस्य फलं वद, ब्राह्मणो वक्ति-हे राजन्! कलियुगे पिता वृक्षतुल्यः पुत्रः फलसदृशः—अयमत्र भावार्थः पुत्रफलार्थं वृक्षः पिता कष्टं सहिष्यति, पुनः राजऽग्रे गतः एकस्मिन् स्वर्णकटाहे उत्तमान्नपाचनयोग्ये मांसं पच्यमानं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वदति-हे राजन्! आत्महितकारिणं कुटुम्बं जनाः त्यक्ष्यन्ति, अन्यलोकार्थं स्वशीर्षं दास्यन्ति, बह्वीं प्रीतिं करिष्यन्ति उत्तम-जनसंगं न करिष्यन्ति, अग्रे गत्वा सर्पस्य पूजां गरुडस्य चापूजां दृष्ट्वा ब्राह्मणं पृच्छति, विप्रोऽवादीत्-हे राजन्! दयारहितो धर्मिजनः सर्पतुल्यः तस्य बहवो लोका आदरं करिष्यन्ति, सत्कारं च करिष्यन्ति, गरुडसदृशा गुणवन्त उत्तममहाधर्मज्ञास्तेषां निन्दां

लोकाः सर्वे प्रेतसदृशा भविष्यन्ति, राजलोका लुब्धा भविष्यन्ति, पुनरविवेकिनो लोका मूर्खाः कलाहीनाश्च भविष्यन्ति, दातारो दारिद्र्ययुक्ता भविष्यन्ति, लक्ष्मीधराः कृपणा भविष्यन्ति, पापिनो दीर्घजीवा भविष्यन्ति, उत्तमधर्मिणामायुः स्तोकं भविष्यति, राज्ञां कुलानि हीनानि भविष्यन्ति, पुनः सेवका उत्तमकुलवन्तो भविष्यन्ति, सज्जना मनुष्या दुःखिनो भविष्यन्ति, दुर्जना मनुष्याः सुखिनो भविष्यन्ति, एवं हे गौतम ! पंचमकालस्य स्वरूपं त्वं जानीहि ।

पुनर्लोकाः कलियुगस्य स्वरूपमेवं वदन्ति—द्वापरयुगे राजा युधिष्ठिरोऽभूत् , एकस्मिन् दिने स वने गतः, तत्र वने एका वृहती गौः लघुगोस्तनपानं कुर्वती दृष्टा, स्वसमीपे ब्राह्मणमिति पप्रच्छ—इदमाश्चर्यं विपरीतं पश्य, तदा ब्राह्मणो वदति—हे राजन् ! आगामिकाले कलियुगमध्ये हीनसत्त्वा मनुष्या भविष्यन्ति, लक्ष्मीं विना दुःखिनौ सन्तौ मातापितरौ कस्मैचित् धनवते कन्यां दत्त्वा धनं लात्वा ततः पश्चात् स्वनिर्वाहं करिष्यतः, एतादृशमुपनयं श्रुत्वा पुनः राजा युधिष्ठिरोऽग्रे गतः, पुरतः समानश्रेणिबद्धजलभृतानि त्रीणि सरांसि दृष्टानि, तत्र प्रथमैकसरसो जलमुच्छलत् मध्यस्थं तटाकं त्यक्त्वा तृतीयसरसि पतति, मध्यस्थसरसि एकबिन्दुमात्रमपि न पतति; एतादृशमाश्चर्यं दृष्ट्वा राजा ब्राह्मणं पृच्छति इदं किंकारणम् ? ब्राह्मणो वक्ति—हे राजन् ! त्वं शृणु—आगामिकाले यथा प्रथमसरसो जलं द्वितीयं तटाकं त्यक्त्वा तृतीये पतितं तथा हे राजन् ! स्वस्य संबन्धिनं त्यक्त्वा अन्यलोकैः सह जनाः प्रीतिं करिष्यन्ति, पुनः राजा युधिष्ठिरोऽग्रे गच्छन्नेकमाश्चर्यं पश्यति जलेन क्लिन्नं वालुकासमूहं तस्य बहवो मनुष्याः संभूयरज्जूः कुर्वन्ति परं रज्जूः त्रुटति यत्ने कृतेऽपि न तिष्ठति, एतादृशं व्यतिकरं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति—हे राजन् ! कृषिकारकलोका बहुभिः क्लेशैः कलियुगे धनमुपार्जयिष्यन्ति, तद् धनं चौराऽग्निराजदंडप्रमुखस्य भयेन मनुष्याणामन्यत्र गमने कृतेऽपि विनाशं यास्यति,

हरिवंशकुलोत्पत्तिः ७, चमरेन्द्रोत्पातः ८, एकस्मिन् समयेऽष्टाधिकशतमुक्तिगमनं ९, असंयतिपूजा १०, एतानि दश वस्तूनि अनन्त-
काले गते सति भवन्ति । बहवो लोकाः क्रोधवन्तो भविष्यंति, पुनर्दुःषमकालप्रभावतो लोका मर्यादां त्यक्ष्यन्ति, धर्मबुद्धेर्नाशो भवि-
ष्यति, लोका वक्रा मूर्खाश्च भविष्यन्ति, यथा कालहीनता भविष्यति तथा कुतीर्थे मतिं धारयिष्यन्ति, पुनर्लोकाः परोपकार–धर्मव-
र्जिता भविष्यन्ति, महान्ति नगराणि ग्रामसदृशानि भविष्यन्ति, ग्रामाः श्मशानसदृशा भयंकरा भविष्यन्ति, राजानः प्रजापालने
यमसदृशा भविष्यन्ति, पुनर्हे गौतम ! धनवन्तो व्यवहारिणो निर्धना भविष्यन्ति, पुनर्देवा दर्शनं न दास्यन्ति, मनुष्याणां जातिस्म-
रणज्ञानादीनि न भविष्यन्ति, मनुष्या लज्जामर्यादारहिता भविष्यन्ति, पृथिव्यां दुष्टजीवा बहवो भविष्यन्ति, पुनर्लोकाः परस्परं विघ्नं
दृष्ट्वा संतोषं प्राप्स्यन्ति, लोकानां पापकरणे चत्वारो हस्ता भविष्यन्ति, पुनर्धर्मकार्येऽलसाः प्रमादिनश्च भविष्यन्ति, आत्मनः कार्यं
लोकानामुदरमध्ये प्रवेशं करिष्यन्ति, पुनर्हे गौतम ! परजीवानामुपद्रवकरणे तत्परा भविष्यन्ति, पुनः पंचमकालसंबन्धिनो जीवा
महानिर्दया भविष्यन्ति, महादीर्घरोषधारका भविष्यन्ति, भद्रकजीवान् विप्रतारयिष्यन्ति, धर्ममूर्तिमन्तः स्तोका भविष्यन्ति, पापा-
नामाकराः स्थाने बहवो भविष्यन्ति, अत्यन्त लोभवन्तो भविष्यन्ति, मिथ्यात्विनोऽभिमानिनोऽनाचारिणोऽन्यायिनश्च लोका बहवो
भविष्यन्ति, पुनर्हे गौतम ! कुलवध्वो लज्जामर्यादारहिता भविष्यन्ति, वेश्यासमानाश्च भविष्यन्ति, राजा भृत्येभ्यो दण्डं दास्यति,
पृथिव्यां तिमिंगिलन्यायो भविष्यति, चौरकुले जाताश्चौरा भवन्ति परं राजानोऽपि चौरसदृशा भविष्यन्ति, लोकानां धनमपहरिष्यन्ति,
लोकान् दरिद्रिणः करिष्यन्ति, पुनर्हे गौतम ! पंचमकालमध्ये लोकानामग्निर्बह्वीं पीडां करिष्यति, गोप्रमुखाणां जीवानां बहुवधो
भविष्यन्ति, जिनालयाः पतिष्यन्ति, पुनर्दुःखदारिद्र्युपद्रवमलोत्सर्गमारीप्रमुखैः कृत्वा धरित्री शून्या भविष्यति, देशो भंगं यास्यति,

स्वर्णपौरुषादिः सिद्धिं यास्यति, धैर्यादिगुणविख्यातस्य विक्रमादित्यस्य स्थाने स्थाने मनुष्या देवाश्च प्रशंसां करिष्यन्ति, पुनः स राजा सर्वलोकानां दानसन्मानादिकं कृत्वा सर्वाननृणीकरिष्यति, स्वनाम्ना च संवत्सरप्रवृत्तिं करिष्यति, यस्य देवा अपि स्तवनं करिष्यन्ति, महाबलवान् प्रजापालकः परदुःखनिवारकः परस्त्रीसहोदरो राजा विक्रमादित्यो भविष्यति, ततः पंचशतचतुरशीतिवर्षे (५८४) व्यतिक्रान्ते श्रीवज्रस्वामी भविष्यति, ततो दशमपूर्वार्धस्य कीलिकासंहननस्य च विच्छेदो भविष्यति, तदनन्तरं षोडशाधिकषट्शतवर्षे (६१६) पुष्पमित्रेण सार्धं नवमं पूर्वं विच्छेदं यास्यति, पुनर्मम निर्वाणाद् विंशत्यधिकषट्शतवर्षे (६२०) आचार्यादयो ग्राममध्ये स्थास्यन्ति (?), मम निर्वाणाद् नवाधिकषट्शतवर्षे (६०९) रथनूपुरनगराद् दिगम्बरमतोत्पत्तिर्भविष्यति, श्रीविक्रमादित्यात् पंचत्रिंशदधिकशतवर्षे (१३५) गते शाकी राजा शालिवाहनो भविष्यति, पंचाशीत्यधिकपंचशतवर्षे (५८५) गते हरिभद्रसूरिर्भविष्यति अनेकग्रन्थकर्ता महाप्रभावको, मन्निर्वाणात् त्रिनवत्यधिकनवशतवर्षे (९९३) कालिकाचार्यो भविष्यति, यस्येन्द्रो वन्दनां करिष्यति, यः कालकसूरिः पर्युषणापर्व पंचमीतः चतुर्थ्यां कारणादानीतवान्, मन्निर्वाणात् सप्तत्यधिकद्वादशशतवर्षे (१२७०) व्यतिक्रान्ते वप्पभट्टिसूरिर्भविष्यति सर्वविद्याविशारदः, तद्वाक्याद् गोपपर्वते आमराजा जिनालयं कारिष्यति, तत्र सार्धत्रिकोटिस्वर्णप्रतिमां स्थापयिष्यति। मन्निर्वाणात् त्रयोदशशतवर्षे (१३००) बहवो मतभेदा भविष्यन्ति, बहुमोहस्य कारणात् दुःषमकालप्रभावतश्चानेकगच्छभेदा भविष्यन्ति, केचित् तपोऽहंकारं करिष्यन्ति, केचिच्च धर्मक्रियायां शिथिला भविष्यन्ति, क्रियावन्तोऽपि साधवः परस्परं क्लेशं करिष्यन्ति। पुनरस्यामवसर्पिण्यां दश अच्छेरका जाताः तानाह—

समवसरणे उपसर्गः १, गर्भापहारः २, स्त्रीतीर्थंकरः ३, परिषदभावः ४, कृष्णस्यामरकंकागमनं ५, चन्द्रसूर्यमूलविमानागमनं ६,

श्रेणिः ५, उपशमश्रेणिः ६, केवलज्ञानम् ७, परिहारविशुद्धि-सूक्ष्मसंपराय-यथाख्यातचारित्राणि ८, सिद्धिगतिः ९, जिनकल्पकः १०, एतानि दश वस्तूनि जम्बूस्वामितो विच्छेदं यास्यन्ति, ततो दुःषमकालप्रभावतश्चतुर्दशपूर्वधारी जम्बूस्वामि प्रतिबोधकः निजपट्टप्रभावकः श्रीप्रभवस्वामी भविष्यति. तत्पट्टे चतुर्दशपूर्वधरः दशवैकालिककर्ता मनक-पिता श्रीशय्यम्भवसूरिः भविष्यति, तत्पट्टे चतुर्दशपूर्वधारी यशोभद्रसूरिर्भविष्यति, तच्छिष्यौ सम्भूतिविजय-भद्रबाहुनामानौ चतुर्दशपूर्वधरौ भविष्यतः, ततो मम निर्वाणात् सप्तत्यधिकशतवर्षे ( १७० ) अनेकशास्त्रकर्ता भद्रबाहुः स्वर्गं यास्यति, ततो मम निर्वाणात् पंचदशाधिकद्विशतवर्षे ( २१५ ) चतुर्दशपूर्वधारी सम्भूतिविजयशिष्यः श्रीस्थूलिभद्रो देवलोकं यास्यति, ततः प्रथमं संहननं वज्रऋषभनाराचाख्यं विच्छेदं यास्यन्ति, ततोऽर्थतः चतुष्पूर्व-सूक्ष्मसंपराय-महाप्राणायामध्यानाख्यानि एतानि विच्छेदं यास्यन्ति, ततः मन्निर्वाणाद् त्रिशतवर्षे ( ३०० ) उज्जयिन्यां नगर्यां सम्प्रति राजा भविष्यति, स च आर्यसुहस्तिसूरिणामुपदेशात् जातिस्मरणज्ञानमवाप्य जैनधर्ममंगीकरिष्यति, स्वभुजबलात् त्रिखण्डभोक्ता भविष्यति, ज्ञानवान् दानवान् न्यायी धर्मज्ञो विनयवान् पराक्रमी च भविष्यति, मुक्ताफलवद् निर्मलजिनालयैः कृत्वा धरित्रीं देदीप्यमानां करिष्यति, पुनः स राजा अनार्यदेशे लोकानामुपकारार्थं सम्यक्त्वधारिणां जीवाजीवादिनवतत्त्वविदामुपदेशप्रदानार्थं तादृशानां श्रावकाणां धर्मसंयोगं कारयिष्यति, ततो महासंविग्नगीतार्थानां साधूनां म्लेच्छधरित्र्यां विहारं कारयिष्यति, अनया रीत्या तीर्थंकराणां धर्मस्य सर्वदेशे प्रवृत्तिं करिष्यति, एतादृशो महादृढधर्मा अनुक्रमेण स्वर्गं यास्यति. पुनर्मन्निर्वाणात् सप्तत्यधिकचतुःशतवर्षे ( ४७० ) उज्जयिन्यां श्रीविक्रमादित्योराजा भविष्यति, श्रीसिद्धसेनदिवाकराचार्यस्योपदेशं श्रुत्वा जिनशासनस्योपरि भक्तिमान् भविष्यति, सम्यक्त्वं सम्यग्रीत्या पालयिष्यति, तस्य मन्त्रसिद्धा अग्निवेतालाद्यनेकदेवाः साहाय्यं करिष्यन्ति, विद्या

न्तु कुदर्शनस्य पूजादि भविष्यति-८, नवमे शुष्क सरोवरं दृष्टं तेन यत्र यत्र देशे जिनानां कल्याणकानि तत्र तत्र धर्महानिर्भविष्यति ९,
दशमे सुवर्णपात्रे क्षीरं भक्षयन् श्वा दृष्टस्तेन उत्तमा लक्ष्मीरधमगृहे गमिष्यति १०, एकादशे गजारूढो वानरो वनचरो दृष्टः तेन
सुखारूढा दुर्जना भविष्यन्ति, इक्ष्वाकुवंशीयानां यादवप्रमुखाणां च हानिर्भविष्यति ११, द्वादशे समुद्रो मर्यादां मुंचन् दृष्टः, तेन राजानोऽन्या-
यकर्तारो भविष्यन्ति, क्षत्रियाश्च कुमार्गगामिनो भविष्यन्ति १२, त्रयोदशे महारथे वत्सा युक्ता दृष्टाः, तेन वृद्धावस्थायां चारित्रं जना
न ग्रहीष्यन्ति, परं वत्ससतुल्या लघुवयसः साधवो भविष्यन्ति, ये च वैराग्यभावेन चारित्रं ग्रहीष्यन्ति ते च प्रमादिनो भविष्यन्ति
१३, चतुर्दशे महार्घ्यं रत्नं तेजोहीनं दृष्टम्. तेन भरते ऐरवते च साधवोऽसमाधिकराः कलहकरा, उपद्रवकराश्च भविष्यन्ति, तथा
श्रमणा अपि स्तोका भविष्यन्ति १४, पंचदशे राज्ञः कुमारो वृषभारूढो दृष्टः, तेन क्षत्रिया मिथ्यात्ववासिनो भविष्यन्ति १५, षोडशे
गजकलभयुगलं युद्धं कुर्वद् दृष्टम् तेन मुनिवरा अल्पस्नेहा अकालव्यसनिनोऽहर्निशं युद्धकराश्च भविष्यन्ति, गुरुशुश्रूषाकरा न
भविष्यन्ति १६, एवं श्रुत्वा चन्द्रगुप्तो नाम राजाऽनशनं गृहीत्वा धर्मध्यानेन स्वर्गं गतः । इति षोडशस्वप्नविचारः कथितः । एता-
दृशं प्रभोर्वाक्यं श्रुत्वा गौतमस्वामी चित्ते विस्मयं विधाय प्रभोर्वन्दनां कृत्वा भाविस्वरूपं पप्रच्छ–अहो स्वामिन् ! लोकालोकप्रकाशक !
पंचम–षष्ठारकयोः स्वरूपं कथय, प्रभुर्वक्तिस्म–हे गौतम ! त्वं सावधानीभूय शृणु–मम निर्वाणात् त्रिवर्षसार्धाष्टमासे व्यतिक्रान्ते
चतुर्थारक उत्तरिष्यति, अग्रे च पंचमारक आयास्यति, ततो मम निर्वाणाद् द्वादशवर्षे व्यतिक्रान्ते तव मोक्षो भविष्यति, ततोऽस्म-
न्निर्वाणाद् विंशतिवर्षे गते सुधर्मस्वामिनो मोक्षो भविष्यति, ततोऽस्मन्निर्वाणाच्चतुष्षष्टिवर्षे गते जम्बूर्मुक्तिं यास्यति, ततो जम्बूस्वा-
मितो दश वस्तूनि विच्छेदं यास्यन्ति, तान्याह–आहारकशरीरं १, मनःपर्यवज्ञानम् २, पुलाकलब्धिः ३, परमावधिज्ञानं ४, क्षपक-

न्ताए वट्टमाणस्स पच्छिमे समये सोलससुमिणा दिट्ठा—तत्थ पढमे सुमिणे कप्परुक्खस्स साहा भग्गा १, बीए अकाले सूरो अत्थमिओ २, तइए चंदो सयच्छिद्दीभूओ ३, चउत्थे भूया नच्चंति ४, पंचमे दुवालसफणो कण्हसप्पो दिट्ठो ५, छट्ठे आगयं विमाणं पडियं दिट्ठं ६, सत्तमे असुइट्ठाणे कमलं संजायं ७, अट्ठमे खज्जोओ उज्जोअं करेइ ८, नवमे महासरोवरं सुक्कं दक्खिणदिसाओ थोवजलं लभन्ति ९, दसमे सुनहो सुवण्णपत्ते पायसं भक्खेइ १०, इक्कारसमे हत्थिआरूढो वणचरो दिट्ठो ११, दुवालसमे सायरं मंजायं मुंचइ १२, तेरसमे महारहे वच्छा जुत्ता दिट्ठा १३, चउदसमे महग्घं रयणं तेअहीणं दिट्ठं १४, पनरसमे रायकुमारो वसहारूढो दिट्ठो १५, सोलसमे गयकलहजुयला जुज्झंता दिट्ठा १६, एएण सुमिणाणुसारेण सासणे किं किं भविस्सइ ? इइ चंदगुत्तस्स रायस्स वयणं सुच्चा भद्दबाहुगणहरो युगप्पहाणो भवोदहितारगो चंदगुत्तस्स संघसमक्खं भणइ—चंदगुत्ता ! सुमिणाणुसारेण अत्थं कहेमि तं जहा''—प्रश्नसूत्रं सुगममत उत्तरसूत्रं व्याख्यायते-षोडशस्वप्नानां मध्ये प्रथमं तावत् चन्द्रगुप्तेन राज्ञा कल्पवृक्षस्य शाखा भग्ना दृष्टा, तस्य फलम् अतः पश्चात् कोऽपि राजा संयमं न ग्रहीष्यति १, द्वितीयस्वप्ने सूर्यस्याकाले एवास्तत्वं दृष्टं तेन केवलज्ञानं विच्छेदं यास्यति २, तृतीये चन्द्रः शतच्छिद्रो दृष्टस्तेन एकस्मिन् धर्मेऽनेके मार्गा भविष्यन्ति ३, चतुर्थे भूता नृत्यन्तो दृष्टास्तेन कुमतिजना भूता इव नर्त्स्यन्ति ४, पंचमे द्वादशफणः कृष्णसर्पो दृष्टस्तेन द्वादश वर्षाणि यावद् दुर्भिक्षं भविष्यति, कालिकसूत्रप्रमुखाणि श्रुतानि विच्छेदं यास्यन्ति, चैत्यद्रव्यधारिणो भिक्षुकाश्च, तत्र ये साधुधर्मकांक्षिणः ते सर्वे दक्षिणस्यां दिशि वलभ्यां गमिष्यन्ति ५, षष्ठे विमानं पतितं दृष्टं तेन जंघाचारणा-विद्याचारणाश्च साधवो भरते ऐरावते च नाऽऽगमिष्यन्ति ६, सप्तमे कचवरधरित्र्यां कमलमुद्गतं दृष्टं तेन धर्मश्चतुर्णां वर्णानां मध्ये वैश्यवंशमध्ये भविष्यति, सूत्ररुचिश्चाल्पजनानां भविष्यति, ७, अष्टमे खद्योत उद्योतं करोति, तेन जिनधर्मे उदयपूजासत्कारो न भविष्यति पर-

अमात्यं च तथाविधचेष्टाहितं ज्ञात्वा ते ग्रथिलाः सर्वे विचारयन्ति—राजाऽमात्यौ ग्रथिलो जातौ अतएव अस्माकं कार्यं न कुर्वन्ति, अत एतौ उत्थाप्य अन्यौ राजामात्यौ करिष्यामः, एतादृशं ग्रथिललोकानां विचारं श्रुत्वा अमात्यो राजानं वक्तिस्म, एते सर्वेऽपि लोका आवामुत्थाप्य अन्यौ राजामात्यौ स्थापयिष्यन्ति तदा कमपि उपायं कृत्वा आवयोः रक्षा कार्या, तदा राजा अमात्यं कथयतिस्म, भव-ता कश्चिदुपायो विधेयो येनाऽऽवयो रक्षा स्याद्, तदा विचार्य अमात्यो वदति स्म-हे राजन्! अन्यः कश्चिदुपायो नास्ति अत आ-वामपि ग्रथिलौ भवाव तदा इदं राज्यं स्थास्यति, इति विचार्य राजामात्यौ जानन्तौ अपि ग्रथिलौ भूत्वा, एभिः सार्धम् आत्मराज्यरक्षार्थं मिलितौ, ततः कियति दिने गते सति पुनः सुवृष्टिर्जाता तदा नवीनोदकस्य पाने सति सर्वे लोकाः सावधाना जाताः। एवं दुःषमकाले क्रियावन्तो गीतार्था अपि हीनाचारिभिः सार्धं सदृशीभूय विचरिष्यन्ति। एतादृशं स्वप्नफलविचारं श्रुत्वा गृहस्थावासतः उद्विग्नीभूय श्रीवर्धमानस्वामिसमीपे व्रतमंगीकृत्य पुण्यपालो मोक्षसुखभाग् बभूव। अत्र केचिद् श्रीभद्रबाहुस्वामिना उक्तान् अपि स्वप्नान् व्या-ख्यायन्ति, तथाहि—"ते णं काले णं, ते णं समए णं पाडलिपुरे नाम नयरे होत्था, जहा णं चंपा तहा भणियव्वा, तत्थ णं पाडलिपुरे नयरे पाडलनामवणसंडे होत्था, तत्थ णं पाडलिपुरे चन्दगुत्ते नाम राया होत्था, ते णं कालेणं ते णं समए णं चन्दगुत्तनामराया सम-णोवासगो अभिगयजीवाजीवो जाव अट्ठिमिञ्जापवयणरागरत्तो, अह अण्णया कयावि पक्खियपोसहम्मि पडिजागरमाणस्स सुहपत्तेसु ओहीरमाणे ओहीरमाणे सोलससुविणा दिट्ठा, पासिता, चिंता समुप्पन्ना, अह कमेण दिवायरे उट्ठिए पोसहं पारेइ। ते णं काले णं, ते णं समए णं संभूयविजयसीस्से भद्दबाहुनाम गणहरे जुगप्पहाणे गामाणुगामं विहरमाणे पंचसयसमणपरिवरिया पाडलिपुरे पाडलिवणसंडे समोस-रिए, राया आगओ जहा कोणिए, पंचविहेणं अभिगमेणं वन्दणेणं सोलससुमिणाणं अत्थं पुच्छइ—भयवं! अज्ज रयणीए मम धम्मचि-

युक्ता नाधमकुले, परन्तु धर्मोत्पत्तिः कालप्रभावतो नोत्तमकुले भविष्यति, इति षष्ठस्वप्नफलम् । यथा कश्चिद् मन्दबुद्धिः कृषिकारो धान्यबीजमूषरक्षेत्रे वपति तथा मूर्खबुद्धिमन्तः पुमांसः पात्रापात्रमनालोक्य पात्रबुद्ध्या कुपात्रे दानं दास्यन्ति, इति सप्तमस्वप्नफलम् । अष्टमस्वप्नफलम्—स्वर्णकलशसदृशा ज्ञानादिगुणयुक्ताः साधवः स्तोका भविष्यन्ति न च तेषां पूजाप्रभावनामपि कोऽपि करिष्यति, परन्तु ये बाह्याऽडम्बरवन्तो ज्ञानक्रियारहिताः साध्वाभासाः तान् लोकाः पूजयिष्यन्ति, गीतार्था अपि साधवो हीनाचारैरेभिः सह मिलिताः चलिष्यन्ति, यथा बहून् ग्रथिलान् लोकान् दृष्ट्वा सज्जनलोका अपि तेषां मध्ये मिलिताः सन्तः जानन्तोऽपि स्वयमात्मजीवितरक्षार्थं ग्रथिला भविष्यंति तथा । अथ तत्कथा—पृथिवीपुरे नगरे पूर्णभद्रनामा राजा आसीद् , तस्य महाबुद्धिनिधानः चतुरः सकलकार्यकुशलः सुबुद्धिनामा मन्त्रीश्वरोऽभूद् ; अथैकदा प्रस्तावे राजसभामध्ये लोकदेवनामा नैमित्तिकः समागतः, तदा अमात्येन पृष्टं, हे नैमित्तिकचूडामणे ! आगामिकालस्य शुभाशुभवार्तां कांचित् प्रकाशयतु, तदा नैमित्तिकेन निजनिमित्तशास्त्रं सम्यक् पर्यालोच्य स्वज्ञानबलात् कथितम्—हे मन्त्रीश्वर ! अतो दिनाद् एकस्मिन् मासे मेघवृष्टिर्भविष्यति, तज्जलपानं च ये करिष्यन्ति ते सर्वे मनुष्या ग्रथिलाः भविष्यन्ति, ततः पश्चात् कियति दिवसे शुभा वृष्टिर्भविष्यति, तज्जलपानाच्च पुनः सर्वे सावधाना भविष्यन्ति; एतादृशं नैमित्तिकस्य वचनं श्रुत्वा राजामात्याभ्यां नगरमध्ये घोषणा कारिता । यत् सर्वैः लोकैः पानीयस्य संग्रहः कर्तव्यः, तदनन्तरं सर्वैरपि राजवचनं श्रुत्वा पानीयस्य संग्रहः कृतः । अथ नैमित्तिककथनानुसारेण वर्षा जाता, तदा सर्वैरपि लोकैः वर्षापानीयस्य पानं न विहितम् , कियति दिवसे गते पूर्वसंगृहीतं जलं यदा सम्पूर्णं जातं तदा राजाऽमात्याभ्यां विना सर्वैः सामन्तादिभिरपि वर्षापानीयं पीतम् , तेन च सर्वग्रामो ग्रथिलः जातः-अथ सर्वे लोका एकत्रीभूय नग्नाः सन्तः नृत्यन्ति हसन्ति अन्याश्च कुचेष्टाः कुर्वन्ति, राजामात्याभ्यां विना सर्वे तादृशं कुर्वन्तः राजानम्

हे स्वामिन् ! अद्य रात्रौ मया अष्टौ स्वप्ना दृष्टाः,ताननुक्रमेण भवतामग्रे कथयामि—जीर्णशालायां स्थितो हस्ती दृष्टः १, कपिश्चपलतां कुर्वन् दृष्टः २, क्षीरवृक्षः कण्टकैर्व्याप्तो दृष्टः ३, चतुर्थे च स्वप्ने काको दृष्टः ४, पञ्चमे मृतः सिंहो भयं कुर्वन् दृष्टः ५, षष्ठे स्वप्नेऽशुचिभूमिकायामुत्पन्नमरविन्दं दृष्टम् ६, सप्तमे स्वप्ने ऊषरक्षेत्रे बीजमुप्तं दृष्टम् ७, अष्टमे स्वप्ने स्वर्णकलशो म्लानो दृष्टः ८, इति राज्ञा उक्ते एतेषां च फले पृष्टे प्रभुर्वक्ति–हे राजन् ! एषां फलमेकाग्रचित्तेन शृणु—अस्मिन् पञ्चमारके दुःख-दारिद्र्य-रोग शोक-भयैर्व्याप्तो गृहस्थाश्रमो जीर्णशालासदृशो भविष्यति; यस्मिन् गृहस्थरूपो हस्ती रक्तः सन् स्थास्यति; दुःखं च सुखं कृत्वा मानयिष्यति परमुत्तमसुखदात्रीं व्रतशालां नांगीकरिष्यति, इति प्रथमस्वप्नफलम् । पुनः पञ्चमकाले कपिवत् चपला अल्पसत्त्वा जीवा ज्ञानक्रियायामादरभाजो न भविष्यन्ति, साधवश्च शिथिलाचारा भविष्यन्ति, ये पुनः दृढव्रतधारका धर्मकार्ये शिक्षां दास्यन्ति तेषां हास्यं च करिष्यन्ति, यथा ग्रामीणलोका नगरस्थलोकानां हास्यं कुर्वन्ति; तथा करिष्यन्ति, इति द्वितीयस्वप्नफलम् । तथा ज्ञाने क्रियायां च भक्तिमन्तो जिनशासनोन्नतिकारकाः सप्तक्षेत्रीवित्तव्ययविधायकाः शुभगुणवन्तश्चारित्रागिणः क्षीरवृक्षतुल्या ये श्रावकास्तान् वेषमात्रधारिणोऽहंकारवन्तो गुणवत्साधुपूजामसहमाना लिंगिनः कण्टकतुल्याः रोधयिष्यन्ति, इति तृतीयस्वप्नफलम् । यथा अतिस्वच्छजलभृतां वापीं दृष्ट्वा काको न तत्र रागं करोति, एवं ज्ञानक्रियायुक्तान् अपि साधून् स्वगच्छे दृष्ट्वाऽपि रागं न साधवः प्राप्स्यन्ति, यथा काकस्य रागं न वापी प्राप्नोति तथा साधवोऽपि गच्छस्य रागं न करिष्यन्ति इत्यर्थः । परन्तु यत्र गच्छे मन्दाऽऽचाराः साधवः तत्र सुन्दरं स्वगच्छं त्यक्त्वा यास्यन्ति आत्मनः पण्डितं मन्यमानाः, इति चतुर्थस्वप्नफलम् । जातिस्मृत्यादिरहितं मृतसिंहतुल्यं जिनदर्शनं न परतीर्थिकात् पराभवं प्राप्स्यति परं परदर्शनानां भयं करिष्यन्ति, इति पञ्चमस्वप्नफलम् । पद्महृदे कमलोत्पत्तिर्युक्ता, न अशुचिभूमौ, एवं धर्मोत्पत्तिरपि उत्तमकुले

आगतः, तत्र बहुलविप्रगृहे परमान्नस्य पारणं चक्रे, तत्र पञ्च दिव्यानि प्रादुर्भूतानि । तत्र च सार्धद्वादशस्वर्णकोटीनां देवैर्वर्षा कृता । अनन्तरं क्रमेण विहरतः श्रीवीरप्रभोः गोपालक-चण्डकौशिकसर्प-शूलपाणियक्ष-संगमदेव-कटपूतनाव्यन्तरीप्रमुखैः बहव उपसर्गाः कृताः, तथापि प्रभुर्ध्यानात् किंचिन्मात्रमपि न चचाल; मेरुवन्निष्प्रकंप आसीत्, श्रीवीरप्रभोः चातुर्मासी षण्मासी-द्विमास्यादि प्रचण्डतपः क्रियायामुद्यतस्य पक्षाधिकसार्धद्वादशवर्षाणि अतिक्रान्तानि । तस्मिन् समये जृम्भिकग्रामे ऋजुवालुकानदीतीरे श्यामाककुटुम्बिनः क्षेत्रस्य समीपे शालवृक्षस्याधोभागे गोदोहासनेन स्थितस्य षष्ठतपोयुक्तस्य वैशाखशुक्लदशम्यां तृतीयप्रहरे शुक्लध्याने वर्तमानस्य श्रीवीरप्रभोश्चतुर्णां घातिकर्मणां क्षये सति केवलज्ञानं केवलदर्शनं च समुत्पन्नम् । तत एकादश्यां मध्यमपापायां महासेनवने तीर्थं प्रवर्तितम्, शक्रादिदेवैरेकत्रीभूय समवसरणं रचितम्, पश्चाद् इन्द्रभूत्याद्येकादश गणधराः श्रीवीरेण स्थापिताः । अथ प्रभोः चतुर्दशसहस्रमिताः साधवः संजाताः, चन्दनबालादिषट्त्रिंशत्सहस्रमिताश्च साध्व्योऽभूवन्, शंख-शतकादि एकोनषष्टिसहस्राधिकलक्षप्रमाणाः श्राद्धाः, सुलसा-रेवतीप्रमुखाष्टादशसहस्राधिकत्रिलक्षप्रमाणाः श्राविकाश्च संजाताः । अथ प्रभोश्चतुर्मासीनां संख्या कथ्यते—दीक्षाऽनन्तरं प्रथमचतुर्मासी अस्थिग्रामे शूलपाणियक्षगृहे कृता, त्रिचतुर्मासी चम्पानगर्याम्, विशालायां-वाणीयग्रामे द्वादश चतुर्मास्यः कृता, राजगृहनगर्यां नालन्दपाटके चतुर्दश चतुर्मास्यः, षट् चतुर्मास्यः मिथिलानगर्यां भगवता कृताः, द्वे चतुर्मास्यौ भद्रिकानगर्यां कृते, एका चतुर्मासी आलम्भिकानगर्यां कृता, एका चतुर्मासी म्लेच्छभूमिकायां कृता, एका चतुर्मासी श्रावस्तीनगर्यां कृता, एका च मध्यमपापायां हस्तिपालराज्ञः सभायामन्तिमा कृता, तत्र अन्तिमचातुर्मास्यां श्रीवीरप्रभुः स्वस्यायुषोऽन्तं ज्ञात्वा भव्यलोकोपकारार्थं षोडशप्रहरान् यावद् देशनां दत्तवान्, तस्मिन्नवसरे पुण्यपालराजा प्रभोर्वन्दनार्थमागतः, श्रीवीरप्रभोर्वन्दनां कृत्वा हस्तद्वयं सम्पुटीकृत्य इति-वक्ष्यमाणं पृष्टवान्-

शद्दिक्कुमारीणामासनानि चकम्पिरे, अवधिना प्रभोर्जन्म ज्ञात्वा अत्यन्तप्रमुदिताः सन्त आगत्य जन्मकार्यं कुर्वन्ति। तदनन्तरं चतुष्षष्ठिसुरेन्द्राणामासनानि चकम्पिरे, ततस्तेऽपि अवधिना विज्ञाय अत्यन्तप्रमुदिताः सन्त आगत्य त्रिःप्रदक्षिणीकृत्य जिनाम्बां जिनं च नत्वा मातरमवस्वापिनीं निद्रां दत्त्वा प्रभुं गृहीत्वा मेरुपर्वतोपरि गत्वा स्नात्रमहोत्सवमहंपूर्विकया चक्रुः। पश्चात् मातुः समीपे स्थापयित्वा मातरवस्वापिनीं निद्रां संहृत्य नमस्कृत्य स्वस्थानं जग्मुः। अथ यस्माद् दिनात् प्रभुर्गर्भे आगतस्तस्माद् दिनाद् राजा धनधान्यैर्वृद्धिमाप, स्वर्णरत्नादीनां च वृद्धिः संजाता. ततो गुणनिष्पन्नं सर्वस्वजनसमक्षं माता–पितृभ्यां द्वादशे दिने वर्धमानकुमार इति नाम प्रदत्तम् , देवैश्च अनन्तसत्त्वमनन्तधैर्यं दृष्ट्वा महावीर इति नाम विदधे। अथ भोगसमर्थं ज्ञात्वा पित्रा परं प्रमोदतो यशोमतीनाम्न्या राजकन्यया सह पाणिग्रहणं कारितम्। अथ प्रभोः सुपार्श्वनामा पितृव्यः, नन्दिवर्धननामा ज्येष्ठो भ्राता, सुदर्शनानाम्नी भगिनी, यशोमती नाम्नी पत्नी, प्रियदर्शनानाम्नी च पुत्री आसीद्। श्रीवीरप्रभुः अष्टाविंशतिवर्षाणि यावद् गृहावासे तस्थौ। भगवता पूर्वं गर्भे एवाभिग्रहः कृतोऽभूद्यत् जीवतोः सतोः मातापित्रो मया दीक्षा न गृहीतव्या इति। अथ मातापितृभ्यां देवलोके प्राप्ते अभिग्रहं पूर्णं सञ्जातं ज्ञात्वा प्रभुर्दीक्षां ग्रहीतुं तत्परोऽभूत् , तदा नन्दिवर्धनराज्ञ आग्रहात् पुनरपि वर्षद्वयं गृहस्थावासे तस्थौ; तत्र सांवत्सरिकं दानं दत्तम्। अथ लोकान्तिकदेवा आगत्य जानन्तमपि प्रभुं दीक्षावसरं ज्ञापयन्ति–'अहो स्वामिन् ! धर्मतीर्थप्रवृत्तिं कुरु' इति देववचनं श्रुत्वा प्रभुः षष्ठतपसा संयुतः चन्द्रप्रभानाम्नीं शिबिकामारुह्य देवमनुष्यपरिकरेण युतः क्षत्रियकुण्डनगरतो निःसृत्य ज्ञातवनखण्डे आगत्य शिबिकातः उत्तीर्य मार्गशीर्षकृष्णदशम्यामपराह्णे एकाकी एकदेवदूष्येण वस्त्रेण सहितः दीक्षां जग्राह। तस्मिन् समये चतुर्थं मनःपर्यवज्ञानमुत्पन्नम्। अथ दीक्षां गृहीत्वा प्रभुरन्यत्र विजहार। प्रव्रज्यादिनाद् द्वितीये दिने कोल्लाकसन्निवेशग्रामे

प्राणतनामदशमदेवलोकस्य पुष्पोत्तरविमानाच्च्युतः, आषाढशुक्लषष्ठीदिने उत्तराफाल्गुनीनक्षत्रे चन्द्रयोगे आगते सति क्षत्रियकुण्डग्रामनगराधिपतिश्रीसिद्धार्थराज्ञो भार्यायाः त्रिशलायाः कुक्षावुत्पन्नः। यस्यां रात्रौ भगवानुत्पन्नः तस्यां रात्रौ गर्भप्रभावात् त्रिशलाराज्ञ्या चतुर्दश स्वप्ना दृष्टाः, तानाह-सिंहः, गजः, वृषभः, लक्ष्मीः, पुष्पमाला, चन्द्रः, सूर्यः, ध्वजः, पूर्णकलशः, पद्मसरः, समुद्रः, देवविमानम्, रत्नराशिः, निर्धूमाग्निश्च। एवमेते स्वप्नाः क्रमेण दृष्टाः ❀ ततः चैत्रशुक्लत्रयोदश्यामर्धरात्रे श्रीवीरप्रभोः जन्म जातम्, तस्मिन् समये षट्पंचा—

---

❀—अत्र सामान्येन नाममात्रेण संक्षिप्तं श्रीवीरचरित्रं दर्शितम्, अतएव देवलोकात् च्युत्वा आषाढशुक्लषष्ठ्यां देवानंदागर्भागमनं तथैव द्व्यशीतिदिनव्यतीते इन्द्रेण त्रिशलागर्भे अवतारितः, ( गर्भापहारः कारितः, इत्यर्थः ) एष च विशेषार्थो न दर्शितः। जैनसिद्धांते विशेषार्थे विद्यमानेऽपि सामान्यव्याख्याऽवसरे विशेषार्थस्य व्याख्यानं न भवति; यथा—कल्प—आवश्यक—आचारांगादौ आगमपचांगीशास्त्रेषु 'देवानंदागर्भात् द्व्यशीतिदिनव्यतीतेषु सत्सु हरिणेगमेषिदेवेन त्रिशलागर्भे स्थापितः श्रीवीरप्रभुः' एतद्विशेषव्याख्याविद्यमानेऽपि पंचाशकसूत्रवृत्तौ सामान्यव्याख्याऽवसरे तस्योल्लेखो न कृतः, तेन तस्य तत्र अभावो न भवति, तथैव अत्राऽपि देवानंदागर्भागमने विद्यमानेऽपि तस्योल्लेखो न कृतः, तथापि तस्य अभावो न भवति, अतएव अत्र सामान्यविशेषापेक्षया तद् अवगंतव्यम्। किमुक्तं भवति श्रीवर्द्धमानस्वामिनः विशेषतः षट्सु कल्याणकेषु आगमानुसारेण विद्यमानेषु अपि, अत्र सामान्यापेक्षया त्रिशलागर्भागमन—जन्म दीक्षादिपंचकल्याणकानि उक्तानि. तथैव पंचाशकसूत्रवृत्तावपि—सर्वजिनेंद्रापेक्षया च्यवन—जन्म—दीक्षादिपंचकल्याणकानि-सामान्येन उक्तानि। परं च कल्प—स्थानांग—आचारांग—आवश्यकनिर्युक्ति-चूर्ण्यादिआगमेषु-महापुरुषचरित्र-वीरचरित्र-त्रिषष्टिशलाकापुरुषचरित्र-कल्पनिरुक्त-टिप्पणकादि प्राचीनशास्त्रेषु च विशेषेण च्यवन गर्भसंक्रमण—जन्म—दीक्षादिषट्कल्याणकानि दर्शितानि, तेनात्र विसंवादो न संभाव्यः समवायांगसूत्रवृत्ति—आवश्यकचूर्णि-लोकप्रकाश—दशाश्रुतस्कंधादिशास्त्रानुसारेण श्रीवीरस्य च्यवनद्वयस्य संसिद्धत्वात्. सामान्यविशेषापेक्षया च अस्य विशेषनिर्णयो कल्पद्रुमकलिकायाः प्रथमव्याख्यानात्, अस्मत् निर्मितबृहत्पर्युषणानिर्णयस्योत्तरार्धाच्च अवगंतव्य इति मणिसागरः।

विहरन् जीवितस्वामिश्रीमहावीरप्रतिमावन्दनार्थं गतः, एतस्मिन् प्रस्तावे संप्रति राजा राजमार्गे गच्छन् सुस्थितसूरिं दृष्ट्वा जातिस्मरणभाग् बभूव । ततः राजा समीपे आगत्य बहुभक्तिपूर्वकं श्रीगुरुं ननाम । करद्वयं संयोज्य राजा गुरुं प्रति वक्तिस्म–'हे स्वामिन् ! मां जानीथ' इति पृष्टे गुरुराह–हे राजन् ! भवन्तं को नाम न जानाति ?; ततो राजा पुनरुवाच-हे ज्ञानसमुद्र ! ज्ञानविशेषेण भवताऽहमुपलक्षितो न वा ? इति मया पृच्छयते, तदा सूरिश्चमत्कारं प्राप्य श्रुतज्ञानोपयोगं दत्त्वा उवाच–भो राजन् ! त्वं पूर्वभवे संवेगवानस्माकं शिष्यो बभूव, उत्तमदीक्षाप्रभावतो भवान् राजा जातः, एषा च सम्पत् प्राप्ता । एतादृशं गुरोर्वचनं श्रुत्वा आचार्ये प्रीतिमान् राजा वक्ति–हे स्वामिन् ! मया बुभुक्षितेन रंकेन इदं राज्यं प्राप्तं तत्सर्वं युष्माकं प्रसादफलं; इतरथा मम राज्यं कुतः ? तस्मादिदं राज्यं भवद्भिर्ग्राह्यं; यथाऽहमनृणी स्याम्, एतादृशं राज्ञो वाक्यं श्रुत्वा गुरुरुवाच–हे निर्मलबुद्धे राजेन्द्र ! अस्माकं राज्यस्यवाञ्छा नास्ति, वयं तु शरीरेऽपि निःस्पृहाः किं पुनः राज्ये, तस्माद् हे राजेन्द्र ! अस्माकं राज्येन सह किमपि प्रयोजनं नास्ति, इदं राज्यं भवद्भिः पुण्यात् प्राप्तं; ततो हे राजेन्द्र ! पुनः पुण्ये उद्यमः कर्त्तव्यः, निर्मलं सम्यक्त्वं च पालनीयम् । श्रीजिनेश्वरजगन्नाथस्य निरन्तरं पूजां कुरु । पुनः सुसाधूनां निर्ग्रन्थानां पंचसमितिसमितत्रिगुप्तिगुप्तानां सप्तदशभेदसंयमपालकानां द्विचत्वारिंशदाहारदूषणवर्जितानां भव्यजीवोपकारकाणां सेवां कुरु, दानादिचतुर्विधस्य धर्मस्याराधने उद्यमं कुरुष्व, एष धर्मो विशेषेण पर्वसु आराधनीयः, एतादृशं गुरुवाक्यं श्रुत्वा राजा उवाच–हे स्वामिन् ! संवत्सरादि समस्तपर्व जिनशासने प्रसिद्धं वर्तते, तस्य पर्वणो महिमा श्रावकैः बहुतरो मन्यते; परं लोकोत्तरं दीपावलिपर्व कुतः प्रवृत्तं ? अस्मिन् पर्वणि चारुवस्त्रभूषणादीनि मनुष्या धारयन्ति, पुनः वृषभादिशृंगरंजनक्रियां गृहांगणप्रमुखसंस्कारादीनि च कुर्वन्ति, तस्य किं कारणम् ? इति राज्ञा पृष्टे सति गुरुर्वक्तिस्म–हे राजन् ! एतस्य सम्बन्धं त्वमेकाग्रचित्ततया शृणु । श्रीवर्धमानस्वामी

धर्मकर्माणि विधाय तत्पर्वाराधनीयं, येनेह परत्र च सर्वेष्टसिद्धिः ॥
संवद्व्योमरसाष्टशाशिप्रमिते ( १८६० ), मासे शुचौ शोभने। पक्षे प्रोज्ज्वलतायुते सुविहिते, सम्यग्द्वितीयातिथौ ॥
श्रीपूज्यजिनहर्षसूरिगणभृद्राज्ये मुदाष्टाह्निका—व्याख्यानं सुगमं हितं सुविहितं श्रीजेसलाद्रौ पुरे ॥ १ ॥
श्रीमंतो गुणशालिनः समभवन् , प्रीत्यादिमाः सागरा-स्तच्छिष्याऽमृतधर्मवाचकवरा आसन् स्वधर्मादराः ॥
तच्छिष्यैर्जिनराजराजिचरणांभोजप्रसक्तैः क्षमा-कल्याणाभिधपाठकैः सुमनसां श्रद्धावतां प्रीतये ॥ २ युग्मं ॥
मुनेरुदयरंगस्या-ग्रहाद्व्याख्यानमादरात् ॥ इदं व्यधायि प्राचीनं पद्यबन्धं विलोक्य तत् ॥ ३ ॥

॥ इति पर्युषणाद्यष्टाह्निकाव्याख्यानं सम्पूर्णम् ॥

## अथ दीपमालिकाव्याख्यानम् ॥ ११ ॥





श्रीनेमीशं जिनं नत्वाऽजिमगंजपुरे स्थितम् । दीपोत्सवस्य व्याख्यानं, लिख्यते देवभाषया ॥ १ ॥

अस्मिन् जंबूद्वीपे भरतक्षेत्रस्य मध्यखंडे मालवदेशे अलकातुल्या उज्जयिनी नाम नगरी बभूव । तस्यां सूर्यवत् तेजस्वी भूपगुणसमन्वितः संप्रतिनामा राजा राज्यं करोतिस्म । अथैकदा उज्जयिन्यां सुस्थितसूरिनामा आचार्यः षट्त्रिंशद्गुणैर्विभ्राजमानो ग्रामानुग्रामं

दार्थमुद्यतो भवति, तावदेव सा तस्य खड्गधारां बबन्ध, न पुनस्तस्य सत्वस्य. ततो राजा खड्गधाराबन्धनाद्विलक्षः सन् कंठनालविडंबकं नवं नवं खड्गं गृहीतवान्, यदासौ भूपतिर्मनागपि सत्वान्न चचाल तदा ते स्त्रियौ स्वकीयं रूपं प्रादुःकृत्याऽत्यादराज्जयजयेत्युचतुः, पुनश्च—

जय ! त्वं वृषभस्वामि ! कुलसागरचन्द्रमाः । जय ! सत्ववतां धुर्यः, जय ! चक्रीशनंदनः ! ॥ १ ॥

अहो ! तव धैर्यं ! अहो ते मनसो निश्चयः ! यत्स्वस्य विनाशेऽपि मनाक् स्वव्रतं न त्यक्तवान्. देवेन्द्रः स्वसभायां देवानां पुरस्तवातुलं सत्त्वं विशेषतः प्रशशंस, हे राजन् ! आवाभ्यां अश्रद्धानाभ्यां स्वर्गादागत्य स्वनिश्चयात्त्वं क्षोभयितुमारब्धः, परं त्वां क्षोभयितुं कोऽपि न समर्थः. हे जगत्प्रभुकुलावतंस ! हे वीर ! त्वयैव इयं पृथ्वी रत्नसूरिति सत्यं नाम बिभर्ति, इत्थं तयोः स्तुवत्योस्तत्र देवेंद्र उपागमत् , जयजयशब्दमुच्चरन् पुष्पवृष्टिं च कृतवान् . तदा प्रतिज्ञाभ्रष्टा उर्वशी इन्द्रेण सोपहासं निरीक्षिता सती तत्पुरतो नृपगुणान् जगौ. इन्द्रोऽपि तस्मै वरमुकुटकुंडलांगदहारान् दत्त्वा च ताभ्यां सह स्वर्गं ययौ. सूर्ययशा अपि सत्यप्रतिज्ञः प्रमुदितः सन् सन्नीत्या पृथ्वीं पालयतिस्म. अथ स राजा भरतेशवत् पृथ्वीं जिनगृहमंडितां कुर्वन् श्रीसंघयात्रया जन्म पवित्रयन् श्रीयुगादिजिनचरणवत् नित्यं चतुर्दश्यष्टमीपर्वं आराधयामास, तथा व्रतधारिणः श्रावकान् स्वगृहे भोजयामास. पूर्वं भारतेन कांकिणीरत्नरेखाभिः श्रावका अंकिताः, सूर्ययशसा तु सौवर्णोपवीतेन तेन तेंचिताश्चक्रिरे. तस्य राज्ञ उदारचरिता बहवः कुमारा आसन् . यथा ऋषभस्वामिन इक्ष्वाकुवंशो वर्तते, तथा सूर्ययशसः सूर्यवंशोऽभवत् ; सोऽप्येकदा पितृवत्स्वरत्नदर्पणे पश्यन् संसारासारतां धारयन् केवलज्ञानं प्राप्य बहून् भव्यान् प्रतिबोध्य मुक्तिं प्राप । इति निजनियमदृढपालने सूर्ययशोनृपकथा ॥ भव्यात्मभिरष्टाह्निकापर्वणीत्थं

त्वया स्वल्पेन कार्येण क्रोधवशं गतः, हे नाथ ! अहं शीलादपि
करणमंगीकृतमेव, अहमेकदा त्वत्परीक्षार्थं त्वत्तस्तद्याचितवती, त्वं तु हहा स्वल्पेन कार्येण क्रोधवशं गतः, हे नाथ ! अहं शीलादपि
सुखादपि उभयस्माद् भ्रष्टा, तस्मान्मम चिताग्निसेवनमेव श्रेयःशरणमस्तु. इति तद्वचः श्रुत्वा तन्मग्नमानसो नृपः स्ववाक्यं स्मरन् जगाद,
हे प्रिये ! तातताते न च यत्कृतं तत्पर्वणो नाशं तत्पुत्रोऽहं कथं कुर्वे ? हे हरिणाक्षि ! मम सकलां पृथ्वीं कोशं गजाश्वादीं च सर्वान्
त्वं स्वयं गृहाण; परं येन न सौख्यं, न च धर्मस्तदकृत्यं मां मा कारय ? ततः सापि ईषद्विहस्य कोमलवाण्या प्रोवाच, हे राजन् !
भवादृशां सत्यवचनमेव सद्वृत्तं, यतो येन पापिना स्वांगीकृतविघातः कृतः सोऽशुचिस्तस्य भारात्पृथ्वी अतिषीदति. हे नाथ ! यदि
त्वया इदमपि कार्यं न सिद्ध्यति तदा राज्यादिदातृत्वं कथं सेत्स्यति ? त्वदर्थं मया पितुर्विद्याधरैश्वर्यं त्यक्तं मयैतद्राज्यादिना किं
कुर्वे ? अथ हे स्वामिन् ! यदि पर्वभंगं न कर्त्ता, तर्हि मत्पुरतो युगादीशप्रासादं पातय ? इति तद्वचनश्रवणमात्रेणैव नृपो वज्राहत
इव मूर्छां प्राप्य गतचैतन्यो भुवि पपात. तदैव मंत्रिणा आदेशाद्व्याकुलैस्तत्परिकरजनैः शीतलजलादिसंसेकान्नृपो लब्धचैतन्यो विहितः;
अथ सूर्ययशा नृपः स्वपुरः स्थितां तां स्त्रियं दृष्ट्वा कुपितो जगाद, रे अधमे ! अयं तवाचारो वाण्या मत्पुरः स्वकुलाधमतां विकि-
रति, यत उद्गारवदाहारो भवेत्, त्वं विद्याधरपुत्री न, किंतु चांडालपुत्री दृश्यसे, मया मणिभ्रमेणैव काचखंडादरश्चक्रे, यो देवस्त्रैलो-
क्यनाथस्त्रैलोक्यवंदितस्तत्प्रासादभंगकृत् कोऽपि कथं भवेत् ? तस्मात् हे स्त्रि ! स्वयं स्ववचसा बद्धं मामनृणं कर्तुं धर्मलोपं विनाऽन्य-
द्याचस्व ? पर्वलोपं चैत्यध्वंसं चाहं सर्वथा न करोमि, तत् श्रुत्वा सापि ईषद्विहस्य पुनस्तमुवाच-हे नाथ ! अन्यदन्यदिति च तद्वचो
दूरतो याति, यदीदं त्वं नांगीकर्त्ता, तर्हि त्वं स्वयं स्वपुत्रस्य शिरश्छित्वा सद्यो मह्यं देहि ? अथ राजा विमृश्य वदतिस्म, हे
सुलोचने ! मत्सुतो मत्तोऽभवत्, तस्मान्मम शिरस्तव करतलस्थमस्तु, इत्युक्त्वा नृपः करेण खड्गं गृहीत्वा यावत् स्वशिरश्छे-

तपश्च कर्त्तव्यं, जिनपूजाश्च विधेया, इत्थमेतानि पर्वाण्याराधयन् जनः पुण्यान्यर्जयति, ततः क्रमेण कर्माणि क्षपयित्वा मुक्तिं याति, अतो हे कान्ते ! सप्तम्यां त्रयोदश्यां च लोकप्रबोधाय अयं पटहोद्घोषो मयादेशात्प्रजायते. अथोर्वशी एतन्नृपवचः श्रुत्वा तन्निश्चयचमत्कृतापि माय.वचनप्रपंचेन जगाद, हे नाथ ! इदं मनुष्यत्वमिदं रूपमिदं राज्यं सर्वं तपःक्लेशादिभिस्त्वया कथं विडंब्यते ? यथेच्छं सुखानि भुंक्ष्व ? पुनर्मानवो भवः क ? राजसद्भोगाश्च क ?

अथ कर्णयोस्तप्तत्रपुतुल्यं तस्यास्तद्वचनं श्रुत्वा नृप उवाच रे रे धर्मनिंदामलिनस्वभावेऽधमे ! इयं तव वाणी मनागपि विद्याधरकुलाचारोचिता न दृश्यते, तव सकलं चातुर्यं धिक्, रूपं वयः कुलं च धिक्, येन त्वं जिनपूजादिकं मद्धर्मकृत्यं निंदसि, पुनर्मनुष्यत्वसद्रूपारोग्यराज्यादीनि तपसा प्राप्यंते, तत्तपः कः कृतज्ञो नाराधयेत् ? यो नाराधयेत् स कृतघ्न एव, धर्माराधनतो हि देहस्य विडंबनं न स्यात्, धर्मं विना केवलं विषयैस्तु विडंबनमेव, तस्माद्यथेच्छं धर्मः कर्त्तव्यः, पुनः पुनर्मानवो भवः क ? व्रतधीः का ? मृगसिंहादिबाला अपि अष्टम्यां पाक्षिके चाहारं न गृह्णंति, तर्हि अहं कथं गृह्णामि ? तेषां ज्ञातृत्वं च धिगस्तु, ये सर्वधर्मकारण पर्वाराधनं न कुर्वंति. श्रीयुगादिजिनोपदिष्टमिदमुत्तमं पर्वास्ति, तदहं तपो विना कंठगतप्राणैरपि पर्व वृथा न कुर्वे, हे स्त्रि ! मम राज्यं प्रयातु, प्राणक्षयोऽस्तु, परं पर्वतपसोऽहं भ्रष्टो न भवामि ! तत इत्थं क्रोधाकुलं नृपवचः श्रुत्वा उर्वशी मोहमायां कुर्वंती पुनरुवाच–स्वामिन् ! भवतः कायक्लेशो माभूदिति प्रेमरसत एव मयैतद्वचः प्रोक्तं, तस्मात्क्रोधावसरोऽत्र नास्ति. पूर्वंतु आवाभ्यां पितृवाक्यविमुखीभ्यां स्वच्छंदचारी नृपतिर्न वृतः, सांप्रतं पूर्वकर्मपरिपाकात् त्वं वरो वृतस्तेनावयोः संसारसौख्यं शीलं च सर्वमकस्माद्गतं, यदि स्वाधीनपुंस्त्रियोर्योगो भवेत्तदा सांसारिकं सुखं स्यात्, अन्यथा रात्रिदिवसयोरिवद्विडंबनमेव, हे स्वामिन् ! पुरा नाभेयजिनाग्रे त्वया तु मद्वाक्य-

उवाच. आवां मणिचूड विद्याधरराजस्य पुत्र्यौ, आबाल्यात्कलास्वेवादरवत्यौ अभूतां, क्रमेण यौवनं प्राप्ते वीक्ष्य अस्मत्पिता वर्चिंतां
कर्तुं लग्नः, आवां स्वमदृशं पतिमलभमाने स्थाने स्थाने अर्हच्चैत्यानां नमस्याभिर्निजं जन्म सफलं कुर्वहे। पुनर्मानवो भवः क्व ? इयम-
योध्यापि तीर्थभूतास्ति, अतोऽत्र भरतकारिते चैत्ये आदिजिनं नमस्कर्तुमावयोरागमनमभूत्. एवं कथयंत्योस्तयोर्मंत्री उवाच-अमुना
सूर्ययशसा नृपेण सह युवयोः संगमः श्रेष्ठो; यतोऽसो ऋषभस्वामिनः पौत्रो भरतचक्रिणः पुत्र सर्वकलासंपूर्णः सौम्यः सद्गुणवान्
बलवांश्च अस्ति तस्मान्निश्चितं ऋषभस्वामी युवयोस्तुष्टो यदुत अकस्मात्सूर्ययशा वरः प्राप्तः। मंत्रिणि एवं वदति सति ते तमूचतुः
आवां हि स्वाधीनं पतिं मुक्त्वान्यं पतिं नैवाश्रयावहे. ततोऽमात्यो नृपाज्ञया ते इत्यवोचत्, युवयोर्वाचमन्यथा कुर्वन्नृपतिर्मया निषे-
ध्यः, मंत्रिणा एवमुक्ते सति तदैव श्रीयुगादीशसमक्षं तेषां पाणिग्रहोत्सवः संजातस्ततस्तयोः प्रीतिरसाकृष्टो भूपतिः संसारे तद्भोगमेव
मारं मन्यमानोऽहर्निशं ताभ्यां सह विविधान् भोगान् भुंजानो विस्मृतान्यकृत्यः सुखेन कालं निनाय। अथ एकदा संध्यासमये ताभ्यां
पत्नीभ्यां युतः सूर्ययशा नृपो गवाक्षं ययौ, तदा भो लोकाः! श्वोऽष्टमीपर्व भावि, ततस्तदाराधने सादरैर्भाव्यमिति पटहोद्घोषणां ताभ्यां
कपटस्त्रीभ्यां श्रुत्वा ततोऽवसरं विज्ञाय रंभाऽजानतीव नृपतिं प्रति सादरा सती भंभावादनकारणमपृच्छत्। नृपतिरुवाच हे रंभे! शृणु, ?
अस्माकं तातेनोक्तं चतुर्दश्यष्टमीरूपं पर्वास्ति, यथामावास्या पौर्णमासी अष्टाह्निकाद्वयं चातुर्मासत्रियं वार्षिकं पर्युषणाख्यं च पर्व एतानि
अन्यान्यपि पर्वाण्युक्तानि संति; ज्ञानाराधनार्थं पंचमी च प्रोक्तास्ति। एतेषु पर्वदिनेषु विहितं पुण्यं स्वर्गमोक्षसुखप्रदं भवेत्. तस्माच्चतुः-
पर्व्यामखिलं गृहव्यापारं परित्यज्य शुभं कर्म विधेयं; पुनश्चतुःपर्व्यां स्नान-स्त्रीसंग-कलह-द्यूतक्रीडा-परद्रव्य-मात्सर्य-क्रोधादिकषा-
यसंगप्रमादादि न किमपि कर्त्तव्यं, प्रियेष्वपि ममता न विधेया, परमेष्ठिस्मरणादिशुभध्यानवता भाव्यं, सामायिकं पौषधं च षष्ठाष्टमप्रमुखं

कंपते, समुद्रो वा मर्यादां त्यजेत्, कल्पवृक्षो वा निष्फलो भवेत् तथाप्येषा कंठगतैः प्राणैरपि जिनाज्ञावत् स्वकृतं निश्चयं न मुंचति, अथोर्वशींद्रवचः श्रुत्वा किंचिन्मनसि विचार्य प्रत्युत्तरमुवाच-हे स्वामिन् ! युक्तायुक्तज्ञस्त्वं मनुष्येषु निश्चयं किं श्लाघसे ? यः सप्तधातुनिष्पन्नशरीरोऽन्नजीवकः स देवैरप्यचाल्य इति कः श्रद्धाति ? मद्गानरसपूरेण केषां विवेकप्रमुखा गुणा न विलयं यांति ? तत्र गत्वा तमप्यहं सद्यो व्रताद् भ्रंशयिष्ये, इति प्रतिज्ञां विधाय रंभया सहिता उर्वशी हस्तेन वीणां दधाना स्वर्गात् भूमिमवतरतिस्म; अयोध्यानिकटोद्याने च श्रीऋषभस्वामिनश्चैत्ये मोहोत्पादकमत्यद्भुतं रूपं कृत्वा गायतिस्म; तद्गानमोहिताः पक्षिमृगसर्पाद्या अपि आलेख्यलिखिता इव पाषाणघटिता इव वा निश्चलनेत्रास्तस्थुः ।

इतश्च श्रीसूर्ययशा अश्वं वाहयित्वा पश्चाद्वलमानः पथि तयोरतिमधुरगानध्वनीन् शुश्राव, तदा वाजि-गज-पत्तयः पदमपि यानेऽसमर्था अभूवन्. एतत्स्वरूपं दृष्ट्वा नृपोऽमात्यं प्रति सादरमुवाच-भो मंत्रिन् ! संसारे नादसमः सुखदः कोऽपि न दृश्यते. यद्वशात्पशवोऽप्यमी ईदृग्मोहिताः संति । नादेन देव-दानव नृप-कामिन्यादयः सर्वेऽपि प्रायो वशी भवन्ति. ततो वयमपि ऋषभस्वामिनं नमस्कर्तुं तत्र चैत्ये यामस्तत्र गत्वा एतद्गेयस्वादमपि लप्स्यामहे । इत्थमामंत्र्य तद्गानमोहितो भूपालो मंत्रिणा सह जिनचैत्यान्तर्जगाम । तत्र हस्तयोर्वीणां बिभ्रत्यौ, गीतध्वनिं कुर्वत्यौ कामभार्येव दिव्यसौंदर्ये द्वे कुमारिके विलोक्य स्नेहचक्षुर्विमुक्तैः कामबाणैर्हृदि विद्धो नृपश्चिंतयामास. एतयोरिदमत्यद्भुतं रूपं कस्य पुण्यवतो भोगाय भविष्यति ? ततो राजा मुहुर्मुहुरनयोश्चक्षुषी क्षिपन् युगादीशितुः पादौ प्रणम्य चैत्यान्निःसृत्य बहिर्प्रदेशे उपविष्टस्तयोः कुलादिकं ज्ञातुं मंत्रिणे आदिष्टवान् . मंत्र्यपि नृपादेशात्तयोः समीपं गत्वा सुधामधुरया वाचा संभाष्य इत्थमालपत्. हे कन्यके ! युवां के ? युवयोः पति कः ? किमर्थमिहागमनं चैत्येतत्सर्वं वदत. अथ मंत्रिवचः श्रुत्वा तयोरेका

स्मरणं प्राप्य जिनधर्मानुरक्तोऽभूवं, ईदृशोपायं विना मम जैनधर्मप्राप्तिः कुतः ? अनार्यत्वमहापंके निमग्नोऽहं त्वयोद्धृतस्त्वत्प्रसादादेव च मे चारित्रावाप्तिर्जाता, ततः श्रेणिकाभयकुमारादयः सर्वेऽपि लोकास्तमृषिं वंदित्वा तुष्टमनसः स्वस्थानं ययुः; ततो मुनि राजगृहपुराभ्यर्णे समवसृतं श्रीवीरस्वामिनमभिवंद्य तच्चरणकमलसेवया स्वकीयं जन्म सफलीकृत्य क्रमेणायुः क्षये शिवं प्राप ॥ इति श्रीजिनदर्शनमाहात्म्ये आर्द्रकुमारदृष्टांतः ॥

पुनरत्र पर्वणि यत्कर्त्तव्यं तदाह–तपोविधानादि, यथाशक्ति तपसि यत्नो विधेयः, चतुर्थ-षष्ठा-ष्टमादितपः कार्यमित्यर्थः, तत्र यदि कश्चित् स्नेहवशात्तन्निषेधं करोति तथापि तल्लोपबुद्धिर्न धार्या श्रीभरतपुत्रसूर्ययशोनृपवत् , तत्कथा चेयं—

अयोध्यायां नगर्यां सूर्ययशा नृप आसीत् , स च त्रिखंडभूमिस्वामी नीतिवत् अखंडशासनो दुष्टान् वैरिणः स्ववशे नीतवान् , इंद्रेणोपढौकितं मुकुटं शिरसि धृतवान ; तस्य मुकुटस्यैव माहात्म्याच्च स नृपः सुरसेव्योऽप्यभूत् , तस्य राज्ञो राधावेधपणात् प्राप्ता कनकविद्याधरपुत्री जयश्रीर्नामपट्टराज्ञी बभूव, अन्यान्यपि तस्य बहूनि कलत्राणि आसन् . स राजा चतुःपर्वी विशेषेणाष्टमीं चतुर्दशीं च प्रत्याख्यानपौषधादितपसा आराधयति स्म, जीवितादरवत्पर्वादरोऽस्य चेतसि अतिवल्लभोऽस्ति, तेनासौ जीवितादपि पर्वाणि रक्षति। अथैकदा सौधर्मेन्द्रः सुधर्मासभामाश्रितो ज्ञानात्तन्निश्चयं ज्ञात्वा चमत्कृतिं प्राप, तदोर्वशी देवी विश्ववशीकरणसामर्थ्यं बिभ्राणाऽकस्मात्सुरेंद्रशिरःकंपं दृष्ट्वा प्रोवाच. स्वामिन् सांप्रतं शिरः कंपनकारणं तु न किमपि दृश्यते तत किं निमित्तं तुष्टेन नाथेन शिरःकंपः कृतस्तदा सुरेंद्र उवाच-मयाधुना ज्ञानदृष्ट्या भरतक्षेत्रे ऋषभस्वामिनः पौत्रो भरतचक्रिणः पुत्रोऽयोध्याधिपः सूर्ययशा नाम राजा सात्त्विकानां शिरोमणिर्दृष्टः, स चाष्टमीचतुर्दशीपर्वणस्तपसः कृतबहुयत्नैः सुरैरपि चालयितुं न शक्यते, यदि सूर्यः पूर्वदिशमतिक्रम्य पश्चिमायामभ्युदेति तथा मेरुर्वातैः

यं, एवं स मुनिर्गोशालं निरुत्तरीचक्रे तदा जय जय शब्दं कुर्वद्भिः खेचराद्यैश्च तस्य महामुनेर्बह्वी प्रशंसा कृता ॥

तत आर्द्रकऋषिर्हस्तितापसाश्रमसमीपे आययौ, तत्रस्थास्तापसाश्च एकं महांतं हस्तिनं हत्वा तन्मांसं भुंजाना बहून दिवसान् व्यतीयंति, ते चैवमूचुः, एकस्यैव हस्तिनो हननं वरं, यत एकजीवघातेन भूयान् कालोऽतिगम्यते, मृगतित्तिरमत्स्याद्यैर्धान्यैश्च बहुभिरपि न तथा, तस्मात्तद्भक्षणं न युक्तं बहुपापसद्भावात् तदा च ते मिथ्याधर्मनिष्टास्तपस्विनो मारणार्थं एकं महान्तं गजं बबंधुः यत्र शृंखलाबद्धः स गज आसीत्तेनैव मार्गेण करुणानिधिः स महर्षिर्जगाम, तदा स हस्ती मुनिपंचशतीयुतं बहुभिर्जनैर्वंद्यमानं तं महर्षिं दृष्ट्वा लघुकर्मत्वादित्यचिंतयत् , अहमप्येनं मुनिं वंदेयं यदि बद्धो न भवेयं, बद्धस्तु किं करवाणि ? एवं चिंतयतस्तस्य महर्षेर्दर्शनात्सद्योऽयः शृंखला व्यशीर्यत, अथ स हस्ती निरर्गलः सन् तं मुनिं वंदितुमभ्यागात् , तदा लोका एष मुनिर्हतो हत इति ब्रुवाणाः पलायनं चक्रिरे, मुनिस्तु तथैव तस्थौ, गजोऽपि नम्रीकृतकुंभस्थलः सन् तं मुनिं नमतिस्म, शुंडादण्डं प्रसार्य मुनिपादौ स्पृष्ट्वा स्पृष्ट्वा परमं सुखं प्राप, ततः स गजः समुत्थाय भक्त्या मुनिं पश्यन् अव्याकुलः सन् अरण्यानीं प्रविवेश, तदात्यद्भुतं तत्प्रभावं दृष्ट्वाऽतिकोपं प्राप्तास्ते तापसा अपि आर्द्रकुमारसाधुना प्रत्यबोध्यंत, ततस्तत्प्रेषिताश्चैते श्रीवीरसमवसरणे गत्वा दीक्षां जगृहुः ॥

अथ श्रेणिकराजापि तथा गजमोक्षणं तापसप्रतिबोधं च श्रुत्वाऽभयकुमारयुक्तस्तत्रागात्, मुनिर्भक्त्या वंदमानं राजानं धर्मलाभाशिषं ददौ, अथ शुद्धभूतले आसीनं मुनिं राजा पप्रच्छ हे भगवन् ! हस्तिमोक्षणान्मम महदाश्चर्यं समजनि । मुनिरूचे–हे राजन् ! हस्तिमोक्षणं न दुष्करं, किन्तु आमतंतुपाशमोक्षणं मां दुष्करं प्रतिभासते । राज्ञा पृष्टं स्वामिन् तत्कथं ? तदा स मुनिः सकलामपि स्वां कथां कथयामास । तत आर्द्रकुमारोऽभयं प्रत्यभाषत त्वं मम निष्कारणोपकारी धर्मबांधवोऽभूत्, हे मित्र ! त्वत्प्रेषितार्हत्प्रतिमादर्शनादहं जाति-

अथ प्रतिज्ञापूर्णीभवनानंतरं स वैराग्यपूर्णमानसो रात्रेः पश्चिमे प्रहरं इत्यचिंतयत् , मया प्राग्भवे मनसैवव्रतं भग्नं तेनाहमनार्यत्वं
प्राप्तोऽस्मि, अत्र भवे पुनर्व्रतं गृहीत्वा मुक्तपतः का गतिर्मे भविष्यति ? इदानीमपि प्रव्रज्यां गृहीत्वा तपसा आत्मानं शोधयामि,
इति विचिंत्य प्रातःकाले श्रीमतीं पत्नीं स्वसुतं च संभाष्य तदनुमतिं च लात्वा साधुलिंगं समादाय निर्ममत्वो गृहान्निर्ययौ। अथ
राजगृहं व्रजन् अंतराले चौर्यवृत्तिं कुर्वाणां स्वसामंतपंचशतीं ददर्श, तैरप्युपलक्ष्य भक्त्या वंदितः, स साधुस्तानवादीत् युष्माभिर्महापा-
पहेतुरेषाजीविका किमाहता ? तैरुक्तं हे प्रभो ! अस्मान् वंचयित्वा यदा त्वं पलायिष्टस्तदोदितो लज्जया भूपतेर्मुखं न दर्शयामः, तवैवा-
न्वेषणे लग्नाः पृथ्वीं भ्रमंतश्चौर्यवृत्त्यैव जीवामः, मुनिरुवाच अयुक्ता वृत्तिर्भवद्भिराहृता, केनापि पुण्ययोगेनेदं मानुष्यकं प्राप्य स्वर्गा-
पवर्गप्रदो धर्म एव सेव्यो हिंसाऽसत्यचौर्याब्रह्मपरिग्रहपरित्यागः कर्त्तव्यः, हे भद्रा ! यूयं स्वामिभक्ताः स्थ, प्राग्वदहं युष्माकं स्वामी-
अतो ममैव मार्गं प्रपद्यध्वं, ततस्ते प्रोचुः पूर्वं त्वमस्माकं स्वाम्येवाभूः, सांप्रतं तु गुरुरप्यसि यतस्त्वयाऽस्मभ्यं धर्मो ज्ञापितोऽथास्मान्
दीक्षयानुगृहाण; तत आर्द्रकुमारस्तान् प्रव्राज्य तैः सहितः श्रीमहावीरं वंदितुं राजगृहाभिमुखं ययौ, मार्गे गच्छतस्तस्य गोशालोऽभि-
मुखो मिलितो विवादं कर्तुं प्रवृत्तः, भूचराः खेचराश्चापि सहस्रश आयाताः कौतुकार्थिनस्तस्थुः ॥

अथ गोशालोऽवदत् भवतां तपःकष्टं वृथैव, यतः शुभाशुभफलानां कारणं नियतिरेवास्ति, ततो मुनिरवादीत् पौरुषमपि कारणं
मन्यस्व, यदि सर्वत्र नियतिमेव कारणं मन्यसे तर्हि अभीष्टसिध्यर्थं सर्वाः क्रिया वृथा प्रसज्येरन् , तथाहि–हे नियतिवादिन् ! सर्वदा
स्वस्थाने एव किं न तिष्ठसि ? भोजनाद्यर्थं च कथमुद्यमं करोषि ? एवं स्वार्थसिद्धये नियतिवत्पौरुषमपि साध्यमस्ति, अर्थसिद्धौ नियते-
रपि पौरुषमाधिक्यं भजते, तथाहि आकाशात्पानीयं पतति, परं भूखननादपि तद्भवेत्, यतो नियतिर्बलीयसी, परं नियतेरपि पौरुषं बली-

यथा प्रतिदिनं यातानायातांश्च सर्वानपि साधून् पश्यामि, श्रेष्ठ्युवाच इह पत्तने ये केऽपि महर्षयः समायांति तेभ्यस्त्वं प्रत्यहं स्वयं भिक्षां देहि, येन सर्वेषां दर्शनं स्यात् , ततः सापि प्रत्यहं तथैव चक्रे, तल्लक्षणं दिदृक्षमाणा च मुनीनां चरणानवंदत, अथ द्वादशे वर्षे स महामुनिर्दिग्मूढः सन् तत्रागतस्तल्लक्षणदर्शनात्तयोपलक्षितश्च, तदा श्रीमती तमृषिमुवाच हे नाथ ! तत्र देवकुले तदा यो मया वृतः स मम वरस्त्वमेवासि, मद्भाग्यैरेवाधुनागतोऽसि, अथ मां मुग्धां त्यक्त्वा क्व यास्यसि, यदा त्वं दृष्टनष्टोऽभूः; तद्दिनादारभ्य मम महादुःखेन कालोऽगमत् , तस्मात्प्रसादं विधाय मामंगीकुरु, एवं स्थितेऽपि यदि मामवमन्यसे तर्हि अग्निप्रवेशं कृत्वा तुभ्यं स्त्रीहत्यापातकं दास्ये, तदान्यैरपि तत्पित्रादिभिर्महाजनैर्विवाहाय अभ्यर्थितः स साधुव्रतारंभनिषेधकं तद्देवीवचनं सस्मार, ततस्तद्भोग्यकर्मोदयादृणमोक्षमिव कर्तुं तां श्रीमतीं पर्यणैपीत् । अथ श्रीमत्या सह चिरं भोगान् भुंजानस्य तस्य क्रमेण पुत्रः संजातः, स च क्रमेण वर्द्धमानो राजशुक इव वक्तुमुल्लसज्जिह्वोऽभवत् , तावति पुत्रे संजाते सति स आर्द्रकुमारो हर्षितः सन् श्रीमतीं प्रोवाच, अतः परं ते पुत्रः सहायोऽस्तु, अहं प्रव्रजामि, तदा बुद्धिनिधिः श्रीमती सुतं प्रत्यवसरं ज्ञापयितुं तूलपूणिकासहितं तर्कुमादाय समुपाविशत् , तदा तूलकर्त्तनक्रियां कुर्वाणां तां विलोक्य स बालकः पप्रच्छ हे अंब ! एतत्पामरलोकोचितं कर्म किं प्रारब्धं ? सा प्रोचे-हे पुत्र ! तव पिता त्वां मां च त्यक्त्वा प्रव्रज्यार्थं गंतुमनो वर्त्तते, गते चास्मिन् पतिहीनाया मे तर्करेव शरणं, तदा बालको बाल्यान्मनाक्षरैरुवाच—अहं बद्ध्वा धारयिष्यामि कथं मे पिता यास्यति ? इत्युक्त्वा तन्तुभिः पादौ बबन्ध. आर्द्रकुमारोऽपि तन्मधुरं बालवचोवृदं श्रुत्वा सुतस्नेहादेवमुवाच, हे पुत्र ! यावद्भिस्तंतुभिर्मे पादौ बद्धौ तावंति वर्षाणि पुनर्गृहे स्थास्यामि, गणयित्वा बंधनानि अच्छोटय ? ततो गणिता द्वादशबंधा अभवन्, तेन स द्वादश वर्षाणि पुनर्गृहे स्थास्ये इत्युक्त्वाऽवाहयत् ॥

मुनिस्तीक्ष्णं व्रतं पालयन् भूमंडले विचरन् अन्यदा वसंतपुरपत्तनं प्राप्य कस्मिंश्चिद्देवकुले कायोत्सर्गेण च तस्थौ ॥

इतश्च तस्मिन्नगरे देवदत्तो नाम महाश्रेष्ठ्यभूत्, तस्य धनवती नामा पत्न्यासीत्, अथ बन्धुमतीजीवो देवलोकाच्च्युत्वा श्रीमतीनामा अद्भुतरूपा तयोः पुत्री समजनि, सा च धात्रीभिर्लाल्यमाना क्रमेण रजःक्रीडोचितं वयः प्राप, एकदा तत्र देवकुले पौरकन्याभिर्युक्ता श्रीमतीकन्या पतिवरणक्रीडया रंतुमाययौ, तदा सर्वाः कन्या भर्त्तारं वृणुतेत्यूचुस्तत कयापि कोऽपीत्येवं सर्वाभिः स्वरुचिवरा वृताः, श्रीमत्योक्तं हे सख्यो ! मया तु अयं पूज्यो वृतस्तदा साधुवृतमिति देवता प्रोवाच, पुनर्गर्जितं तन्वाना सा एव देवी तत्र रत्नान्यवर्षत् , श्रीमती गर्जिताद्भीता तस्य मुनेः पादेऽलगत् , स मुनिः क्षणमात्रं स्थित्वाऽचिंतयत् , इह तस्थुषो ममानुकूलं उपसर्गोऽभूत् , अतोऽत्र न स्थेयमिति विचिंत्य सोऽन्यत्रागात् . तदा अस्वामिकं धनं राज्ञ एवेति निश्चयं कृत्वा तानि रत्नान्यादातुं राजा तत्राजगाम, राजपुरुषास्तद्द्रव्यस्थानं नागसंकुलं ददृशुः, देवतया चोक्तं एतद् द्रव्यमस्यै कन्यायै मया वरके प्रदत्तमस्ति, इति श्रुत्वा नृपो विलक्षः सन् स्वस्थानं ययौ, ततस्तत्सर्वं धनं श्रीमतीपिता श्रेष्ठी जग्राह । अथ कियता कालेन श्रीमतीं परिणेतुं बहवो वरा अढौकंत, तत्स्वरूपं पित्रा पुत्र्यै उक्तं, तदा श्रीमती जगाद–हे तात ! यो महर्षिर्मया वृतः स एव मम वरः, तद्वरणे देवता य द्रव्यमदात् तद् द्रव्यं गृह्णता त्वयापि तदनुमतमेव, ततस्तस्मै मां कल्पयित्वान्यस्मै दातुं नार्हसि, उक्तं च—

सकृज्जल्पंति राजानः, सकृज्जल्पंति साधवः ॥ सकृत्कन्याः प्रदीयत, त्रीण्येतानि सकृत् सकृत् ॥ १ ॥

एतत् श्रुत्वा श्रेष्ठ्यूचे, स तु भ्रमर इव एकत्र नावतिष्ठतेऽतः कथं प्राप्यते पुनरत्रायास्यति न वा, आयातोऽपि कथं ज्ञायते ? किं तस्याभिज्ञानं ? तदा श्रीमत्या उक्तं-हे तात ! मया तद्दिने गर्जितभीतया तच्चरणे विलग्नयाभिज्ञानं दृष्टमस्ति, तस्मादतः परं तथा कुरु

प्रतिमां पूजयन्नार्द्रकुमारो दिवसानतिवाहयतिस्म, एकदा कुमारो नृपमेवं व्यजिज्ञपत् हे तात ! स्वमित्रमभयकुमारं द्रष्टुमिच्छामि, आर्द्रकनृपोऽवादीत् , हे वत्स त्वया तत्र गमनेच्छा न कर्त्तव्या, अस्माकमपि स्थानस्थितानामेव श्रेणिकेन सह मैत्र्यमस्ति; तदा पित्राज्ञया निबद्धोऽभयसंसर्गं प्रति उत्कंठितश्चार्द्रकुमारोऽपि न तस्थौ न च जगाम, तथा स आसने शयने याने भोजनेऽन्यक्रियासु च अभयकुमारेणाश्रितां दिशं नेत्रयोरग्रे चकार, पुनः कीदृशो मगधदेशो, राजगृहपुरं च कीदृक्; तत्र गमने कस्को मार्ग इत्थं पार्श्ववर्त्तिनो जनान् पप्रच्छ; तस्मिन्नवसरे आर्द्रकनृपो दध्यौ, कदापि कुमारो मामकथयित्वैव निश्चितमभयसमीपे यास्यत्यतो यत्नः कर्त्तव्यस्ततो नृपः पंचसामतशतानि इत्यादिशत् , अहो ! अयं कुमारो देशांतरं गच्छन् भवद्भिरक्षणीयस्तदा ते सामंता देहच्छायेव तत्पार्श्वं न त्यजन्ति स्म, कुमारोऽप्यात्मानं देहधृतमिवामंस्त, ततोऽभयसमीपगमनं मनसि अवधार्य प्रत्यहमश्ववाहनभूमौ अश्ववाहनं कर्त्तुमारेभे, ते सामंताश्च अश्वारूढा अंगरक्षकाः संतः पार्श्वे तस्थुः, कुमारोऽश्वं वाहयन् तेभ्यः किंचिदग्रे गत्वा न्यवर्त्तत, एवं चाश्वं वाहयन् सोऽधिकाधिकं ययौ, पुनः पुनर्व्याघुट्य ययौ च, इत्थं तेषां विश्वासमुत्पाद्यान्यदार्द्रकुमारो निजैः प्रतीतिमत्पुरुषैः समुद्रे यानपात्रं प्रगुणं कारयित्वा तच्च रत्नादिभिः प्रपूर्य जिनप्रतिमां च तत्रारोप्य तथैवाश्वं वाहयन् दूरगमनाददृश्यीभूय तद्यानपात्रमारुह्य आर्यदेशं ययौ, ततो यानपात्रादुत्तीर्य तां प्रतिमामभयकुमाराय संप्रेष्य सप्तक्षेत्र्यां धनान्युप्त्वा यतिलिंगं गृहीतवान् , स च यावत्सामायिकमुच्चारयितुमारेभे तावदाकाशस्थितया देवतया उच्चैः स्वरेणोचे–यद्यपि त्वं महासत्त्वस्तथापि सांप्रतं दीक्षां मा ग्रहीः, अद्यापि ते भोगफलं कर्मास्ति तद्भुक्त्वावसरे व्रतं गृह्णीथाः, यतो भोग्यं कर्म तीर्थकृतामप्यवश्यं भोक्तव्यं, तस्मात् हे महात्मन् ! तेन व्रतेनालं यद् गृहीतमपि त्यक्ष्यते; यथा तेन भोजनेन किं यद्भुक्तमपि वम्यते; इत्थं बहुधा निषिद्धोऽप्यार्द्रकुमारः स्वपौरुषमंगीकृत्य देवी वाचमनादृत्य स्वयं दीक्षामाददे, स प्रत्येकबुद्धो

समाचख्यौ. ततः कुमार एकांते स्थित्वा तां पेटामुद्घाट्य तन्मध्यस्थां तमस्युद्योतकारिणीं तां श्रीऋषभस्वामिप्रतिमां दृष्ट्वा स्वचित्ते चिंतयामास, किमिदं किंचिदुत्तमं देहाभरणमस्ति, तत् किं मूर्ध्नि आरोप्यं, कंठे वा हृदये वान्यत्र कुत्रचिदारोप्यं, क्वापीदं दृष्टपूर्वमिव मां प्रतिभासते, परं स्मृतिपथं नायाति, इत्थमत्यर्थं चिंतयत आर्द्रकुमारस्य जातिस्मरणजनिकी मूर्च्छा समजनिष्ट, तत उत्पन्नजातिस्मरणः स कुमारः संप्राप्तचेतनः सन् स्वयमेव एवं निजपूर्वभवकथां चिंतयामास, तथाहि—

इतो भवात्तृतीये भवे मगधदेशे वसंतपुरेऽहं सामयिको नाम कुटुम्बी अभूवं; मम बंधुमती भार्याभूत्, एकदा सुस्थिताचार्यसमीपे तया सह अहमर्हद्धर्ममश्रौषं, ततः सभार्योऽपि अहं प्रतिबुद्धो गृहवासविरक्तः सन् तत्पार्श्वे प्रव्रज्यां गृहीतवान्, क्रमेण गुरुणा सह विहरन् एकस्मिन् पत्तनेऽगां, बंधुमती साध्व्यपि अपरसाध्वीसंगता तत्रागात्, एकस्मिन्नह्नि तां पश्यन् पूर्वभोगान् स्मरन् अहं तस्यामनुरक्तोऽभूवं, तच्चान्यसाधवे आख्यां, सोऽपि प्रवर्त्तिन्यै आचख्यौ, सा पुनर्बंधुमत्यै आचख्यौ, तदा बंधुमती विषण्णा सती प्रवर्त्तिनीं प्रोवाच, एष गीतार्थोऽपि यदि मर्यादां लंघेत तदा का गतिः, असौ मां देशांतरं गतामपि यावच्छ्रोष्यति तावन्मोहप्रभावान्मयि रागं न त्यक्षति, तस्मात् हे भगवति ! अहं निश्चित्तं मरणं प्रपत्स्ये, येन नास्य नापि मे शीलखंडनं जायते, इत्युक्त्वा सा साध्वी अनशनं कृत्वा शुद्धभावनया प्राणांस्तत्याज, देवत्वं च प्राप, ततस्तां मृतां श्रुत्वा मया विचिंतितं सा महानुभावा निश्चितं व्रतभंगभयान्मृता, अहं पुनर्भग्नव्रतस्ततो मामपि जीवितेन अलं, तदाहमप्यनशनं कृत्वा विपद्य देवोऽभूवं, ततश्च्युत्वाहमत्रानार्यदेशे धर्महीनः समुत्पन्नोऽस्मि, परमद्यापि मन्दभाग्योऽस्मि यतस्तं द्रष्टुमसमर्थः, तस्मात् पितरमनुज्ञाप्यार्यदेशं गमिष्यामि, यत्र मे गुरुरभयकुमारोऽस्ति, इत्थं मनोरथं कुर्वन् आदिमार्हतः केनापि भाग्योदयेनाभयकुमारमंत्रिणाहं बोधितः, सांप्रतं यो मम प्रतिबोधकः स मे बंधुः स एव च गुरुरस्ति,

मंत्रिणा सार्द्धं राजगृहपुरं गत्वा श्रेणिकाय अभयाय च प्राभृतान्यर्पयामास, तथा नृपपुत्र आर्द्रकुमारस्त्वया सह मैत्र्यं कर्त्तुमिच्छतीत्यभयाय मंत्री संदेशमुवाच । तदा जिनशासने कुशलोऽभयः स्वचेतसि इत्यचिंतयत्; निश्चितं स कुमारो विराधितश्रामण्यत्वादनार्येषु जातोऽस्ति, परं स राजपुत्रो महात्मा नियमादासन्नभव्योऽस्ति, यतोऽभव्यदूरभव्यानां तु कदापि मया सह मैत्र्यभिलाषो न भवेत्, तस्मात्केनाप्युपायेन तं जिनधर्मानुरक्तं विधाय धर्ममार्गे प्रवर्त्तयामि, तत्र चायमुपायोऽस्ति, प्राभृतच्छलेन यदि तत्रार्हत्प्रतिमां प्रेषयामि, तद्दर्शनाच्च यदि तस्य जातिस्मरणज्ञानमुत्पद्यते तदेष्टसिद्धिः स्यादित्युपायं विचिंत्य छत्रसिंहासनादिप्रातिहार्यविराजितां रत्नमयीं प्रथमजिनेन्द्रप्रतिमां * पेटीमध्ये धृत्वा तदग्रे सकलानि धूपघटिकादिदेवपूजोपकरणानि मुमोच, ततस्तद्‌द्वारे तालकं दत्त्वाऽभयो निजमुद्रया तां मंजूषां मुद्रयामास. अथ कियद्भिर्वासरैः श्रेणिको नृपस्तमार्द्रकेशपुरुषं प्रियालापपूर्वकं प्रभूतैः प्राभृतैः सह विससर्ज, अभयोऽपि तां पेटां तस्य हस्ते समर्प्य तं सत्कृत्य अमृततुल्यवाण्या इत्युवाच, एषा पेटा आर्द्रकुमारस्य पुरस्तादुपढौकयतां, तथा तस्य मद्वन्धोरिदं वक्तव्यं, त्वया एकांतप्रदेशे एकाकिना स्थित्वा इयं पेटा स्वयमुद्‌घाट्य तदंतर्गतं वस्तु स्वयं द्रष्टव्यं, अन्यस्य कस्यचिन्न दर्शनीयं, ततोऽभयोक्त वचोंगीकृत्य स पुमान् स्वपुरं ययौ, तानि च प्राभृतानि स्वस्वामिने स्वामिपुत्राय चार्पयामास, तथार्द्रकुमारायाभयोक्तसंदे-

---

*अत्रकेऽपि जिनेन्द्रप्रतिमास्थाने रजोहरणमुखवस्त्रिका प्रेषणं वदन्ति तथा प्राचीनजैनशास्त्रे जिनेन्द्रप्रतिमोल्लेखस्याभावं दर्शयन्ति तदसत्यं, यतः—जीवाभिगम—भगवती—ज्ञाताधर्मकथा—राजप्रश्नेणयावश्यकनिर्युक्त्यागमपंचागीप्राचीनशास्त्रे स्थाने स्थाने जिनप्रतिमोल्लेखो विस्तरेण दर्शितः, तथा रायप्रश्नेणयादिषु आगमेषु (धुवं दाऊणं जिणवराणं) इति वचनात् जिनेन्द्र प्रतिमा जिनेन्द्र सदृशत्वेन उक्ता, किंच सूत्रकृदगव्याख्याप्रभृतिषु अभयकुमारेण आर्द्रकुमाराय प्रथम जिनेन्द्र प्रतिमा प्रेषिता इत्येवलिखितमस्ति, अतो रजोहरणमुखवस्त्रिकाप्रेषणस्य कथनं तु अयुक्तमेव, अस्य विशेषनिर्णयः प्रतिमाशतक, सम्यक्त्वशल्योद्धारादिग्रन्थादवगन्तव्यः ॥ इति ॥

जिनदर्शनादेव बहूनां भव्यानां बोधिबीजावाप्तिर्भवत्यार्द्रकुमारवत् , तद्वृत्तांतस्त्वित्थं—

अस्मिन् भरतक्षेत्रे समुद्रतीरे आर्द्रको नाम यवनदेशोऽस्ति, तत्रार्द्रकपुरं नाम नगरं, तत्रार्द्रकनामा राजा बभूव, तस्य चार्द्रका नाम्नी पट्टराज्ञी, तयोरार्द्रकुमारो नाम पुत्रोऽभूत् , स च क्रमेण संप्राप्तयौवनः स्वेच्छया मनोज्ञान् भोगान् भुंजानः सुखेन तिष्ठतिस्म, तस्या चार्द्रकराजस्य श्रेणिकराजेन सह परंपरागता परमप्रीतिरभूत् . एकदा श्रेणिको नृपः प्रचुरं प्राभृतं प्रगुणीकृत्य आर्द्रकराजसमीपे निजामात्यं प्रैषीत् , सोऽमात्योऽपि कियद्भिर्दिनैस्तत्र गतः, आर्द्रकनृपेण बहुवादरेण संभाष्य तेन मंत्रिणा उपनीतानि प्राभृतानि गृहीतानि, पृष्टं च तस्मै मद्बंधोः श्रेणिकस्य कुशलं वर्त्तते ? ततस्तेनापि तत्रत्यसकलकुशलोदंतनिवेदनेन राज्ञो मनसि परमानंदः संपादितः, तस्मिन्नवसरे आर्द्रकुमारो नृपं पप्रच्छ भो तात ! कः श्रेणिको येन सः तवेदृशी प्रीतिर्वर्त्तते, ? राजा प्रोवाच, मगधदेशस्वामी श्रेणिकनृपो विद्यते, तत्कुले मत्कुले च परंपरागता प्रीतिरस्ति, एतत्पितृवचः श्रुत्वार्द्रकुमारोऽपि मंत्रिणमुवाचः भो मंत्रिन् ! त्वत्स्वामिनः कश्चित्संपूर्णगुणोपेतः पुत्रोऽस्ति ? तेन सहाहमपि मैत्र्यं कर्त्तुमिच्छामि, मंत्र्युवाच श्रेणिकभूपस्य अभयकुमारो नाम पुत्रोऽस्ति, स च सकलकलानिधिः सर्वबुद्धिसमुद्रो मंत्रिपंचशतया–अधिपो महादयावान् महादाताऽतिदक्षो निर्भयो धर्मज्ञः कृतज्ञश्च विद्यते, किं बहुना ? ते केऽपि जगति गुणा न सन्ति येऽभयकुमारे निवासं न कृतवंतः, इत्थं मंत्रिवचनादभयकुमारगुणान् श्रुत्वार्द्रकुमारः पितुराज्ञां समादाय मंत्रिणं प्रत्युवाच, मामनापृच्छय त्वं स्वदेशं मा यासीः, तत्र गच्छता त्वयाऽभयं प्रति स्नेहद्रुमबीजतुल्यं मद्वचः श्रोतव्यमिति, ततो मंत्र्यपि, तद्वचनमंगीकृत्य राज्ञाऽनुसृष्टः सन् वेत्रिणा दर्शितं निवासस्थानं ययौ, अथान्यदार्द्रकनृप प्रवरमौक्तिकादीनि प्राभृतान्यर्पयित्वा स्वपुरुषं तं मंत्रिणं च श्रेणिकपार्श्वे प्रैषीत् , तदार्द्रकुमारोऽपि तस्यैव मंत्रिणा हस्तेऽभयकुमारनिमित्तं विद्रुममौक्तिकादीन्यनुपमवस्तूनि प्रेषितवान् . अथ स पुमान्

मनोवाक्कायशुद्धयाऽत्र पर्वणि पूजास्नात्रादिकं विधेयं, तदवसरे च भगवतः छद्मस्थत्व-केवलित्व-सिद्धत्वरूपमवस्थात्रयं भावनीयं, यदुक्तं—ण्हवणच्चणेहिं छउमत्थ-वत्थपडिहारगेहिं केवलियं ॥ पलियं कुस्सग्गेहिय । जिणस्स भाविज्ज सिद्धत्तं ॥ १ ॥ द्रव्यपूजासामग्र्यभावे तु भावपूजैव कर्त्तव्या, सा चेत्थं-प्रातः श्रीजिनगृहं गत्वा शुद्धभावेन भगवद्दर्शनं कार्यं, भगवन्मुद्रां विलोक्य च तद्गुणगणस्मरणं विधेयं, तत्फलं यथा-दर्शनाद् दुरितध्वंसी, वंदनाद्वांछितप्रदः । पूजनात्पूरकः श्रीणां, जिनः साक्षात्सुरद्रुमः ॥ १ ॥ पुनः श्री-

शालागृह पौषधशाला तत्र वा तत् सामायिक कार्यं श्राद्धैः सदा नोभयसन्ध्यमेवेत्यर्थः । कथं विधिना—खमासमणं दाव इच्छाकारेण संदिसह भगवन् सामाइय मुहपत्तिं पडिलेहेमित्ति भणिय, बीय खमासमणपुव्वं मुहपत्ति पडिलेहिय, खमासमणेणं सामाइय संदिसाविय, बीय खमासमणपुव्वं सामाइय ठामित्ति वुत्तं खमासमणदाणपुव्वं अद्धाविणय गत्तो पचमंगलं कड्ढित्ता "करेमि भन्ते ! सामाइयं सावज्जं जोगं पच्चक्खामि जाव नियम पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भन्ते ! पडिक्कमामि निन्दामि गरिहामि अप्पाणं वोसिरामि त्ति " सामाइयसुत्तं भणति, तउ पच्छा इरियं पडिक्कमति इत्यादि पूर्वसूरिनिर्दिष्टविधानेन । अत्र च ईर्या प्रतिक्रम्यैव सामायिकोच्चारणं यत्केचिदाचक्षते तत्सिद्धान्तानुत्तीर्णम्, यत उक्तमावश्यकचूर्णौ, बृहद् वृत्त्यादौ—" करेमि भन्ते ! सामाइयं सावज्जं जोगं पच्चक्खामि जाव साहू पज्जुवासामि दुविहं तिविहेणमिति, काउण पच्छा इरिअं पडिक्कमइ त्ति " इत्यादि- सर्वमान्यप्राचीनशास्त्रे प्रकटतया प्रथमं करेमिभंते उच्चारणानंतरं पश्चाद् इर्याप्रतिक्रमणं दर्शितं. यथा—उत्तराध्ययन—आवश्यकनिर्युक्त्यादिप्राचीनशास्त्रे षडावश्यकविधि सङ्क्षिप्तःसामान्येन दर्शितः परं तस्य विशेषार्थः भावपरंपरानुसारेण गुरुपरंपराया. पूर्वाचार्यविरचितविधिवादशास्त्रतो वा ज्ञायते, ततः तस्यानुसारेणैव विशेषतः सम्प्रति षडावश्यकविधिः क्रियते । तथैव अत्रापि सङ्क्षिप्तमात्रसामान्येन सामायिकविधिः दर्शितः, परं तस्य विशेषविधि पूर्वाचार्यविरचितविधिवादशास्त्रतोऽवगतव्यः । तथा उत्तराध्ययनादिगताऽऽवश्यकविधि सङ्क्षिप्त ज्ञात्वा तस्यानादरकरणे सूत्रार्थोत्थापनदोषप्रसगः स्यात्, तथैव अत्राऽपि एतद्विधेरनादरकरणे शास्त्रपाठोत्थापनदोषप्रसगः स्यात्, अतएव तदनुसारेण भव्यात्मभिः समाचरणीय, परं जिनाज्ञाविरुद्धाचरणं न युक्तं " पयमपि असदहंतो सुत्तत्थं मिच्छादिट्ठीओ " इति वचनात् । इति । श्रीमत् सुमतिसागरमहोपाध्यायाना लघुशिष्य पं० मुनि-मणिसागरः ।

तस्मात् शुभ आचारो येषां ते शुभाचारास्तैः श्रावकैराश्रव–कषायरोधः कर्त्तव्य इत्युक्तं। अथ पुनरत्र पर्वणि यत्कर्त्तव्यं तदेव श्रावकविशेषणद्वारेणाह–कीदृशैः श्रावकैः, सामायिकजिनपूजातपांसि तेषां विधानं करणं, तदादीनी तत्प्रभृतीनि कृत्यानि-कार्याणि तेषु तत्परैरित्यर्थः, एतावतात्र पर्वणि सुश्रावकैः सामायिकं कार्यं, ❀ सामायिकस्वरूपं चेदं—

समता सर्वभूतेषु, संयमः शुभभावना ॥ आर्त्तरौद्रपरित्याग--स्तद्धि सामायिकं व्रतम् ॥ १ ॥

दिवसे दिवसे लक्खं, देइ सुवण्णस्स खंडि एगो ॥ एगो पुण सामाइयं, करेइ न पहुप्पए तस्स ॥ २ ॥

आदिपदात्पौषधं कार्यं , पौषधफलमिदं—

पोसहि य सुह भावे । असुहाइं खवेइ नत्थि संदेहो ॥ छिंदइ नरयातिरियगई, पोसहं विहि अप्पमत्तणं ॥ १ ॥

तत्करणसामर्थ्याभावेऽस्मिन् पर्वणि सुश्रावकैर्यथाशक्ति जिनानां द्रव्यपूजा भावपूजा च कर्त्तव्या, पूजाफलमिदं—

सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे। सयसाहस्सिया माला, अणंतं गीयवाइए ॥ १ ॥

---

❀ --सामायिकविधिविषय आवश्यकचूर्णि–बृहद्वृत्ति–लघुवृत्ति–पंचाशकचूर्णि–वृत्ति–योगशास्त्रवृत्ति–श्राद्धदिनकृत्यसूत्र-वृत्ति–श्रावकप्रतिक्रमणचूर्णि–वृत्ति – श्रावकप्रज्ञप्ति-शतपदी–विचारामृतसंग्रहादिगतशास्त्रीयपाठाः विस्तरभयात् नात्र लिख्यन्ते-तथापि सङ्क्षेपतः श्रावकधर्मप्रकरणवृत्तिपाठोऽत्र दर्श्यते तथाहि–अथ यत्र क्रियमाणं श्राद्धाना सामायिक निष्प्रत्यूहं निर्वहति तत्स्थानमुपदिशति—

चैत्यालये स्वनिशान्ते, साधूनामन्तिकेऽपि वा। कार्यं पौषधशालायां, श्राद्धस्तद्विधिना सदा ॥ १ ॥

चैत्यालये विधिचैत्ये, स्वे निशान्ते स्वगृहेऽपि विजनस्थान इत्यर्थः। पौषो ज्ञानादीनां धीयतेऽनेनेति पौषधं पर्वानुष्ठानम् उपलक्षणात् सर्वधर्माऽनुष्ठानार्थं,

स एव चौरः समाहूय पृष्टोऽहो कया तव बहूपकारः कृत ? इति, तेनाप्यभाणि भो महाराज ! 'चतुरो दिनान् यावन्मरणभयभीतेन मया न किंचित्स्नानभोजनादिसुखमज्ञायि, अद्य पंचमेऽहनि अस्याः पंचम्या राज्याः मुखादभयदानाकर्णनेन परमसुखमनुभूयते, अतएव तस्या उपकारः सर्वतो महान्' एतच्चौरवचः श्रुत्वा सर्वैरपि सा प्रशंसिता, पट्टराज्ञी च कृता, अतः सर्वदानानामभयदानं श्रेष्ठमिति ज्ञापितं। ततः सुश्रावकेणात्र पर्वणि खंडन-पेषण-वस्त्रक्षालनाद्यारंभो विवर्जनीयः, तैलिक-लोहकार-भ्राष्ट्रकर्मकारकादिषु वाचा धनव्ययेन चारंभो निवारणीयः, स्वशक्त्या बंदिमोक्षश्च कार्यः, ग्रामनगरमध्येऽमारीघोषणा कारयितव्या, येन केनापि प्रकारेण जीवरक्षा कार्या ॥

द्वितीयाश्रवपरित्यागे मृषावचनमत्र पर्वणि न वक्तव्यं, गालिप्रदानादिकठिनवाणी न वाच्या, सर्वथा वाक्शुद्धिः कार्या। तृतीयाश्रवपरित्यागे परधनग्रहणं विवर्जनीयं, द्रव्यस्य हि जंतूनां बाह्यप्राणरूपत्वात्, तदपहारस्य च मरणरूपकष्टहेतुत्वात्। चतुर्थाश्रवपरित्यागेऽत्र पर्वणि ब्रह्मचर्य पालनीयं, स्त्रीसंगो विवर्ज्य इत्यर्थः, परस्त्रीसेवनं तु लोकद्वयविरुद्धत्वात् सुश्रावकेणावश्यमेव वर्ज्यं। पञ्चमाश्रवपरित्यागे धनधान्यादिनवविधपरिग्रहे परिमाणं कार्यं, परिग्रहतृष्णाऽपरिमिता न धार्या, इच्छापरिमाणं विधेयमित्यर्थः। तथा पुनरस्मिन् पर्वणि कषायरोधः कर्त्तव्यः, कषायाश्चत्वारः क्रोध-मान-माया-लोभाख्यास्तेषां परित्यागो विधेयः, क्रोधोदये हि कलहोत्पत्तिश्चिरंतनप्रीतिनाशश्च, मानोदये विनयनाशस्तथा च सद्ध्यानवतामपि मुनीनां केवलावाप्तौ अंतरायः स्यात्, राजर्षिबाहुबलिवत्, एवं मायोदये लोभोदयेऽपि च बहवो दोषा उत्पद्यन्ते, अतश्चत्वारोऽपि कषायास्त्याज्याः, उक्तंच—

कोहो पिइं पणासेइ। माणो विणयनासणो ॥ माया मित्ताणि नासेइ। लोहो सव्वविणासणो ॥ १ ॥

दीयते म्रियमाणस्य, कोटिजीवितमेव च ॥ धनकोटिं न गृह्णीयात्, सर्वो जीवितामिच्छाति ॥ १ ॥
अपि च—या दद्यात्कांचनं मेरुं, कृत्स्नां चापि वसुंधराम् ॥ एकस्य जीवितं दद्यान्नहि तुल्यमहिंसया ॥ २ ॥

अतोऽभयदानख्यापनार्थं कथानकमुच्यते--तथाहि--वसंतपुरेऽरिदमनो राजा, तस्य पंच राज्यः, तासु चैका दुर्भगा, चतस्रोऽत्यंतवल्लभाः, एकदा चतुर्वधूसमेतो राजा निजप्रासादगवाक्षस्थो नानाविधक्रीडाविलासं कुर्वंस्तिष्ठति, तस्मिन्नवसरे एकश्चौरो राजमार्गेण नीयमानो राज्ञा सपत्नीकेन दृष्टः, स च कीदृशः ? कंठन्यस्तरक्तकणवीरमालो, रक्तवस्त्रपरिधानो, रक्तचन्दनानुलिप्तगात्रः पुरस्ताद्वाद्यमानवध्यडिंडिमः, इत्थं विविधविडंबनाभिर्विडंब्यमानं तं चौरं दृष्ट्वा राज्ञीभिः पृष्टं, किमकार्यमनेनाकारीति, तदा एकेन राजपुरुषेण तासांपुरः कथितं, परद्रव्यापहारेण राजविरुद्धमनेन कृतमिति, ततः संजातकृपया एकया राज्या विज्ञप्तो राजा, स्वामिन् ! यो भवता मह्यं प्राग्वरः प्रतिपन्नः सोऽधुना दीयतां, येनाहमेकदिनमुपकरोमि चौरं, तदा कथंचिद्राज्ञा प्रतिपन्नं तद्वचः, ततस्तया स्नानादिपुरस्सरं दीनारसहस्रव्ययेन विविधवस्त्रालंकारैरलंकृतः स चौरः, ततो द्वितीयया द्वितीयदिने राजानं विज्ञप्य दीनारदशसहस्रव्ययेन स सत्कृतः, ततस्तृतीयया तृतीयदिने स दीनारलक्षव्ययेन स उपचरितः, ततश्चतुर्थ्या दीनारकोटिव्ययेन चतुर्थो दिवसोऽतिवाहितः, ततः पंचम्या दुर्भगया राज्या पंचमदिने राज्ञः समीपमागत्य विनयेन नम्रया दीनवचसा नृपो विज्ञप्तः, स्वामिन् ! मम दुर्भगाया उपरि भवदीया तादृशी कृपा नास्ति, तेन मया कदापि भवंतो न याचिताः, अधुनाऽस्य चौरस्य जीवितदानं मया त्वां याच्यते, तदा राज्ञापि जीवितप्रदानपूर्वकं चौरः प्रदत्तोऽनया च तं चौरं स्वगृहे नीत्वा सामान्यभोजनेन भोजयित्वा कथितं मया तुभ्यं जीवितं प्रदत्तं, पुनश्चौर्यं मा कार्षीस्ततोऽसौ हृष्टस्तदा सपत्नीभिर्हसितं नास्य त्वया किंचित् सुखकारि कृतं, तासां च परस्परं बहूपकारविषये विवादे संजाते राज्ञा

तोरणादिभिरलंकृतानि अतिसुन्दराणि संति, तत्र देवेंद्रा बहुदेवदेवीपरिवृताः प्रवर्द्धमानभावेनाष्टाह्निकमहोत्सवं कुर्वन्ति, जल-चंदन-पुष्प-धूपाद्यष्टद्रव्यैर्जिनबिंबानि पूजयंति, जिनगुणान् गायंति, नाटकं च विदधति, इत्थमष्टदिवसावधि महोत्सवं समाप्य पुनः स्वस्थानं गच्छति. एवं श्रावकैरपि श्रीमत्तीर्थंकरप्रकाशितेऽस्मिन् ✽ पर्वणि समागते धर्मणि यत्नो विधेयः, तथा चास्मिन् पर्वणि श्रावकाणां कृत्यान्याह–

आश्रवकषायरोधः कर्त्तव्यः श्रावकैः शुभाचारैः । सामायिकजिनपूजा–तपोविधानादिकृत्यपरैः ॥ १ ॥

तत्राश्रवाः पंच ते चामी–प्राणातिपात–मृषावादाऽ–दत्तादान-मैथुन-परिग्रहस्तेषां रोधो निरोधः, अर्थात्तत्त्यागः कर्त्तव्यः, एतावता प्रथमं द्वींद्रियादयो ये त्रसजीवास्तेषां विराधनाः श्रावकैर्वर्ज्याः, सर्वदानेषु अभयदानमेव श्रेष्ठं, यदुक्तं सूत्रकृदंगे–' अभयप्पहाणमिति ' अन्यत्राप्युक्तं च–

---

✽निशीथभाष्य–चूर्णि-बृहत्कल्पभाष्य-चूर्णि-वृत्ति स्थानांगसूत्रवृत्ति-समवायांगसूत्रवृत्ति-कल्पसिद्धान्त-व्याख्यादिशास्त्रानुसारेण जैनटिप्पणकसद्भावे अधिकमास आगते आषाढ-चातुर्मासात् विंशत्या दिनैः पर्युषणाकरणं प्रोक्तं, तथा अधिकमासाऽभावे पचाशतैव दिनैः प्रोक्तं, परं च जैनटिप्पणकाऽभावे संप्रति लौकिकटिप्पणके मासवृद्धिर्भवतु वा मा भवतु तथापि पचाशतैव दिनैः पर्युषणाकरणमर्यादा सर्वगच्छीयपूर्वाचार्यैः प्रमाणीकृता आसीत्, अतएव पंचाशतैव दिनैः द्वितीयश्रावणे प्रथमभाद्रपदे वा पर्युषणाया आराधनं युक्तियुक्तं शास्त्रसम्मतं जिनाज्ञानुसारं च ज्ञेयं, परं न अशीतिदिनैः। अस्य विशेषनिर्णयः कल्पसूत्रस्य कल्पद्रुमकलिकाया नवमव्याख्यानाद् अस्मत् कृतबृहत्पर्युषणानिर्णयग्रंथाच्च अवगंतव्यः, इति हस्ताक्षराणि श्रीमत् सुमतिसागरमहोपाध्यायानां लघुशिष्य पं० मुनि-मणिसागरस्य ।

## ॥ श्रीपर्युषणाद्यष्टाह्निकाव्याख्यानम् ॥ १० ॥



शांतीशं शांतिकर्त्तारं, नत्वा स्मृत्वा च मानसे । अष्टाह्निकाया व्याख्यानं, लिख्यते गद्यबंधतः ॥ १ ॥

इह च सकलदुष्कर्मवारिणि विमलधर्मकर्मकारिणि इह परत्र च कृतप्रभूतशर्मणि श्रीपर्युषणादिपर्वणि सत्रागते सति, सकलसुरासुरेंद्राः संभूय श्रीनंदीश्वरनामनि * अष्टमद्वीपे धर्ममहिमानं कर्तुं गच्छंति; तत्र तान्नंदीश्वरद्वीपस्य मध्यभागे चतुर्दिक्षु चत्वारोंजनगिरयः संति, अंजनवर्णाः पर्वता इत्यर्थः । तेषां प्रत्येकं चतुर्दिक्षु चतस्रो वाप्यः संति, तासां वापिनां मध्यभागेषु दधिमुखाः पर्वताः संति, दधिवर्णाः श्वेतवर्णा इत्यर्थः । पुनर्द्वयोर्वाप्योरंतरे द्वौ द्वौ रतिकरपर्वतौ वर्त्तेते, रक्तवर्णा इत्यर्थः । एवं चैकैकांजनगिरिः, समंताच्चत्वारो दधिमुखाः, अष्टौ च रतिकराः संति, संमिलने द्वादश, त्रयोदशश्च स्वयमंजनगिरिः, इत्थं चतुर्दिक्षु चतुर्णामंजनगिरीणां सपरिकराणां मीलने जाता द्विपंचाशद्गिरयः, ते च पृथग्नामसंख्यया–चत्वारोंजनगिरयः ( ४ ), षोडश दधिमुखाः ( १६ ), द्वात्रिंशद्रतिकरपर्वताः ( ३२ ), तेषामुपर्येकैकं जिनभवनमस्तीति द्विपंचाशज्जिनभवनानि संति, तेषु च जिनचैत्येषु प्रत्येकं चतुर्विंशत्यधिकशतं जिनबिंबानि संति, सर्वेषां मिलनेऽष्टचत्वारिंशदधिकचतुःषष्टिशतानि ( ६४४८ ) जिनबिंबानि भवंति, तानि च सर्वाण्यपि चैत्यानि चतुर्द्वाराणि शाश्वतानि प्रवर-

*एकलक्षयोजनप्रमाणो जम्बूद्वीपः, द्विलक्षयोजनप्रमाणो लवणसमुद्रः, एवं द्वीप समुद्राणां द्विगुणद्विगुणकरणेन–धातकी-पुष्कर-वारुणी-क्षीर घृत-इक्षु-यावत् षोडशाब्ज अष्टत्रिंशत् कोटि-चत्वारिंशत् लक्षाः-( १६३८४०००००० ) एतावत् योजनप्रमाणोष्टमनंदीश्वरनामको द्वीपोऽस्ति ॥

स्थानांतरे मोचनं प्रेष्यप्रयोगः २, कंचित् कार्येणाकारयंतं दृष्ट्वा स्वकार्यसाधनार्थं शब्दकरणं शब्दानुपातः, ३, तथैव परं प्रति स्वस्य रूपदर्शनं रूपानुपातः ४, अभिगृहीतदेशाद् बहिः कार्यज्ञापनाय पाषाणादिक्षेपणं पुद्गलक्षेपः ५ ॥ एकादशे पौषधव्रते पंचातिचाराः, यथा-अप्रतिलेखितदुःप्रतिलेखितशय्यासंस्तारकासेवनं १. अप्रमार्जितशय्यासंस्तारकासेवनं २, अप्रतिलेखितादिभूमिकासु उच्चारप्रस्त्रवणपरिष्ठापनं ३, अप्रमार्जितादिभूमिकासु उच्चारादिपरिष्ठापनं ४, प्रभातसमये अमुकमाहारं पाचयिष्यामीत्यादिप्रकारचिंतनं ५ ॥ द्वादशे अतिथिसंविभागव्रते पंचातिचाराः, यथा–साधुसमागच्छंतं दृष्ट्वाऽदानबुद्धया देयद्रव्यस्य सचित्तोपरिस्थापनं १, सचित्तेन फलादिना देयवस्तुन आच्छादनं २, स्वकीयमपि मोदकादिद्रव्यमन्यदीयमेतदिति कथनं ३, यदि एतेन निःस्वेनापि दानं दत्तं तत्किमहमतोऽपि हीन इति मात्सर्याद्दानं ४, आहारमानीय भुंजानानां भुक्तवतां साधुनां निमंत्रणं, यथा मदीयोऽभिग्रहोऽपि न भज्यते, वस्तवपि एते न गृह्णंतीत्यभिप्रायेणेति ५ ॥ इत्थं द्वादशव्रतानां षष्ठ्यतिचाराः, सर्वेऽपि मिलिताः ( १२४ ) इति. एषां मध्ये ये केऽप्यतिचारा लग्ना भवेयुस्तेषां मे मिथ्यादुष्कृतमस्तीति संघादिसमक्षं वाच्यं, ततः सर्वेष्टार्थसिद्धिः !!

इति चातुर्मासिकत्रयव्याख्यानं समाप्तं ॥ ९ ॥



भ्यो दानं ३, कुप्यस्य स्थालादीनां दशकादेः संयोज्य पंचकादिकरणं ४, पूर्वं सामान्यतो नियमं विधाय पश्चात् सगर्भयोर्द्विपदचतुष्पदयोर्ग्रहणं ५ ॥

अथ षष्ठे दिक्परिमाणाख्ये गुणव्रते पंचातिचाराः, यथा–ऊर्ध्वाधस्तिर्यक् ३ प्रमाणातिक्रमेण वस्त्वानयनप्रेषणाभ्यां त्रयोतिचाराः ३, अन्यदिग्योजनानामन्यस्यां दिशि क्षेपणं क्षेत्रवृद्धिः ४, किंचित् स्वयमेव कृतदिक्प्रमाणविस्मरणं स्मृत्यंतर्धानं ५ ॥ सप्तमे भोगोपभोगव्रते पंचातिचाराः, यथा–सचित्तभक्षणकृतनियमस्य कृततत्परिमाणस्य वा पुंसो दाडिमादि यत्सचित्तं वस्तु तस्य भक्षणं १, पक्वाम्रफलादिसचित्तप्रतिबद्धं तस्य भक्षणं २, अचालितकणिकादि 'अप्पोल' मित्युच्यते, तस्य भक्षण ३, पृथुकादि 'दुप्पोल' मित्युच्यते, तस्य भक्षणं ४, अतृप्तिजनका लघुबीजा औषधयस्तुच्छौषधयस्तासां भक्षणं ५ ॥ अष्टमे अनर्थदण्डविरमणे पंचातिचाराः, यथा–कामोद्दीपकशास्त्राभ्यासः कदर्प १, मुखाक्षिभ्रूविकारपूर्विका भंडचेष्टा कौकुच्यं २, गाल्याद्यसंबद्धप्रलापित्वं मौखर्यं ३, संयुक्तस्य उदूखलमुशलघरट्टादेर्धारणं संयुक्ताधिकरण ४, स्नानादिसमये अधिकतैलमृत्तिकादिसामग्रीमेलनं,सरोवरादौ स्नानादिकरणेन पृथिव्यप्कायादिविराधनं च भोगोपभोगातिरेकः ५ ॥

अथ नवमे सामायिकव्रते पंचातिचाराः, यथा–मनसि पापव्यापारचिंतनं मनोदुःप्रणिधानं १, विकथाकरणं वाग्दुःप्रणिधानं २, अप्रतिलेखिते स्थाने हस्तादिक्षेपणं कायदुःप्रणिधानं ३, सामायिकं कृत्वा मुहूर्त्तमात्रमपि तदासेवनया अकरणं अनवस्थानं ४, सामायिकं मया कृतं न वेति स्मृतिविहीनता ५ ॥ दशमे देशावकाशिकव्रते पंचातिचाराः, यथा—पां प्रति त्वया इदमानेतव्यमित्युक्त्वाभिग्रहविषयकदेशात्परतो वस्त्वानयनं आनयनप्रयोगः १ त्वयेदं मम वस्तु गृहादौ नेतव्यमित्युक्त्वा स्वपार्श्वस्थाधिकवस्तुनोऽभिगृहीतदेशा

अथ द्वादशव्रतानां षष्ठ्यतिचारा उच्यंते. तत्र प्रथमं स्थूलप्राणातिपातविरमणव्रते पंचातिचाराः यथा—निर्दयतया पश्वादीनां कशादिभिस्ताडनं वधः १, रज्ज्वादिभिर्गाढबंधनं बन्धः २, शस्त्रेण कर्णादिकर्त्तनं वृषणच्छेदनं च छविच्छेदः, छविः शरीरं तस्य छेद इति व्युत्पत्तेः ३, वृषभादीनां स्कंधे पृष्ठे च सामर्थ्यातिरिक्तभारारोपणमिति भारः ४, वृषभादीनां वेलाप्राप्तावपि अन्नजलघासनिवारणा भक्तपानव्यवच्छेदः ५ ॥ स्थूलमृषावादविरमणव्रते पंचातिचाराः, यथा—त्वं चौरस्त्वं जार इत्यादि परं प्रति अविचार्यभाषणं सहसाभ्याख्यानं १, एकांते स्थितान् कानपि विलोक्य एते राजविरुद्धं चिंतयंतीति प्रकाशनं रहोभ्याख्यानं २, विश्वासिभिः स्वदारैः स्वमित्रैर्वा यत्प्रच्छन्नं कथितं तस्यान्येषामग्रे प्रकाशनं स्वदारमन्त्रभेदः ३, कष्टे पतितस्य कस्यचित् पृच्छतोऽलीकमीदृशं वदेरित्यादिशिक्षणं मृषोपदेशः ४, कूटलेखश्च प्रतीतः ५ ॥ स्थूलादत्तादानविरमणव्रते पंचातिचाराः, यथा—चौराहृतवस्तुग्रहणं स्तेनाहृतं १, चौराणां शंबलादिदानेन साहाय्यकरणं स्तेनप्रयोगः २, घृतादौ तादृशवस्तुनो वशादेर्मीलनं तत्प्रतिरूपक्षेपः ३, विरोधिराज्ये लाभार्थं वस्तुविक्रयणार्थं गमनं विरुद्धगमनं ४, लोकप्रसिद्धतुलामानयोर्न्यूनाधिककरणं कूटतुलाकूटमानं ५ ॥ स्थूलमैथुनविरमणव्रते पंचातिचाराः यथा—वेश्यायां १, विधवायां २, कन्यायां ३ वा गमनं अपरिगृहीतागमनं १, भाटकप्रदानेन स्तोककालं यात्मीया कृता तस्यां गमनं ईत्वरीगमनं २, अंगं स्त्रीपुरुषचिह्नं, तदन्यानि अंगानि कुचकक्षोरुवदनादीनि तेषु रमणं अनंगक्रीडा ३, स्वापत्यानामिव अन्यापत्यानां परिणायनं परविवाहकरणं ४, कामभोगेषु गाढाभिलाषस्तीव्रानुरागः ५ ॥ स्थूलपरिग्रहपरिमाणव्रते पंचातिचाराः, यथा—गणिम १ धरिम २ मेय ३ परिच्छेद्य ४ भेदाच्चतुर्विधस्य धनस्य शालिगोधूमादेर्धान्यस्य च समर्धस्य सत्यंकारादिना स्वीकृत्य नियमावधिं यावत्तत्रैव व्यवस्थापनं १, क्षेत्रवास्तुनोर्मध्यवर्तिवृत्त्यादिदूरीकरणेन एकीकरणं २, पूर्णेऽवधौ ग्रहीष्यामीति बुद्ध्या रूप्यस्वर्णादेर्भार्यादि-

पंचदश कर्मादानातिचाराः ॥

ज्ञानस्याष्टौ अतिचाराः यथा–अकालवेलायां प्रतिषिद्धदिने वा श्रुताध्ययनं १, गुरोर्ज्ञानोपकरणानां पुस्तकादीनां वा पादादिसंघट्टनेनाऽविनयकरणं २, तथा एषामेव बहुमानस्याऽकरणं ३, उपधानयोगादि विना श्रुताध्ययनं ४, यस्य पार्श्वे श्रुतमधीतं तस्य गुरोर्नाम्नोऽवलपनं ५, देववंदनप्रतिक्रमणादौ शुद्धाक्षराणामपठनं ६, तत्रैव शुद्धार्थस्यापठनं ७, तत्रैवाऽशुद्धयोः सूत्रार्थयोः पठनं ८, इति ज्ञानस्याष्टौ अतिचाराः ॥

दर्शनस्याप्यष्टौ अतिचारास्तथाहि–देवगुरुधर्मविषये शंकाकरणं १, सर्वाण्यपि दर्शनानि शोभनानीति श्रद्धाकरणं २, धर्मस्य फले संदेहकरणं ३, मिथ्यादृष्टीनां महत्त्वं दृष्ट्वा तदुपरि तीव्ररागकरणं ४, साध्वादीनां गुणश्लाघाया अकरणं ५, नवप्रतिबुद्धश्राद्धादेः स्थिरताया अकरणं ६, साधर्मिकाणां वात्सल्याऽकरणं ७, सति सामर्थ्ये जिनशासनस्य प्रभावनाया अकरणं ८, इति दर्शनस्याष्टौ अतिचाराः ॥

तथा पंचानां समितिनामीर्यादीनां ५, तिसृणां च गुप्तीनां मनोगुप्त्यादीनां ३, तयाविराऽपालने चारित्रस्याष्टौ अतिचाराः । तथा 'अणसणमूणोयरिया' इत्यादि द्वादशतपोभेदानां सम्यगकरणे तपसो द्वादशातिचाराः । तथा मनोवीर्य १ वचनवीर्य २ कायवीर्याणां ३ देववंदन-प्रतिक्रमण-स्वाध्याय-दान-शीलादौ अस्फोरणे वीर्यस्य त्रयोऽतिचाराः । सम्यक्त्वस्य पंचातिचाराः, यथा–श्रीजिनेंद्रोक्तपदार्थेषु सन्देहः शंका १, अन्यान्यदर्शनाभिलाषः कांक्षा २, धर्मफलं प्रति सन्देहो विचिकित्सा, अथवा मलमलिनवपुषः साधून् दृष्ट्वा जुगुप्साकरणं विचिकित्सा ३, मिथ्यादृष्टीनां प्रशंसनं कुलिंगप्रशंसा ४, मिथ्यादृष्टिभिः सह परिचयः कुलिंगसंस्तवः ५ ॥

पत्तेयं २४ ॥ बारस तव १२ विरयतिग ३ । पण सम्म ५, वयाणं पत्तेयं ६९ ॥ १ ॥ व्याख्या–संलेखनायाः पंचातिचारास्तथाहि— अत्र इतस्तपः प्रभावादहं मनुष्यो राजादिर्भूयासमिति इहलोकाशंसा १, इतोऽनुष्ठानात्परलोके देवो भूयासमिति परलोकाशंसा २, कृतानशनोऽहं लोकैः पूज्योऽस्मि, अतश्चिरं जीयासमिति जीविताशंसा ३, अपूज्यत्वाद्व्याधिपीडितत्वाद्वा शीघ्रं म्रियते चेद्वरमिति यत्प्रार्थनं तन्मरणाशंसा ४, रूपं शब्दश्च कामौ, गंधरसस्पर्शाभोगास्ते मम प्रशस्ता भूयासुरिति या इच्छा सा कामभोगाशंसा ५, संलेखनां कृत्वा यद्येवं चिंतयति तदातिचाराः, एषु च यदि कोऽपि कालयत्रसंबंधी अतिचारो लग्नो भवेत्तदा तस्य मे मिथ्यादुष्कृतमिति संघादिसमक्षं वाच्यं, एवमग्रेऽपि बोध्यम् ।

अथ पंचादश कर्मादानातिचाराः यथा—

आजीविकादिनिमित्तं काष्ठदहनेन अंगाराणां करणं, तद्विक्रयणं, इष्टिकापाचनमित्यादि अंगारकर्म १, वृक्षादेः पत्रपुष्पादेर्वा छेदनविक्रयणादि वनकर्म २, शकटानां तदंगानां च निष्पादनवाहनादि शकटकर्म ३, शकटवृषभादीनां भाटकेनार्पणं भाटककर्म ४, हल कुद्दालादिभिर्भूमिविदारणं पाषाणादिघटनं यवादिधान्यानां भुंजनादिकरणं च स्फोटककर्म ५, प्रथमत एव म्लेच्छादिभ्यो मूल्यदानेन गजदंताद्यानाय्य विक्रयणं, आकाराद्वा स्वयमानीय विक्रयणं दंतवाणिज्यं ६, लाक्षा–नीली–मनःशिलादेः सुलितधान्यादेश्च विक्रयो लाक्षावाणिज्यं ७, घृत–तैलादि रसविक्रयो रसवाणिज्यं ८, यस्मिन् भक्षिते प्राणी म्रियते तद्विषं, तस्य वाणिज्यं ९, द्विपद–चतुष्पदादि विक्रयः केशवाणिज्यं १०, तिलेक्ष्वादीनां यंत्रैः पीडनं यंत्रपीलनं ११, वृषभादेर्वृषणकर्णादिच्छेदनं निर्लांछनकर्म १२, क्षेत्रादौ वह्नेर्ज्वालनं दवदानं १३, गोधूमादेः पोक्षः ( पार्थः ) सरोहृदादिशोषश्च प्रसिद्धः १४, असत्यो दुःशीला दास्यादयस्तासां पोषणमसतीपोषः १५ ॥ इति

तथा तपो हि दुष्टाष्टकर्मविनाशकं सकललब्धिजनकं बाह्याभ्यंतरभेदतो द्वादशविधं दृढप्रहारिवद्भव्यात्मभिः समाचरणीयं । तपोमुखानीत्यत्र मुखशब्द आद्यर्थस्तेन भावनादिपरिग्रहः, इति व्याख्यातं ब्रह्मक्रियादिपदं यत्र । किंचात्रधर्मार्थिनात्मनिंदा कर्त्तव्या, न परनिंदा, तत्र चित्रकृत्पुत्रीदृष्टांतः, स चेवं–कांचनपुराधीशेन जितशत्रुराजेन स्वस्य नवीनसभायां कनकमंजरी नामचित्रकरसुतानिर्मितं चित्रमयूरं साक्षान्मयूरमिव दृष्ट्वा तच्चातुर्यगुणरंजितेन सा परिणीता, तया च स्वबुद्ध्या प्रत्यहं नवनवकथाकथनेन नृपः षण्मासान् यावत् स्ववासे आनीतः, तदा राज्ञा बहु मन्यमानापि सा प्रतिदिनं स्वगृहे एकांतदेशे उपविश्य पितृगृहसंबंधिसामान्यवेषं परिधाय हे आत्मन् ! राजमान्यत्वमस्थिरमस्ति, अतोऽहंकृतिर्न विधेया, तव पितृगृहसंबंधिनी त्वियं ऋद्धिरस्तीत्यादिवचनैरात्मानं निंदति स्म. अथ छलं पश्यंतीभिः सपत्नीभिस्तथाकुर्वाणां तां विलोक्य नृपायोक्तं, एषा तु भवतां कार्मणं करोति, ततो राज्ञा परीक्षार्थमेकदाकस्मादागत्य तामात्मनिंदां कुर्वाणां दृष्ट्वा तुष्टेन पट्टराज्ञी कृता, अपराश्चापमानिताः, एवं धर्मार्थिभिरात्मनिंदा कार्येति ॥

अन्यच्च चातुर्मासिकपर्वाराधयितुकामैर्भव्यात्मभिरस्मिन् दिने स्वे स्वेऽतिचारा आलोचनीयाः, गुर्वादिसमक्षं च तेषां मिथ्यादुष्कृतं च वाच्यं, तत्र साधूनां चरणसप्तति (७०), करणसप्तति (७०) मिलनाच्चत्वारिंशदधिकशत (१४०) मतिचारा भवंति, ते च ग्रन्थगौरवभयान्न लिख्यंते. * । श्रावकाणां तु चतुर्विंशदधिकशतमतिचाराः (१२४) स्युस्ते संक्षेपतो दर्श्यंते—पण संलेहण ५ पन्नरस–कम्म १५, नाणाइ अट्ठ

* संक्षेपतो गाथाद्वयं यथा–वय (५) समणधम्मं (१०) संजमं (१७) वेयावच्चं च (१०) बंभगुत्तीओ (९) ॥ नाणाइ तिअं (३) तव (१२), कोह निग्गहो (४) होइ चरणमेयं ॥ १ ॥ पिंड विसोही (४) समिई (५) भावणा (१२), पडिमा य (१२) इंदिय निरोहो (५)॥ पडिलेहण (२५) गुत्तीओ (३), अभिग्गहो (४) चेव करणं तु ॥ २ ॥

अथ देवार्चनस्नात्रविलेपनानि व्याख्यायन्ते–देवस्य श्रीजिनेंद्रस्य तत्प्रतिमायाश्च अर्चनं वासादिना, स्नात्रं जलादिना, विलेपनं च चन्दनादिना कर्त्तव्यमेतत्पदत्रयेण सर्वोऽपि पूजाप्रकारः सूचितः । पूजाफलं चेदं–सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे ॥ सयसाहस्सिया माला, अणंतं गीयवाइयं ॥ १ ॥ इत्यादि, अत्र दृष्टांताः स्वयं वाच्याः । अथ ब्रह्मक्रिया १ दान २ तपोमुखानि ३ व्याख्यायंते, तत्र ब्रह्मक्रिया-ब्रह्मचर्यं सुदर्शनश्रेष्ठ्यादिवत् शीलव्रतपालनमित्यर्थः, तत्फलं यथा—जो देइ कणयकोडिं, अहवा करेइ कणयजिणभवणं ॥ तस्स न तत्तिय पुन्नं, जत्तिय बंभव्वए धरिए ॥ १ ॥ ॥ इति । तथा दानं हि अभयं १ सुपात्रा-२ नुकंपो ३ चित ४ कीर्त्ति ५ भेदात्पंचविधं, तत्र द्वाभ्यां मोक्षः, त्रिभिश्च भोगप्राप्तिः, इहाभयदाने दृष्टांतो यथा—

राजगृहे सभास्थितेन श्रेणिकनृपेण प्रोक्तं, संप्रति नगरे किं वस्तु सुलभं स्वादु चास्ति ? क्षत्रियाः प्रोचुर्मासं समर्घं स्वादु चास्ति, तदा अभयकुमारेण चिंतितं, एते निर्दयाः, अथ यथा पुनरप्येवं न जल्पेयुस्तथा कुर्यां, ततो रात्रौ सर्वक्षत्रियगृहेषु पृथग्पृथग्गत्वाऽभय एवमवादीत्—भो क्षत्रियाः ! राजपुत्रशरीरे महाव्याधिरुत्पन्नोऽस्ति, यदि मनुष्यसत्कं कालेयमांसं टंकद्वयमितं दीयते तदा स जीवति नान्यथेति वैद्यैरुक्तमस्ति. ततो यूयं राज्ञो ग्रासजीविनो भवद्भिरेवैतत्कार्यं कर्त्तव्यं. तदा एकेनोक्तं दीनारसहस्रं गृहाण ? परं मां मुंच ? अन्यत्र गच्छ ? अभयेन तद् गृहीतं, एवं रात्रौ प्रतिगृहं परिभ्रम्य तैर्दत्तानि बहूनि दीनारलक्षणाण्यादाय प्रभाते नृपसभायां तद्धनं क्षत्रियेभ्यो दर्शितं, प्रोक्तं च अहो गतदिने यूयमेव वदथ यन्मांसं सुभलमिति. अद्य तु एतावता द्रव्येणापि तन्मांसं न प्राप्तं, ततो लज्जितास्तेऽभयेन हक्किताः, ततो मांसभक्षणनियमं प्रापिताश्च, अत्रार्थे श्लोकः—स्वमांसं दुर्लभं लोके, लक्षेणापि न लभ्यते ॥ अल्पमूल्येन लभ्यते । पलं परशरीरजं ॥ १ ॥ एवमन्यैरप्यभयदानबुद्धिर्धार्येति ॥

अथावश्यकपदं व्याख्यायते, तत्रोभयकालं यदवश्यं कर्त्तव्यं तदावश्यकं प्रतिक्रमणमित्यर्थः, तत्फलं चेदं—आवस्सएण एएण । सात्र-
ओ जइवि बहुरओ होइ ॥ दुक्खाणमंतकिरियं । काही अचिरेण कालेण ॥ १ ॥ व्याख्या—श्रावको यद्यपि बहुरजस्को बहुपापयुक्तो
भवति तथाप्येतेनावश्यकेन कृत्वा स्तोकेन कालेन दुःखानामंतक्रियां विनाशं करिष्यतीति, किंच— आवस्सअं उभयकालं, ओसहमि-
वं जे करंति उज्जुत्ता ॥ जिणविज्जकहियविहाणा, अकम्मरोगा य ते हुंति ॥ २ ॥ व्याख्या—श्रावका उपयोगयुक्ताः संतः प्रभात-
संध्याकालयोर्जिनवैद्यकथितविधिना सम्यक्प्रकारेण औषधमिवावश्यकं कुर्वंति ते कर्मरोगरहिता भवंतीति. प्रतिक्रमणनियमे साजणसिंह-
दृष्टांतः । स चैवं—साजणसिंहनामा श्रेष्ठी द्विसंध्यं कालवेलायां प्रतिक्रमणं विना भोजनं न कार्यमिति नियमवान् बभूव. एकदा पीरो-
जपातसाहेन केनचिदपराधेन स कारागारे क्षिप्तस्तदा तत्र स्थितेनापि तेनारक्षकपुरुषेभ्यः पंचाशत्पंचाशन्मितान् सुवर्णनिष्कान् दत्वा
प्रत्यहं प्रतिक्रमणं कृतं, अन्यदा रत्नद्वयपरीक्षणव्यतिकरे तृतीयं रत्नं जगन्मध्ये त्वमिति वचनात्प्रसन्नेन सुरत्राणेन स मुक्तः सन्मानि-
तश्च. तदा तैर्भीतैरारक्षकैर्निष्कास्तस्य पश्चात्प्रदत्तास्ततः श्रेष्ठिना ते निष्कास्तेभ्य एव दत्ताः, प्रोक्तं च अहो एतद्धनं कियत् ! यतो
ऽमूल्यं प्रतिक्रमणं मया कृतं भवत्साहाय्यादिति दृष्टांतः ॥

अथ पौषधं व्याख्यायते— धर्मस्य पोषं पुष्टिं दत्ते तत्पौषधं, तच्चाहार १ शरीरसत्कार २ गृहव्यापार ३ अब्रह्म ४ निवृत्तिरूपं बोध्यं,
तत्फलं चेदं—पोसहि य सुहे भावे । असुहाइं खवेइ नत्थि संदेहो ॥ छिंदेइ निरयतिरिगइं । पोसह विहिअप्पमत्तेणं ॥ १ ॥ पौषधव्र-
तस्थिरत्वे कामदेवदृष्टांतः—यथा कामदेवश्रावकः पौषधे स्थितः सन् निशायां मिथ्यात्विदेवेन—दुष्टगज १ नाग २ पिचाश ३ रूपैर्बं-
हुधा क्षोभितोऽपि मनोवाकायैर्मनागपि न क्षुभित इति.

नर्त्तकीनिमग्नचित्तोऽपि तयोर्निर्विकारभावदर्शनात् सद्यः संप्राप्तवैराग्योऽनित्यादिभावनां भावयन् केवलज्ञानं प्राप, देवैर्महोत्सवो विहितो, वंश एव च सिंहासनं बभूव, तत्स्वरूपदर्शनान्नृपादयोऽपि प्रतिबुद्धाः ॥ इति ॥ परिज्ञायामिलापुत्रदृष्टांतः ॥७॥ अथ परिहरणीयवस्तुत्यागे तेतलिपुत्रदृष्टांतो यथा—तेतलिपुरे कनककेतुर्नामराजा, स च राज्यलोभाज्जातमात्रान् स्वपुत्रान् विनाशयति. तस्य राज्ञस्तेतलिपुत्रनामामात्यस्तस्य पोट्टिलानाम भार्या, सा च प्रथमं मंत्रिणोऽतिवल्लभासीत् , पश्चात्कथंचिदनिष्टा जाता. एकदा तस्या गृहे आहारार्थमेका साध्वी समुपागता, मंत्रिपत्न्या तां प्रति प्रणम्य भर्तृवशीकरणोपायः पृष्टः, साध्व्या प्रोक्तं धर्मः सेव्यो येन सर्वेष्टार्थाः सिद्ध्यंति, ततः सा संसाराद्विरक्ता सती दीक्षाग्रहणार्थं पतिं पप्रच्छ, मंत्रिणोक्तं दीक्षां गृहाण, परं यदि त्वं देवपदं प्राप्नुयास्तर्हि मां प्रतिबोधयः, तयापि तद्वचोंगीकृत्य दीक्षामादाय आयुःक्षये समाधिना मृत्वा देवपदं प्राप्तं, अथ मंत्रिणा राज्ञ एकः पुत्रो जातमात्र एव प्रच्छन्नं गृहीत्वा स्वगृहे वार्द्धित आसीत् . एकदा कनककेतुनृपे परलोकं गते सति मंत्रिणा स कनकध्वजकुमारो राज्ये स्थापितः, राजकार्यममात्याधीनं कृतं, ततो मंत्री अहर्निशं राजकार्ये मग्नः सन् कदापि धर्मकृत्यं न कृतवान्. तस्मिन्नवसरे देवपदं प्राप्तया पोट्टिलया मंत्रिणस्तत्स्वरूपं दृष्ट्वा तत्प्रतिबोधाय नृपादयः सर्वेऽपि लोकास्तत्पराङ्मुखा विहिताः, ततो नृपस्थानं गतेन मंत्रिणा क्वाप्यादरमलभमानेन सद्यो गृहमागत्यात्मनः कुमरणाशंकया स्वहस्तेनैवानेके मरणप्रयोगाः कृताः, परं देवेन सर्वेऽपि वैयर्थ्यं नीताः, ततो विलक्षीभूय स्थितं मंत्रिणं प्रति देवः प्रादुर्भूय उवाच, भो मंत्रिन् ! ईदृक्संसारस्वरूपं विद्यते, तत्त्वतो न कोऽपि कस्यापि स्वजनोऽस्ति. इत्यादिवचनैर्मंत्रिणं प्रतिबोध्य देवः स्वस्थानं ययौ, मंत्र्यपि सर्वं विभवं परित्यज्य सद्यो दीक्षां जग्राह। इति प्रत्याख्याने तेतलिपुत्रदृष्टांतः ॥ इति सामायिकपदं व्याख्यातम् ॥

सर्वजीवैः सह क्षामणां कृत्वा तत्र स्थितः सन् स्वयमेव तत्कटुकतुंबिकाशाकं भुक्तवान् , न पुनः परप्राणि वधभिया परिष्ठापितवान्. ततः सद्यो मृत्वा स सद्गतिं प्राप्तः ॥ इति ॥ निष्पापाचरणे धर्मरुचिर्दृष्टांतः ॥ ६ ॥ अथ पापत्यागेन यद्वस्तुतत्त्वज्ञानं, तत्र इलापुत्रदृष्टांतो यथा--इलानगरे धनदत्तश्रेष्ठी, तस्य इलादेवीसेवनात् इलापुत्रोनाम पुत्रो जातः, स चैकदा तत्रागतानां विदेशिनटानां नृत्यं पश्यन् अतिसुन्दररूपां नर्त्तकपुत्रीं विलोक्य प्राग्भवस्नेहात्तस्यामत्यन्तानुरक्तो बभूव, ततः सद्यो गृहमागत्य पितरं प्रति उवाच-भो तात ! मां प्रति नर्त्तकपुत्रीं परिणायस्व, नोचेद् मरणमेव शरणीकरिष्ये, परमपरकन्यापाणिग्रहणं सर्वथा न विधास्ये, तदा पित्रा तस्यात्याग्रहं विज्ञाय कथमपि निषेद्धुमशक्नुवता वृद्धनटसमीपं गत्वा तस्य पुत्री मार्गिता. नटेनोक्तं यद्ययमस्मत्कलां शिक्षयित्वा बहुधनं चोपार्ज्य अस्मज्ज्ञातिं पोषयेत् तर्हि-अस्मत्पुत्र्याः पाणिग्रहणं कुर्यात्. श्रेष्ठिना तद्वचः श्रुत्वा इलापुत्रं प्रति सर्वोऽपि वृत्तांतः प्रोक्तः, इलापुत्रस्तु तदप्यंगीकृत्य हठेन गृहान्निर्गत्य नटेषु संमिलितः, ततः कियता कालेन तेषां सर्वकलासु निपुणो भूत्वा वेन्नातटनगरं प्राप्तः, तत्र राज्ञे स्वकलादर्शनाय स्वयं वंशमारुह्य रमतेस्म. सा नटपुत्री च वंशपार्श्वे स्थिता गानं करोतिस्म, तदा तां नटपुत्रीं विलोक्य राजा चलचित्तः सन् चिंतयतिस्म, यद्येष इलापुत्रो वंशान्निपत्य म्रियते तर्हि एनां कन्यामहं गृह्णामि. अथ इलापुत्रः सर्वा एव कलाः कृत्वा वंशादुत्तीर्य दानग्रहणेच्छया नृपपुर स्थितः, राज्ञोक्तं व्यग्रतया मया नृत्य न दृष्टं, ततः पुनः कुरु ? तदा तेन धनलिप्सया पुनर्नृत्यं कृतं, परं राज्ञा तन्मरणमिच्छता पुनस्तथैवोक्तं. ततः सतृतीयवारं पुनः- वंशमारुह्य रमतेस्म. तस्मिन्नवसरे एकभाग्यवतः श्रेष्ठिनो गृहे एकः साधुराहारार्थं गतस्तदा सर्वालंकारविभूषिताऽतिसुन्दरांगी श्रेष्ठिपत्नी सद्यः समुत्थाय सानंदं वंदनां विधाय मोदकैः स्थालं भृत्वा साधुं प्रतिलाभयति, साधुरप्यधोदृष्टिः सन् 'इत्थं इत्थमिति' शब्दमुच्चरन्नाहारं गृह्णाति. एतत्स्वरूपं वंशारूढेन इलापुत्रेण दृष्टं, तदासौ स्वयं

तत्प्राप्त्यर्थं समपरिणामं दधानः, करस्थं खड्गादि तत्रैव परित्यज्य तन्मुनिस्थाने एव कायोत्सर्गेण तस्थौ. तदानीं हि रुधिरगन्धादुपागतेन कीटिकागणेन तच्छरीरं सच्छिद्रं कृतं, परं स मनागपि न चचाल, तृतीयदिने तत्रैव कालं कृत्वा स्वर्गं प्राप्तः ॥ इति ॥ समाप्तो चिलातीपुत्रदृष्टांतः ॥४॥ अथ स्तोकाक्षरैर्महार्थकथने लौकिकः पंडितचतुष्टयदृष्टान्तो यथा—वसन्तपुरे जितशत्रुराजा, तस्यैकदा शास्त्रश्रवणेच्छासीत्, तदा चतुर्भिः पंडितैः श्लोकलक्षप्रमितमेकैकं ग्रंथं विधाय नृपाय निवेदितं, नृपेणोक्तं—एते ग्रंथा अतिमहांतो मया स्तोककालेन श्रोतुं न शक्यंते, तस्मात्स्वल्पाक्षरैरेवैतेषां सारं वदत, तदा चतुर्भिः पंडितैः सारभूतमेकं श्लोकं निष्पाद्य नृपाग्रे प्रोक्तं, तथाहि—जीर्णे भोजनमात्रेयः, कपिलः प्राणिनां दया ॥ बृहस्पतिरविश्वासः, पंचालः स्त्रीषु मार्दवं ॥१॥ व्याख्या—आत्रेयनामा विद्वान् वक्ति—प्रथमं भुक्ते आहारे जीर्णे सति पुनः भोजनं कार्यमिति वैद्यग्रंथपरमार्थः १, कपिलपंडितः प्राह—सर्वेषां प्राणिनां दया कार्येति धर्मशास्त्रपरमार्थः २, बृहस्पतिनामा विद्वान् वदति—कस्यापि विश्वासो न कार्य इति नीतिशास्त्रसारः ३, पंचालो विद्वान् ब्रुते—स्त्रीषु मृदुता धार्या परं तासामंतो न ग्राह्य इति कामशास्त्ररहस्यं ४, एवं स्तोकाक्षरैर्बह्वर्थकथनं द्वादशांगीरूपं संक्षेपसामायिकं बोध्यं ॥५॥ अथ निष्पापाचरणे धर्मरुचिसाधुदृष्टांतो यथा—धर्मघोषाचार्यस्य शिष्यो धर्मरुचिनामा साधुर्नगरे आहारार्थं भ्रमन् रोहिणीनामब्राह्मण्या गृहे भिक्षार्थं प्रविष्टः, तया कुटुम्बनिमित्तं मिष्टभ्रान्त्या निष्पादितं कटुकतुंबिका शाकं विषप्रायं विज्ञाय दुष्टबुद्ध्या साधवे दत्तं, साधुना तु सरलस्वभावेन तद् गृहीत्वा स्वस्थाने आगत्य गुरुभ्यस्तद्दर्शितं. गुरुभिस्तद् दृष्ट्वा प्रोक्तं भो महानुभाव ! इदं शाकं विषप्रायमस्ति. तस्मान्निरवद्यस्थंडिले गत्वा परिष्ठापय । तदा धर्मरुचिसाधुर्गुर्वाज्ञया निर्वद्यभूमौ गत्वा यावत्तच्छाकं परिष्ठापयितुं लग्नस्तावत्तन्मध्यात्पतितबिंदुमात्रे एव तद्गन्धाकृष्टा बह्व्यः कीटिकाः संमिलितास्तद्गन्धग्रहणेनैव च मृताः, अथैवं बहुकीटिकामरणं दृष्ट्वा पापभीरुः साधुर्जीवदया चिंतयन्

भटैर्निरुद्ध्य निजगृहं चागत्य प्रच्छन्नं स्थितः, ततः स दत्तो मतिमोहात्सप्तममपि दिनमष्टमं मन्वानोऽद्याचार्यप्राणैः शांतिकं कुर्वे इति विचिंत्य गृहान्निर्गतः, तदा एको मालिकः पुर्यां प्रविशन् कार्याकुलत्वात् राजमार्गे एव मलोत्सर्गं कृत्वा तत्पुष्पैराच्छादयामास, तावत्तत्रैव मार्गे गच्छतो दत्तस्याश्वखुरोत्क्षिप्ता सा विष्टा मुखे पतिता. तदा स विष्टास्वादाच्चमत्कृतः सन् पश्चान्निवृत्तस्तदैतस्य बहुविधदुराचारेण खिन्नैर्मूलमंत्रिभिर्जितशत्रुनृपः पंजरान्निष्कास्य राज्ये स्थापितः, दत्तस्तु छलाद् बद्ध्वा राज्ञे समर्पितः; राज्ञा च स कुंभ्यां प्रक्षिप्य अधश्चाग्निं प्रज्वाल्य श्वानान् ( शुनो ) विमुच्य स कदर्थितः सन् मृत्वा नरकं गतः आचार्यास्तु बहुधा सन्मानिताः, इति सत्योक्तौ कालिकाचार्यदृष्टांतः ॥३॥ अथ स्तोकाक्षरैर्महातत्त्वज्ञाने चिलातीपुत्रदृष्टांतो यथा—राजगृहनगर्यां धनदत्तनामा व्यवहारी, तस्य चत्वारः पुत्राः, सुसमानामपुत्री, चिलातीपुत्रनामैको दासश्चासन्. एकदा श्रेष्ठी तं दासं दुराचारिणं विज्ञाय गृहाद् बहिर्निष्कासितवान्. सोऽपि ततो निःसृत्य चौरपल्ल्यां गत्वा स्थितः । अथान्यदा स चिलातीपुत्रो बहुचौरान् संमेलयित्वा राजगृहनगर्यामागतः, तत्र स्वयं च तस्य श्रेष्ठिनो गृहे प्रविश्य सुसमानामकन्यां चादाय सद्यो गृहान्निर्गतः, तावत् श्रेष्ठ्यपि कन्यानयनार्थं चतुष्पुत्रसहितस्तत्पृष्ठे चलितः एवं च कियति मार्गेऽतिक्रान्ते श्रेष्ठिनमत्यासन्नमागतं वीक्ष्य भीतश्चिलातीपुत्रः सुसमाया मस्तकं छित्त्वा करे च तद् गृहीत्वा, द्वितीयकरे च रुधिरलिप्तं खड्गमुत्पाट्य पर्वतोपर्यारुरोह, श्रेष्ठी तु तत्स्वरूपं दृष्ट्वा विषण्णः सन् पश्चाद्वलितः, अथ चिलातीपुत्र एतादृशभयंकररूपेणाग्रे चलन् मार्गे कायोत्सर्गस्थं साधुं च विलोक्य इत्थमुवाच, भो मुंड ! धर्मं कथय ? नोचेदनेन खड्गेन तवापि शिरश्छेत्स्यामि, साधुना तत्स्वरूपं वीक्ष्य झटिति ' णमो अरिहंताणं ' इति पदमुच्चार्य आकाशे चोड्डिय उपशम १ विवेक २, संवरेति ३ पदत्रयात्मकं धर्मं तदग्रे उक्त्वाऽन्यत्र जगमे. अथ चिलातीपुत्रस्तमर्थं विचारयन् आत्मनि तन्मध्यगमेकमपि गुणमपश्यन्

मेतार्यमुनिः प्राग्भवाचरितदुरितवशाद्राजगृहनगर्यां चांडालकुले समुत्पन्नः, चांडाल्या च जन्मसमय एव मृतवत्सायै धनदत्तश्रेष्ठिपत्न्यै स प्रच्छन्नमर्पितस्तद्गृहे स वृद्धिं प्राप्तः, क्रमेण यौवने प्राग्भवमित्रदेवसाहाय्यादष्टौ श्रेष्ठिकन्या एकां च श्रेणिकनृपपुत्रीं स परिणीतवान्. ततो द्वादशवर्षांते देववचनात् श्रीवीरप्रभुसमीपे प्रव्रज्यामादाय बहुदेशेषु विहरन् एकदा राजगृहनगर्यां स्वर्णकारगृहे भिक्षार्थं प्रविष्टः, तत्र स्वर्णकारे भिक्षानयनार्थं गृहांतः प्रविष्टे सति पश्चात् श्रेणिकनृपस्य देवपूजानिमित्तं तत्कृता अष्टोत्तरशतप्रमिताः स्वर्णयवाः क्रौंचपक्षिणा भक्षितास्ततश्चोड्डीय स भित्त्युपरि स्थितः, तावत् स सुवर्णकारः शुद्धाहारमानीय बहिः समागतः, स्वर्णकारस्तत्र स्वर्णयवानपश्यन् तं साधुमेव तच्चौरं विचिन्तयन् जगाद्–भो साधो ! इहस्था यवाः केन गृहीताः ? तदा साधुना चिंतितं यदि पक्षिणा भक्षिता इति वक्ष्ये तर्हि मद्वचनादसौ एनं क्रौंचं हनिश्यति एवं विचिंत्य तेन मौनमाश्रितं, ततोऽतिरुष्टेन स्वर्णकारेण साधोर्मस्तकमार्द्रवार्ध्रेण बद्धं, तदा साधोश्चक्षूषी निःसृत्य पतिते, महती वेदना समुत्पन्ना, ततः स साधुरन्तकृत्केवली भूत्वा मुक्तिं प्राप्तः । इत्थं प्राणांतोपसर्गेपि तेन मेतार्यमुनिना जीवदयैव मनसि धृता, न किमप्यन्यच्चिंतितं, एवमन्यैरप्याचरणीयम् । इति । समयिके मेतार्यदृष्टांतः ॥ २ ॥ अथ सत्यवादे कालिकाचार्यदृष्टांतो यथा–तुरीमिणीनगर्यां कालिकाचार्याणां भागिनेयेन दत्तनाम्ना पुरोहितेन छलात्स्वामिनृपं कारागारे निक्षिप्य स्वयं च राज्यभारं बिभ्रता अन्यदा च मातुः प्रेरणयाऽऽचार्यसमीपं गतेन तेन उन्मत्ततया धर्मेर्ष्यया च सक्रोधं श्रीगुरुभ्यो यज्ञफले पृष्टे सति गुरुभिर्धैर्यमवलम्ब्य तस्याग्रे यज्ञो हिंसारूपो हिंसायाः फलं च नरक इति सत्यमेव वचः प्रोक्तं, न पुनरन्यथा. ततः कोऽत्र प्रत्यय इति तेन पृष्टे सति गुरुणोक्तं, तस्मिन्नेव दिने तव मुखेऽकस्माद्विष्टा पतिष्यति. ततोऽतिक्रुद्धेन दत्तेनोक्तं त्वं कथं मरिष्यसि ? गुरुणोक्तमहं समाधिना मर्त्तास्मि, मृतोऽपि च स्वर्गं गतास्मि । तदा दत्तः साहंकृतिः सन् तत उत्थाय सूरिं च स्व-

रागद्वेषभयादिपरिहारेण यथास्थितकथनं ३, समासः-स्तोकाक्षरैः कर्मनाशकस्तत्त्वबोधः ४, संक्षेपः-स्तोकाक्षरा महार्था द्वादशांगी ५, अनवद्यं-निःपापाचरणं ६, परिज्ञा-पापत्यागेन समंताद्वस्तुतत्त्वज्ञानं ७, प्रत्याख्यानं-परिहरणीयवस्तुत्यागः ८ इत्यष्टौ नामानि. अथैषां क्रमेणाष्टौ दृष्टांता दर्श्यंते, तत्रादौ दमदन्तदृष्टांतो यथा—

हस्तिशीर्षनगरे दमदंतो राजा, तस्य चैकदा हस्तिनागपुरस्वामिभिः पांडवैः कौरवैश्च सह सीमानिमित्तं महान् विवादः संजातः, तदनंतरं कियद्भिर्दिनैर्दमदंते जरासंधनृपसेवार्थं गते गति पांडवकौरवैश्च तद्देशो भग्नस्तां वार्त्तां श्रुत्वा क्रुद्धो दमदंतः सद्यो बहुसैन्यमादाय हस्तिनागपुरोपरि समागतस्तत्र चोभयेषां परस्परं महद्युद्धं संजातं, परं दैववशात्पांडवाः कौरवाश्च भग्नाः; दमदंतस्तु विजयं प्राप्य स्वस्थानमायातः, तत एकदा स नृपः संध्यायां पंचवर्णवार्दलस्वरूपं दृष्ट्वा संप्राप्तवैराग्यः संसारमपि तादृशमेवासारं विभावयन् प्रत्येकबुद्धतया प्रव्रजितः, ततः प्रतिग्रामं विहरन् अन्यदा हस्तिनागपुरे प्रतोल्या बहिर्देशे कायोत्सर्गेण स तस्थौ, तदा राजवाटिकां गच्छद्भिः पांडवैर्मार्गे तं मुनिं विलोक्य लोकमुखाच्च तं दमदंतराजर्षिं विज्ञाय सद्योऽश्वेभ्य उत्तीर्य विधिनाभिवन्द्य तस्य द्विविधमपि बलं प्रशंस्य अग्रे चलितं, ततः कौरवाः समेतास्तेषु वृद्धेन दुर्योधनेन तथैव तं दमदंतं विज्ञाय बहुभिर्दुर्वाक्यैस्तिरस्कृत्य साधुसमीपं च बीजपूरफलं प्रक्षिप्य अग्रे चलितं, ततो 'यथा राजा तथा प्रजेति' न्यायात्तदनुगच्छद्भिः सर्वैरपि सैनिकैः काष्ठपाषाणादेर्निःक्षेपात् समन्तादुच्चैस्तरं चत्वरमिव विदधे. अथ पश्चाद्वलमानाः पांडवा मुनिस्थाने तन्महच्चत्वरं दृष्ट्वा लोकेभ्यः प्रश्नपूर्वकं तत्सर्वं कौरवकृतं दुश्चेष्टितं ज्ञात्वा सद्यस्तत्रागत्य पाषाणादिदूरीकरणपूर्वकं तं दमदंतं प्रणम्य स्वस्थानं गताः, एवं पांडवैः सन्मानितः कौरवैश्चापमानितोऽपि स मुनिः उभयत्र समभावं बभार, मनागपि रागद्वेषौ न कृतवान् । इति समभावे दमदंतदृष्टांतः ॥ १ ॥ अथ दयापूर्वकवृत्तौ मेतार्यदृष्टांतो यथा—

माराध्यं, एतावता सम्यग्दृष्टिभिर्मिथ्यात्वपरिहारेण देवपूजन-गुरुसेवन-जैनागमश्रवण-धर्मक्रियानुमोदन-तीर्थयात्राकरण-जिनकल्याणकभूमिस्पर्शनादिभिः सततं सम्यक्त्वं निर्मलं कार्यमिति, उक्तं च—

जम्मं दिक्खा नाणं, तित्थयराणं महाणुभावाणं ॥ जत्थ य कयनिव्वाणं अगाढं दंसणं होइ ॥१॥इति॥ प्रसंगत उक्तं,

अथ प्रथमं सामायिकस्वरूपमुच्यते, समस्य-रागद्वेषरहितस्य मतो-जीवस्य आयो-ज्ञानादीनां लाभ प्रशमसुखरूपः समायः, स एव-सामायिकं, मनोवाक्कायचेष्टापरिहारेण मुहुर्त्तं यावत् सर्ववस्तुषु समपरिणाम इत्यर्थः, उक्तं च, निंदपसंसासु समो, समो य माणावमाणकारीसु । समसयणपरियणमणो सामाइयं संगओ जीवो ॥ १ ॥ जो समो सव्वभूएसु, तसेसु थावरेसु य ॥ तस्स सामाइयं होइ, इमं केवलिभासियं ॥ २ ॥ तथा सामायिकस्थितः श्रावको गृहस्थोऽपि यतितुल्यो भवति, यतः—सामाइयंमि उ कए, समणो इव सावओ हवइ जम्हा ॥ एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥ १ ॥ अत एव सामायिकस्थस्य देवस्नात्रपूजनादावप्यधिकारो नास्ति; सामायिकरूपे भावस्तवे प्राप्ते सति द्रव्यस्तवकरणानौचित्यात् । सामायिकस्य दुर्लभता कथितास्ति, यथा—सामाइयसामग्गिं, देवावि चिंतंति हिययमज्झंमि ॥ जइ हुइ मुहुत्तमेगं, ता अह्म देवत्तणं सहलं ॥ १ ॥ इति ॥ इह सामायिककर्त्ता श्रद्धालुर्द्विविधः ऋद्धिमान् अनृद्धिकश्च; तत्र य ऋद्धिरहितः स साधुसमीपे जिनगृहे पौषधशालायां स्वगृहे वा निर्विघ्ने स्थाने सामायिकं कुरुते, यस्तु राजादिर्महर्द्धिकस्तस्य सामायिकविधानं महताडंबरेणोपाश्रयमागत्योचितं भवति, यत ईदृशा अपि सामायिकं कुर्वंतीति लोके जिनशासनस्य महाप्रभावना संजायते इति.

अथ सामायिकस्याष्टौ नामानि उच्यंते—सामाइयं १ समइयं २ सम्मवाओ ३ समास ४ संखेवो ५ । अणवज्जं च ६ परिण्णा ७, पच्चक्खाणे य ८ ते अट्ठ ॥ १ ॥ व्याख्या—सामायिक-समभावः १, समयिकं-सम्यग्दयापूर्वकं सर्वजीवेषु प्रवर्त्तनं २, सम्यग् वा

तरसं चिर्भटिकादिफलं जीवाश्रयत्वाद्वर्जनीयं, पुनः सच्छिद्रमपरिपक्वं फलमपि अंतर्जीवसद्भावात्त्याज्यं, एवमन्यदपि अज्ञातफलादियद्-भक्ष्यवस्तु तत्सर्वं परिवर्ज्यं, उक्तं च—

अज्ञातकं फलमशोधितपत्रशाकं, पूगीफलानि सकलानि च हट्टचूर्णं ॥
मालिन्यसर्पिरपरीक्षकमानुषाणा-मेते भवंति नितरां किल मांसदोषाः ॥ १ ॥

पुनर्यद् द्रव्यं ग्रीष्मादिकाले शीघ्रविनाशि भवति तत्तत्सोपयोगेन सता निरवद्यमेव सेव्यमिति ॥

अथ विशेषतोऽस्मिन्पर्वणि कृत्यं दर्शयति—

सामायिकावश्यक-पौषधानि, देवार्चन-स्नात्र-विलेपनानि। ब्रह्मक्रिया-दान-तपोमुखानि, भव्याश्चतुर्मासिकमंडनानि॥१॥

व्याख्या--भो भव्या ! एतानि सामायिकादिधर्मकृत्यानि चातुर्मासिकस्य मंडनानि-अलंकारभूतानि विद्यंते, ततो भवद्भिस्तानि सेव्यानीति ज्ञेयं, यद्यपि चातुर्मासिकत्रयमस्ति तथापि यदुद्दिश्य व्याख्यानं विधीयते तन्नाम ग्राह्यं, तत्र न कोऽपि दोषः, अत्र हि कश्चित्पुमान् सामायिकं करोति, कश्चित्प्रतिक्रमणं, कश्चित्पौषधमित्यादि योज्यं, यथाशक्ति एतानि कर्त्तव्यानीति न कश्चिद्विरोध इति, इह प्रथमं तिथयो विलोक्याः, ते च त्रिधा तथाहि-"चाउद्दसठ-मुद्दिठ्ठपुण्णमासिणीत्ति" सिद्धांते उक्तत्वात् , मासमध्ये द्वे चतुर्दश्यौ, द्वे अष्टम्यौ, आमावास्या, पूर्णिमा च, षट् चारित्रतिथयः, आसु चारित्रमाराध्यं. शीलांगाचार्यादि-गीतार्थैरादृतत्वात् , उद्दिष्टशब्देन जिनकल्याणकतिथयः पर्युषणातिथिरपि च ग्राह्या, द्वितीयापंचम्येकादश्यो ज्ञानतिथयः, एषु ज्ञानमाराध्यं, अन्ये दर्शनतिथयस्तेषु दर्शन-

# अथ श्रीचातुर्मासिकव्याख्यानं प्रारभ्यते ॥ १ ॥

स्मारं स्मारं स्फुरज्ज्ञानं, धाम जैनं जगन्मतम् ॥ कारं कारं क्रमांभोजे, गौरवे प्रणतिं पुनः ॥ १ ॥
निषद्धां प्राक्तनप्राज्ञैर्वीक्ष्य व्याख्यानपद्धतिम् ॥ लिख्यते लेशतो व्याख्या, चातुर्मासिकपर्वणः ॥ २ ॥ युग्मम् ॥

इहाषाढ २ कार्तिक २ फाल्गुन ३ चातुर्मासिकानामन्यतमे चातुर्मासिकपर्वणि समागते सति अन्योऽन्यसापेक्षव्यवहारनिश्चयाभ्यां युक्तं श्रीजिनशासनं विज्ञायैकांतवादनिराकरणेन आवश्यकग्रंथोक्त-समाहिताक्षर- शुद्धटंकरूप्यलक्षण चतुर्थ-भंगतुल्यं द्रव्यभावलिंगं संयुक्तमिच्छद्भिः स्याद्वादरुचिभिर्धर्मार्थिभिः प्राणिभिः सम्यग्धर्मकृत्यं कर्त्तव्यम् । अत्र हि चत्वारो भंगाः प्रोक्ताः संति, तथाहि—अशुद्धं रूप्यमशुद्धमुद्रं १, अशुद्धं रूप्यं शुद्धमुद्रं २, शुद्धं रूप्यमशुद्धं मुद्रं ३, शुद्धं रूप्यं शुद्ध मुद्रं ४. तत्र प्रथमे भंगे चरकपरिव्राजकादयः १, द्वितीये पार्श्वस्थादयः २, तृतीये प्रत्येकबुद्धा अंतर्मुहूर्त्तकालमगृहीतद्रव्यलिंगाः ३, चतुर्थे साधवो द्रव्यतो भावतश्च शुद्धिभाजः ४. एतेषु चतुर्थभंग एव शुद्धत्वादुपादेय इति । अथ श्राद्धानां प्रथमतः सामान्येन किंचिन्नित्यकर्त्तव्यमुच्यते । एतद्दुरंतानंतभवभ्रमण भीरुभिर्जैनमार्गानुसारिभिः श्रद्धालुभिः सर्वदा बहुसावद्यव्यापाराः वर्जनीयाः, विशेषतः फाल्गुनादिमासेषु तिलादिधान्यं न रक्षणीयं बहुत्रसजीवोत्पत्तिविनाशसंभवात् , तथा संधानमात्रफलादीनां यदि संसक्तं भवेत्तदा त्याज्यं, जंतुभिमिश्रं फलं मधुकबिल्वादि, पुष्पमरणिशिग्रूमधुकादि त्याज्यं, वर्षाकाले तंदुलीयादिपत्रशाकं न भक्षणीयं, बहुसूक्ष्मत्रसजीवमिश्रत्वादिति, योगशास्त्रे हेमाचार्यैर्गुर्जरादौ महाजनप्रसिद्धैरुक्तमस्ति, फाल्गुनपूर्णिमात आरभ्य कार्तिकपूर्णिमां यावत् प्रायेण पत्रशाकं न भक्ष्यमिति । तथातिपक्वं श्लथीभूतं चलि-

रिसहेस समं पत्तं, निरवज्जं इक्खुरससमं दाणं ॥ सेयांससमो भावो, हविज्ज जई मग्गिय हुज्जा ॥४॥ इयं गाथा स्पष्टार्था।

ननु त्रैलोक्यपूज्यस्यापि भगवतः कथमेतावान्—अन्तरायोऽजनिष्ट ? तत्रोच्यते—प्राक्कृतकर्मोदयाद्, तथाहि—कस्मिंश्चित् प्राग्भवे ऋषभस्वामिजीवेन पथि व्रजता धान्यखले धान्यं भक्षयतो बलीवर्दान् तोदनेन कर्षुकैस्ताड्यमानान् विलोक्य चिन्तितमेते मूढाः वृषभमुखेषु शिक्यबन्धनं न जानते, तस्मिन् क्षणे स्वयं तत्र स्थित्वा स्वहस्तेन वृषभमुखेषु तद्बन्धनोपदेशश्चक्रे, तदानीं च बलीवर्दैः निःश्वासानां षष्ट्यधिकत्रिशती मुमुचे, तस्मिन् कर्मणि उदिते सति भगवानत्र भवे वर्षमेकं यावद् आहारविघ्नं लेभे, तस्मिन् कर्मणि क्षयोपशमं च प्रापिते श्रेयांसदत्तमाहारं लब्धवान्, श्रेयांसश्च तद्दानफलेन मुक्तिसुखभाग् बभूव, तद्दिनादेव साधुभ्यः प्रासुकाहारदानविधिः सर्वैरपि लोकैरज्ञायि । ततश्च भगवान् ऋषभदेवो वर्षाणामेकसहस्रं यावत् छाद्मस्थ्येन विहृत्य तपस्तप्त्वा घातिकर्मचतुष्टयं क्षपयित्वा केवलज्ञानं प्राप्य वर्षसहस्रोनपूर्वलक्षं यावदार्यक्षेत्रेषु विहृत्य बहुभव्यान् प्रतिबोध्य अष्टापदपर्वतोपरिदशसहस्रमुनिसहितेन मोक्षं जगाम. इति श्रुत्वा भो भव्याः ! रत्नत्रयात्मके मोक्षमार्गे बह्वादरेण यतध्वम् इति श्रेयः ॥

अक्षयादितृतीयाया, व्याख्यानं वीक्ष्य प्राक्तनम् । अलेखि सुगमं कृत्वा, क्षमाकल्याणपाठकैः ॥ १ ॥

॥ इति श्री अक्षयतृतीयाव्याख्यानं सम्पूर्णम् ॥ ८ ॥



एतच्च भगवतः पारणकं श्रेयांसगृहे वैशाखशुक्लतृतीयायामभूत्, तद्दानस्य अक्षयसुखजनकत्वेन तद्दिनस्याक्षयतृतीया, इति प्रसिद्धिर्बभूव, शेषाणामजितादित्रयोविंशतितीर्थकराणाममृतरससदृशोपमममृतरसतुल्यं परमान्नं घृतखण्डमिश्रितक्षैरेयीरूपं भोजनकं पारणके आसीद् इति प्रथमगाथार्थः । अथ पंचदिव्यानि एव आह—

घुट्ठं च अहो दाणं, दिव्वाणि य आहयाणि तूराणि । देवा वि सन्निवइया, वसुहारा चेव वुट्ठा य ॥ २ ॥

गाथार्थः—यदा श्रेयांसगृहे भगवता पारणकं कृतं तदा देवैः, 'अहोदानमहोदानमिति' घुष्टम्—उद्घोषणा कृता, तथा देववृन्देन दिव्यानि तूर्याणि वादित्राणि आहतानि—वादितानि, आकाशे बधिरितदिक्चक्रा देवदुन्दुभयो नेदुरित्यर्थः, तथा देवाः—तिर्यग्जृम्भकादयोऽपि सन्निपतिताः—आगताः, तथा वसुधारा च वृष्टा—सार्धद्वादशकोटिमितसौवर्णिकादिवृष्टिरभूदित्यर्थः । उपलक्षणात् सुगन्धिजलवृष्टिः सुगन्धपुष्पवृष्टिश्चाभूदिति ज्ञेयम्, एतदेव स्पष्टयति—

भवणं धणेण भुवणं, जसेण भयवं रसेण पडिहत्थो । अप्पा निरुवमसुखं, सुपत्तदाणं महग्घवियम् ॥३॥ इति ।

गाथार्थः—दानावसरे भवनं—श्रेयांसगृहं धनेन—स्वर्णरत्नादिचयेन भृतमिति शेषः, भुवनं—स्वर्ग-मृत्यु-पाताल-लोकरूपं यशसा भृतम्—अहो ! श्रेयांसकुमारेण त्रिजगत्पतये केनाऽप्यदत्तपूर्वं दानं दत्तमिति त्रिलोकिव्यापिनी तस्य कीर्तिरभूदिति भावः, भगवान् ऋषभस्वामी इक्षुरसेन प्रतिहस्तः-लाभमागभूद् संयमलाभस्य इक्षुरसाहारपूर्वकत्वाद्; आत्मा—श्रेयांसजीवो निरुपमं सुखं प्राप्तवान्, अतः सुपात्रदानं महाप्रशस्यम् ।

कानर्थमूलकारणं परमाणुमात्रमपि परिग्रहं न वांछति; किं पुनः मणिस्वर्णकन्याश्वगजमौक्तिकादिकमिति सम्यग् विचार्य गवाक्षादुत्तीर्य
यत्र श्रीऋषभदेवस्तत्र समागत्य हर्षभरेण पुलकितशरीरो भगवन्तं त्रिःप्रदक्षिणीकृत्य वन्दयित्वा उवाच-हे भगवन् ! प्रसन्नो भव,
अष्टादशकोटाकोटिसागरोपमानि यावद् विच्छिन्नस्य प्रासुकाहारदानविधेः सम्यक् प्रदर्शनेन भव्यजन्तून् निस्तारय, गृहाण च मद्गृहे
प्राभृतार्थं समागतान् शतसंख्यान् इक्षुघटान् इति। अथ स्वामिनाऽपि चतुर्ज्ञानयुक्तेन द्रव्यक्षेत्रादिसामग्रीं सम्यग् ज्ञात्वा इक्षुरसग्रहणाय
करद्वयं प्रसारितम्, तदा श्रेयांसो रत्नपात्रतुल्याय श्रीमद्भगवते त्रिकरणशुद्धया इक्षुरसरूपं निर्दुष्टमाहारं ददानो हर्षभरेण स्वचित्ते शरीरे
च न ममौ*, आत्मानं धन्यं मन्यमानः त्रिजगत्पूज्येन भगवता आहारग्रहणेनानुगृहीतोऽहमिति चिन्तयन् यावत् स्वहस्तेन इक्षुरसभृतै-
र्घटैर्भगवन्तं प्रीणयन् तिष्ठति, तावद् देवैर्हर्षभरेणाकाशे पंच दिव्यानि प्रकटीकृतानि, एतदेवाह श्रुतकेवली भगवान् भद्रबाहुः-'उस-
भस्स उ पारणए' इत्यादि, गाथा पूर्वं दर्शिता। अथ गाथार्थः—ऋषभस्य लोकनाथस्य प्रथमतीर्थंकरस्य प्रथमपारणके इक्षुरस आसीद्,

---

*आनंदाश्रूणि रोमांचो, बहुमानं प्रियंवचः। किंचानुमोदना पात्र-दानभूषणपंचकम् ॥ १ ॥
अनादरो विलंबश्च वैमुख्यमप्रियंवचः। पश्चात्तापश्च सद्दाने, स्मृतं दूषणपंचकम् ॥ २ ॥
दानं ख्यातिकरं सदा हितकरं, संसारसौख्यंकरं। नृणां प्रीतिकरं गुणाकरकरं, लक्ष्मीकरं किंकरं।
स्वर्गावासकरं गतिक्षयकरं, निर्वाणसंपत्करं। वर्णायुर्बलबुद्धिवर्धनकरं, दानं प्रदेयं बुधैः ॥ ३ ॥

इहादौ श्रीऋषभस्वामिसम्बन्ध उच्यते, श्रीऋषभस्वामी सर्वार्थसिद्धविमानात् च्युत्वा आषाढकृष्णचतुर्थ्यां श्रीमरुदेवाकुक्षावुत्पन्नः, नवमासान् चतुर्दिनाधिकान् गर्भे स्थित्वा चैत्रकृष्णाष्टम्यामर्धरात्रे जन्म संप्राप्तः, विंशतिपूर्वलक्षाणि कुमारपदं भुक्त्वा त्रिषष्टिपूर्ववर्षं राज्यं प्रपाल्य चैत्रकृष्णाष्टम्यां दीक्षां जग्राह, तदा हस्तिनागपुरे श्रीबाहुबलिपुत्रस्य श्रीसोमयशोनृपस्य पुत्रः श्रेयांस आसीद् । अथ भगवान् प्राक्तनकर्मोदयाद् वर्षं यावद् आहारालाभाद् निराहारो विहरन् हस्तिनागपुरे समाययौ, तस्यां रात्रौ श्रेयांसादिभिः त्रिभिस्त्रयः स्वप्ना लब्धाः, तथाहि—श्यामीभूतं मेरुममृतघटैः प्रक्षाल्याहमुज्ज्वलमकार्षमिति श्रेयांसो लब्धवान् १, तथा सूर्यबिम्बात् च्युतं किरणसहस्रं श्रेयांसेन सूर्यबिम्बे स्थापितमिति स्वप्नं सुबुद्धिनामा श्रेष्ठी लब्धवान् २, तथा एकः शूरो बहुभिर्वैरिभिः रुद्धः, श्रेयांससाहाय्याद् जयं प्राप्तवान्, इति स्वप्नं च सोमयशाः राजा लब्धवान् ३, प्रातः सभायां सर्वेऽपि मिलिताः स्वं स्वं स्वप्नमुक्तवन्तश्च, ततः स्वप्नविचारं कृत्वा नृपादिभिः सर्वैरपि उक्तम्—अद्य श्रेयांसस्य कश्चिदपूर्वो महान् लाभो भविष्यतीति । तदा भगवान् भिक्षार्थं इतस्ततो भ्रमन् श्रेयांसगृहसमीपमाययौ, श्रेयांसः स्वामिनं दृष्ट्वा हर्षं प्राप्तः, लोकास्तु पूर्वं साधुमुद्राया अदर्शनेन अन्नदानविधेरज्ञानाद् भगवन्तं मणिस्वर्णगजाश्वादिभिर्निमन्त्रयामासुः, भगवांस्तु तैर्दीयमानं वस्तु किमपि न गृह्णातिस्म, तदा भगवानस्माकमुपरि अतीव रुष्टोऽस्ति, येनास्माकं किमपि वस्तु न गृह्णाति इति ते लोकाः कोलाहलं चक्रुः । एवमेकः संवत्सरो व्यतिक्रान्तः, तस्मिन्नवसरे श्रेयांसो भगवन्मुद्रां विलोक्य 'अहो दृष्टं मया ईदृक्रूपं कदाचिद्' इति ऊहापोहं कुर्वाणो जातिस्मरणं ज्ञानं प्राप्य भगवता सह स्वस्याष्टभवसंबन्धं च ज्ञात्वा प्राक् स्वयमनुभूतं साधुभावं स्मृत्वा चिन्तयतिस्म—अहो ! अज्ञानविजृम्भितमेतत् संसारिजीवानां, येनैते एव कुर्वन्ति—यतः त्रैलोक्यराज्यं तृणाय मन्यमानो भगवान् विषयतृष्णां त्यक्त्वा सांसारिकसुखं च किंपाकफलतुल्यं गणयन् साधुत्वमंगीकृत्य मोक्षसुखार्थं यतमानोऽने–

चले बालिनामा महामुनिर्मोक्षं प्राप्तः । श्रीकृष्णपुत्रौ शाम्ब-प्रद्युम्ननामानौ मुनी सिद्धिं गतौ । दशरथपुत्रो भरतोऽपि तत्रैव शिवं प्राप्तः । शुकनामा मुनिः, शैलकाचार्य-पन्थको च मुक्तिं प्राप्तौ । राम-भरत-द्राविडनरपतिनारदाद्या मुनयोऽप्यत्रैव मुक्तिं प्राप्ताः, पाण्डवप्रमुखाः सत्पुरुषा अपि श्रीसिद्धाचले मुक्तिं प्रापुः । चैत्रीपूर्णिमादिने उपवासं कृत्वा श्रीसिद्धाचलतीर्थे गत्वा पूजाध्यानदानादीन् ये प्राणिनः कुर्वन्ति ते नरकतिर्यग्गतिविच्छेदं कुर्वन्ति, इत्यादि पर्वाराधनस्वरूपं प्रोक्तम् । तद्दिने श्रीगुरुपार्श्वाद् मन्त्राक्षरपूतं स्नात्रजलं गृहीत्वा गृहादौ सेचनीयम्, तेन मरकोपद्रवादि भयं याति, सदाऽऽनन्दश्च भवति, ऋद्धिं वृद्धिं सुखं च जनः प्राप्नोति । अस्मिन् पर्वणि समागते केचिद् दानं ददति, केऽपि शीलं पालयन्ति, केचिद् भावं भावयन्ति, वक्तॄणां श्रोतॄणां च सदाश्रेयो भवतु ।

नन्दे-रसे-सिद्धिचन्द्रे ( १८६९, ) प्रमिते वत्सरे वरे । इयं व्याख्या गुणग्राह्या, चैत्रशुक्लाष्टमीतिथौ ॥ १ ॥
दुर्गे जेसलमेरौ च, कृतावासेन धीमता । गणिनाऽमरचन्द्रेण, वाचकेन सुसाधुना ॥ २ ॥
तच्छिष्यजीवराजेन, कृता व्याख्या मनोरमा । चैत्रशुक्लपूर्णिमायाः, कीर्तिरत्नसहायतः ॥ ३ ॥

इति चैत्रशुक्लपूर्णिमाव्याख्यानं समाप्तम् ॥ ७ ॥

## अथ अक्षयतृतीयाव्याख्यानम् ॥ ८ ॥

प्रणिपत्य प्रभुं पार्श्वं, श्रीचिन्तामणिसंज्ञकम् । अक्षयादितृतीयाया, व्याख्यानं लिख्यते मया ॥ १ ॥
उसभस्सयपारणए, इक्खुरसो आसि लोगनाहस्स । सेसाणं परमन्नं, अमियरससरिसोवमं आसी ॥ २ ॥

शुद्धभावेनोपवासं कृत्वा श्रीजिनालये स्नात्रपूजामहोत्सवादि करणीयम्, सर्वजिनानां पूजा विधेया, सद्गुरुमुखाच्च तस्मिन् दिने चैत्री व्याख्यानश्रवणं कार्यं, दीनहीनजनेभ्यो दानं देयं; शीलं च पालनीयं; जीवरक्षा विधेया, विधिपूर्वकं विमलगिरिपट्टं उच्चैः स्थापयित्वा मुक्ताफलैस्तन्दुलादिभिश्च महतीं पूजां विधाय गुरुसमक्षं पंचशक्रस्तवादिभिर्देवान् वन्दित्वा शुभध्यानेन दिनरात्रीकृत्यं विधाय पारणवेलायां मुनिभ्यो दानं दत्त्वा पारणकं विधेयम्, पंचदशवर्षाणि यावदेवं प्रतिवर्षं व्रतमाराधनीयम्, पश्चादुद्यापनं यथाशक्ति समाचरणीयम्, तेन निर्धनो धनी भवेद्, पुत्र-कलत्र-सौभाग्य-कीर्त्ति-देवसुखं शिवपदप्राप्तिश्च भवेत्, तथा स्त्रीणां पतिवियोगो न भवति, रोग-शोक-वैधव्य-दौर्भाग्य-मृतवत्सात्व पारवश्यादि सर्वं कर्मफलं नश्यति। अस्या आराधने स्त्री पतिवल्लभा भवति, विषकन्या भूत-प्रेत-शाकिन्यादिग्रहादिकष्टं विलयं याति, बहुनां किं भावेनाऽऽराधिता चैत्रीपूर्णिमा मुक्तिं ददाति, इति गणधरमुखात् श्रुत्वा सा बाला हर्षं प्राप, उक्तवती चाहं एतद् व्रतं करिष्यामि। तदा जनन्या सह सा बाला गुरुं नत्वा गृहे गत्वाऽवसरे चैत्रीपूर्णिमाऽऽराधनं कृतवती, तदा सा सुखिता जाता, विषयविकारस्यापि शान्तिः संजाता, परमपदे मनोऽभूद्, प्रति वर्षं व्रतं कुर्वत्या पूर्णे व्रते शुभभावेनोद्यापनं कृतम्, पुण्डरीकगणधरध्यानेन श्रीसिद्धाचलयात्राकरणेन श्रीऋषभदेवस्य जापेन प्रान्तेऽनशनं विधाय कालं कृत्वा सौधर्मदेवलोके देवत्वेनोत्पन्नाः, तत्र देवसंबन्धिनो भोगान् भुक्त्वा महाविदेहे क्षेत्रे सुकच्छविजये वसन्तपुरे नरचन्द्रस्य राज्ञो राज्ये ताराचन्द्र-श्रेष्ठिनो गृहे तारानाम्न्या भार्यायाः कुक्षौ पुत्रत्वेन स जीव उत्पन्नः, नाम्ना पूर्णचन्द्रो, द्वासप्ततिकलाकुशलो जातः, पंचदशकोटिद्रव्यं, पंचदश भार्याः, पंचदश पुत्रा, इत्यादि सर्वं सुखं प्राप्तवान्, तद्भवे पुनः स चैत्रशुक्लपूर्णिमाऽऽराधनं कृत्वा, प्रान्ते श्रीजयसमुद्रगुरुपार्श्वे दीक्षां गृहीत्वा, तत्र च शुभध्यानेन केवलज्ञानं प्राप्य मुक्तिं गतः। एवं चैत्र्याराधने बहवो जनाः परमानन्दं प्राप्ताः, पुनरपि विमला-

भर्तुः समीपे समागता, तदा भर्त्रा प्रोक्तम्–अद्य वारकं तव नास्ति कथं त्वया मर्यादा लंघिता ?, सा कामविह्वला भर्तारं प्रत्युवाच–केयं मर्यादा ?, तदा भर्त्रा प्रोक्तम्–कुलोद्भवानां मर्यादोल्लंघनं न युक्तं; समुद्रोऽपि मर्यादां न मुंचति; सत्पुरुषः स्वमर्यादया न चलति । ततः सा संतोषरहिता कलुषवदना मित्रश्रियं प्रति द्वेषमुद्वहन्ती स्वगृहे समागता, सपत्न्या सह पतिसंबन्धवियोगमिच्छन्ती कनकश्रीः (चन्द्रश्रीः) विषयप्रमादव्याकुला सती मन्त्रतन्त्रयन्त्रोपायकार्मणादिसामग्रीं विधाय तस्याः शरीरे भूत–प्रेत–शाकिनी–डाकिनीप्रवेशं कारितवती, साऽपि कर्मयोगात् पारवश्यं प्राप्ता । अथ कनकश्रीः सपत्नीशरीरं कुचेष्टितं ज्ञात्वा जहर्ष, पुनः स्ववशीकरणबलेन भर्तारं स्ववशी चक्रे, भर्ताऽपि लघुपत्नीं दृष्ट्वा पूर्वकर्मफलं विचिन्त्य तत्याज । कनकश्रीर्हर्षिता, धनावहश्रेष्ठी कनकश्रिया सह विषयसुखं भुंजानः सन् कालं निनाय । कियति काले गते सति सा कनकश्रीर्मृता त्वत्पुत्री जाता, सपत्नीपतिवियोगकरणेन विषकन्या कर्मविपाकं पतिविरह–पीडापीडितं भोगसुखरहितं कर्मोपार्जितं, तेन कारणेन तव पुत्री महादुःखेन दुःखिताऽस्ति, कर्मणां विचित्रा गतिरस्ति । तदा तज्जननी प्राह–हे गुरो ! इयं पतिविरहेण पीडिता वृक्षशाखायां पाशं बद्ध्वा मरणाय समुद्यता, तावन् मया एतत्स्वरूपं दृष्ट्वा पाशं छित्त्वा भवत्समीपे समानीता भवद्भिर्दीक्षा प्रदीयताम्, तदा गणधरः प्राह–हे भद्रे ! एषा तव पुत्री दीक्षायोग्या नास्ति, नितरां चंचलस्वभावा बाला वर्तते, इति गुरुवचनं श्रुत्वा तन्माता प्राह–अस्या योग्यं धर्मकृत्यं कथ्यतां येन दुष्टकर्मविपाको दूरीभवेद् । गुरुरपि ज्ञानबलेन तस्या योग्यं व्रतं कथयतिस्म–हे भद्रे ! चैत्रशुक्लपूर्णिमाऽऽराधनं कुरु, तस्या आराधनेऽस्याः पूर्वकर्मविनाशो भविष्यति, इति श्रुत्वा तस्याः कन्याया अपि गुरुज्ञानयोगाद् रुचिः समुत्पन्ना, तदा सा सावधानीभूय गुरुवाणीमशृणोद्, तदा गणधरेणोक्तम्–श्रीसिद्धाचलतीर्थं शाश्वतमस्ति, तत्रानन्तानन्तकालेनानन्ता जीवाः सिद्धाः, सकलतीर्थेषु मुख्यम्, तस्य चैकविंशतिर्नामानि सन्ति, तैर्ध्यानं विधेयम्, चैत्रीपूर्णिमादिने

उत्तरश्रेण्यां च गगनवल्लभप्रमुखाणि षष्ठिर्नगराणि वासयित्वा प्रदत्तानि; तत्र विद्याबलेन लोकान् वासयित्वा यावन्ति नगराणि तावंतो देशान् संस्थाप्य तौ पृथक् पृथग् नमिविनमी तत्र राज्यं पालयामासतुः। तौ चिरकालं राज्यसुखमनुभूय प्रान्ते सर्वसंगं परित्यज्य दीक्षां गृहीत्वा श्रीविमलाचले समागत्य श्रीदेवाधिदेवं युगादिदेवं भावेनाऽभिनम्य तत्रैव तीर्थे मुक्तिं प्रापतुः, इति नमिविनमिसम्बन्धः।

अथ श्रीऋषभदेवस्य प्रथमगणधरः पुण्डरीकनामाऽत्रैव मुक्तिं प्राप्तस्तत्सम्बन्धश्चायम्।

श्रीआदिनाथपुत्रो भरतः, तस्य पुत्रः पुण्डरीकः, श्रीप्रभोः पार्श्वे धर्मं श्रुत्वा प्रतिबुद्धः सन् दीक्षां गृहीत्वा प्रथमगणधरो जातः, पञ्चकोटिसाधुपरिवृतः गणधरो ग्रामानुग्रामं विहरन् सौराष्ट्रदेशे समागतः तदागमनं श्रुत्वाऽनेकभूपमण्डलीकसामन्तश्रेष्ठि-नरनारीगणा वन्दनार्थमाययुः, गुरुरपि यथायोग्यं धर्मदेशनां ददाति स्म। तस्मिन्नवसरे एका सबाष्पजला सशोका चिन्तासागरसंप्रविष्टा दीना महिला समागता, तया सार्धं विधवा दौर्भाग्ययुक्ता एका कन्याऽपि समागता। श्रीपुण्डरीकगणधरं नमस्कृत्यावसरं प्राप्य कन्यया सह सा स्त्री इति पप्रच्छ-हे भगवन्! अनया कन्यया पूर्वभवे किं पापं कृतं, येन विवाहसमये करमोचनवेलायामेवास्याः पतिर्मरणं प्राप्तः? इति प्रश्ने कृते सति गणधरः प्राह-हे भद्रे! अशुभकर्मणोऽशुभमेव फलम्, तथाहि-जम्बूद्वीपे पूर्वमहाविदेहे मनोरमं विश्वविख्यातं कैलासपर्वताकारतुंगप्राकारवेष्टितं नानादेशोद्भवजनाकुलं विशालशालगृहैर्मण्डितं चन्द्रकान्तनामकं नगरं बभूव। तत्र श्रियो धाम सकलकलागुणगणग्रामो जगति प्रसिद्धः समरसिंहो नाम महीपतिरभूत्। तस्य शीलालंकारधारिणी धारिणीनाम्नी वल्लभा बभूव। तत्र नगरे महाधनाढ्यः परमश्राद्धो जिनभक्तिरतोऽनेकगुणसागरो धनावहनामा श्रेष्ठी बभूव। तस्य कर्मयोगाद् द्वे भार्ये बभूवतुः, एका कनकश्रीः द्वितीया मित्रश्रीस्ताभ्यां भार्याभ्यां सह स श्रेष्ठी सुखेन कालं गमयति स्म। अथैकदा मदनपरवशात् कनकश्रीर्मित्रश्रियो वारकं समुल्लंघ्य

## अथ चैत्रीपूर्णिमाव्याख्यानम् ॥ ७ ॥

तीर्थराजं नमस्कृत्य, श्रीसिद्धाचलसंज्ञकम् । चैत्रशुक्लपूर्णिमाया, व्याख्यानं क्रियते मया ॥ १ ॥

सिज्झो विज्झायर चक्की, नमिविनमिमुणी, पुण्डरीओ मुणिन्दो । बालीपज्जुम्नसंबो, भरहसुगमुणी, सेलगो पंथगो य ॥ रामो कोडीपंच, दविडनरवई, नारओ पण्डुपुत्ता ॥ मुत्ता एवं अणेगे, विमलगिरिमहं, तित्थमेयं नमामि ॥ १ ॥

व्याख्या—अहमेतत् तीर्थं नमामि यत्रानेक प्राणिनः सिद्धा बभूवुः, ते के ? तानाह—यत्र विमलाचले विद्याधरादिचक्रवर्तिनः सिद्धाः—मुक्तिं प्राप्ताः, पुनर्युगादिदेवस्य पौत्रकपुत्रौ नमिविनमिनामानौ मुक्तिं गतौ, तत्सम्बन्धोऽयम्-अयोध्यायां नगर्यां भगवान् ऋषभदेवः स्वज्येष्ठपुत्राय भरताय राज्यं दत्त्वाऽन्येषामपि यथायोग्यं देशं विभज्य स्वयं दीक्षां गृहीतवान्, तदा नमिविनमिनामानौ कस्मैचित् कार्याय कुत्रचित् प्रदेशे गतावभूताम्, भगवता तु राज्यविभागावसरे तौ विस्मृतौ, दीक्षाग्रहणानन्तरमयोध्यायां समागतौ भरतं पप्रच्छतुः—ऋषभदेवोऽस्माकं पिता क्वास्ति ?, भरतेनोक्तं—स्वामिना दीक्षा गृहीता, युवाभ्यां मम सेवा कर्तव्या, अहं युवाभ्यां देशग्रामं दास्यामि, तदा तौ भरतमपमान्य राज्यार्थं स्वामिसमीपे आगत्य विहारं कुर्वतो भगवतोऽग्रे कण्टकादिकं मार्गाद् निवारयन्तौ कायोत्सर्गे स्थितस्य भगवतो दंशमशकादीन् उड्डापयन्तौ प्रातर्वन्दनापूर्वकं 'स्वामिन् ! राज्यप्रदो भव' इत्युक्तवन्तौ नित्यं तिष्ठतः स्म । एकदा वन्दनार्थमागतेन धरणेन्द्रेण तयोरुपरि महतीं कृपां विधाय भगवद्रूपं कृत्वा ताभ्यामष्टचत्वारिंशत्सहस्रपठितसिद्धविद्याः प्रदत्ताः, षोडशविद्यादेव्याः समाराधनं च दत्तम्, वैताढ्यपर्वते दक्षिणश्रेण्यां रथनूपुरचक्रवालप्रमुखाणि पञ्चाशन्नगराणि,

तस्य दश उपवासाः प्रायश्चित्तम्, एककलशप्रमाणजलप्रक्षेपणे शतमुपवासानां प्रायश्चित्तम्, मूत्रप्रक्षेपणे पंचाशदुपवासाः, छगणप्रक्षेपणे पंचविंशतिरुपवासाः, एकगालिप्रदाने पंचदशोपवासाः, गीतगानेऽसभ्यगाने सार्धशतमुपवासाः, तत्संबन्धिवादित्रताडने सप्ततिरुपवासाः, एककरीषप्रक्षेपणे विंशतिरुपवासाः, छगणहारप्रक्षेपणे जन्मान्तरे शतं वाराः स्वस्य भस्मीभवनं भवति, श्रीफलप्रक्षेपणे सहस्रशो भस्मीभवनं भवति, एकपूगीफलप्रक्षेपे पंचाशद् वाराः, धूलिप्रक्षेपे पंचविंशतिर्वाराः, होलिकागर्तखनने शतं वाराः, होलिकायां काष्ठप्रक्षेपे सहस्रशो भस्मीभवनं भवति । होलिकादाहकरणे सहस्रशश्चाण्डालकुलोत्पत्तिः, होलिकाव्रतकारकस्य सहस्रशो म्लेच्छकुले उत्पत्तिर्भवति, एवं पापं विज्ञाय श्रेयोऽर्थिभिरात्महितेच्छुभिः द्रव्यहोलिकां त्यक्त्वा भावहोलिकां एवं आराध्यते, तेनैवात्र जगति इष्टार्थः प्राप्यते, इति ।

संवद्बाणकृशानुसिद्धिवसुधा, (१८३५) संख्ये नभस्येऽसिते ॥ पक्षे पावनपञ्चमीसुदिवसे पाटोधिसंज्ञे पुरे ।
श्रीमच्छ्रीजिनलाभसूरिगणभृत्तुल्यप्रतापोद्धुरे ॥ कान्ते श्रीजिनचन्द्रसूरिमुनिपे धर्मेशतां बिभ्रति ॥ १ ॥
श्रीमन्तो गुणशालिनः समभवन्, प्रीत्यादिमाः सागरा–स्तच्छिष्याऽमृतधर्मवाचकवराः, सन्ति स्वधर्मादराः ॥
तत्पादाम्बुजरेणुराप्तवचनस्मर्ता विपश्चित्क्षमा–कल्याणः कृतवानिदं सुविशदं व्याख्यानमाख्यानभृद् ॥ २ ॥

इति होलिकाव्याख्यानं समाप्तम् ॥ ६ ॥

सह पौषधप्रतिक्रमणसामायिकादिधर्मकृत्यं करोतिस्म, यथाशक्ति व्रतनियमपालनमपि करोति। अथ तस्या गृहसमीपे मिथ्यात्विलोका वसन्ति, तेषां मिथ्यात्विनां पुत्रीभिः सह सा तिष्ठति, उत्तिष्ठति, भ्रमति, ब्राह्मणाः कथां यत्र वाचयन्ति तत्र गत्वा कदापि कथां अपि शृणोतिस्म। यद्यपि सा जैनं धर्मं पालयति, तथापि संगतिवशाद् मिथ्यात्वस्याप्यादरं कृतवती, यथा—ज्येष्ठ–श्रावणमासयोः गणगोरपूजनात् सुन्दरवरप्राप्तिः धनधान्यप्राप्तिः एतादृश्यो वार्तास्तस्यै रोचन्ते। अथैकदा कुमारी मनसि व्यचिन्तयत्–यद् जैनधर्मे वीतरागो देवोऽस्ति, स च न कमपि सुन्दरमसुन्दरं करोति; सांख्यादिदर्शने तु ब्रह्मा जगतः कर्ताऽस्ति, विष्णुः रक्षणं करोति, शिवः संहारं करोति, ततो यदि ईश्वर—पार्वत्योः पूजा विधीयते तौ च तुष्टौ स्यातां तदा मनोवाञ्छितसांसारिकसुखस्य लाभो भवेत्। एवं विचार्य गणगोरप्रभृतिमिथ्यात्विपर्वसु आदरवती अभूत्। अथ तस्या मातापितरौ बहुनिषेधं कृतवन्तौ–यत् त्वं हे पुत्रि ! मिथ्यात्विपर्वण आराधनां मा कुरु, चिन्तामणिसमानं जैनं धर्मं प्रक्षीय काचशकलतुल्यमन्यं धर्मं मा गृहाण, अमृतस्वादं त्यक्त्वा विषस्वादं मा स्वीकुरु, विषपानेन दुःखिता भविष्यसि; इत्यादि बहु कथितं परन्तु मिथ्यात्विपरिचयवशाद् तया किंचिदपि न मेने, मिथ्यात्विपर्वाराधनां कर्तुं लग्ना, यथा यथा मिथ्यात्विजनाः प्रशंसन्ति तथा तथा साऽऽनन्दं दधार। अथ मातापितृभ्यां सा परिणायिता, अल्पकालेनैव मृत्वा मनोरथश्रेष्ठिनः पुत्री संजाता, कथावाचकव्यासस्य पुत्री यया सह बाल्यावस्थात एव होलिकादिमिथ्यात्विनां व्रतमकरोद्; सा मृत्वा ढुण्ढा संजाता, कथावाचकश्च कामपालः संजातः, पूर्वत्र संबन्धाद् ढुण्ढा कामपालस्य होलिकया सह समागमं कृतवती। इत्थं वृथैव संभूतं होलिका पर्वं विज्ञाय सुधीभिः भव्यात्मभिः शुभार्थं तन्न कर्तव्यम्, किन्तु तस्मिन् दिने प्रतिक्रमण–व्रत–जिनपूजादिधर्मकार्यं विधेयम्, होलिकासंबन्धि किमपि कार्यं न विधेयम्। यो हि होलिकाज्वालायां गुलालस्यैकां मुष्टिं प्रक्षिपति

गृहात्, ततः कुमारेण सा तत्राऽऽनीता, तां दृष्ट्वाऽसौ मम पुत्रीति श्रेष्ठिनोक्तम्, तदा कामपाल उवाच—हे सरलश्रेष्ठिन्! त्वं निजपुत्रीं वह्निदग्धां किं न जानासि ?, पूर्वं सूर्यदेवगृहे त्वत्पुत्र्यां मम भार्याभ्रमोऽभूद्; अधुना मद्भार्यायां तव निजपुत्रीभ्रमो जातः, द्वयोः रूपस्य परस्परसादृश्याद् अपरं कारणं नास्ति. तत एवं श्रुत्वा हर्षितः श्रेष्ठी तं जजल्प—इतः प्रभृति त्वद्भार्या मम पुत्रीस्थाने भवतु, इयमेव हि मत्पुत्रीति तद्दिनादारभ्य श्रेष्ठी प्रीत्या तस्यै वस्त्रालंकारभोजनादिकं सर्वमपि पूरयामास। अथ सा ढुण्ढा परिव्राजिका मृता पिशाची बभूव, पूर्वभवं स्मृत्वा तया ज्ञातम्-दुष्टा एतन्नगरवासिनो लोकाः, ये मह्यं भिक्षामपि न ददुः, ततः सा कोपचित्ता लोकचूरणाय तन्नगरोपरि महतीं शिलां चक्रे, पुनः प्रबलभाग्ययुक्तां होलिकां प्रतिहन्तुं न समर्था बभूव, ततो भीताः पौरलोकाः बलिं चक्रुः, तदा पिशाची कस्यचिच्छरीरेऽवतीर्य उवाच-भो लोकाः! पूर्वं कुलद्वयवत्सलाहं भण्डान् भरडांश्च त्यक्त्वाऽन्यान् सर्वलोकान् हनिष्यामि, ततो लोका मरणाद् भीताः सन्तोऽन्यं जीवितोपायमलभमानाः स्वयमपि भण्डभावमाश्रित्य स्वजीवितकृते मुक्तसज्जनमर्यादा असत्यवचनभाषिणो दुष्टवादित्रवादिनः, एवं भण्डा जाताः, पुनर्भस्मधूलिकर्दमादिभिर्मलिनदेहा भरडाप्राया बभूवुः। ततः प्रतिवर्षं होलिकादिनाद् द्वितीयदिने धूलिहरिकापर्वं प्रवृत्तं, ततः सा प्रसन्नीभूय स्वस्थानं गता।

## अथ होलिकापूर्वभवः कथ्यते।

पाटलीपुरनगरे ऋषभदत्तनामा श्रेष्ठी निवासमकरोद्, तस्य चन्द्राननानाम्नी पत्नी। अथ तयोर्द्वयोः पुत्रयोरुपरि देवीनाम्नी पुत्री जाता, सा च रूपलावण्यादिगुणैरतीव शोभिताऽऽसीद्। सा च अष्टवर्षाया जाता ततः पितृभ्यां पाठिता, ततः सा कन्या स्वमात्रा

जिकया सा होलिका पृष्टा–हे पुत्रि ! कथय ते मनोगत चिन्ताम् ? तदा कथितस्तया तदग्रे स्वाभिप्रायः, ततः परिव्राजिकया प्रोक्तम्–हे पुत्रि ! रविदिने पूजामिषात् सूर्यदेवगृहे त्वमागच्छेः, तत्राहं तव कुमारसंगं कारयिष्यामि, यतो अन्यथात्राजागरिकोत्सवेषु दुर्लभस्यापि जनस्य संगमः स्यात्, यथेप्सितव्यभिचारसिद्धिर्भवेद्, इति लोकोक्तिरस्ति। ततो रविदिने होलिका तत्र गता, कुमारोऽपि तपस्विन्याः संकेतितस्तत्रायातः ततः सा विधिना सूर्यमूर्तिं प्रपूज्य यावत् प्रतिचचाल तावत् कुमारस्तामालिलिंग, तदा तया कुमारपृष्टे हस्तप्रहारं दत्त्वा पूत्कारः कृतः, अहं परपुरुषस्पर्शसंजातपातकस्य शुध्यर्थमग्निप्रवेशं करोमि, तदा तां मरणाभिमुखीं गूढदम्भां पुत्रीं वीक्ष्य बलाञ्जनको गृहमानीतवान्, ततः फाल्गुनपूर्णिमारात्रौ तपस्विनी पुनः तयोः संगमं कारयामास; स्वयं च तत्समीपे गृहे सुप्ता, सिद्धकार्यत्वाद् गाढनिद्रां प्राप्ता।

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णो न भिद्यते। द्विकर्णस्य च मन्त्रस्य ब्रह्माऽप्यन्तं न गच्छति ॥ १ ॥

इति वाक्यं विचार्य होलिका निजगृहे सुप्तां तापसीं गृहं च दग्ध्वा शीघ्रं कुमारसहिता तत्स्थानाद्भ्रष्टाऽन्यत्र स्थिता। प्रभाते पुत्रीं दग्धां ज्ञात्वा श्रेष्ठी बहु विललाप, तदा लोकास्तां सतीं ज्ञात्वा तदीयभस्म प्रणमंतिस्म, तत्प्रभृति सर्वत्र प्रतिवर्षं तद्दिने होलिकापर्व प्रवृत्तं, तदद्युनाऽपि परमार्थशून्या लोकाः कुर्वन्ति। अथ कतिषु दिनेषु गतेषु स कुमारो होलिकां प्रोचे–अधुना धनं नास्ति तेन धनार्जनाय विदेशं व्रजामि, ततस्तयोक्तम्–स्वामिन् ! मदुक्तमुपायं कुरु यतो धनप्राप्तिः स्याद्, त्वं हि मत्पितृहट्टं याहि, तस्मान्मूल्येन शाटिकामानय, ततस्तेन तत्र गत्वा तथैव सानीता, भार्यया प्रोक्त न एषा मम योग्या, अन्यामानय, ततः पुनस्तेन तत्र गत्वा सा पश्चाद् दत्ता अपराऽऽनीता, साप्ययोग्या उक्ता पश्चाद् दत्ता, तदा श्रेष्ठिना उक्तम्—तव पत्नी स्वयमागत्य सम्यक् परीक्ष्य विशिष्टशाटिकां

॥ ३६ ॥

## अथ होलिकाव्याख्यानम् ॥ ६ ॥

होलिका फाल्गुने मासे, द्विविधा द्रव्य-भावतः । तत्राद्या धर्महीनानां द्वितीया धर्मिणां मता ॥ १ ॥

लोके हि इदं पर्व होलिकेति वदन्ति, होलिका तु द्विविधा द्रव्यतो भावतश्च, तत्र येऽज्ञानिनः सदसद्विवेकविकलाः प्राकृतलोकप्रवाहरक्ताः श्रीजिनधर्मविमुखा गतानुगतिकाः लोकास्ते काष्ठच्छगणादिना वह्निमयीं द्रव्यहोलिकां कुर्वन्ति, धर्मपर्व विराधयन्ति, अपरदिने च धूलिक्रीडनाऽवाच्यजल्पन-मलमूत्रजलाच्छोटन-स्त्र्यादिवस्त्राकर्षण-रासभारोपितनरपीडनादिकं कुर्वन्ति । सर्वमपीदमनर्थदण्डं विज्ञाय धार्मिकैः परिहर्तव्यम् । ये पुनर्धर्मिणस्ते तपोरूपजाज्वल्यवह्निना कर्मदलच्छगणभस्मीकरणरूपां भावहोलिकां कुर्वन्ति सद्ध्यानरूपिजलखेलनादिकं च कुर्वन्ति । ननु कुत इदं लौकिकं रजः पर्व प्रवृत्तमिति ? प्रश्नमाशंक्य सम्प्रदायगम्यं तत्कथानकमुच्यते-पूर्वदेशे जेतपुरं नाम नगरमस्ति, तत्र च जयवर्मा राजा, मदनसेना च तत्पट्टराज्ञी, अमात्यो मतिचन्द्रनामा । तत्रैव मनोरथनामा श्रेष्ठी, तस्य चत्वारः पुत्राः, तेषामुपरि अतीव रूपवती होलिकानाम्नी पुत्री, सा च पित्रा महोत्सवेन विवाहिता, परं कर्मवशाद् विधवा जाता, सा सदा पितृगृहे तिष्ठति, अन्यदा गवाक्षस्थिता सा बंगदेशस्वामिभुवनपालभूपस्य पुत्रं कामपालनामानं विलोक्य कामाकुला जाता, सोऽपि तां दृष्ट्वाऽत्यर्थं कामव्याप्तः संजातः, तदा श्रेष्ठी तां पुत्रीं गुप्तपीडापीडितां दृष्ट्वा विषादं प्राप्तः, इतश्च तत्र पुरे एका परिव्राजिका वसतिस्म, सा च द्विजकुलोत्पन्न-चंडरुद्रभाण्डस्य पुत्री, अचलभूतिनाम भरडकस्य पत्नी 'ढुंढा' इति नाम्ना विख्याता, कूटकपटकारिणी लोकानां भूतकर्मादिकं करोतिस्म, तथा सा क्षुधातुरा कृशांगी भिक्षार्थं दिने दिने गृहं गृहं प्रतिभ्रमतिस्म, परं लाभान्तरायवशात् क्वापि भिक्षां न लभते, ततः सा लोकेभ्यः कोपं चकार । अथ मनोरथश्रेष्ठिना सा सत्कृत्य याचिता, हे मातर्मम सुतां पट्वीं कुरु, ततो रहसि परिव्रा-

बभूव । ततः क्रमेण कर्माणि क्षपयन् द्वादशगुणस्थानान्त्यसमये घातिकर्मचतुष्टयं शुक्लध्यानेन क्षपयित्वा त्रयोदशगुणस्थानप्रथमसमये केवलज्ञानं प्राप्य बहून् भव्यान् प्रतिबोधयन् पृथिव्यां विजहार । ततः द्विसप्ततिपूर्वलक्षाणि सर्वायुः प्रपाल्य चतुर्दशे गुणस्थाने पंचह्स्वाक्षरोच्चारणकालमाने योगनिरोधं कृत्वा शेषकर्मचतुष्टयं क्षपयित्वा मुक्तिं प्राप्तः । इह शरीरं त्यक्त्वा पूर्वप्रयोगबन्धनच्छेदादिना सिद्धशिलोपरि योजनान्ते सिद्धक्षेत्रे एकस्मिन् समये गत्वा साद्यनन्तस्थित्या स्थितवान् । इत्थं पिंगलरायतो मेरुत्रयोदश्या महिमा प्रवृत्तः । पूर्वं रत्नमया मेरवो ढौकिताः, पश्चात् कियत्कालं यावत् स्वर्णमयाः, ततः पश्चाद् रूप्यमयाः, अस्मिन् काले घृतमया मेरवः प्रवृत्ताः सन्ति, इत्थं मेरुत्रयोदश्याः महिमानं श्रुत्वा भो भव्याः ! शुद्धभावेन विधिना एतद् व्रतं कर्तव्यम्, येन इह परत्र च सर्वप्रकारसुखसंपत्तिः प्रादुर्भवेदिति ॥

सम्वद्व्योमरसाष्टेन्दु (१८६०) मिते फाल्गुनमासके ॥ ह्यसितैकादशीतिथ्यां बीकानेराख्यसत्पुरे ॥ १ ॥
व्याख्यानं प्राक्तनं वीक्ष्य निबद्धं लोकभाषया ॥ अलेखि संस्कृतीकृत्य क्षमाकल्याणपाठकैः ॥ २ ॥
संविग्नवाचनाचार्यपदस्थानं सुधीमताम् । श्रीयुक्तामतधर्माणां शिष्यैरामोदतस्त्वदः ॥ ३ ॥ त्रिभिर्विशेषकम्,

॥ इति मेरुत्रयोदशीव्याख्यानं सम्पूर्णम् ॥ ९ ॥

रत्नमयं मेरुपञ्चकं श्रीजिनाग्रे ढौकनीयम्–मध्ये एको महान् मेरुः, चतुर्दिक्षु चत्वारो लघवः, तदग्रे चतुर्दिक्षु चत्वारो नन्द्यावर्ता; कर्तव्याः। दीपधूपादिपूर्वकं बहुविधाः पूजाः कर्तव्याः। एवं मासत्रयोदशकं यावत्, अथवा वर्षत्रयोदशकं यावत् कर्तव्यम्। तथा 'ॐ ह्रीँ श्रीऋषभदेवपारंगताय नमः' एतत् पदं द्विसहस्रवारान् जपनीयम्, एवं प्रतिमासं कुर्वतः सकलरोगक्षयो भवति, इह परत्र च सुखं संपद्यते। यदि त्रयोदश्यां पौषधं कुर्यात् तर्हि प्रागुक्तं कर्तव्यं सर्वं पारणकदिने कृत्वा गुरुं प्रति अतिथिसंविभागं विधाय पारणकं कुर्यात्। इत्थं गुरुवचः श्रुत्वाऽनन्तवीर्यो राजा व्रतं अंगीकृत्य गुरून् नत्वा स्वस्थानं ययौ। अथ पिंगलरायकुमारः प्रथम–माघकृष्णत्रयोदश्यां प्रथमं व्रतं कृतवान् तावता चरणांकुरौ प्रादुर्भूतौ, एवं त्रयोदशमासान् यावत् कुर्वतः सुन्दररूपौ–पादौ प्रकटी–भूतौ। राजाऽतीव हर्षं प्राप्तः, धर्मस्य महिमानं विलोक्य उल्लसितः सन् विशेषतो धर्मं कर्तुं प्रवृत्तः। ततः षोडशमासे कुमारेण गुण–सुन्दरी परिणीता, अन्यासामपि बहूनां राजकन्यानां पाणिग्रहणं चक्रे। ततोऽनन्तवीर्येण राज्ञा कुमाराय राज्यं दत्त्वा गांगिलमुनिपार्श्वे चारित्रं गृहीत्वा निरतिचारं तत् प्रतिपाल्य श्रीशत्रुंजयेऽनशनं कृत्वा शिवपदं प्राप्तम्। ततः पिंगलरायनृपः मन्त्रीत्या प्रजां पालयन् पुनः—त्रयोदशवर्षाणि यावद् मेरुत्रयोदशीमाराध्य प्रान्ते उद्यापनं चकार। तत्र त्रयोदशजिनगृहाणि कारयामास, त्रयोदश स्वर्ण–मयीः प्रतिमाः, त्रयोदश रूप्यमयीः त्रयोदश रत्नमयीश्च निर्मापयामास। त्रयोदशविधैः रत्नैर्मेरुपञ्चकं निर्माप्य ढौकयामास। त्रयोदश–वासरान् श्रीसंघेन सह तीर्थयात्रां चकार। त्रयोदशसाधर्मिकवात्सल्यान् कृतवान्, एवं बहुधा ज्ञानभक्तिमपि चकार। ततः कियन्ति पूर्वाणि व्रतसहितं राज्यं प्रपाल्य स्वकीय–महसेनकुमाराय राज्यं दत्त्वा श्रीसुव्रताचार्यसमीपे बहुभिरन्यपुरुषैः सह दीक्षां जग्राह। द्वादश–शांगीमधीत्य चतुर्दशपूर्वधरः संजातः, क्रमेण आचार्यपदं च संप्राप्तः, ततः क्षपकश्रेण्यारोहार्थमष्टमगुणस्थाने शुक्लध्यानं ध्यातुमुद्यतो

पुत्रमादाय उपरि गत्वा सूर्यकुंडजलेन पुत्रं स्नपयामास । परं तज्जलं देवताऽधिष्ठितमस्ति स्वयंप्रभस्य च न तत्कर्माद्यापि क्षीणं तेन तज्जलं पादौ न स्पृशति । तद् दृष्ट्वा सर्वेऽपि संघलोकाः विस्मिता जाताः, तदा सर्वैरपि मुनीश्वरः पृष्टः–स्वामिन् ! किमत्र कारणम् ? मुनिरुचे–अनेन बहुभवेभ्यः प्राग् देवद्रव्यं भक्षितमस्ति, तथा एकस्या मृग्याश्चत्वारोऽपि पादाच्छिन्नाः तत्कर्म बहु क्षीणं किंचिदद्यापि अवशिष्टं वर्तते, तेन तीर्थजलं न स्पृशति तीव्रकर्मणां भुक्तिं विना क्षयाभावात् । एतद् मुनिवचनं श्रुत्वा माता, पिता, पुत्रश्च त्रयोऽपि वैराग्य प्राप्ताः, ततः श्रीऋषभदेवचरणान् अभिवन्द्य गृहमागत्य धर्मकरणोद्यता बभूवुः । इत्थं षोडशसहस्रवर्षाणि कुष्ठरोगादिपीडा-मनुभूय तत्कर्मालोच्य कालं कृत्वा प्रथमदेवलोके देवत्वेनोत्पन्नः, ततश्च्युत्वा हे राजन् ! अनन्तवीर्योऽयं तव पुत्रः पिंगलगायनामा संजातः । इत्थं गांगिलमुनिः कुमारस्य प्राग्भवमुक्त्वा पुनरुवाच—

मद्यपानाद् यथा जीवो, न जानाति हिताऽहिते ॥ धर्माधर्मौ न जानाति, तथा मिथ्यात्वमोहितः ॥१॥

मिथ्यात्वेनालीढचित्ता नितान्तं, तत्त्वातत्त्वं जानते नैव जीवाः ।
किं जात्यन्धाः कुत्र चिद्वस्तुजाते, रम्यारम्यव्यक्तिमासादयेयुः ? ॥२॥

अभव्याश्रितमिथ्यात्वेऽनाद्यनन्ता स्थितिर्भवेद् ॥ सा भव्याश्रितमिथ्यात्वेऽनादिसान्ता पुनर्मता ॥३॥

ईदृक्–मिथ्यात्वोदयाद् जीवाः कर्माणि बध्नन्ति, तत्पुत्रेणापीत्थमेव दुष्कर्मोपार्जितं तेन पंगुर्जातः । एतद् मुनिवचः श्रुत्वा राजा उवाच–हे स्वामिन् ! एतत् कर्म केन पुण्येन नश्यति ? मुनिना उक्तम्–हे राजन् ! तृतीयारकप्रान्ते सार्धाष्टमासयुक्तवर्षत्रये शेषे सति माघकृष्णत्रयोदश्यां श्रीऋषभदेवस्वामिनो निर्वाणकल्याणकमभूत्, तेन तद्दिनं श्रेष्ठमस्ति । तद्दिने चतुर्विधाहारत्यागेन उपवासं कृत्वा

एकदा प्रभोश्छत्राद्याभरणानि गृहीत्वा क्वचिद् अनाचारं सेवितवान्, तदा श्रेष्ठिना तत्स्वरूपं ज्ञात्वा गृहाद् बहिर्निष्कासितः। ततो वनमध्ये भ्रमन् आखेटकसंगेन बहून् मृग-शशकादीन् जन्तून् विनाशयन्नुदरपूर्तिं चकार। अथ तत्रैव वने तापसाश्रमो विद्यते तत्र बहवस्तापसास्तपस्यां कुर्वन्ति, मृगा अपि तत्राऽऽगत्य उपविशन्ति। एकदा एका सगर्भा मृगी तत्राऽऽगच्छन्ती तेन सामन्तसिंहेन तीक्ष्णशस्त्रेण पादेषु प्रहृता तस्याश्चत्वारोऽपि पादाः छिन्नाः, सा अत्र पतिता तापसैर्दृष्टा, ततस्तैः सद्यस्तत्राऽऽगत्य धर्मः श्रावितः सा मृत्वा सद्गतिं प्राप्ता। ततस्तापसाः सामन्तसिंहं प्रत्येवमुक्तवन्तः—रे दुष्ट! यथा त्वयाऽस्माकं मृग्याः पादाश्छिन्नास्तथा त्वमपि परत्र पंगुत्वं प्राप्नुयाः। इत्थं शापं दत्त्वा ते स्वाश्रमं जग्मुः। सामन्तसिंहोऽपि तापसान् क्रुद्धान् दृष्ट्वा भीतः सन् नष्ट्वा वनं गतः, दुष्कर्मयोगात् संमुखं सिंहो मिलितः, सद्यस्तेन सिंहेन हतः, स मृत्वा नरकं गतः। ततश्च्युत्वाऽसंख्येयान् तिर्यङ्नरकादिभवान् कृत्वाऽकामनिर्जरया बहूनि कर्माणि क्षपयित्वा महाविदेहे कुसुमपुरनगरे विशालकीर्त्तिनृपस्य गृहे शिवानामदास्याः पुत्रत्वेनोत्पन्नः। तया वज्र इति स्थापित नाम, क्रमेण तरुणो जातः। नृपसेवां करोतिस्म, परं प्राक्कृतकर्मोदयात् तच्छरीरे गलत्कुष्ठरोग उत्पन्नः। हस्तौ, पादौ च गलित्वा पतितौ पङ्गुर्जातः। अथ मरणसमये शिवादास्या नमस्कारमन्त्रः श्रावितः, ततः समाधिना मृत्वा व्यन्तरो जातः, ततश्च्युत्वा जम्बूद्वीपे भरतक्षेत्रे सौहार्दपुरनगरे सुरदासश्रेष्ठिगृहे वसन्ततिलकाभार्यायाः स्वयंप्रभो नाम पुत्रो जातः। स च गुणवान्, विवेकवान्, परं चरणे व्रणरोगयुक्त एवोत्पन्नस्तेन चलितुं न शशाक। क्रमेण अष्टवर्षवया अभूत्, एकपुत्रत्वात् पितरौ तद्दुःखदुःखितावभूताम्। तस्मिन् समये श्रीशत्रुंजयतीर्थयात्रार्थं संघोऽगमद्, तदा तत् श्रुत्वा श्रेष्ठी अपि सरोगपुत्रसहितः संघमध्ये चचाल। क्रमेण सिद्धक्षेत्रे संघः समागतः, ततो विधिना गिरिमारुह्य श्रीऋषभदेवभक्तिं चकार, तदा सुरदासश्रेष्ठी अपि सभार्यः

तथा धर्मस्य मूलं दया, पापस्य मूलं हिंसा, एको हिंसां करोति, अन्यः कारयति, अपरोऽनुमन्यते एते त्रयोऽपि सदृशपापभाजः, पुनर्यो हिंसां कुर्वन् मनसि श्रामं न प्राप्नोति तस्य हृदये दया नास्ति, यो जीवो निर्दयः सन् बहून् एकेन्द्रियान् विनाशयति स परभवे वातपित्तादिरोगभाग् भवति । यः पुनर्द्वीन्द्रियान् विनाशयति स परत्र मूकः, मुखरोगी दुर्गन्धनिःश्वासश्च भवति, यश्च त्रीन्द्रियाणां विनाशकः स नासिकारोगी भवेत् । चतुरिन्द्रियविनाशकस्तु अक्ष्णा काणः अन्धो वा, क्लिन्ननेत्रो वा भवेत् । यस्तु पचेन्द्रियविनाशकः स परत्र बधिरो भवति, यः पुनः पंचप्रकारानपि जीवान् विनाशयति स भवान्तरे पंचापीन्द्रियाणि पटूनि न प्राप्नोति, तस्मात् भो भव्याः ! हिंसाऽनृतादिकं सर्वथा त्याज्यमित्यादिधर्मोपदेशं श्रुत्वा राजा पप्रच्छ—स्वामिन् ! मत्पुत्रः केन कर्मणा पंगुर्जातः ? तदा गांगिलमुनिरुवाच—अस्य प्राग्भवं शृणु, अस्मिन् जम्बूद्वीपे ऐरवतक्षेत्रे अचलपुरनाम्नि नगरे महेन्द्रध्वजो नाम राजा, उमया पट्टराज्ञी तयोः सामन्तसिंहो नाम पुत्रोऽभूत् । स च लेखनशालायां पठनार्थं गच्छन् द्यूतकृत्संगाद् द्यूतं शिक्षितवान्, क्रमेण सप्तव्यसनसेवनतत्परोऽभूत् । राज्ञा बहुधा निषिद्धोऽपि यदा व्यसनसप्तकं न तत्याज, तदा अयोग्यं ज्ञात्वा स्वदेशाद् बहिर्निष्कासितवान् । ततोऽपि व्यसनमत्यजन् देशाटनं कुर्वन् सुरपुरनगरे समागतः, तत्र चम्पक श्रेष्ठिना सुन्दराकारं विलोक्य उत्तमपुरुषोऽयमिति ज्ञात्वा सुकुमारोयम्, अस्मात् कार्यान्तरं न भविष्यतीति च विचिन्त्य स्वगृहपार्श्ववर्तिजिनगृहरक्षार्थं स सामन्तसिंहः स्वगृहे स्थापितः । अथ स दुष्टात्मा जिनाग्रे ढौकितानि तन्दुलपूगीफलादीनि प्रच्छन्नं गृहीत्वा द्यूतक्रीडार्थं ययौ । कियद्भिर्दिनैः श्रेष्ठिना तद् ज्ञात्वा तस्मै उक्तम्—हे भद्र ! यः पुमान् देवद्रव्यादिकं भुंक्ते सोऽनन्तकालं संसारपरिभ्रमणं करोति, तस्मात् त्वया अतः परमेतत् कार्यं न कर्तव्यम् । इत्थं बहुधोपदेशो दत्तस्तथापि स दुष्टो मिथ्यात्वाज्ञानतीव्रकर्मोदयाद् न कदाऽपि विरमतिस्म ।

कुमारः सत्वरं प्रेषणीयः, इति श्रुत्वा राजा उद्विग्नचित्तः संजातः, ततः सद्य उत्थाय स्वमन्दिरे एकान्तदेशे गत्वा राज्ञ्याः, प्रधानस्य चाग्रे इत्थमुवाच—अथ किं कर्तव्यम् ? पुत्रस्तु पंगुर्वर्तते एतस्य कथं भविष्यति ? पंगवे कः स्वकन्यां प्रदास्यति ? तदा प्रधानमंत्री किंचिद् विचार्य तान् सेवकान् आहूय इत्युवाच—साम्प्रतमिह कुमारो नास्ति तन्मातुलगृहे वर्तते । मातुलगृहं तु इतो द्विशतयोजनेषु मुहनीपत्तने समस्ति तेन सांप्रतं लग्नं न भवेत्, पश्चाद् ज्ञास्यते । एतत् श्रुत्वा सेवकाः प्रोचुः—हे स्वामिन् ! पन्था दूरे वर्तते, अतो लग्नं निर्धार्य देयं, स्वयमपि लग्नोपरि शीघ्रं समागन्तव्यम् । एतत् सेवकवचनं श्रुत्वा मासषोडशकानन्तरं लग्नं भविष्यति, इति निर्धारितम् । ततो लग्नं गृहीत्वा सेवका मलयदेशं गताः । अथ राजा अनन्तवीर्यश्चिन्तातुरः सन्नुवाच—अथाऽत्र क उपायः कर्तव्यः ? षोडशमासास्तु सत्वरमेव यास्यन्ति । तदा नृप-राज्ञी-प्रधानैर्बह्वी चिन्ता कृता परं कोऽप्युपायो न लब्धः । अस्मिन्नवसरे नगर्युद्याने साधुपंचशतीपरिवृतश्चतुर्ज्ञानधरो गांगिलनामा साधुः समवसृतः, वनपालकेन प्रतिपत्तिं कृत्वा नगरमध्ये गत्वाऽनन्तवीर्यराजाय वर्धापनिका दत्ता । राजा तन्मुखात् साध्वागमनं श्रुत्वा तं संतोष्य हस्त्यश्वादिबहुऋद्धिसमेतो वन्दनार्थं निस्सृतः । क्रमेण तत्र गत्वा विधिना मुनीन् अभिवन्द्याग्रे उपविष्टः, पर्षद् मीलिता, मुनिरुपदेशं ददौ । स च इत्थम्—

जीवदयाइ रमिज्जइ, इन्दियवग्गो दमिज्जइ सयावि ॥ सच्चं चेव वदिज्जइ, धम्मस्स रहस्सं इणमेव ॥१॥
जयणा उ धम्मजणणी, जयणा धम्मस्स पालिणी चेव ॥ तह वुड्ढिकरी जयणा, एगंतसुहावहा जयणा ॥२॥
आरंभे नत्थि दया, महिलासंगेण नासए बंभं ॥ संकाए सम्मत्तं, पवज्जा अत्थगहणेणं ॥३॥
जे बम्भचेरभट्ठा, पाए पाडंति बम्भयारीणं ॥ ते हुंति टुंटमुंटा, बोहिवि पुण दुल्लहा तेसिं ॥४॥

कृतवान्। ततस्तमन्तःपुरे एव ररक्षतुः बहिर्न प्रकटी चक्रतुः। यदा पुनः लोकाः पप्रच्छुस्तदा एवमूचतुः—कुमारस्य रूपमत्यद्भुतं वर्तते, मा कदाचिद् दृष्टिदोषो भवेद् इति न प्रादुष्क्रियते। तदा सर्वस्मिन्नपि नगरे एषा प्रवृत्तिः प्रादुर्भूता। यदुत पिंगलरायकुमारतुल्यः पृथिव्यामपरः कोऽपि रूपसौन्दर्यवान् नास्तीति। अथैवं क्रमेण कुमारो वृद्धिं प्राप्तः। अस्मिन्नवसरे अयोध्यानगरीतः सपादशत (१२५) योजनेषु मलयनामा देशोऽस्ति, तत्र ब्रह्मपुरं नाम नगरम्, तत्र च इक्ष्वाकुवंश्यः काश्यपगोत्रीयः शतरथो नाम राजा तस्य च इन्दुमती नाम्नी पट्टराज्ञी। तत्कुक्षिसंभवा गुणसुन्दरी नाम पुत्री, सा चातिशयरूपलावण्यसौभाग्यादिगुणयुक्ताऽभूत्। तस्य राज्ञः पुत्रो नास्ति सैवैका पुत्री आसीद्, अतस्तेन मातापित्रोरतिवल्लभा आसीद्। अथ पुत्रीं वरयोग्यां ज्ञात्वा तद्योग्यवरालाभाच्च राजा तद्विवाहचिन्तातुरो बभूव। तस्मिन्नवसरे तन्नगरवासिव्यापारिणः शकटेषु विविधानि क्रयाणकानि भृत्वा देशान्तरं चलितास्तदा राज्ञा तेभ्य उक्तम्—देशान्तरे भ्रमद्भिर्भवद्भिर्गुणसुन्दरीयोग्यवरप्राप्तौ सत्यां विवाहसम्बन्धः कार्यः, इति नृपवचनं श्रुत्वा तथेति प्रतिपद्य ते चलिताः। क्रमेण बहूनि नगराणि विलोकयन्तोऽयोध्यां नगरीं प्राप्ताः, तत्र च क्रयाणकानि सर्वाण्यपि विक्रीतानि भूयान् लाभः संजातः, अपराणि तत्रत्यानि क्रयाणकानि संगृहीतानि। यदा ते चलनार्थमुद्यता जातास्तदा स्वनृपवचनं संस्मृत्य तन्नगरवासिलोकानां मुखात् कुमारस्याद्भुतं रूपं श्रुत्वा नृपसमीपे गत्वा कुमारेण सह गुणसुन्दर्या विवाहसम्बन्धं चक्रुः, राज्ञाऽपि शुल्क (कर) मोचनादिना तेषां बह्वादरश्चक्रे, ततस्ते हर्षिताः सन्तः स्वदेशं प्रति चेलुः, क्रमेण स्वनगरं गत्वा राज्ञोऽग्रे सर्वं वृत्तान्तं कथयामासुः, राजापि कुमारस्याद्भुतरूपसौभाग्यादिगुणान् श्रुत्वा संतोषं प्राप्तः। अथ यदा कन्या वरयोग्या जाता तदा कुमारस्य आकारणार्थं राज्ञा स्वसेवकाः प्रेषिताः, तेऽपि अयोध्यां गत्वा अनन्तवीर्यं नृपं प्रोचुः—हे महाराज ! विवाहार्थं

# अथ मेरुत्रयोदशी व्याख्यानम् ॥ ५ ॥

मारुदेवं जिनं नत्वा, स्मृत्वा सद्गुरुभारतीम् । मेरुत्रयोदशीपर्व-व्याख्यानं लिख्यते मया ॥ १ ॥

इहाष्टमहाप्रातिहार्यविराजितेन जगद्गुरुणा श्रीवर्धमानस्वामिना श्रीगौतमादीनामग्रे यथा माघकृष्णत्रयोदश्या माहात्म्यमुक्तं, तथा-परंपरयाऽऽयातमस्माभिरुच्यते, श्रीऋषभदेवाऽजितनाथयोरन्तरे पञ्चाशल्लक्षकोटिसागरोपमानि व्यतिक्रान्तानि, तन्मध्ये अयोध्यायां नगर्यां इक्ष्वाकुवंश्यः काश्यपगोत्रीयोऽनन्तवीर्यो नाम राजा बभूव, स च बहुलहस्त्यश्वरथपदात्यादिसेनानायकः । तस्य च-राज्ञः पञ्चशतानि राज्य आसन् , तन्मध्ये प्रियमती नाम पट्टराज्ञी बभूव, धनंजयो नाम चतुर्बुद्धिनिधिर्महामात्यश्च आसीत् । सुखेन राज्यं पालयतो राज्ञ एकदा मनसि महाचिन्ता समुत्पन्ना-यदुत्तमो ममैकोऽपि पुत्रो नास्ति, क एतद्राज्यस्य भोक्ता भविष्यति ? पुत्रं विना गृहं शून्यप्रायमिति । ततो राज्ञा अनेके उपायाः कृताः परं पुत्रोत्पत्तिर्न जाता । तस्मिन्नवसरे एकदा एकः कोणकनामा साधुराहारार्थं राज्ञो गृहे समागतः, तदा नृपराज्ञ्यौ उत्थाय विधिना वन्दित्वा शुद्धाहारेण प्रतिलाभ्य करद्वयं संयोज्य मुनिं पप्रच्छतुः-स्वामिन् ! अस्माकं पुत्रो नास्ति स कदापि भविष्यति न वा ? मुनिरुवाच-ज्योतिष्कनिमित्तादिकं मुनिर्न भाषते, तदा नृपराज्ञीभ्यां पुनः पुनः प्रार्थनायां कृतायां मनसि दयां धृत्वा मुनिना उक्तम्-हे राजन् ! तव पुत्रस्तु भावी परं पङ्गुर्भविष्यति, एतदुक्त्वा मुनिर्गतः, तदा भूपराज्ञीभ्यां चिन्तितम्-अस्माकं पङ्गुरपि पुत्रस्तु भावी । क्रमेण राज्ञी सगर्भा जाता, पूर्णे काले पंगुं पुत्रं प्रासूत । राजा पुत्रजन्म श्रुत्वा हर्षितः सन् महोत्सवं चकार, द्वादशे दिवसे सर्वमपि कुटुम्बं भोजयित्वा कुमारस्य पिङ्गलराय इति नाम

बिम्बानि कारितानि पश्चात् कतिपयदिने वैराग्यवासितः श्रेष्ठी गृहभारं सुन्दरनाम्नि ज्येष्ठे पुत्रे नियोज्य सर्वानाहूय कथयति-स्म-हे पुत्राः ! यूयं दशमीदिने सप्तदशप्रकारेण वामेयमर्चित्वा व्याख्यानं श्रुत्वा गृहे समागत्य साधून् प्रतिलाभ्य एकासनेन भोजनं कृत्वा चतुर्विधाहारनियमो ग्राह्यः, पारणकदिने स्वामिवात्सल्यं कर्तव्यम् , एवं विधिना वयं सुखिनो जाताः, भवद्भिरपि एवं कर्त-व्यम् , येन सुखिनो भविष्यन्ति । एवं पुत्राणां शिक्षां दत्वा गुरुपार्श्वे गत्वा एवं वदति-स्वामिन् ! ममोपरि कृपां विधाय चारित्रं देहि येन स्वर्गाऽपवर्गौ प्राप्नोमि, तदा गुरुणा कथितं-यथा रुचिस्तथा कुरु । एवं श्रुत्वा गुरूणां पार्श्वे चारित्रं गृहीतम् । विविधानि षष्ठाष्टमादीनि तपांसि कुर्वाणो द्वादशवर्षप्रान्ते पञ्चदशदिनानि अनशनं विधाय अष्टादशदोषरहितः समाधिना मृत्वा दशमे देवलोके विंशतिसागरोपमायुर्देवत्वेनोत्पन्नः, अनुक्रमेण देवसुखं भुक्त्वा प्राणतकल्पात् च्युत्वा इहैव जम्बूद्वीपे महाविदेहे पुष्कलावतीविजये मंगलावत्यां नगर्यां सिंहसेनराजस्य गुणसुन्दरीभार्यायाः कुक्षिसरोवरे मरालवत् पुत्रो जयसेननाम्ना प्रकटिष्यति । तत्र संसारसुखं भुक्त्वा पश्चात् चारित्रं ग्रहीष्यति, एकादश अंगानि द्वादशोपांगानि पठिष्यति । एकाकी विहारं कुर्वन्नेकदा कायोत्सर्गे स्थास्यति, तत्रोपवनाधिष्ठायको देवो मिथ्यात्ववासितः तस्य श्रमणस्यैकविंशत्युपसर्गान् नकुल-वृश्चिक-पन्नग-गज-सिंह-व्याघ्र-पिशाच-राक्षस खेचर-वेताल-प्रमुखान् करिष्यति । मुनिस्तु शमदमगुणेन, शुभध्यानेन चतस्रघातिकर्मणां क्षयं कृत्वा केवलं प्राप्स्यति । शीलव-त्यपि चारित्रं गृहीत्वा प्रतिपाल्य देवलोकं गता महाविदेहे सेत्स्यति, एवं श्रीवर्धमानस्वामिना गौतमाग्रे निरूपितम् , तद् हे भव्याः ! इदं व्रतमवश्यं कर्तव्यं येन सुखं स्याद् । अस्य चारित्रस्य श्रवणमात्रेण इह भवे धनधान्यादिकं परभवे स्वर्गापवर्गसुखं जनः प्राप्नोति ॥

इति श्रीपूर्वाचार्यहेमचन्द्रसूरिकृतलपादलक्षग्रन्थमध्यादिमं पौष-दशम्या-व्याख्यानं समाप्तम् ॥ ४ ॥

श्रीणि दिनेषु एकभक्तकरणम्, भूमिशयनम्, ब्रह्मव्रतपालनम्, द्वयोः टंकयोरावश्यकम्, देववन्दनम्, जिनालये स्नात्रादिमहोत्सवविधानम्,

'ॐ ह्रीँ श्रीपार्श्वनाथाय अर्हते नमः' इति द्विसहस्रवारं गुणनीयं। पारणान्ते च स्वामिवात्सल्यं, एवं दिग्वर्षं (१०) यावद् विधिना कर्तव्यम्। एवमाराधनेनेहलोके धनधान्यसौभाग्यादिकम्, परलोके च स्वर्गसुखं क्रमेण च मोक्षसुखं भविष्यति। एवं श्रुत्वा हर्षोत्कर्षप्रफुल्ललोचनः श्रेष्ठी जैनं धर्मं गृहीत्वा गुरुं वन्दित्वा स्वगृहं गतः, आचार्यश्चान्यत्र विहृतवान्। श्रेष्ठिना दशमी आराधितुमारब्धा, दशमासेषु गतेषु कालकूटद्वीपाद् पोताः समागताः तदनुचरमुखात् श्रुत्वा श्रेष्ठी न श्रद्दधौ, तदा तत्प्रियया शीलवत्योक्तम्-स्वामिन्! तत् सत्यमेव जानातु, माऽसत्यं मन्यताम्। यतोऽद्य निजगृहे निधानं प्रकटं भविष्यति तदा तु सत्यमित्युक्त्वा निधानस्थाने निधिदर्शनार्थं गतवन्तौ, तदा ताभ्यां निधानानि विलोकितानि। श्रेष्ठी स्वप्रियामुवाच-हे प्रिये! जैनशासन-प्रभावात् प्रवहणवर्धापिका समागता, एकादशस्वर्णकोटिमानो निधिरपि प्रादुर्भूतः। वामेयजिनप्रसादात्, श्रीगुरुणामुपदेशादहं श्रीमान् जातः। अथ जैनधर्मवासनया सुखेन कालो गच्छति, श्रेष्ठिपदमपि पुनः प्राप्तम्, श्रेष्ठिनो दशपुत्राः संजाताः राज्ञा संमान्य निजसमीपे स्थापितः। पुनरेकदा श्रीदेवेन्द्रसूरिर्विहरन् तत्रैवोपवने समवसृतः, तत् श्रुत्वा श्रेष्ठी वन्दनार्थं गतः वन्दित्वा यथास्थानं स्थितः, गुरुणा देशना दत्ता, देशनान्ते श्रेष्ठी पप्रच्छ-हे स्वामिन्! दशम्या उद्यापनं किं कर्तव्यम्? गुरुणा प्रोक्तम्-हे श्रेष्ठिन्! अष्टकानि दशपुस्तक-दशलेखनानि, दशपुस्तकबन्धनानि, दशस्थापनाचार्यासनानि (ठवणी), दश जपमालाः, दश चन्द्रोदयाः दशजिनालयानि दश जिनबिम्बानि, दीवि, आरति, एवं सर्वं दश-दशसंख्याकं कर्तव्यम्। एवं श्रुत्वा श्रेष्ठिनोद्यापनिकां कृत्वा मणिमयानि जिन-

चेतना लक्षणश्चात्मा, सामान्येन बुधैः स्मृतः ॥ संसारात्मा तथा जीवः, परमात्मा द्विधा मतः ॥ २ ॥
संसारात्मा सदा दुःखी, जन्म-मरण-शोकभाक् ॥ चतुरशीतिलक्षासु, योनिषु भ्राम्यते सदा ॥ ३ ॥
न सा जातिर्न सा योनिर्न तत् क्षेत्रं न तत् कुलम् ॥ यत्र कर्मवशादात्मा नोत्पन्नोऽयमनेकधा ॥ ४ ॥
एगया देवलोएसु, नरएसु वि एगया ॥ एगया असुरं कायं, जहा कम्मेहिं गच्छइ ॥ ५ ॥
एगया खत्तिओ होइ, तओ चण्डाल-वुक्कसो ॥ तओ कीड-पयंगो य, तओ कुन्थु-पीपिलिया ॥ ६ ॥
सुभगो दुर्भगः श्रीमान्, रूपवान् रूपवर्जितः ॥ स एव सेवकः स्वामी, नरो नारी नपुंसकः ॥ ७ ॥
संसारी कर्मसम्बन्धाद्, नटवत् परिभ्राम्यति । अनन्तकालपर्यन्तं, जीवः संसारवर्त्मनि ॥ ८ ॥
भव्यजीवे दयादानं, धर्मकल्पतरूपमम् । दानशीलतपोभावं, शाखा मुक्तिसुखं फलम् ॥ ९ ॥
धर्मादेव कुले जन्म, धर्माद्धि विपुलं यशः ॥ धर्माद् धनं सुखं रूपं, धर्मः स्वर्गाऽपवर्गदः ॥ १० ॥

दोहा—धर्म करत संसारसुख, धर्म करत निर्वाण । धर्म पंथ साधन विना, नर तिर्यंच समान ॥ १ ॥
सुपुरुष तीन पदार्थ साधे, धर्म वीशेष जानी आराधे । धर्म प्रधान कहे सब कोई, अर्थ काम धर्म हित होई ॥ २ ॥

इत्यादिधर्मकथां श्रुत्वा श्रेष्ठी जीवाऽजीवादि नवपदार्थयुक्तं सम्यक्त्वरत्नं प्राप्तः, पुनः पप्रच्छ—हे भगवन् ! एवं किमपि तपस्याफलमुपदिश्यतां येन मम गृहे निधानं प्रकटयति । तदा मुनिना प्रोक्तम्—भोः श्रेष्ठिन् ! पौषकृष्णदशम्यां व्रतं गृहाण, तद्दिने श्रीपार्श्वनाथस्य जन्मकल्याणकमासीद्, नवमीदिने, दशमीदिने, एकादशीदिने एवं

धनमर्जय काकुत्स्थ !, धनमूलमिदं जगत् । अन्तरं नैव पश्यामि, निर्धनस्य शवस्य च ॥ १ ॥

दुहा—बाप कहे मेरे पूत सपूता, बेन कहे मेरा भइया ॥ घर जोरू भी लेत बलैयां, सोई बडो जांकी गांठ रुपैया ॥ १ ॥

अथ श्रेष्ठी निर्धनत्वेन दुःखेन कालं गमयतिस्म । कतिपयदिने तस्य नगरे श्रीदेवेन्द्रसूरिः समवसृतः, तद्वर्धापनिका वनपालेन राज्ञे निवेदिता । राज्ञा वनपालो बहुद्रव्यदानेन तोषितो विसृष्टः, पश्चाद् राजा, श्रेष्ठिवर्गः, सूरेन्द्रश्रेष्ठी, सर्वनगरलोकश्च वन्दनार्थं निर्ययौ । मुनिसमीपे आगत्य मुनिं वन्दित्वा सर्वे यथास्थानं निषण्णाः, मुनिभिर्देशना प्रारब्धा—भो भव्याः ! संसारे सारं धर्मपदार्थः श्रेयान् । यतः—

धर्मतः सकलमंगलावलि-र्धर्मतः सकलसौख्यसंपदः ॥ धर्मतः स्फुरति निर्मलं यशो, धर्म एव तदहो ! विधीयताम् ॥१॥

विवेकः परमो धर्मो, विवेकः परमं तपः ॥ विवेकः परमं ज्ञानं, विवेको मुक्तिसाधनम् ॥ २ ॥

भक्ष्याऽभक्ष्यविचारः स्याद्, गम्यागम्यविभेदकृत् ॥ मार्गाऽमार्गपरिज्ञानं, गुणाऽगुणविचारणा ॥ ३ ॥

निद्राऽऽहारो रतिर्भीतिः, पशूनां च नृणां समम् । विवेकोऽन्तरमत्रास्ति, तं विना पशवः स्मृताः ॥ ४ ॥

एक उत्पद्यते जन्तुर्यात्येकश्च भवान्तरम् । एको दुःखी सुखी चैकस्तथैकः सिद्धिसौख्यभाक् ॥ ५ ॥

इत्यादिदेशनां श्रुत्वा पर्षदाः स्वं स्वं स्थानं जग्मुः, तदा सूरश्रेष्ठी पप्रच्छ—हे भगवन् ! जीवस्य किं लक्षणम् ?

तदा मुनिनोक्तम्-हे श्रेष्ठिन् ! ज्ञान-दर्शन-चारित्रयुक्त-तपो-वीर्योपयोगवान् स जीवः यतः—

नाणं च दंसणं चेव, चरित्तं च तवो तहा ॥ वीरियं उवओगो य, एयं जीवस्स लक्खणम् ॥ १ ॥

परलोके देवादिऋद्धिमनुभूय परम्परया निर्वाणं प्राप्नोति, एवं भगवता उक्ते श्रीगौतमस्वामी प्राह–हे भगवन् ! पुरा केनेयं समाराधिता ? तद् कथ्यताम् । भगवानुवाच–हे गौतम ! श्रीवामेयं मां चान्तरा सूरदत्तश्रेष्ठिना सम्यगाराधिता, तथाहि—जम्बूद्वीपे भरतक्षेत्रे सुरेन्द्रपुरनाम नगरमस्ति, तत्र नरसिंहो नाम राजा राज्यं करोतिस्म, तस्य चतुरा गुणवती शीलालंकारयुता गुणसुन्दर्यभिधाना पट्टराज्ञी विराजतेस्म । तस्य नगरे सूरदत्तश्रेष्ठी परिवसतिस्म । तस्य शीलालंकारधारिणी पतिव्रता शीलवतीनाम्नी पत्नी आसीद् । यद्यपि धनदवद् महाधनाढ्यो यशस्वी च स श्रेष्ठी, परं मिथ्यात्ववासितः सांख्यमतावलम्बी त्रिदण्डिभक्तः शैवधर्माराधनतत्परः जैनधर्मं न जानाति, यतः—

न देवं नाऽदेवं न शुभगुरुमेवं न कुगुरुं ॥ न धर्मं नाऽधर्मं न गुणपरिणद्धं न विगुणम् ॥
न कृत्यं नाकृत्यं न हितमहितं नापि निपुणं ॥ विलोकन्ते लोका जिनवचनचक्षुर्विरहिताः ॥ १ ॥

स कदापि जिनवचनं न शृणोति मिथ्यात्वेन ग्रसितो राहुणा विधुवत् जीवशरीरमेकं मन्यते । परं राजमान्यो नगरे बहुमान्यः श्रेष्ठिपदे आसीद्, एवं काले याते एकदा सार्धं द्व्यशतप्रमितानां प्रवहणानां चतुर्विधं क्रयाणकं भृत्वा भृत्यान् रत्नद्वीपे प्राहिणोद् । तत्र गत्वा क्रयविक्रयं कृत्वा पुनः नवीनं क्रयाणकं भृत्वा मध्यसमुद्रे आगतास्तावद् पूर्वकृतकर्मोदयेन उल्कापातप्रचण्डपवनवेगेन ते प्रवहणाः कालकूटद्वीपे गताः गृहे नागताः । पुनश्च श्रेष्ठिगृहे एकादशस्वर्णकोटिद्रव्यं भूमिगृहे स्थापितमासीद्, तत् पन्नगवृश्चिकाऽङ्गारकरूपेण जातम् यानि च ग्रामान्तरात् पंचशतानि आगच्छन्ति शकटानि तेषामुपरि भिल्लधाटिः पतिता तान्यपि गतानि । ततश्च श्रेष्ठी निर्द्रव्यो जातः श्रेष्ठिपदं च गतं महादरिद्रश्च संजातः, ततो लोके सन्मानमपि गतम् । यतः—

॥ इति श्रीमौनैकादश्या माहात्म्यं [ व्याख्यानं ] सम्पूर्णम् ॥ ३ ॥

अथ श्रीपौषदशमी व्याख्यानं प्रारभ्यते ॥ ४ ॥

प्रणम्य पार्श्वनाथांघ्रिपंकजं सर्वसौख्यदम् । समस्तमंगलश्रेणिलतापल्लवताऽम्बुदम् ॥ १ ॥

भव्यजीवप्रबोधार्थं, जन्तूनां च सुखाप्तये । पौषकृष्णदशम्याश्च, माहात्म्यं कथ्यतेऽधुना ॥ २ ॥

इह जम्बूद्वीपे भरतक्षेत्रे मगधजनपदे चम्पानाम्नी सुमनोहरा नगरी चाऽस्ति, तस्याः समीपे पूर्णभद्राख्ययक्षाश्रिते उपवने श्रीचरमतीर्थाधिपतिमहावीरस्वामी एकदा समवसृतः । तदुपदेशश्रवणार्थं वन्दनार्थं च श्रीमगधाधिपतिः समागतः । स च भगवन्तं त्रिःप्रदक्षिणीकृत्य यथास्थाने समुपविष्टः । तदा स्वामी संसारसागरनिमज्जतामुद्धारकारिणीं देशनां प्रारेभे—

जीवदया रमिज्जइ, इन्दियवग्गो दमिज्जइ सयावि । सच्चं चेव वदिज्जइ, धम्मस्स रहस्समिणमेव ॥ १ ॥

इत्यादिदेशनां श्रुत्वा केचिद् भद्रकतां प्राप्ताः केचिद् श्राद्धधर्मं केचिच्च साधुधर्ममंगीकृतवन्तः, तदानीं श्रीगौतमस्वामी श्रीवीरं वन्दित्वा पप्रच्छ—हे स्वामिन् ! पौषदशमीमाहात्म्यं कथ्यताम्, ? एवं श्रुत्वा, वर्धमानस्वामी कथयति-हे इन्द्रभूते ! पौषदशम्यां श्रीवामेयजिनजन्मकल्याणकं वर्तते, तद्दिने द्विसन्ध्यमावश्यकं कर्तव्यम् । देववन्दनां भूशयनं ब्रह्मचर्यपालन जिनालयेऽष्टविध-सप्तदशविधस्नात्रमहोत्सवादिकं विविधाऽऽडम्बरेण जिनापूजां च विधाय गुरुसमीपे गत्वा उपदेशः श्रोतव्यः । पश्चाद् गृहं गत्वा एकासनेन भोजनं कृत्वा चतुर्विधाऽऽहारनियमो ग्राह्यः, नवम्यामेकादश्यां चापि एकवारमेव भोक्तव्यं, एतद्विधिना दश वर्षाणि यावत् क्रियमाणे साऽराधिता भवति । मनोवाक्कायेन त्रिकरणशुद्धया अस्या आराधक इह भवे धनधान्य-पुत्रकलत्रादिसौख्यं प्राप्य

जानिते द्वे शते षष्ठे, अष्टामानां शतं तथा । चतुष्टयं चतुर्मास्या, एकं षाण्मासिकं तपः ॥ १ ॥
स मौनैकादशीतिथ्यास्तपस्तपन् विशेषतः । पाठको द्वादशांगीनां शुद्धां दीक्षामपालयत् ॥ २ ॥ इति

अथैकदा एकादश्यां मौनमास्थाय तपः कुर्वति सुव्रते तत्परीक्षार्थं कश्चिद् मिथ्यादृष्टि देवः कस्यचित् साधोः कर्णयोः महतीं वेदनामकारयत्, तस्य वेदना महति उपचारे कृतेऽपि न शाम्यति, तदा तेन देवेन साधुना पुरत उक्तम्—अस्य वेदना सुव्रतमुनेः भैषज्यात् क्षयं यास्यति, यदि स एव स्वस्थानाद् बहिरागत्य उपचारं करिष्यति इति, तत् श्रुत्वा ते साधवः तत्रागत्य उपचारार्थं सुव्रतमभ्यर्थयन्, सुव्रतोऽपि मौनी रात्रौ न स्वस्थानाद् बहिर्याति, ततः देवानुभावतः स वेदनार्तो मुनिः सुव्रतं मस्तके मारयति ततः सुव्रतस्यातीववेदना संभूता परन्तु स मुनिश्चिन्तयति—

अर्हन्तो भगवन्तो ये, साधवो गणधारिणः । इन्द्राश्चन्द्रा दिनेन्द्राश्च, नागेन्द्रा व्यन्तरेन्द्रकाः ॥ १ ॥
सचक्रवर्तिनो वासुदेवाः प्रतिनारायणाः । बलदेवा नराधीशा, मानवा अपरेऽपि च ॥ २ ॥
कर्मणा पापिनाऽनेन, ते सर्वेऽपि विडम्बिताः । कियन्मात्रो वराकोऽहं, पुरस्तात् तस्य कर्मणः ॥ ३ ॥
अरे जीव ! क्षमस्व त्वमुदितं कर्म तेऽस्ति यत् । तद् भोगेन विना नैव, प्रक्षीयेत कदाचन ॥ ४ ॥
लद्धं अलद्धं पुव्वं–जिणवयण सुभासिअं अमियभूयं । गहिउं सग्गइमग्गो–नाहं मरणाउ बीहेमि ॥ ५ ॥
तपस्तीव्रं घरट्टोऽयं, क्षमामर्करिकान्वितः । धृतिहस्तो मनःकीलः, कर्मधान्यानि चूर्णयेत् ॥६॥ इति

अथ विभंगज्ञानेन मुनिमक्षुभितं मत्वा देवः विशेषेणोपसर्गान् अकरोद्, मुनिस्तु क्षपकश्रेणिमारूढः केवलज्ञानं प्राप्तवान् भव्यान्

स्याज्यः इति इदानीं दीक्षां चेत् सुगुरुयोगतो गृह्णामि तदा वरम्, इति चिन्तयतस्तस्य प्रातःकालः सञ्जातः, उद्याने च तरणतारणसमर्थाः चतुर्ज्ञानधरा गुणसुन्दरसूरयः समागताः, तान् वन्दनार्थं सर्वोऽपि लोको गतः, निजतनूज-स्त्रीपरिवारेण संयुतः श्रेष्ठी अपि गतवान् यावत् वन्दित्वा सर्वे स्थिता तावद् गुरुभिः देशना प्रारब्धा–यो यतीनां केवलिप्रज्ञप्तः अहिंसालक्षणः सप्तदशविधः विनयमूलः क्षान्तिप्रधानः महाव्रतपुरस्सरो धर्मः तेन पवनवद् द्रुतं मोक्षं व्रजेत्, यस्तु द्वादशव्रतात्मकः श्रावकधर्मस्तेन तुरंगवेगवद् व्रजेत्, इति अल्पकालेनैव सर्वदुःखान्तकरः साधुधर्मः द्रुतं मोक्षगमनाय सेव्यः । यदुक्तम्—

चारित्ररत्नान्न परं हि रत्नं, चारित्रवित्तान्न परं हि वित्तम् । चारित्रलाभान्न परो हि लाभश्चारित्रयोगान्न परो हि योगः ॥ १ ॥

दीक्षा गृहीता दिनमेकमेव, येनोग्रचित्तेन शिवं स याति । न तत् कदाचित्तदवश्यमेव, वैमानिकः स्यात् त्रिदशप्रधानः ॥ २ ॥

इत्यादि देशनां श्रुत्वा सुव्रतोऽब्रवीत्–हे तारक ! अहं संसारकान्तारादुद्विग्नोऽस्मि इति, गृहभारं पुत्रे समारोप्य श्रीमतां समीपे दीक्षां ग्रहीष्यामि, इति श्रुत्वा गुरुः उवाच–यथासुखं प्रवर्तस्व प्रतिबन्धं मा विधेहि । ततः श्रेष्ठी गृहं गत्वा कुटुम्बं भोजयित्वा स्वजनपुत्राणामग्रे दीक्षाऽऽदेशममार्गयत् । तैरनुमतः सुव्रतः एकादशभिः स्त्रीभिः सह प्रवव्राज । शीघ्रमेव तपोविशेषात् कायबलं क्षयीकृत्य मासिकेनाऽनशनेन तस्य एकादशपत्न्योऽपि केवलं प्राप्य शिवं गताः । अथ सुव्रतः मुनिर्ग्रहणासेवनाशिक्षां पठित्वा साधुधर्मे चरति । यदुक्तम्—

जयं चरे जयं चिट्ठे, जयमासे जयं सुए । जयं भुंजंतो भासंतो, पावकम्मं न बंधई ॥ १ ॥

एवं पवित्रं चारित्रं पालयामास तथा विशेषतः षष्ठाष्टमादितपः कृतवान् तस्य संख्या लिख्यते–

बहुप्राभृतपूर्वं सुव्रतः पादयोर्लग्नः, राज्ञाऽपि व्यतिकरः पृष्टः, सुव्रतेन कथितः वृत्तान्तः पुनः धर्मोपदेशं दत्वा राजा तोषितः, राज्ञा उक्तम्-वरं वृणु, तदा सुव्रतेन उक्तं-अवध्याश्चौरा इति । राज्ञा तथा स्वीकृते शासनदेव्या तलारक्षकाः चौराश्च मुक्ताः । श्रेष्ठिनाऽपि पारणकं कृतम् । पुनरपि एकदा दावानल इव समग्रं पुरं ज्वालनाय अग्निरुत्थितः, तदा नगरस्थः सर्वलोक इतस्ततः नष्टः किन्तु गृहीतपौषधः श्रेष्ठी स्वव्रतरक्षार्थं न कुत्रापि गतः, सर्वनगरमरण्यमिव ज्वलितं परन्तु सुव्रत श्रेष्ठिनो हट्ट-गृहादि किमपि न अज्वलत् । प्रातः काले समुद्रे द्वीप इव तस्य हट्टगृहादि वीक्ष्य सर्वेऽपि पौराः सुव्रतं प्रशंसयामासुः, यथा—

सत्त्वेन धार्यते पृथ्वी, सत्त्वेन तपते रविः । सत्त्वेन वायवो वान्ति, सर्वं सत्त्वे प्रतिष्ठितम् ॥१॥

अहो धर्मस्य माहात्म्यमस्याहो दृढता व्रते । पालयेद् व्रतमेवं यो, द्विधाऽप्यस्य शिवं भवेत् ॥२॥

यतः-धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं ॥ धर्मेणैव भवंति निर्मलयशो विद्यार्थसंपत्तयः ॥

कांताराच्च महाभयाच्च सततं धर्मः परित्रायते ॥ धर्मः सम्यगुपासितो हि भवति स्वर्गाऽपवर्गप्रदः ॥३॥

अथ एकादशीव्रते पूर्णे जाते श्रेष्ठी उद्यापनाय मुक्ताफलानि रत्नानि शंखः प्रवालकानि स्वर्णानि कलधौतानि ताम्राणि पित्तलानि त्रपूणि कांस्यानि पट्टकूलानि, बहुविधानि धान्यानि पक्वान्नानि, नालिकेर-द्राक्षासहकारादीनां फलानि, स्वर्ण-रूप्यकानां पुष्पाणि अशोकादीनां पुष्पाणि, इत्यादीनि अनेकानि वस्तूनि एकादशसंख्यया जिनेन्द्राग्रे ढौकयामास । एवं विस्तारेण उद्यापनं कृत्वा संघ-पूजनं साधर्मिकवात्सल्यादीनि सप्तक्षेत्र्यां धनवपनं च विधाय मानुषं जन्म कृतार्थं कृतवान् । अथैकदा वृद्धावस्थायां रात्रौ मनसि श्रेष्ठी चिन्तयति-मया जन्मपर्यन्तं श्रावकव्रतं पालितं मौनैकादशीतपोऽपि तदुद्यापनादिना पूर्णं कृतम्, अथ असारः संसारः पूर्वं पश्चाद् वा

विज्ञाय पुनरपि गुरुसमीपे आजन्म यावत् मौनैकादशीतपः उच्चचार। गुरुणा उक्तम्—एकादशांगानामाराधना कर्तव्या, सम्यक् तपः कार्यम्, पूर्वभवे एकादशीव्रतं कृत्वा निर्मलज्ञानमाप्तवान्, तदुद्यापनवशाच्च अत्र एकादशस्वर्णकोटयः प्राप्ताः, निर्मलं यशः, लोके प्रभुत्वम्, अधिकारित्वम्, नगरश्रेष्ठित्वम् च प्राप्तम्, अतएव तपसि उद्यमो विधेयः। एवमुक्त्वा धर्मलाभाशिषं दत्त्वा गुरवोऽन्यत्र विहृताः। अथ सुखेन सह कुटुम्बेन श्रेष्ठी एकादशीदिवसे प्रहराष्टकं आहारादित्यागरूपं पौषधं विदधाति। लोकेऽपि मौनैकादशीपर्वणः प्रसिद्धिर्मान्यता च जाता, यतः वृद्धमान्यं सर्वे मानयन्ति यथा महादेवेन भाले स्थापितत्वात् तत्कलामात्रमपि चन्द्रं द्वितीयादिने लोकाः पूजयंति एवं च अनेके लोका मौनैकादशीमाराधयन्ति। अथ एकदा सकुटुंबेन तेन श्रेष्ठिना मौनैकादशीतिथ्याम् अहोरात्रपौषधः कृतः पौषधग्राहिभिः सर्वैरपि रात्रौ कायोत्सर्गः कृतः। अथैकदा चौरैर्ज्ञातम् मौनैकादश्यां सुव्रतःश्रेष्ठी न ब्रूते अपह्रियमाणमपि वस्तु न पश्यति इति विचार्य चौरधाटी तद्गृहे प्रविष्टा उद्योतं (दीपकं) विधाय चौरा यावत् पश्यन्ति तावत् सर्वत्र पदे पदे स्वर्णराशिमेव पश्यन्ति, यावता गृण्हन्ति तावता शासनदेव्या सर्वे चौराः स्तम्भिताः, अतएव शासनदेवी पूज्यते कायोत्सर्गेणाऽऽराध्यते*। अथ प्रातःकाले स्तम्भितान् सायुधान् परद्रव्यहरणोद्यतान् चौरान् दृष्ट्वा लोकाः मीलिताः। तलारक्षकाश्च तान् वेष्टयित्वा स्थिताः। अथ सकुटुम्बः सुव्रतः स्थापनाचार्यसमीपे पौषधं प्रपाल्य उपाश्रयं गत्वा गुरून् नत्वा धर्मं श्रुत्वा गृहे समागतः, तत्र चौरान् दृष्ट्वा मा राजा चौरान् मारयतु इति बुद्ध्या श्रेष्ठिना मौनं कृतम्, ततः तलारक्षका अपि शासनदेव्या स्तंभिताः, अथ मध्यान्हे समागतो राजा,

---

* तान् स्तम्भितान् प्रात. तलारक्षको दृष्ट्वा भूपालसमीपे निनाय, राज्ञा वधाय आदिष्टाः, प्रातः श्रेष्ठी पौषधं पारयित्वा प्राभृतं लात्वा राज्ञः पार्श्वे गत्वा सर्वान् अमोचयत् इत्याद्यपि समुपलभ्यते पाठः।

रूपलावण्यसंयुक्ता, नरा जात्यादिसंभवः । विद्याहीना न राजन्ते, ततोऽमुं पाठयाम्यहम् ॥१॥
इति चिन्तयित्वा महामहैः पितरौ उपाध्यायसमीपे द्वासप्ततिकलाभ्यासं कर्तुं मुमुचतुः । अनायासेन सकला अपि कला अल्प-
काले एव पपाठ । षड्विधावश्यकसूत्रादिकं श्रावकाचारमपि पपाठ, प्राप्तयौवनस्य तस्य पिता—श्रीकान्ता, पद्मा. लक्ष्मीः पद्मलता, तारा,
रम्भा, पद्मिनी, गौरी, गांगेया, रतिः, इतिनाम्न्यः महर्द्धिकव्यवहारिणां एकादशकन्याः पारिणायिताः, ताभिः रूपलावण्यशालि-
नीभिः सह भोगान् भुञ्जानः दोगुन्दकसुर इवाभवत् । तदनंतरं तस्मिन् गृहभारं समारोप्य स श्रेष्ठी प्रव्रज्यां गृहीत्वा सम्यक्प्रपाल्य
प्रान्तेऽनशनं विधाय मृतः स्वर्गं च प्राप्तः। अथ गृहस्वामी सुव्रतः श्रेष्ठी पूर्वजन्मनि एकादशीमाराधितवान् तत एकादशस्वर्णकोटिनां
नायको जातः । तथा एकादशस्वर्णकोटीश्वरो दाता भोक्ता नगरश्रेष्ठिसुवर्णपट्टालंकृतभालो राजमान्यः सत्यवादी सर्वत्र विश्रुतो
अतिप्रतापी सज्जनश्रेष्ठः व्यापारिकशिरोरत्नं सुखेन कालं निनाय । अथ कालान्तरेण एकादशस्त्रीणामेकैकः पुत्रो जातः,
एवमेकादश पुत्राः, तत्परिवारोऽपि विपुलो जातः, अथान्येद्युः उद्याने धर्मघोषो मुनीश्वरः सपरिवारः समवसृतः, राजादयः सुव्रतश्च
वन्दितुं गताः गुरुणाऽपि तदानीं तपो महिमा व्याख्यातः—

यद् दूरं यद् दुराराध्यं, यच्च दूरे व्यवस्थितम् । तत् सर्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥ १ ॥

तत्रापि पञ्चमीतपसा ज्ञानपञ्चकस्यावाप्तिः, अष्टमीतपसाऽष्टकर्मनिषूदनम्, एकादशीतपसा एकादशांगानां सुखागमनम्, चतुर्दशीत-
पसा चतुर्दशानां पूर्वाणामागमनम्, पौर्णमासीतपसा संपूर्णागमनं एवं श्रुत्वा सुव्रतो मूर्च्छामापन्नो जातिस्मृत्या पूर्वभवं मौनैकादशीतपोविधानं

धातकीखण्डे इषुकारभूधरात् पश्चिमे दिग्विभागे विजय नाम पत्तनमस्ति, तत्र पृथ्वीपालो नाम राजाऽभूत्, तस्य च औदार्यचातुर्यशीलादिगुणशालिनी चन्द्रवती नाम प्रिया, तत्र च व्यवहारिशिरोमणिः प्रबलव्यापारोपार्जितबहुधनः षड्विधावश्यकरतः सत्पुत्रयुतो जिनभक्तिकारकः सूरनामा श्रेष्ठी। स च वृद्धावस्थायामेकदा गुरुसमीपमागत्य भक्त्या प्रणम्य उवाच—भगवान्! ईदृग्विधं धर्मं कथय येन स्वल्पेनाऽपि कर्मक्षयः स्यात्, गुरुणा एकादशीव्रतमादिष्टम्, अथ स गुर्वाज्ञया गृहमागत्य एकादशवर्षैकादशमासपर्यंतं* यावत् तपश्चकार, समाप्ते च व्रते तेन विधिपूर्वमस्या उद्यापनमपि कृतम्, अथ उद्यापनदिवसात् पञ्चदशे दिवसे आकस्मिकेन उदरशूलेन मृत्वा एकादशे आरण्ये देवलोके एकविंशतिसागरपरिमितायुः देवो जातः। देवलोकसुखमनुभूय ततश्च्युत्वा सौर्यपुरे समृद्धिदत्तव्यवहारिकगृहे प्रीतिमतीप्रियाकुक्षौ पुत्रत्वेनोत्पन्नः, तस्य नालस्थापनार्थं यदा गर्तं खनितुमारब्धं तदा गर्तखननस्थाने निधिर्निर्गतः, तद्वर्धापनिका सर्वत्र जाता, जाताऽऽह्लादः श्रेष्ठी महीयांसं जन्मोत्सवं दशदिवसपर्यन्तं कृतवान्। निवृत्तेऽशुचिकर्मणि प्राप्ते च द्वादशे दिवसे ज्ञातिबांधवान् भोजयित्वा गर्भस्थेऽस्मिन् मातुर्व्रतेच्छाऽभूदिति गुणनिष्पन्नं सुव्रत इति नाम कृतवान् पिता। न पुनर्मंगलादिवन्निरर्थकम्। उक्तं च—

भौमं मंगल वृष्टिनाम करणे, भद्रा कणानां क्षये ॥ वृद्धिः शीतलकाचदुष्टापिटके, राजारजः पर्वणि ॥
मिष्टत्वं लवणे विषे मधुरता, दग्धे गृहे शीतलं ॥ पात्रत्वं च पणाङ्गनासु गदितं नाम्ना परं नाथकम् ॥१॥

अथ पञ्चभिः धात्रीभिः लाल्यमानोऽसौ अवर्धत, अनुक्रमेणायम् अष्टवार्षिकः संजातः, तं पुत्रं वीक्ष्य तत्पित्रा चिंतितम्—

* लघिष्ठं मौनैकादशीव्रतमेकाद शमासपर्यन्तं मौनेन कृतवान् इत्यापि पाठः।

दिवसयोरेकभक्तं (एकवारं भोजनम्) कर्त्तव्यम्, पारणकदिवसे जिनगृहे गन्तव्यम्, जिनस्याग्रे फलानि उपढौक्य भावतः जिनार्चा कर्त्तव्या, ततो गुरुसमीपे गत्वा नत्वा ज्ञानपूजां विधाय साधूनां संविभागं कृत्वा पारणा कर्त्तव्या, एकादशवर्षैकादशमासपर्यन्तं यावत् व्रतं कर्त्तव्यम्, द्वादशे वर्षे व्रते पूर्णे पौषधं पारयित्वा गुरूनभिवन्द्य जिनदेवस्याग्रे एकादश पक्वान्नानि एकादश फलानि एकादशविधानि धान्यानि एवं सुन्दरं वस्तु एकादशसंख्यया उपढौकनीयम्, जघन्यतोऽपि एकादशश्रावकवात्सल्यम्, संघपूजा, एकादशांगपुस्तकलेखनम्, इत्यादि उद्यापनं कर्त्तव्यम्—अत्र कथानकम्—

एकदा ग्रामानुग्रामं विहरन् सर्वज्ञो भगवान् नेमिनाथो द्वारिकायां समवासरत् तं वन्दनार्थं श्रीकृष्णः समागतवान्, वन्दित्वा कृष्णोऽवोचत्--स्वामिन् ! षष्ठ्यधिकशतत्रयदिनमध्ये एकं सारं वासरं कृपां कृत्वा मम निवेदय यमाराध्य दानशीलतपोव्रतशक्तिहीनोऽप्यहम् निस्तीर्णो भवामि. भगवान् उवाच–यद्येवं तर्हि त्वं मार्गशीर्षशुक्लैकादशीमाराधय यतः—

अपि मिथ्यादृशां मान्या, सा मौनैकादशी तिथिः। मार्गशीर्षाह्वयमासस्य, शुक्लपक्षे प्रकीर्तिता ॥१॥
तत्र पुण्यं कृतं स्वल्पमपि प्रौढफलं भवेत्। तस्मादाराधनीया सा, विशेषेण विशारदैः ॥२॥
सर्वेभ्योऽपि च पर्वेभ्यः, पर्व पर्युषणाह्वयम्। दिनेभ्योऽप्यखिलेभ्योऽयं, तथा मुख्योऽस्ति वासरः ॥३॥
श्रमणैः श्रमणीभिश्च, श्रावकैः श्राविकादिभिः। धर्मकर्म विधातव्यमस्मिन् दिने विशेषतः ॥४॥

इति श्रुत्वा श्री कृष्ण उवाच–विभो ! पूर्वं केनाऽपि एकादशीव्रतमाचीर्णम् ? तस्य च कीदृशी फलप्राप्तिर्जाता ? स्वामी प्राह—

सन्मुखं गत्वा महताऽऽडम्बरेण श्रीयुगादिजिनबिम्बं रथे संस्थाप्य पूजास्नात्रमहोत्सवादिकरणेन महाकर्मराशिः दूरीक्रियते, महती पुण्यवृद्धिश्च भवति, तेनाद्य पर्वदिने पूजापौषधादिकरणेन दिवसः सफलः क्रियते ।

त्रिमुनिश्चाष्टभूवर्षे, [१८७३] दुर्गे च जेसलाभिधे ॥ गणिना जयसारेण, व्यलेखि शिष्यहेतवे ॥१॥

इति श्रीकार्त्तिकपूर्णिमायाः व्याख्यानं सम्पूर्णम् ॥२॥

## अथ मौनैकादशी व्याख्यानम् ॥ ३ ॥

अरस्य प्रव्रज्या नमिजिनपतेर्ज्ञानमतुलं, तथा मल्लेर्जन्म व्रतमपमलं केवलमलम् ।
वलक्षैकादश्यां सहसि लसदुद्दाममहसि, क्षितौ कल्याणानां क्षिपतु विपदः पञ्चकमिदम् ॥१॥

अर्थः—अरस्य-अरजिनस्य प्रव्रज्या-दीक्षा, नमिजिनपतेः-नमिनाथस्य अलतुम्-अनुपमं ज्ञानम्, तथा मल्लेः-मल्लिजिनस्य जन्म, अपमलम्-मलरहितं व्रतम्--दीक्षा, अलम्--सर्वद्रव्यगुणपर्यायप्रेक्षणे समर्थम्, केवलम्-केवलज्ञानं च; लसदुद्दाममहसि तेजोवति, सहसि--मार्गशीर्षमासे वलक्ष्यैकादश्यां—शुक्लैकादश्यां सञ्जातं कल्याणानां इमं पञ्चकं क्षितौ विपदः क्षिपतु ।

यथाऽस्मिन् भरते कल्याणानां पञ्चकं सञ्जातमेवं पञ्चसु भरतेषु पञ्चसु च ऐरवतेषु--क्षेत्रेषु मीलित्वा जातं पञ्चाशत् (५०) कल्याणानाम् । एवं भूतभाविवर्त्तमानकालाऽपेक्षया जातं सार्धशतं (१५०)। एकोपवासेऽपि सार्धशतोपवासफलं भवति । अस्मिन् दिने उपवासं कृत्वा मौनमाधाय अहोरात्रं पौषधं विधाय स्थेयम्, भणनं गुणनं विना नाऽन्यत् किमपि वक्तव्यम् । पारणकोत्तर-

द्विद्विकोटिपरिवारेण परिवृतौ फाल्गुनशुक्लदशम्यां नमिविनमी विद्याधरराजर्षी श्रीसिद्धशैले शिवपुरं गतौ, पुनः नमिविनमिराज्ञोः पुत्र्यश्चतुष्षष्टिः त्रिमलगिरौ चैत्रशुक्लचतुर्दश्यामनशनं कृत्वा शिवपुरीं प्राप्ताः, तेन शिवमन्दिरारोहणे सोपानसदृशो वाच्यः, पुनः पापमलपरिहरणे नीरवद् ज्ञेयः, तेन विमलगिरिरिति कथ्यते, पुनः पापारिगञ्जनेऽतीव शूरवद् ज्ञेयः। पुनर्येन नरभवं प्राप्य शत्रुञ्जये गत्वाऽऽदिजिनभक्तिपूर्वकं द्रव्यभावाऽर्चनं न कृतं तेन नरत्वं पशुरिव हारितम्, यस्तीर्थबुद्ध्या स्वहृदये संप्रधार्य श्रीशत्रुञ्जये गत्वा आदिजिनं नमति तस्य जीवितं सफलं स्यात्, स्तोककालमध्ये शिवसुखं प्राप्नोति। एवं गुरुमुखात् सिद्धगिरेर्महान्तं महिमानं श्रुत्वा सिद्धशैलपर्वतवन्दनार्थं पञ्चपञ्चकोटिमुनिपरिवारपरिवृतौ द्राविडवारिखिल्लौ वल्कलचीवरधारिणौ तापसौ स्वगुरोराज्ञां गृहीत्वा श्रीशत्रुञ्जयं प्रति चेलतुः, गुरुरपि अन्यत्र स्थाने विजहार। अथ द्राविडवारिखिल्लौ क्रमेण सपरिवारौ श्रीशत्रुञ्जयगिरौ आरोहणसमये एतादृशमवग्रहं जग्राह—यदाऽऽवयोः कर्मक्षयो भविष्यति तदाऽऽहारं ग्रहीष्यावः, एवं द्राविडवारिखिल्लौ चातुर्मासकालावग्रहमभिगृह्य श्रीशत्रुंजये चातुर्मास्यां तस्थतुः, भावतः साधुधर्ममंगीचक्रतुः, आत्मानं भावानुसारिणं प्रवर्तयन्तौ तपः तप्तवन्तौ, शुभध्यानयोगेन कर्मराशिदूरीकरणेन चातुर्मासीप्रान्तदिवसे प्रवर्तमाने कार्तिकशुक्लपौर्णमासीदिने क्षीणमोहेन त्रयोदशगुणस्थानकारोहणेन शुक्लध्यानेन ध्यायमानेन घनघातिचतुष्कर्मराशिक्षपणेन केवलज्ञानं केवलदर्शनं च तयोरुत्पन्नम्। चतुर्दशरज्जुलोकं ददृशतुः। बहुभव्यजीवान् प्रतिबोध्याऽऽयुष्कादिचतुष्कर्मराशिं क्षपयित्वा द्राविड—वारिखिल्लराजर्षी दशकोटिमुनिभिः सह मुक्तिपुरीं प्रापतुः, अचलाक्षयगतिं शिवं निरुपद्रवं पदं लब्धम्। तेन कार्तिकशुक्लपूर्णिमाऽतीवोत्तमा वर्तते, तस्माद् अद्य दिवसे श्रीशत्रुञ्जय—

क्रतुः, कन्दमूलाद्याहारं कुर्वन्तौ वल्कलचीवरं धारयतः, तपः करणेन कृशतनू जातौ । एवं बहुकालो गतः । अथास्मिन्नवसरे केचित् साधवस्तीर्थयात्राकरणार्थं मार्गे तत्रैव वने आगताः, द्राविडवारिखिल्लावपि तान् साधूनवलोक्य बह्वादरं दत्तवन्तौ, साधवोऽपि गमनागमनमालोच्य भूमिं प्रमार्ज्य तरोस्तले स्थिताः , द्राविडवारिखिल्लावपि मुखाग्रे उपविष्टौ, तस्मिन्नवसरे तरुशाखात एकश्चटको मुखाग्रे पतितः, तं चटकं स्तोकायुषं ज्ञात्वा मुनिना करुणां विचार्य नमस्कारः सुश्रावितः, विमलगिरेर्महिमा कथितः, तेन चटकेन मनसि धर्मोपदेशो दध्रे, तद्धर्मप्रभावात् प्रथमकल्पे देवो जातः, स देवः साधिकमुहूर्त्तान्तरे मुनीनां पार्श्वे आगत्य मुनीनां चरणानानम्य मुनीनामग्रे उपविष्टः, तस्मिन्नवसरे देवस्य महर्द्धिं रूपं चावलोक्य द्राविडवारिखिल्लौ मुनिं प्रति पप्रच्छतुः, हे स्वामिन् ! अयमत्यन्तरूपकान्तिधारकः कः सुरोऽस्ति ? तदा मुनिराह अयं चटको मृत्वा एतत्स्थानात् सुर उत्पन्नोऽस्ति, नमस्कारश्रवणेन तीर्थराजशत्रुञ्जयोज्ज्वलभावधारणेन चास्मिन् समये तीर्थराजमानस्य अत्रागतोऽस्ति । एतद्गुरुमुखान्निशम्य तौ पुनः पप्रच्छतुः—हे स्वामिन् ! स विमलगिरिः कीदृशोऽस्ति, किञ्च तन्माहात्म्यमित्यावयोरुपरि कृपां कृत्वा सुश्रावय, तदा मुनिराह—अस्मिन् जम्बूद्वीपे दक्षिणार्धभरते श्रीशत्रुञ्जयगिरिरष्टोत्तरशतनाम्नाऽलंकृतं महातीर्थमस्ति, पुनः शत्रुञ्जयः १ पुण्डरीकः २ सिद्धगिरिः ३ विमलगिरिः ४ सुरगिरिः ५ इत्यादिभिः एकविंशतिनामभिः लोके प्रसिद्धोऽस्ति, एष गिरिर्नामनिक्षेपेण निश्चलोऽस्ति, अनन्तकालापेक्षया सिद्धशैलोपरि अनन्ता मुनयो मुक्तिं गताः, पूर्वमपि सम्प्रतिनाम्नश्चतुर्विंशतितमजिनस्य प्रथमगणधरः कादम्बगिरिनामा मुक्तिं गतः, इहैव वर्तमानकाले प्रथमजिनस्य प्रथमगणधरः पुण्डरीकनामा चैत्रशुक्लपूर्णिमायां पञ्चकोटिमुनिभिः सह श्रीशत्रुञ्जये शिवपुरीं गतः । तेन पुण्डरीकगिरिरिति कथ्यते, पुनः

न्यमादाय सन्मुखं चचाल स्वस्वदेशसीमां च रुरोध। क्रमेणोभयभ्रातृबहुसेनासमुदायेन द्वादशवर्षं यावत् महायुद्धकरणे बहवो गजा अश्वा-मनुजा भूमौ पतिताः, रुधिरसरितः प्रचलिताः, एतादृशः संग्रामो जायते, तस्मिन् समये द्राविडराजा वनक्रीडाकरणार्थं वने जगाम, तद्वनमनेकाम्रनिम्बकदम्बादिगुल्मलतापत्रपुष्पफलवनद्धर्या विभ्राजमानं सरोनिर्झरणैः शोभितमेतादृशं वनं द्राविडराजा पश्यति, तस्मिन्नेव वनमध्यभागे तापसगणास्तपः कुर्वन्ति, ते परिव्राजका राज्ञा ददृशिरे। अश्वादुत्तीर्य तत्र पार्श्वे गत्वाऽभिवन्द्य स्वोचितस्थाने तस्थौ। तस्मिन्नवसरे एकेन तापसेन धर्मोपदेशो दत्तः, तन्मध्ये संसारासारताऽपि दर्शिता तदुक्तम्—

गयकन्नचंचलाए अपरिचित्ताए रायलच्छीए। जीवा सकम्मकलमलभरिय भारतो पडन्ति अहे ॥ १ ॥

इत्यादिधर्मोपदेशं श्रुत्वा संसारमसारं ज्ञात्वा क्रोधं त्यक्त्वा एवं मनसि चिन्तयति—अहो! मम जीवितं धिक्, एक एव मद्भ्राता तेन सहाहं युयुधे द्वादश वर्षाणि संजातानि, एतदनिष्टं कार्यं कृतं, स्तोकजीवनोपरि एतद् वैरं किं क्रियते? राज्यलोभाद् एतदनिष्टं कृतम्, एवं विचार्य द्राविडस्तापसाश्रमादुत्थाय स्वसहोदरापराधक्षामणार्थं वारिखिल्लसेनामध्ये आयाति तावद् वारिखिल्लो बृहद्भ्रातुरागमनवृत्तान्तं श्रुत्वा सन्मुखमागत्य चरणयोर्निरपतत्, स च द्राविडो बाष्पपूर्णनयनः स्नेहार्द्रहृदयस्तमुत्थाप्य इति जजल्प—हे भ्रातः! एतत् सर्वमपि राज्यं त्वं गृहाण अहं तापसीं दीक्षां ग्रहीष्यामि, तदा वारिखिल्ल इत्युवाच—अहमपि राज्यपदं न ग्रहीष्यामि, एतद्वचनपरस्परालापनां कृत्वा स्वस्वपुत्राभ्यामर्धार्धं राज्यं विभज्य दत्त्वा स्वस्वापत्यं स्वस्वस्थाने प्रेषितवन्तौ, तौ पुत्रावपि स्वं स्वं राज्यं बुभुजाते। अथ द्राविडवारिखिल्लावपि पञ्चपञ्चकोटिक्षत्रियपरिवारेण परिवृतौ तापसाश्रमे गत्वा तापसपार्श्वे तापसीं दीक्षां जगृहतुः, आतापनां च-

लक्षपूर्वाणि व्यतीतानि तदा स्वामी राज्यभोक्ता जातः क्रमेण त्रिषष्टिपूर्वलक्षवर्षं राज्यं प्रपाल्य दीक्षाऽवसरं ज्ञात्वा भरताय स्वमूलराज्य विनीता दत्ता बाहुबलाय तक्षशिला च प्रदत्ता, एवं क्रमेण शतपुत्रेभ्यो राज्यं वासयित्वा स्वस्वनाम्ना देशाः प्रदत्ताः । तन्मध्ये एको 'द्रविड' इत्यभिधानः, तस्य द्रविडदेशे कञ्चनपुरनगरं च वासयित्वा ददौ । स्वामी दीक्षां ललौ । क्रमेण कर्मक्षये केवलज्ञानमुत्पन्नम् । अथ भगवाननेककोटाकोटीदेवपरिवारेण परिवृतः साधुसाध्वीसमुदायेन सह देशेषु विहृत्य धर्मवृद्धिं चकार । अथ द्रविडराजाऽपि पितृदत्तं राज्यं बुभुजे, स्वनारीभिः सार्धं विषयसुखमनुभवतस्तस्य क्रमेण द्वौ पुत्रौ बभूवतुः, बृहत्पुत्रो द्राविडः अपरो वारिखिल्लो लघिष्ठः, क्रमेण भोगसमर्थौ ज्ञात्वा उभयपुत्रौ प्रति भार्याः विवाहिताः । तावपि विषयसुखं बुभुजाते, तत्तद्भार्ययाऽपि पुत्राः प्रसूताः, तेऽपि चन्द्रकलेव ववृधिरे, एवं द्रविडराजा स्वराज्यं सुखेन प्रपालयति स्म । अथ तस्मिन्नवसरे भरतेन स्वाज्ञापालनार्थमष्टनवतिभ्रातृपार्श्वे दूतो मुमुचे, तदा द्रविडराजा दूतमुखात् सर्वं भरतस्य चक्रवर्तिपदस्वरूपं ज्ञात्वा एवं सर्वेऽपि संमील्य स्वस्वपुत्रं राज्यं ददौ, तदा द्रविडराजापि द्राविडवृहत्पुत्राय राज्यं प्रददौ । कनिष्ठाय वारिखिल्लाय च एकलक्षग्रामान् पृथग् ददौ, स्वयञ्च संसारवासनां परित्यज्य दीक्षां गृहीत्वा यथेच्छं पर्यटन् श्रीऋषभदेवजिनपार्श्वे तपस्तप्त्वा कैवल्यं प्राप । अथ द्राविडः पित्रा दत्तं स्वराज्यं वारिखिल्लोऽपि पितृदत्तस्वराज्यं लक्षग्रामान् प्रपालयति स्म । कानिचिद् वर्षाणि गतानि । तस्मिन्नवसरे द्राविडराजा स्वमनसि एवं चिन्तयति स्म, मत्पित्रा दीक्षावसरे मल्लघुभ्रातरं प्रति लक्षग्रामं दत्तं तद्भव्यं न कृतम्, मद्राज्यन्यूनता कृता, परमहमेतद्राज्यमुद्दाल्य ग्रहीष्यामि । एतद् विचिन्त्य स्वसैन्यं सम्मील्य युद्धार्थं चचाल । तदा वारिखिल्लोऽपि भ्रातुरागमनवृत्तान्तं श्रुत्वा स्वसै-

## अथ कार्तिकपूर्णिमायाः व्याख्यानम् ॥ २ ॥

श्रीसिद्धाचलतीर्थेशं, नत्वा श्रीऋषभं प्रभुम् । कार्तिकी पूर्णिमायाश्च, व्याख्यानं वक्ष्यते मया ॥ १ ॥
सिज्झो विज्जायरचक्की नमी विनमी मुणि पुंडरिओ मुणींदो । वाली पज्जुन्नसंबो भरहसुगमुनि सेलगो पंथगो य ।
रामो कोडी पंच दविडनरवई नारदो पण्डुपुत्ता । मुत्ता एवं अणेगे विमलगिरिमहं तित्थमेयं नमामि ॥ २ ॥

व्याख्या—भो भव्याः ! एतादृशं पापकर्ममलपरिहारकं श्रीविमलाचलतीर्थं मनोवाक्कायैर्नमामि, तद् विमलाचल तीर्थं कीदृशम् ? यद् यस्मिन् तीर्थोपरि विद्याधरः चक्री-भरतः-नमी-विनमी-शुक-शैलक-पंथक-रामचन्द्र-द्राविड—वारिखिल्ल-नवनारद-पाण्डव-पुण्डरीकाद्या अनशनं विधाय, अष्ट कर्मारीन् हत्वा मुक्तिं गताः, एतादृशं सिद्धशैलं तीर्थं मनोवाक्काययोगेन नमामि । पुनरस्मिन् कार्त्तिकपूर्णिमाऽऽगमने श्रीशत्रुञ्जयगिरिसन्मुखदिशं गत्वा चैत्यवन्दनकरणे महती धर्मवृद्धिर्भवति, पुनरस्मिन् कार्त्तिकपूर्णिमाया दिने श्रीसिद्धशैले द्राविड-वारिखिलौ आरोहणेन शिवपुरीं प्राप्तौ, तद् दृष्टान्तो यथा—

अस्मिन् जम्बूद्वीपे दक्षिणभरतार्द्धस्य मध्यखण्डे इक्ष्वाकुभूम्यामस्मिन्नवसर्पिण्यां पूर्वं सप्तमः कुलकरो नाभिनामा बभूव, तद्भार्या मरुदेवी, तस्या उदरकन्दरायां श्रीप्रथमतीर्थंकरश्रीऋषभजिनः उत्पन्नः स षट्पूर्वलक्षाणिकुमारपदे स्थितः तदनन्तरमिन्द्रेण सुनन्दा सुमङ्गला परिणायिते, स्वामिनः संसारव्यवहारो वर्तते स्म, क्रमेण भरतबाहुबल्याद्याः शतं पुत्राः द्वेपुत्र्यौ अभूवन्, यदा विंशतिल-

रूपं-वर्ण्यते-तस्यास्तपः प्रभावात् सर्वेऽपि रोगा दूरं गताः, अद्भुतं रूपं जज्ञे, सा च जिनचन्द्रेण परिणीता, करमोचनवेलायां पित्रा बहुधनं दत्तम्, चिरकालं गृहसौख्यं भुक्त्वा यावज्जीवं पञ्चमीतपः कृत्वा प्रान्ते चारित्रमग्रहीत्, तौ गुणमञ्जरी-वरदत्तौ जिनोदितं चारित्रं प्रपाल्य कालं कृत्वा वैजयन्तविमाने सुरोत्तमौ जातौ । ततश्च्युत्वा वरदत्तजीवो महाविदेहे पुण्डरीकिण्यां नगर्याममरसेन राज्ञः स्त्री गुणावती, तस्याः पुत्रत्वेन समुत्पन्नः । शुभेऽन्हि तस्य शूरसेन इति पित्रा नाम कृतम् । क्रमेण यौवनं प्राप्तः कन्यकानां शतमुपयेमे, पित्रा स्वराज्ये स्थापितः। एकदा श्रीसीमन्धरस्वामी विहरन्तस्तत्र समागतः। अर्हदागमनं श्रुत्वा शूरसेनो वन्दनार्थमगमत् । भगवता धर्मदेशना प्रारब्धा, तत्र सौभाग्यपञ्चम्यास्तपसः फलं प्रकाशितम्. ततो राज्ञा पृष्टम्-भगवन् ! केनाऽपि तपसः फलं प्राप्तम् ? तदा भगवता वरदत्तनृपदृष्टान्तः कथितः, तत् श्रुत्वा जातजातिस्मृतिः सन् पूर्वभवं ददर्श, पुनः तद्व्रतं जग्राह, दशसहस्रवर्षं राज्ये स्थित्वा तीर्थंकरपार्श्वे संयममग्रहीत्, वर्षसहस्रं दीक्षां प्रपाल्य केवलज्ञानं प्राप्य मोक्षं प्राप । अथ गुणमञ्जरीजीवो सुखं भुक्त्वा रमणीयाख्ये विजये शुभायां नगर्याममरसिंहाभिधनृपपत्न्या अमरावत्याः कुक्षौ पुत्रत्वेन समुत्पन्नः, समये जाते च पित्रा सुग्रीव इति नामस्थापनं कृतं, क्रमेण यौवनं प्राप्तो बह्वीनां कन्यानां पाणिग्रहणं च चकार, विंशतितमे वर्षे पित्रा राज्यं दत्त्वा स्वयं दीक्षा गृहीता, सुग्रीवो राजा बहूनि वर्षाणि राज्यं प्रपाल्य अन्ते गुरुपार्श्वे दीक्षां गृहीत्वा पूर्वलक्षं चारित्रं प्रपाल्य केवलमुत्पाद्य मोक्षं जगाम ।

जायन्तेऽधिकसौख्यानि, पञ्चम्याराधनान् नृणाम् । इत्यस्या अभिधा जज्ञे, लोके सौभाग्यपञ्चमी ॥ १ ॥
एवं विभाव्य भो भव्याः ! पञ्चम्याराधनोद्यमः । भवभीतिविभेदाय, कार्यो युष्माभिरद्भुतः ॥ २ ॥

इति कार्तिकसौभाग्यपञ्चमीमाहात्म्यविषये वरदत्त-गुणमञ्जरी कथानकं सम्पूर्णम् ॥ १ ॥

हृदि चिंतयामास—कृतपुण्यो मम बृहद्भ्राता मूर्खत्वात् तस्मै प्रष्टुं कोऽपि न याति, स्वैरं भुङ्क्ते भाषते शेते च, अत एव मूर्खे बहवो गुणाः सन्ति, यतः—

मूर्खत्वं हि सखे! ममापि रुचितं तस्मिन् यदष्टौ गुणाः। निश्चिन्तो बहु भोजनोऽ१ त्रपमना २ नक्तं दिवा शायकः।
कार्याऽकार्यविचारणान्धबधिरो मानापमाने समः। प्रायेणाऽऽ ३ मयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥१॥

इति। अतः परं न कस्मै पदमात्रमपि कथयिष्यामि नवं पदं च न पाठयिष्यामि इति विचार्य शरीरे रोगाऽऽक्रान्तो द्वादश दिवसान् मौनेन निनाय। तत्पातकमनालोच्य आर्तध्यानपरो मृत्वा, राजन्! तव सुतो जातः पूर्वोपार्जितेन कर्मणा अतीव मूर्खः कुष्ठादिरोगाऽऽक्रान्ततनुश्च बभूव। एतद् गुरोर्वचनं श्रुत्वा वरदत्तो जातिस्मृत्या निजपूर्वभवं दृष्ट्वा मूर्च्छां प्राप, क्षणान्तरे स्वस्थीभूय सर्वं सत्यमिति गुरुं प्रति—उवाच। पुनरपि नृपो बभाण—भगवन्! स देहरोगः कथं कदा व्रजिष्यति? । गुरुणा उक्तम्—कार्त्तिकशुक्लपञ्चमी आराध्या। पूर्वोक्तः सर्वोपि विधिः कथितः, प्रतिपन्नं कुमारेण पञ्चमीतपः, गुरुं प्रणम्य सर्वेऽपि स्वस्वस्थानं जग्मुः, अनन्तरं सम्यक् तत्तपः कुर्वतो तपः प्रभावात् वरदत्तस्य सर्वेऽपि रोगाः क्षयं प्रापुः, स्वयंवरसमेतानां वरभूपोद्भवानां सहस्रकन्योत्तमानां स महोत्सवं पाणिग्रहणं च चकार। शिक्षिताशेषसत्कलाय वरदत्ताय राज्यं दत्त्वा नृपो गुरुसन्निधौ चारित्रमग्रहीत्। वरदत्तो राज्यं पालयन् वर्षे वर्षे महाशक्त्या पञ्चम्या विधिं विदधे। अखंडाऽऽज्ञो राज्यं प्रपाल्य भुक्तभोगः स्वसूनवे राज्यं दत्त्वा स्वयं दीक्षामग्रहीत्। अथ—गुणमञ्जर्यास्तपोमाहा—

---

१ लज्जारहितमानस। २ रात्रौ। ३ रोग रहित।

धूपोत्क्षेपपूर्वकं पञ्चवर्णानि धान्यानि पञ्चपक्वान्नानि पञ्चफलानि च ढौकयन्ते । ततो गुरोरग्रे गत्वा भक्त्याऽभिवन्द्य यथाविधि उपवासस्य प्रत्याख्यानं क्रियते । तस्मिन् दिने ' नमो नाणस्स ' इति पदमेकसहस्रसंख्या * उत्तराभिमुखेन गुण्यते । चेत् पौषधः क्रियते तदा तद्दिने अयं विधिर्न भवेत् तस्मात् पारणकादिने विधिः कार्यः, यथाशक्ति उद्यापनादि अपि विधेयम् । ततो गुणमञ्जर्या तत् तपः प्रतिपन्नम् । अस्मिन्नवसरे राजा पृच्छति–हे साधुपुरन्दर ! मत्सूनोः वरदत्तस्य कुष्ठरोगः कथमभवत् ? पठनं च किं नाऽऽयाति ? तस्य किं कारणम् ? गुरुर्जगाद–अस्यापि पूर्वभवं शृणु—जम्बूद्वीपे भरतक्षेत्रे श्रीपुरं नाम नगरम्, तत्र वसुनामा श्रेष्ठी वसति स्म, तस्य वसुसार–वसुदेवौ पुत्रौ, तौ एकदा क्रीडार्थं वने जग्मतुः, तत्र वने मुनिसुन्दरनामानः सूरयो दृष्टाः वन्दिताश्च । गुरुभिर्धर्मदेशना प्रारब्धा—

यत्प्रातः संस्कृतं धान्यं, मध्यान्हे तद् विनश्यति ॥ तदीयरसनिष्पन्ने, काये का नाम सारता ॥ १ ॥

इत्यादिदेशनां श्रुत्वा तातमापृच्छ्य वैराग्यात् तौ व्रतं जगृहतुः । लघुना वसुदेवेन चारित्रं बिभ्रता सिद्धान्तसारः सर्वोऽपि अधीतः, गुरुणा वसुदेवाय सूरिपदं दत्तम्, स च पंचशतसाधुभ्यो वाचनां ददाति । एकदा वसुदेवसूरीश्वरो रुजाऽऽक्रान्तः संस्तारके सुप्तः तं कोऽपिसाधुरागमार्थं पृच्छति, गुरुर्व्याख्यायति, तस्मिन् गते द्वितीयो मुनिः समागतः तस्मै वाचना दत्ता, एवं भूयस्तु समागत्य समागत्य गतेषु किञ्चिन्निद्रायमाणः केनाऽपि साधुना पृष्टो भगवन् ! अग्रेतनं पदं वाच्यं पदस्यार्थोऽपि वाच्यः । तदा सूरिः कुविकल्पान्

---

* अष्टोत्तरैकसहस्रसंख्या इत्यापि क्वापि क्वापि उपलभ्यते पाठः, तत्त्वतस्तु अयमेव श्रेयान् प्रतिभाति । क्वापि च द्विसहस्राष्टोत्तरशतमित्यपि ।

मूर्खा एव रक्षिताः, अतः कोऽपि कन्यां न ददाति, सा उवाच—तव पिता पापिष्ठः येनैवं मूढमतिना शिक्षितोऽसि यतः—

आः! किं सुन्दरि! सुन्दरं न कुरुषे?, किं नो करोषि स्वयं?, आः! पापे! प्रतिजल्पसि प्रतिपदं?, पापस्त्वदीयः पिता।
धिक् त्वां क्रोधमुखीमलीकमुखरां त्वत्तोऽपि कः कोपनो, दम्पत्योरिति नित्यदंतकलहक्लेशार्तयोः किं सुखम्? ॥१॥

एतद्वचनमाकर्ण्य रुष्टेन जिनदेवेन उपलेन सा शिरो मर्मणि जघ्ने। तदा सा मृता, सा च तव-पुत्री समजायत, अनया ज्ञानस्याऽऽशातना पूर्वभवे चक्रे, तेन रोगोत्पत्तिर्जज्ञे, यतः—

कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥ १ ॥

इति गुरोर्वचनं श्रुत्वा सा गुणमञ्जरी जातजातिस्मृत्या पूर्वभवं ददर्श। ततो गुरुं प्रति सा सत्यमिति प्रोवाच। श्रेष्ठिना गुरुः पृष्टः—भगवन्! अस्या रोगाः कथं प्रयास्यन्ति? । गुरुणाऽभाणि—श्रेष्ठिन्! ज्ञानस्याऽऽराधनतः सर्वं सुखं सम्पद्यते दुःखं च विलयं याति। ज्ञानस्य चाराधनमित्थम्—विधिना शुक्लपञ्चमीदिने उपवासो विधीयते, पुस्तिका पट्टे संस्थाप्य पुरः स्वस्तिकः क्रियते, पञ्चवर्तिमयो दीपश्च क्रियते, पञ्चफलानि पञ्चवर्णकं च धान्यं ढौक्यन्ते, पञ्चवर्षाणि पञ्चमासान् यावत् पञ्चमी अनया रीत्या मनोवाक्कायशुद्ध्या समाराधनीया। यदि मासे मासे कर्तुं न शक्यते तदा कार्तिकमासस्य शुक्लपञ्चमी यावज्जीवमाराधनीया। सा सम्यगाराधिता सर्वं सुखं दत्ते, इति गुरुवचनं श्रुत्वा जिनदेवोऽब्रवीत्—भगवन्! मम तनयायास्तपस्या-शक्तिर्न विद्यते, अतः कार्तिकपञ्चम्या विधिरादिश्यताम् वाचंयमः प्रोचे—कार्तिकशुक्लपञ्चमीदिने पुस्तकं पट्टे संस्थाप्य सुगन्धपुष्पैः संपूज्य

इत्यादिदेशना श्रुत्वा सिंहदासश्रेष्ठी मुनिं जगौ–भगवन् ! केन कर्मणा मम सुतातनौ रोगा जाताः ? । गुरुणा ऊचे–महाभाग ! कर्मणा किं न संभवेत ? । अत्र श्रेष्ठिन् ! अस्याः पूर्वभवः श्रूयताम्—धातकीखण्डमध्यस्थभरते खेटकनामनगरम्, तत्र जिनदेवनामा श्रेष्ठी, सुन्दरीनाम्नी च तस्य गेहिनी, तयोः पञ्च पुत्राः-आशपालः, तेजपालः, गुणपालः, धर्मपालः, धनसार इतिनामानोऽभूवन् । तथा–लीलावती, शीलावती, रङ्गावती, मंगावती, इतिनाम्न्यश्चतस्रश्च पुत्र्योऽभूवन् । अथैकदा जिनदेवेन पञ्चापि तनयाः पण्डितसमीपे विद्याकलाग्रहणार्थं स्थापिताः । ते च चापल्यं कुर्वन्ते परन्तु अध्ययनं न कुर्वन्ति, यदा पण्डितस्तान् कम्बया ताडयति तदा ते रुदन्तो गृहमागत्य मातुः समीपे दुःखं निवेदयन्ति, माता–उवाच–पठनेन किं प्रयोजनम् ? यतः–

पठितेनाऽपि मर्तव्यं, शठेनाऽपि तथैव च । उभयोर्मरणं दृष्ट्वा, कण्ठशोषं करोति कः ? ॥ १ ॥

पण्डितस्यापि उपालम्भं दत्ते ईर्ष्यया च पुस्तिकां प्रज्वालयामास । पुत्रान् वक्ति, पठनार्थं भवद्भिर्न गन्तव्यम् । श्रेष्ठी एतद्व्यतिकरं ज्ञात्वा प्रोवाच—हे भद्रे ! जडेभ्यः-पुत्रेभ्यः कः कन्याः प्रदास्यति ? कथं चैते व्यवसायं करिष्यन्ति ? यतः–

माता वैरी पिता शत्रुर्बालो येन न पाठितः । न शोभते सभामध्ये, हंसमध्ये बको यथा ॥ १ ॥

विद्वत्त्वं च नृपत्वं च, नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते ॥ २ ॥

इति श्रेष्ठिवचनं श्रुत्वा सा प्रोवाच–यूयं किं न पाठयथ ? अत्र मम को दोषः ? इत्युक्ते श्रेष्ठी हक्कितः सन् मौनं चकार । अथ अनुक्रमेण ते पंचापि तयोः पुत्राः यौवनं प्रापुः, परं न कोऽपि तेभ्यो कन्या दत्ते मूर्खत्वात्, ततः श्रेष्ठी स्त्रीं ति जगौ–पापिष्ठे ! त्वया पुत्रा

तयोः रूपलावण्यशोभनो वरदत्तनामा पुत्रो बभूव । सोऽष्टवर्षप्रमाणः पित्रा बुधान्तिके विद्याग्रहणहेतवे स्थापितः । परमक्षरमात्रं तस्य मुखे न चटति, अध्यापकस्योद्यमो निष्फलोऽभूत् । स यौवनं प्राप्तः पूर्वकर्मोदयात् कुष्टेन विनष्टदेहत्वात् कुत्रापि रतिं न प्राप । इतश्च तत्रैव पुरे सप्तकोटिसुवर्णाधीशो जिनधर्मरतः प्रसिद्धिभाक् सिंहदासो नाम श्रेष्ठी, तस्य गृहे गुणोचिता कर्पूरतिलका-नाम्नी भार्या, तयोः पुत्री गुणमञ्जरी आजन्मतो रोगैरुपद्रुता वचनेन मूकतां प्राप्ता बभूव । विविधैरौषधैरपि तस्या रोगशान्तिर्न जायते न च यौवने तां कोऽप्युद्वहति । तस्याः षोडशवार्षिक्या दुःखेन मातापित्रादिः सकलस्वजनो दुःखितः समजायत । तत्रैव पुरे एकदा श्रीविजयसेन-सूरयश्चतुर्ज्ञानधरा गुरवः समाजग्मुः । तदा सर्वेऽपि नागरिकलोकः, सपुत्रो भूपतिः, सकुटुम्बः सिंहदासश्रेष्ठी सर्वे वन्दनार्थमुपगताः, गुरुणा च धर्मदेशना प्रारब्धा—

ज्ञानस्याराधने यत्नोऽध्ययनश्रवणादिभिः । भव्यैर्विधेयः सततं, निर्वाणपदमिच्छुभिः ॥ १ ॥
विराधयन्ति ये ज्ञानं, मनसा ते भवान्तरे । नराः स्युः शून्यमनसो, विवेकपरिवर्जिताः ॥ २ ॥
विराधयन्ति ये ज्ञानं, वचसापि हि दुर्धियः । मूकत्वमुखरोगित्वदोषास्तेषामसंशयम् ॥ ३ ॥
विराधयन्ति ये ज्ञानं, कायेनायत्नवर्तिना । दुष्टकुष्ठादिरोगाः स्युस्तेषां देहे विगर्हिते ॥ ४ ॥
मनोवाक्काययोगैर्ये, ज्ञानस्याऽऽशातनां सदा । कुर्वन्ते मूढमतयः, कारयन्ति परानपि ॥ ५ ॥
तेषां परभवे पुत्रकलत्रसुहृदां क्षयः । धनधान्यविनाशश्च तथाऽऽधिव्याधिसंभवः ॥ ६ ॥ युग्मम् ॥

ॐ श्रीपंचपरमेष्ठिभ्यो नमः ।

श्रीमत्क्षमाकल्याणकोपाध्यायादिविरचितः—

# श्रीसौभाग्यपंचम्यादि-पर्वकथा-संग्रहः ।

## अथ ज्ञानपञ्चम्यव्याख्यानम् ॥ १ ॥

श्रीमत्पार्श्वजिनाधीशं,सुराऽसुरनमस्कृतम् । प्रणम्य परया भक्त्या, सर्वाभीष्टार्थसाधकम् ॥ १ ॥
कार्तिकशुक्लपञ्चम्या, माहात्म्यं वर्ण्यते मया । भव्यानामुपकाराय, यथोक्तं पूर्वसूरिभिः ॥ २ ॥ युग्मम् ॥
भुवने हि परं ज्ञानं, ज्ञानं सर्वार्थसाधकम् । अनिष्टवस्तुविस्तारवारकं ज्ञानमीरितम् ॥ ३ ॥
ज्ञानादासाद्यते मुक्तिर्ज्ञानात् स्वर्गोद्भवं सुखम् ॥ लभन्ते प्राणिनो यस्मात्, तज्ज्ञानं स्वर्द्रुमोपमम् ॥ ४ ॥
भव्यैरासाद्यते ज्ञानं, पञ्चम्याराधनाद् ध्रुवम् । अतः प्रमादमुत्सृज्याऽऽराध्या सा विधिना तथा ॥ ५ ॥
मञ्जरीवरदत्ताभ्यां, यथैवाराधिता किल । पञ्चमी भावतोऽथात्र दृष्टान्तः प्रोच्यते तयोः ॥ ६ ॥ युग्मम् ॥

अस्त्यत्र जम्बूद्वीपे दक्षिणार्धभरतक्षेत्रे पद्मपुराभिधं नगरम्, तत्र भुवि विश्रुतोऽजितसेनो नृपो बभूव, तस्य च यशोमती पट्टराज्ञी,

२ ईंधन के काम आने वाली सूखी हुई पतली-पतली व छोटी-छोटी काटेदार टहनिया या टहनियो का समूह ।

झुरकौ-स०पु०—ऊंट की चाल विशेष । उ०—वटाऊ बैठा आड पिलाण, ऊठडा मारग झुरकै जाय । सुणीजै फुरणी मूरी ढील, मोद सू मूमल-रूप सराय ।—साफ

झुरटियौ-स०पु०—नखक्षत, खरोच (अल्पा.)

झुरडणौ, झुरडवौ क्रि०स०—१ नाखूनो से खुजली मिटाने के लिये हाथ को बार-बार शरीर पर फेरना २ खरोचना, कुरेदना ३ वृक्ष की टहनी को हाथ मे पकड कर उसके पत्ते सूत लेना, हाथ की रगड से पत्तिया दूर करना. ४ किसी को तग करना, कष्ट पहुँचाना ।

झुरडणहार, हारौ (हारी), झुरडणियौ—वि० ।

झुरडिग्रोडौ, झुरडियोडौ, झुरडचोड़ौ—भू०का०कृ० ।

झुरड़ीजणौ, झुरडीजवौ—कर्म वा० ।

झुरडियोडौ-भू०का०कृ०—१ नाखूनो से खुजली मिटाने के लिये हाथ को बार-बार शरीर पर फेरा हुआ २ खरोचा हुआ, कुरेदा हुआ. ३ हाथ की रगड से टहनी की पत्तिया दूर किया हुआ. ४ किसी को तग किया हुआ, कष्ट पहुँचाया हुआ ।

(स्त्री० झुरडियोडी)

झुरणी—देखो 'झुरनी' (रू भे)

झुरणौ-स०पु०—वियोगजनित दुःख, विलाप, रुदन ।

उ०—इसडा तौ झुरणा ये जीण सगती झुरती, गई गई कोस दोय च्यार ।—लो गी

झुरणौ, झुरवौ-क्रि०अ०स०—१ बहुत दुखी होना, शोक करना ।

उ०—१ झुरै इम रगरेजणी, कूडा ठाकुर काय । वसन सती घण रंगता, दीधी आस छुडाय ।—वी स

उ०—२ मारू जाता चाकरी, करग्या कोल करार । मावण सुरंगी तीज नै, आवागा घर-नार । सावण सुरगो बीतग्यौ, गयी रे नुहेली तीज, पिव विन झुर झुर मैं मरू, उभळै म्हारौ हीव ।—लो गी.

२ बेचैन होना, विकल होना । उ०—जिणि दीहै पाळउ पडइ, टापर तुरी सहाइ । तिणि रिति बूढी ही झुरइ, तरुणी केम रहाइ ।
—ढो मा

३ बिलखना, सुबकना । उ०—इहि जोडा उणिहार, जगणी फिर जाया नही । निकमी नाजुक नार, झुरती रैंगी जेठवा ।—जेठवा

४ रुदन करना, विलाप करना, प्रलाप करना ।

उ०—१ निरखै मिळै झुरै रघुनायक, सुण सुण वायक सारा । जोधा अमर बिया जड जगम, व्याकुळ हुआ विचारा ।—र रू.

उ०—२ पडी चाकरी चूक घणी जद घणौ रिसायौ । झुरती कामण छोड रामगिरि यक्ष सिधायौ । जनक सुता रै स्नान जेय री निरमळ पांणी । गहरी बिरछा-छाह जाय न कदै वखाणी ।—मेघ.

उ०—३ झुरै भ्रिगनयणी झुरै, मेह तणी रुत मोरा । जोगण पूठ दिया सायजादी, घूमर ऊपर घोरा ।—अमरसिंह राठौड री वात

५ कल्पना, आँसू बहाना ।

६ रोग, अधिक परिश्रम या
होना, दुर्बल होना, घुलना ।
रह्यौ परदेस । झुर-झुर नै पी
उ०—२ ईयै गोरवधियै रै
रे, म्हारी गोरवध लूवाळी ।-

७ झूमना, लटकना । उ०—
वाड । चातक झुर रह्यौ मेघ
८ याद करना, स्मरण करना
हजारा, रीझा दियण सिरै द
पाड लियौ दिखण्या पतसाह ।
उ०—२ वीणा जंतर तार, घ
गंवार, जात न झीकू जेठवा ।-
उ०—३ ना घर आवै पीवर्ज
कामणी, जाडो जहर लखात ।
झुरणहार, हारौ (हारी), झु
झुरवाडणौ, झुरवाडवौ, झुरव
झुराड़णौ, झुराडवौ, झुराणौ,

झुरिग्रोडौ, झुरियोडौ, झुरचो
झुरीजणौ, झुरीजवौ—भाव व
झूरणौ, झूरवौ—रू०भे० ।-

झुरनी-स०स्त्री०—१ प्रायः कि
टहनियो से झूम-झूम कर पृथ्व
जाने वाला एक खेल. २ इस
का एक डडा ।
क्रि०प्र०—आणी, खेलणी, द
रू०भे०—झुरणी ।

झुरमट—देखो 'झुरमुट' (रू भे.

झुरमटियौ—देखो 'झुरमुट' (अ

झुरमुट-स०पु०—१ झाड, पत्ते
जिससे कोई स्थान ढक जाय
रहे २ झुड, समूह (मा.
शरीर को चारो ओर से ढक
...भे०—झुरमट ।
...ल्पा०—झुरमटियौ, झुरमु

झुरमुटियौ—देखो 'झुरमुट' (

झुररी-स०स्त्री०—किसी व
शिकन ।

झुरगौ-स०पु०—नेत्रो के आं

# इति श्रीसौभाग्यपञ्चम्यादि पर्वकथा संग्रहः

पुस्तकें मिलने का पताः—
श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय
जैन प्रिंटिंग प्रेस
कोटा ( राज. )

# श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय

से प्रकाशित सस्ती–सुन्दर और मनोहर पुस्तकें:—


| | | | |
|---|---|---|---|
| ६. बृहत्पर्युषणा निर्णय | भेंट | २५. गौतमपृच्छासार | भेंट |
| ७. षट् कल्याणक निर्णय | ,, | २८. चतुर्विंशति जिनेन्द्र स्तवनानि | ,, |
| ८. आत्मभ्रमोच्छेदनमानुः | ,, | २६. सामायिक जिनदर्शन विधिः | ,, |
| १०. आगमानुसार मुहपत्तिका निर्णय | ,, | ३०. चतुर्विंशति जिनस्तुतिः | ,, |
| १३. कल्पसूत्र हिन्दी भावार्थ | ३) | ३१. राईदेवसी प्रतिक्रमणमूल | ,, |
| १४. दसवैकालिक सूत्र-मूल-मूलार्थ | १) | ३३. आत्म भावना | ,, |
| १६. संस्कृत पर्वकथा संग्रहः | २॥) | ३४. भावारिवारणपादपूर्त्यादि स्तोत्र संग्रहः | ,, |
| १७. अनुत्तरोववाई सूत्र मूल-मूलार्थ | भेंट | ३५. श्रीनेमिदूतम् | १॥) |
| २२. उपासकदशांग सूत्र-मूल-मूलार्थ, टीका-टीकार्थ | २) | द्वादश पर्व व्याख्यान | २) |


॥१२३॥

पुत्रिका अभूवन्, ता महारूपवत्यो गुणवत्यश्चासन्, एकदा वनमध्ये क्रीडन्त्यस्ता गुरुभिः दृष्टा, आलापिताश्च-भो पुत्र्यः! यूयं धर्मं कुरुध्वम्, युष्माकमायुरेकदिनप्रमाणमेव विद्यते. ताभिरुक्तम्-हे भगवन्! एकदिनमध्ये को धर्मो भविष्यति, तदा गुरुभिरुक्तम्-यूयमद्य शुक्लज्ञानंपचमीतपः कुरुध्वम्, अद्यैव दिने पंचम्या उपवासं कृत्वा गृहे देवपूजां च कृत्वा पुण्यस्यानुमोदना कुरुध्वम्, ताभिरपि गृहे गत्वा तथैव कृतम्. अथ तस्मिन्नेव रात्रौ विद्युत्पाताच्चतस्रोऽपि मृत्वा प्रथमदेवलोके देवा जाताः, ततश्च्युत्वा तवैताः पुत्र्यः संजाता। क्रियत्काला-
अथ ताः सर्वा वार्ताः श्रुत्वा राजा जातिस्मरणं लब्ध्वा सपरिवारो रूप्यकुम्भ-स्वर्णकुम्भगुरूं नत्वा निजगृहे समागतः।
नन्तरं राजा राज्ञी पुत्राः पुत्र्यश्च श्रीवासुपूज्यप्रभोः समीपे दीक्षां गृहीत्वा कर्मक्षयं च कृत्वा मोक्षं गताः। उक्तं च-

रोहिणीतप-पंचमीतप, गुरुआ ए तप जाणी। दुःखित होय करी सुखी होवे, बोले केवलनाणी ॥ १ ॥

॥ इति रोहिणी-अशोकराजकथा सम्पूर्णा ॥ १२ ॥

## इति श्रीपर्वकथा संग्रहः।

दुःखं न वेत्ति, पुनर्हे अशोकराजेन्द्र ! अस्या उपरि तवाधिकः स्नेहः कुतो वर्तते ? तस्यापि कारणं शृणु—सिंहसेननामा नृपतिः स्वयं सुगन्धाख्यं पुत्रं राज्येऽभिषिच्य सुगुरोःपार्श्वे दीक्षां ललौ, अथ सुगन्धराजोऽपि जिनशासनमाराध्य प्रान्ते समाधिना मृत्वा देवभवं गतः. ततश्च्युत्वा इहैव जम्बूद्वीपे विदेहे पुष्कलावत्यां विजये पुण्डरीकिणीनगर्यां विमलकीर्तिराज्ञः सुभद्राख्यायाः सधर्मिण्याः कुक्षौ चतुर्दशमहास्वप्नसूचितः स देवजीवोऽवातरत् । अथ क्रमेण शुभेऽह्नि सा देवी शुभलक्षणं पुत्रं प्रासूत, तस्य पित्रा अर्ककीर्तिरिति नाम निर्मिमृत, क्रमेण स चक्रवर्ती जातः, राज्यं भुंक्त्वा जितशत्रुमुनेः पार्श्वे स दीक्षामादाय दुष्करं तपस्तप्त्वा स्वायुः-क्षये च मृत्वा द्वादशे देवलोकेऽच्युतेन्द्रोऽभूत्. ततश्च्युत्वा त्वमयमशोकराजा जातः, रोहिणश्च वल्लभोऽभूः, युवाभ्यां रोहिणीतपःकरणाद् युवयोः परस्परमधिकः स्नेहो जातः अथ त्वं पुत्राणां कारणं शृणु—मथुरायामग्निशर्माख्यो ब्राह्मणो वसति, तस्य सप्त पुत्राः परं ते दरिद्रिणः । एकदा पाटलीनगरे ते सप्ताऽपि भ्रातरो भिक्षार्थं गच्छन्ति, तदा वाटिकामध्ये कश्चिद् राजकुमारः कन्दर्पावतारः क्रीडति. तं दृष्ट्वा शिवशर्मा ब्राह्मणः स्वबान्धवान् वक्ति—भो बान्धवाः ! विधिना कियदन्तरं कृतमस्ति, अयं राजकुमारो मनोवाञ्छितं सुखं भुनक्ति, वयं तु भिक्षार्थं गृहे गृहे भ्रमामः, तदेकेन भ्रात्रोक्तमस्मिन् विषये कस्योपालम्भो दीयते ? पूर्वभवेऽस्माभिः पुण्यं न कृतम्, अनेन राजकुमारेण च सुकृतं कृतम्, अतोऽसौ सुखं भुनक्ति. तदा तैः सर्वैरपि ब्राह्मणपुत्रैः जीवदयायुतं धर्मं पालयित्वा प्रान्ते गुरोः पार्श्वे दीक्षा गृहीता. मृत्वा च ते सप्तमे देवलोके देवा जाताः, ततश्च्युत्वा तव गुणपालादय इमे सप्त पुत्रा अभूवन् । तवाष्टमपुत्रजीवश्च वैताढ्यवासी क्षुल्लक-विद्याधरोऽभूत् । स निरन्तरं नन्दीश्वरद्वीपे शाश्वतीं जिनप्रतिमां अपूजयत्, स विद्याधरो मृत्वा सौधर्मे देवो जातः । ततश्च्युत्वा तवायमष्टमो लोकपालाख्यः पुत्रो बभूव. अथ चतसृणां पुत्रीणां सम्बन्धं शृणु—वैताढ्यपर्वते एको विद्याधर आसीत्, तस्य चत्वारः

तदा मुनिर्वदति–सिंहपुरे सिंहसेनो राजा तस्य कनकप्रभाभिधाना राज्ञी वर्तते, तयोर्दुर्गन्धाख्यः पुत्रोऽभूत् , स क्रमेण यौवनं प्राप्तः, परं कस्यापि मनसि न रोचते, एकदा श्रीपद्मप्रभतीर्थकरस्तत्रागतः । तं पद्मप्रभं वन्दित्वाऽसौ निजदुर्गन्धत्वकर्मणो विपाकं पृच्छति, तदा श्रीसर्वज्ञप्रभुः कथयति—नागोरनगराद् द्वादशे क्रोशे नीलनामा पर्वतोऽस्ति, तस्योपरि एका शिला तत्रैको मुनिर्मासक्षमणादि तपः करोति, तत्तपःप्रभावाच्च आखेटकस्याखेटकं निष्फलं याति, तदा स लुब्धकस्तस्य मुनेरुपरि ईर्षां करोति । एकदा स ऋषिः पारणार्थं ग्राममध्ये प्राप्तः, तस्मिन् समये तेन लुब्धकेन शिलाया अधोऽग्निं प्रज्वाल्य सा शिला अतीवोष्णा विहिता । अथ स ऋषिः पारणकं विधाय शिलाया उपरि स्थितः, बहुतापात् शुद्धध्यानाच्च स ऋषिः केवलज्ञानं प्राप्य मृत्वा मोक्षं गतः, अथ ऋषिघातात् स लुब्धकः कुष्ठी जातः, यतः—

ऋषिहत्याकरो जीवो, दुःखं भुंजाति भूतले । संसारसागरे घोरे, पीड्यते च पुनः पुनः ॥ १ ॥

पश्चात् मृत्वा स सप्तमीं नरकावनिं गत्वा ततो मत्स्यो भूत्वा गोपालो जातः, परं स दरिद्री जातः, केनचिद् वणिजा च स नमस्कारं शिक्षितः । पश्चाद् दावानलमध्ये ज्वलितः । नमस्कारप्रभावाच्च त्वं राज्ञः पुत्रोऽयं दुर्गन्धोऽभूः । तत्श्रुत्वा जातिस्मरणं प्राप्य स प्रभुं पृच्छति–हे भगवन् ! कथमहमथ सुगन्धो भवामि ? तस्योपायं कृपां कृत्वा कथयत, तदा श्रीतीर्थंकरेण भणितम्–त्वं सप्तमासाधिकानि सप्तवर्षाणि यावद् रोहिणीतपः कुरु, पश्चाच्च तस्य तपसः उद्यापनं कुरु, तत्श्रुत्वा तेन रोहिणीतपः कृतम् , यस्य प्रभावात् स सुगन्धोऽभूत् । इति कथां श्रुत्वा सा दुर्गन्धा रोहिणीतपो विधिपूर्वकं कृत्वा सुगन्धा जाता, पश्चाद् मृत्वा सा देवी अभूत्, ततश्च्युत्वा चम्पायां श्रीवासुपूज्यस्य मघवापुत्रस्य पुत्रिकेयं रोहिणी नाम्नी तव राज्ञी जाता, पूर्वभवकृततपःप्रभावाद् इयमाजन्म यावद्

तीर्थं पुण्यपात्रमस्ति, तस्य दर्शनमपि महते पुण्याय. यत उक्तम्—

साधूनां दर्शनं पुण्यं, तीर्थभूता हि साधवः। तीर्थं फलति कालेन, सद्यः साधुसमागमः ॥ १ ॥

तदस्मै निःस्पृहाय मुनिसत्तमाय दत्तं दानं महते फलाय भवेद्, इति ध्यात्वा राजा स्वप्रियां प्राह–हे वरानने ! अस्मै मुनये वलित्वा दानं देहि, तत्श्रुत्वा क्रीडान्तरायं मत्वा बहिःप्रमोदभाग् अन्तश्च दुष्टा सा गृहं प्रति चचले, आगत्य गृहे द्वेषवशात् तया कटुतुम्बिकाशाकं मुनये दत्तम्, मुनिना तेनाहारेण पारणकं कृतम्, तद्भक्षणाच्च मुनिः पंचत्वं प्राप्तः शुभध्यानाच्च स देवलोके देवोऽभूत्, तां वार्तां श्रुत्वा राज्ञा राज्ञी स्वदेशतो निष्कासिता, सा सप्तमे दिने वराकी कुष्ठिनी जाता, चिरं जनैर्निन्द्यमाना सा मृत्वा षष्ठं नरकं जगाम। तत उद्धृत्य तिरश्चां योनौ समुत्पन्ना, ततो दुःखप्रचुरे सप्तमे नरके. एवं सर्वेषु नरकेषु सा पापा भ्रान्ता, ततः सा सर्पिणी, उष्ट्री, शृगाली, कुक्कुटी, तथा शूकरी, ततो गृहगोधा, जलौका, मूषिका, काकी, शुनी, बिलाडी, ततो रासभी, ततो गौः जाता तेषु भवेषु प्रायशः अग्निशस्त्रघाताद्यैः मृतिरभूद्, धेनुभवे स्वान्त्यसमये गुरूदितं नमस्कारं श्रुत्वाऽनुमोदयामास, मृतिं चाप, ततो नमस्कारप्रभावेण सा दुर्गन्धा दुर्भगा च तव तनया अभूत्। ततो दुर्गन्धा निजपूर्वभवं श्रुत्वा करौ योजयित्वा पृच्छति–हे स्वामिन् ! एतस्माद् दुःखादहं कथं निःसरिष्यामि ? तत् कथ्यतां. तदा मुनिना उक्तम्-त्वं दुःखभंजकं रोहिण्या व्रतं कुरु, तयोक्तम्-हे भगवन् ! केन विधिनाहं तद्व्रतं करोमि, मुनिनोक्तम्, शृणु—रोहिणीनक्षत्रदिने श्री वासुपूज्यजिनबिम्बं पूजयित्वा सप्तमासाधिकं सप्तवर्षं यावद् उपवासं कुरु एवं शुभध्यानयुततपःप्रभावात्तव शुभं भविष्यति, पश्चाच्च त्वया तत्तपस उद्यापनं विधेयं येन तव सर्वं दुःखं यास्यति, सुगन्धराजवत्. तत्श्रुत्वा दुर्गन्धा मुनिं प्रति पृच्छति–हे भगवन् ! तस्य सुगन्धराजस्य वृतान्तं मयि कृपां विधाय कथयत,

लोकपालाख्यं राजा निजहस्तेन भूमावपातयत् । तदा तत्रस्थाः सर्वेजनास्तं तथा पतन्तं दृष्ट्वा हाहारवं कर्तुं लग्नाः परं रोहिण्या हृदि किंचिन्मात्रमपि दुःखं न जातम् , इतस्तं पतन्तं बालकं नगराधिष्ठितदेवेन धृत्वा सिंहासने स स्थापितः, तद् दृष्ट्वा सर्वे जनाश्चमत्कृताः सन्तो विचारयामासुः- नूनमियं रोहिणी धन्यैव या दुःखस्य वार्तामपि न जानाति ।

इतश्च तत्र श्रीवासुपूज्यतीर्थंकरस्य रूप्यकुम्भ-स्वर्णकुम्भनामानौ द्वौ शिष्यौ ज्ञानवन्तौ समागतौ, तदा राजा परिवारयुतस्तौ वन्दितुं गतः, गुरुभ्यां च देशना दत्ता, देशनाश्रवणानन्तरं राज्ञा पृष्टम्-भो भगवन् ! अनया रोहिण्यैवंविधं किं तपः कृतं येनेयं दुःखस्य वार्तामपि न जानाति, एतस्या अष्टौ पुत्राः चतस्रश्च पुत्र्यो जाताः सन्ति, तथा ममापि तस्या उपरि-अतीव स्नेहो वर्तते, अतः तस्याः कथां युवां कृपां विधाय कथयतम् , तच्छ्रुत्वा गुरुः कथयति. अस्मिन्नेव नगरे धनमित्रनामा श्रेष्ठी वसति, तस्य धनमित्रा नाम्नी च भार्याऽस्ति, तस्या एका दुर्गन्धा नाम्नी पुत्री, सा कुरूपा दुर्भगा च जाता एवंविधां तां कुरूपां दृष्ट्वा कोऽपि द्रव्येश्वरो नो परिणयति, तदा पित्रा एकं मार्यमाणं श्रीषेणाभिधं चौरं मोचयित्वा तस्या दुर्गन्धायाः स स्वामीकृतः, सोऽपि रात्रौ दुर्गन्धां त्यक्त्वा नष्ट्वा गतः, तदा श्रेष्ठी विषादं करोति, विलपन्ती पुत्रीं प्रति श्रेष्ठी कथयति, हे पुत्रि ! त्वं विलाप मा कुरु, गृहद्वारि स्थिता दानं देहि धर्मं च कुरु येन तव दुष्कर्मदोषः प्रलीयते, अथ सा तदंगीकृत्य प्रत्यहं दानं ददाति । अथैकदा कश्चिद् ज्ञानी गुरुस्तत्र समागतः, तदा धनमित्रेण तं गुरुं वन्दित्वा तस्याः कन्यायाः स्वरूपं पृष्टम्. गुरुर्भणति-गिरिनारनगरे पृथिवीपालाभिधो राजाऽऽसीत् , तस्य सिद्धिमत्यभिधाना राज्ञी वर्तते, अथैकदा स राजा निजराज्ञीसहितो वने क्रीडां कर्तुं याति, तस्मिन् समये कश्चिद् मासक्षमणपारणकः सागरनामा मुनिः समागच्छति, भिक्षार्थमायान्तं मुनिं सागरं ऐक्षिष्ट, दृष्ट्वा विचारयति-एष साधुर्गुणाकरो महा-

न जाता । अथ क्रमेण यौवनावस्थां प्राप्ता, ईदृशीं तां दृष्ट्वा राजा चिन्तयति-नूनमियं रोहिणी वरयोग्या जाताऽस्ति. अथ राज्ञा स्वयंवरमण्डपं मण्डयित्वा सर्वेऽपि राजकुमारा आकारिताः तेऽपि च मण्डपे समागत्य स्थिताः । तस्मिन्नवसरे रोहिण्यपि स्नानं विलेपनं च कृत्वा क्षीरोदकसदृशे श्वेतवस्त्रे परिधाय मुक्ताभरणैरलंकृता साक्षाद् देवीव शिबिकायां स्थित्वा सखीभिः परिवृता तत्रागता । अथैका सखी तां रोहिणीं पुरस्कृत्य तस्या अग्रे राजकुमाराणां नाम-गोत्र-बल-वयो-यशः-प्रभृतीनां वर्णनं करोति । अथ तयाऽन्यानपि राजकुमारान् वर्जयित्वा नागपुरराज्ञो वीतशोकस्य पुत्रोऽशोककुमाराभिधो वृतः, तस्य कण्ठे च तस्या निजवरमाला क्षिप्ता, ततोऽन्ये सर्वेऽपि राजकुमाराः सहर्षा मिलित्वा तां च तया सह विवाह्य ततो भोजन-वस्त्र-ताम्बूलादि गृहीत्वा स्वस्वगृहे गताः । अशोककुमारोऽपि तत्र कतिचिद् दिनानि स्थित्वा सवधूको हस्त्यश्ववस्त्राभरणादियुतः प्रस्थाय नागपुरसमीपे समागतः । तदा वीतशोकराज्ञा तस्य पुरप्रवेश-महोत्सवः कृतः । कुमारोऽपि रोहिण्या सह विषयसुखानि भुनक्ति । अथैकदा शुभे दिनेऽशोककुमाराय राज्यं दत्त्वा वीतशोको राजा दीक्षां गृहीतवान् । ततोऽशोकराजा सुखेन राज्यं पालयति । क्रमेण अशोकराज्ञोऽष्टौ पुत्राश्चतस्रश्च पुत्रिका जाताः । अथैकदा रोहिण्या सहितो राजा सप्तम्यां भूम्यां गवाक्षे स्थितो लोकपालाख्यं पुत्रमुत्संगे धृत्वा क्रीडयति । तस्मिन् समये नगरे कस्याश्चित् स्त्रियः पुत्रो मृतः । सा स्त्री रुदती विलापांश्च कुर्वती तस्मिन् मार्गे समागता । तां दृष्ट्वा रोहिण्या राज्ञे पृष्टम्-भो महाराज ! किमिदं नृत्यम् ? राजा ब्रवाद्-हे प्रिये ! त्वं साहंकारं वचनं मा ब्रूहि, रोहिण्योक्तम्-स्वामिन्नहमहंकारं न करोमि, एवंविधं नृत्यं मया कदापि न दृष्ट-मतोऽहं पृच्छामि । तदा राज्ञोक्तम्-एतस्याः स्त्रियः पुत्रो मृतोऽस्ति, अतएवेयं रोदनं करोति । रोहिण्योक्तम्-स्वामिन् ! अस्यै रोदनं केन शिक्षितं भवेत् ?, तत् श्रुत्वा राज्ञोक्तम्-त्वाप्यहं रोदनं शिक्षयामि । इत्युक्त्वा रोहिण्युत्संगस्थं तस्या लघीयांसं पुत्रं

वाचानाचार्यवर्यस्य, रामचन्द्रगणेर्मुदा । शिष्येणाऽऽजिमगंजे च चतुर्मासीस्थितेन वै ॥ ४ ॥
पाठकमेद्चन्द्रेण, रायमल्लकवेर्मुदा । पठनार्थमिदं रम्यं, कृतं शुभतराशया ॥ ५ ॥ युग्मम् ।

॥ इति श्रीदीपमालिकाव्याख्यानं सम्पूर्णम् ॥ ११ ॥

## अथ रोहिणी व्याख्यानं प्रारभ्यते ॥ १२ ॥



उच्छिट्ठमसुन्दरयं, भत्तं तह पाणियं च जो देइ । साहूणं जाणमाणो, भुत्तं पि न जिज्जए तस्स ॥ १ ॥

व्याख्या—यो जीव उच्छिष्टमसुंदरं च भक्तं तथा पानीयं जानन् सन् साधुभ्यो ददाति, तस्य भुक्तमप्यन्नं न जीर्यते, तस्य शरीरेऽजीर्णरोगो भवति, यथा–श्रीवासुपूज्यस्य मघवाभिधपुत्रस्य पुत्रिकाया रोहिण्या जीवः पूर्वभवे दुर्गन्धाभिधाना कुष्ठिनी जाता, साधोः कटुतुंबकाहारदानात् ॥ १ ॥ रोहिणीकथा चेत्थं—

श्रीवासुपूज्यमानम्य, तथा पुण्यप्रकाशकम् । रोहिण्याश्च कथायुक्तं, रोहिणीव्रतमुच्यते ॥ १ ॥

श्रीचंपानगर्यां श्रीवासुपूज्यस्य पुत्रो मघवाभिधो राजा राज्यं करोति, तस्य लक्ष्मी नाम्नी राज्ञी सुशीला सदाचारा च वर्त्तते, तस्या अष्टौ पुत्राः सन्ति, अष्टानां पुत्राणामुपर्येका रोहिणी नाम्नी पुत्री वर्त्तते, सा चतुःषष्टिकलावती रूपलावण्यवती सौभाग्यगुणवती

तद्रात्रौ भावोद्योतो गतः, ततो लोकैरुद्योतकरणार्थं स्वस्वगृहे रत्नमयी दीपमालिका कृता, तद्दिनाद् लोकमध्ये दीपमालिकापर्वणः प्रसिद्धिर्जाता। अथ यद्रात्रौ वीरप्रभुर्मुक्तिं गतः, तदा समस्तसंघ उद्विग्नः स्थितः, संघस्य मुखाब्जं म्लानतां गतम्, तस्मिन् समये गौतमस्वामिनः केवलज्ञानमुत्पन्नं तदा समस्तोऽपि संघो हृष्टो जातः। इन्द्रः प्रभोर्निर्वाणोत्सवं कृत्वा प्रभोर्देहसंस्कारं करोति, ततः केचिद् देवाः प्रभोर्दंष्ट्रां लात्वा गच्छन्ति, केचिद् देवा दन्तान् गृह्णन्ति, केचिद् भस्म गृह्णन्ति, शेषं क्षीरसमुद्रे प्रवाहयंति, पश्चात् प्रातःकाले गौतमस्वामिनः केवलज्ञानमहोत्सवं कृत्वा सर्वे देवाः संभूय नन्दीश्वरद्वीपेऽष्टाह्निकं महोत्सवं कृत्वा स्वस्मिन् स्वस्मिन् स्थाने गच्छन्ति। अथ द्वितीयादिने सुदर्शना भगिनी शोकदूरीकरणार्थं नन्दिवर्धनं स्वगृहे भोजनं कारयति, तस्माद् एषा द्वितीया 'भाईबीज' इति प्रसिद्धिं प्राप्ता। प्रथमं लोके रत्नमया दीपाः कृताः पश्चाल्लोकै रूप्यमयाः कृताः। अथ पंचमकालप्रभावतो मृत्तिकामया दीपाः कुर्वन्ति। एवमार्यसुहस्तिसूरिर्वक्ति–हे संप्रते! इदं दीपमालिकापर्व सर्वेषामुत्तमं कथितम्, यथा वृक्षाणां मध्ये कल्पवृक्षः, देवानां मध्ये इन्द्रः, राज्ञां मध्ये चक्रवर्ती, नक्षत्राणां मध्ये चन्द्रमाः, तेजस्विनां मध्ये सूर्यः, सर्वधातूनां मध्ये सुवर्णम्, काष्ठमध्ये चन्दनम्, वनमध्ये नन्दनवनं तथा सर्वपर्वणां मध्ये दीपमालिकापर्व। अस्मिन् दिने श्रीवीरप्रभुर्मुक्तिं गतः, पुनः श्रीगौतमस्य केवलज्ञानमुत्पन्नम् अतो हे राजन्! इदं दीपमालिकापर्व सिद्धिदायकं भवतु।

षण्नन्दवसुचन्द्राब्दे (१८९६), ज्येष्ठमासे सिते दले। चन्द्रघस्रे त्रयोदश्यां, साध्ययोगे हितावहे ॥ १ ॥
दीपालिपर्वणो व्याख्या, गद्यबन्धेन निर्मिता। अपशब्दादिदोषश्चेत्, शोधनीयः सदा बुधैः ॥ २ ॥
स्वच्छे खरतरे गच्छे, श्रीसौभाग्यगणाधिपे। धर्मराज्यं कलावर्ये, प्रकुर्वति सुविस्तरे ॥ ३ ॥

अपावास्यादिने उपवाससहिताः पौषधव्रतमंगीकृतवन्तः तद्रात्रौ भावोद्योततीर्थंकररहितं दृष्ट्वा तै राजाभिः स्वकीयगृहाद् रत्नान्यानाय्य द्रव्योद्योतः कृतः, पौषधः पारितः, यद्रात्रौ तीर्थंकरो मुक्तिं गतस्तद्रात्रौ देवानां गमनागमनेन महानुद्योतः संजातः, अस्मिन्नवसरे देवानां मुखाद् वीरप्रभुर्मोक्षगमनं श्रुत्वा श्रीगौतमस्वामी मनसि चिन्तितवान् "अहो! भगवता मत्तश्छलं कृतं स्वस्य मुक्तिं ज्ञात्वा अहं दूरीकृतः, ज्ञातं भगवता मम पार्श्वे केवलज्ञानं मार्गयिष्यति, बालवत् कदाग्रहं करिष्यति, वस्त्राञ्चलं गृहीत्वा स्थास्यति, हे स्वामिन्! मया ईदृग् लोभी त्वं न ज्ञातः, केवलज्ञाने दत्ते तु भवतां किमपि न न्यूनमभविष्यत्, हे स्वामिन्! तवाहं परमसेवकोऽभूवम्, मां निराशं त्यक्त्वा गतः, हे भगवन्! महत्तामेषा वार्ता न युक्ता, हे प्रभो! बलाद् भवतोऽहं केवलज्ञानं नालप्स्यम् भवता दत्तमेव केवलज्ञानमंग्यकरिष्यम्, तथापि हे स्वामिन्! अस्मिन्नवसरे अन्तसमये स्वसमीपे रक्षणं युक्तमभूद्, अस्मिन्नवसरे मम प्रेषणं तव न युक्तम्, पुनर्हे प्रभो! मम केवलज्ञानस्य तृष्णा नासीत्, भवतां दर्शनस्य तृष्णा जाताऽभूत्, अधुना तव दर्शनमपि मम दूरीभूतम्, हे स्वामिन्! अथाहं कस्य वीर! इति कथयिष्यामि, मम मनःसंदेह कस्य समीपे पृच्छाविषये करिष्यामि, को मम सन्देहं भंक्ष्यति, हे स्वामिन्! पुनर्मम हे गौतम! हे गौतम! इति कः कथयिष्यति?" एवं विलापं कुर्वन् मनसि विचारयति-रे जीव! वराक! त्वं ग्रथिलो जातः, स तु नीरागी त्वं तु सरागी, वीतरागेण रागकरणं न युक्तम्, एकांगिप्रीतिकरणे दीपे पतंगवद् दुःखी भविष्यति, यस्य नाम वीतरागः स कस्मिन् रागं करोति स भगवान् स्वस्य वीतरागं हि नाम सत्यं कृतवान्, अहमज्ञासिषं भगवान् मम नाम पुनः पुनः ब्रूते तर्हि ममोपरि रागं रक्षति, परमाश्विनमेघाडम्बरवद् अन्तं दत्त्वा गतः स क्व अहं क कस्य कोऽपि नास्ति, एवं मोहनीयं निराकृत्य क्षीणमोहं गुणस्थानकं गत्वा तत्कालमेव श्रीगौतमस्य केवलज्ञानमुत्पन्नम्। अथ यद्रात्रौ प्रभुर्मुक्तिं गतः

पक्षे, उपशमदिने, देवानन्दानाम्न्यां रात्रौ, सर्वार्थसिद्धिमुहूर्त्ते, नागे करणे, पद्मासने स्थिते तुर्यारकान्ते एतत्समये इन्द्रासनं चकम्पे, अवधिज्ञानेन हरिः प्रभोर्निर्वाणकल्याणसमयं ज्ञात्वा आगच्छति, अत्यन्तमश्रुपूर्णाक्षो विषण्णश्च सन् हस्तौ संयोज्य वक्ति—

गर्भे जन्मनि दीक्षायां, केवले च तव प्रभो ! । हस्तोत्तरं क्षणेऽधुना, तद्गन्ता भस्मको ग्रहः ॥ १ ॥

अतो हे स्वामिन् ! करुणानिधान ! एकक्षणमात्रमायुर्वृद्धिं स्वस्य कुरु, किं कारणम् ? भवतो जन्मराशेरुपरि भस्मग्रह आगतोऽस्ति स द्विसहस्रवर्षं यावत् स्थास्यति, अतो जिनशासनस्य पूजा प्रभावना मन्दा भविष्यति, तेन हेतुना आयुर्दीर्घं कुरुष्व, भवतो दृष्टिपाततस्तस्य तेजो निष्फलं यास्यति, तदा भगवान् वक्ति-हे इन्द्र ! एषा वार्ता कदाऽपि नाऽभूत्, न भवति, न चापि भविष्यति, यदायुर्दीर्घतरं भवति, पुनर्भाविपदार्थस्य नाशो नास्ति, तदुत्तीर्णे तु देवा अपि दर्शनं दास्यन्ति, विद्यामन्त्राणि चाल्पेन जापेन प्रभावं दर्शयिष्यन्ति, जातिस्मरणादिभावाः किंचित् प्रकटयिष्यन्ति, तदनन्तरमेकोनविंशतिसहस्रवर्षं यावद् जिनधर्मो वर्तिष्यति, दुःषमकालपर्यन्तम्, एवं कथयित्वा स्थितः, स्वस्य निर्वाणं समीपं ज्ञात्वा पुण्यफलविपाकानि पञ्चपञ्चाशदध्ययनानि तथा पापफलविपाकानि पञ्चपंचाशदध्ययनानि च जगाद, तथा षट्त्रिंशदपृष्ठव्याकरणादि [उत्तराध्ययनसूत्राऽध्ययनानि] चाभिधाय प्रधानं नामाध्ययनं [ मरुदेवाऽध्ययनं ] जगद्गुरुरकथयत्, पुनः स्वामिनो मोक्षं समीपे विज्ञाय आसनप्रकम्पतस्तत्र सुराऽसुरेन्द्राः सपरिच्छदाः सर्वेऽपि ईयुः ॥

अथ प्रभुः शैलेशीकरणं कृत्वा पञ्चह्रस्वाक्षरोच्चारमितकालेन तुर्येण ध्यानेन एरण्डफलवद् बन्धाभावाद् ऊर्ध्वगतिः सन् यथास्वभावऋजुगत्या मोक्षमुपाययौ । तस्मिन् समयेऽनुद्धरिककुन्थुराशिः समुत्पन्ना, तदा बहुसाधुभिर्विचारितम्–'अद्यदिनादारभ्य संयमो दुराराध्यो भविष्यति' इति ज्ञात्वाऽनशनं कृतम्, तस्मिन् दिने नवमल्लकि–नवलेच्छकिजातीयाः काशी–कोशलदेशपतयोऽष्टादश गणराजानः

भविष्यन्ति, एकस्तीर्थंकरः, एकश्चक्रवर्ती, एवं द्वौ चतुर्थारके भविष्यतः, द्वयोश्चतुरशीति-पूर्वलक्षवर्षायुर्भविष्यति, ततः कल्पवृक्षोत्पत्तिर्भ-
विष्यति सर्वे युगलिका भविष्यन्ति. पाश्चात्यचतुर्विंशतितमजिनस्याग्रतनप्रथमजिनस्याष्टादशकोटाकोटिसागरोपमानामन्तरं भविष्यति.
उत्सर्पिणी, अवसर्पिणीकाले एकत्रीकृते एकं कालचक्रं भवति, तानि कालचक्राणि अनन्तानि गतानि, पुनरस्मिन् भरतक्षेत्रे अग्रेऽन-
न्तानि कालचक्राणि भविष्यन्ति, एवं श्रीवर्धमानः प्रभुर्गौतमस्य कालस्वरूपं निरूप्य समवसरणाद् निर्ययौ, हस्तिपालनरेन्द्रस्य
शुल्कशालायां च जगाम ॥ स्वामी तद्दिनयामिन्यां आत्मनो मोक्षं विदित्वा दध्यौ-अहो ! गौतमस्य मयि स्नेहोऽधिकः, य एवास्य
महात्मनः केवलज्ञानान्तरायः, स छेद्य इति विज्ञाय गौतममिति जगाद-अपरस्मिन् ग्रामे देवशर्मा द्विजोऽस्ति, स त्वया प्रतिबोधं
प्राप्स्यति, तस्मात् तत्र हे गौतम ? त्वं गच्छ. हे स्वामिन् ! आदेशः प्रमाणमित्युक्त्वा प्रणम्य च गौतमस्तत्र गच्छति. अथ प्रभोः
परिवारं वदति-स्वहस्तदीक्षिताः साधवश्चतुर्दशसहस्र ( १४००० ) प्रमाणा अभूवन्, षट्त्रिंशत्सहस्र ( ३६००० ) प्रमाणाः साध्व्यश्च
संजाताः, एकोनषष्टिसहस्राधिकलक्ष ( १५९००० प्रमाणाः श्राद्धाश्च संजाताः, द्विगुणाः ( ३१८००० ) श्राविका अभूवन् , चतु-
र्दशाधिकत्रिशत ( ३१४ ) प्रमाणाः चतुर्दश पूर्वधारिणो जाताः, त्रयोदशशत ( १३०० ) प्रमाणा अवधिज्ञानिनो जाताः, सप्तशत
( ७०० ) वैक्रियलब्धिधारिणो मुनयः संजाताः, सप्त शत ( ७०० ) केवलिनः संजाताः, पञ्चशत ( ५०० ) विपुलमतयो संजाताः,
चतुःशत मिता ( ४०० ) वादिनः संजाताः, अष्टशत ( ८०० ) मिता अनुत्तरवासिनः । एवं समस्तसाधुसाध्वीसहितः श्रीवीरप्रभुः
षष्ठतपोयुक्तः त्रिंशद्वर्षाणि गृहवासे तस्थौ, सार्द्धद्वादशवर्षाणि पक्षाधिकानि छद्मस्थावस्थायां स्थितः, त्रिंशद् वर्षाणि यावत् केवलिपर्याये
स्थितः, एवं द्वासप्ततिवर्षाणि आयुः प्रपाल्य कार्त्तिकाऽमावास्यानिशायाः पश्चिमे क्षणे स्वातिनक्षत्रे, द्वितीये चन्द्रसंवत्सरे, प्रीतिवर्धन-

पोट्टिलाभिधः ९, दशमो शतकस्य जीवः शतकीर्तिनामा जिनेश्वरः १०, देवकीराज्ञीजीवः एकादशः सुव्रताभिधो जिनो भविष्यति ११, कृष्णवासुदेवस्य जीवः अममाख्योऽर्हन् द्वादशो भविष्यति १२, सत्यकी विद्याधरस्य जीवोऽर्हन् निष्कषायः त्रयोदशः १३, बलभद्रस्य जीवो निष्पुलाकश्चतुर्दशो भविष्यति १४, रोहिणीजीवो निर्ममः पंचदशो जिनः १५, सुलसाश्राविकाया जीवश्चित्रगुप्तो जिनः षोडशो भविष्यति १६, रेवतीश्राविकाया जीवः समाधिनामा सप्तदशो जिनो भाविष्यति १७, शतालीश्रावकस्य जीवः अष्टादशोऽर्हन् संवराभिधः १८, द्वीपायनजीवः एकोनविंशोऽर्हन् यशोधरः १९, कषायस्य जीवो विजयो विंशतितमः २०, एकविंशो जिनो मल्लो यः पुरा नारदोऽभवत् २१, अम्बडस्य जीवो द्वाविंशो देव तीर्थंकरः २२, त्रयोविंशः श्राद्धरमस्य जीवोऽनन्तवीर्यो भविष्यति २३, स्वातिजीवश्चतुर्विंशो भद्रकृन्नाम तीर्थंकरो भविष्यति २४, एते आगामिकाले चतुर्विंशति तीर्थंकरा भविष्यन्ति, एषामायुः कल्याणकान्तर-लाञ्छन-वर्णाः पश्चानुपूर्व्या भविष्यन्ति, वर्तमानजिनवत्। अथ भाविनश्चक्रवर्तिनः कथ्यन्ते-दीर्घदन्तः १, गूढदंतः २, शुद्धदंतः ३, श्रीचन्द्र ४, श्रीभूतिः ५, श्रीसोमः ६, पद्मः ७, महापद्मः ८, कुसुमः ९, विमलः १०, विमलवाहनः ११, रिष्टः इत्यपरनामा भरतो द्वादशः १२। अथ वासुदेवानाह-नन्दी १, नन्दमित्रः २, सुन्दरबाहुः ३, महाबाहुः ४, अतिबलः ५, महाबलः ६, बलः ७, द्विपृष्ठः ८, त्रिपृष्ठः ९, इत्यात्मकाः। अथ प्रतिवासुदेवा उच्यन्ते-तिलकः १, लोहजंघः २, वज्रजंघः ३, केशरी ४, बली ५, प्रह्लादः ६, अपराजितः ७, भीमः ८, सुग्रीवः ९, इत्यात्मकाः। अथ बलदेवा उच्यन्ते-जयः १, विजयः २, भद्रः ३, सुप्रभः ४, सुदर्शनः ५, नन्दः ६, नंदनः ७, पद्मः ८, संकर्षणः ९, इत्यात्मकाः। एवमेते त्रिषष्टिशलाकाः * पुरुषा भविष्यन्ति, तेषां मध्ये एकषष्टि शलाकाः पुरुषास्तृतीयारके

*—प्रत्यंतरे त्रिपष्ठिशलाकाः पुरुषा नामांतरेण अपि दृश्यते तत्त्वं तु ज्ञानिनो विदन्ति।

पंचत्रिंशतिदिनं यावद् मेघो वर्षिष्यति, तदा वृक्षौषधिलताधान्यप्रमुखाः स्वयं निष्पत्तिं यास्यन्ति. तान् दृष्ट्वा मनुष्या बिलेभ्यो बहिर्निःसरिष्यन्ति, भरतपृथिवी पुष्पफलादियुक्ताभूत्, तदा फलादीनि भक्षिष्यन्ति, अतः परं मांसं न भक्ष्यम्. यथा यथा काल एष्यति तथा तथा रूपसंहननायूंषि धान्यादीनि च भारते वर्धिष्यन्ति, सुखा वाताः ऋतवः मलिलाश्च भविष्यन्ति, तिर्यञ्चो मनुष्याश्च गतरोगाः क्रमेण भविष्यन्ति, द्वितीयारकप्रान्ते मध्यदेशे भरतावन्यां सप्त कुलकरा भविष्यन्ति—तत्र प्रथमो विमलवाहनः, द्वितीयः सुदामः, तृतीयः संगमः, चतुर्थः सुपार्श्वः, पंचमो दत्तः, षष्ठः सुमुखः सप्तमः समुचिः एते सप्त कुलकरा भविष्यन्ति. तत्र जातिस्मृतिपूर्वं विमलवाहनो राज्यहेतवे ग्रामान्, पुरादीनि च निवेशयिष्यति, राजा विमलवाहनो गोऽश्वाहिसंग्रहं करिष्यति, शिल्पानि व्यवहारं लिपिर्गणितानि च व्यञ्जयिष्यति, दुग्धदध्यादौ शस्ये ज्वलने चोत्पन्ने सति हितकामी राजा प्रजानां रन्धनाद्युपदेशं दास्यति, एतत्सर्वं द्वितीयारके भविष्यति । अथ तृतीयारकस्य नवाधिकाशीतिपक्षे गते सति द्वारपुरनगरे समुचिराज्ञो भद्रायां महादेव्यां चतुर्दशस्वप्नसूचितो नन्दनः श्रेणिकजीव आदितीर्थकृत् पद्मनाभाभिधो जन्मादिना महावीरतुल्यो भविष्यति, कथंभूतः पद्मनाभ ? सप्तहस्तशरीरोन्नतः काञ्चनवर्णकायः सिंहलांछनो द्वासप्ततिवर्षायुः प्रथमतीर्थंकरो भविष्यति, अतः परं पूर्ववत् प्रातिलोम्येन पूर्वार्हत्समा अमी सर्वे क्रमाद् जिनेश्वरा भविष्यन्ति, तत्र श्रेणिकराज्ञो जीवः पद्मनाभो जिनेश्वरः १, श्रीमहावीरस्वामिनः पितृव्यः सुपार्श्वजीवः सूरदेवो द्वितीयः जिनेश्वरः २, तृतीयो कोणिकनृपपुत्र उदायिनो जीवः सुपार्श्वः ३, पोटिलाऽणगारस्य जीवः चतुर्थः स्वयंप्रभः ४, दृढायुश्रावकस्य जीवः पंचमः सर्वानुभूतिः ५, कार्तिकस्य षष्ठोऽर्हन् देवश्रुताभिधः ६, सप्तमो संवरश्रावकस्य जीव उदयाह्वयः ७, अष्टमः आनंदस्य जीवः पेढाल इति नामा ८, नवम सुनंदस्य जीवः

शिरोऽर्तिप्रमुखा मनुष्याणां महारोगा भविष्यन्ति, अंगारसदृशा भूमिर्भविष्यति, गिरि-नदी-गर्तादिका जलेन समीभविष्यन्ति, जल स्थलचारिणः तिर्यंचो दुःखेन स्थास्यन्ति, क्षेत्र-वनाऽऽराम-लता-तरु-तृणानि क्षयं यास्यन्ति, वैताढ्य-ऋषभकूट-गंगा-सिन्धूर्विमुच्य जलेन सर्वे समा भविष्यन्ति, भरतभूमिः कदाचिद् धूलिबहुला, कदाचिद् सार्द्रकर्दमा भाविष्यति, एकहस्तमानाः, कठोरांगाः, दुष्टवर्णाः निष्ठुरवचनाः, रोगार्ताः, क्रोधिनः, घण्टावच्चिपटनासिकाः, निर्लज्जाः, वस्त्ररहिता नराः स्त्रियश्च भविष्यन्ति, नराणां विंशतिवर्षायुः स्त्रीणां च षोडशवर्षायुर्भविष्यति, षड्वर्षा स्त्री गर्भान् धारयिष्यति दुःप्रसवा च. स्थविरा तु षोडशाब्दा बहुसूतेन मातृका भविष्यति. रथचक्रयोर्मध्ये यत्प्रमाणा धरित्री भवति तत्प्रमाणं गंगासिन्ध्वोः पानीयं वहिष्यति, पुनर्वैताढ्यगिरौ द्वासप्ततिनद्युभयतटभूमिषु बिलानि सन्ति तत्र तिर्यञ्चो मनुष्याश्च बीजमात्रतया भविष्यन्ति मांसाहारनिरताः, निर्घृणाः, निर्विवेकाः तस्मिन् काले मनुष्यादयः समस्ता भविष्यन्ति, बहुमत्स्य-कच्छपादिभिर्व्याप्ते गंगा-सिन्धू भविष्यतः, पुनर्नराद्यास्तत्रैत्य निशायां मत्स्यादीनि कृष्ट्वा स्थले मोक्ष्यन्ति, दिवा सूर्यत्विषा पक्वानि मत्स्यादीनि निशान्तरे खादिष्यन्ति, एवं निरन्तरं भोक्ष्यन्ति, यस्मात् तस्मिन् काले दव्याधिकं नास्ति, न च पुष्पफलादिकं, च चान्नं, न च शय्यासनादिकम्, एवं भरतैरवतेषु दशस्वपि दुःषमकालो भविष्यति। अथाग्रे उत्सर्पिण्यां षष्ठारकसदृशः प्रथममारको भविष्यति, उत्सर्पिण्यामेकविंशतिसहस्रवर्षप्रमाणे प्रथमारके गते द्वितीयारकोऽपि एतत्प्रमाणो भविष्यति। अथ द्वितीयारकप्रान्ते पुष्करावर्तमेघः सप्ताहोरात्र यावद् वर्षिष्यति तस्मात् पृथिवीतापो यास्यति, द्वितीयः क्षीरोदनामा मेघो वर्षिष्यति तस्माद् धान्यनिष्पत्तेर्योग्या भविष्यति, तृतीयो घृतोदकमेघो वर्षिष्यति तस्मात् पृथिवी मच्चिक्कणा भविष्यति, चतुर्थः शुद्धोदकमेघो वर्षिष्यति, तस्मादौषधिर्निष्पत्तिं यास्यति, तदा पंचमो रसोदकमेघो वर्षिष्यति, तस्मात् पृथिव्यां रसोत्पत्तिर्भविष्यति. एवं

केचिदाचार्या एवं वदन्ति—पञ्चभरतै-रवतयोः संघस्य प्रमाणं नत्वेकस्य, केचिदाचार्याः पञ्चभरतस्य संघप्रमाणं वदन्ति, केचित् पुनः एकभरते संघप्रमाणं वदन्ति, तत्त्वं तु ज्ञानिगम्यम्. पुनः पञ्चमारकप्रान्ते द्विहस्तशरीरप्रमाणाः स्वर्गात् च्युत्वा गृहवासे द्वादश वर्षाणि श्रामण्ये चत्वारि वर्षाणि, आचार्यपदे चत्वारि वर्षाणि स्थित्वा विंशतिवर्षायुः प्रपाल्य दुप्पसहसूरयः सौधर्मस्वर्गे गमिष्यंति, कथंभूता दुप्पसहसूरयः ? दशवैकालिक-जितकल्प-आवश्यकाऽनुयोगद्वार-नन्दीसूत्रधारका इन्द्रादिभिर्नताः. षष्ठोग्रतपोधारकाः प्रान्ते कृताष्टमतपसः एकसागरोपमायुः स्वर्गे भुक्त्वा ततो भरतक्षेत्रे जन्मावाप्य मुक्तिं यास्यंति । वीसहजार नवसौ वर्ष, तीनमास, पांच दिन, पांच पहरे, एक घडी, दोपल, ४१ अक्षरोच्चार एतावत्कालप्रमाणो जिनधर्मो भविष्यति, ९० वर्ष, मास ८, दिन २३, प्रहर २, घडी ५॥, पलानि ५७, १९ अक्षरोच्चार एतावन्मध्ये जिनधर्मः स्तोकः स्थास्यति, आरकस्य प्रांते जिनधर्मो विच्छेदं यास्यति, श्रुत-सूरि-संघ-धर्मः पूर्वाह्ने विच्छेदं यास्यति, नृपो विमलवाहनः सुमुखमन्त्री च मध्याह्ने विच्छेदं यास्यतः, अग्निः सन्ध्यायां विच्छेदं यास्यति, पुनः पञ्चमारकान्ते दुप्पसहाख्यः सूरिः, फल्गुश्रीः साध्वी, नागलः श्रावकः, सत्यश्रीः श्राविका, एतदात्मकश्चतुर्विधसंघो भविष्यति, पञ्चमारकस्यान्तं धर्मो वर्त्स्यति इत्यनेन धर्मो नास्ति यः पुनर्वदिष्यति स संघतो बहिः कर्तव्यः, एवमेकविंशतिसहस्रप्रमाणः पंचमारको भविष्यति । एतत्प्रमाणो षष्ठारकोपि भविष्यति । अथ षष्ठारकस्य किंचित् स्वरूपं कथ्यते—धर्मतत्त्वं प्रणाशं यास्यति, जनो हाहाभूतो भविष्यति, पशुवद् मातृपित्रादि व्यवस्थावर्जितश्च भविष्यति, बहुधूलिसहिता अतिनिष्ठुरता अनिष्टा वायवो वास्यन्ति, दिशश्च धूम्रं मोक्ष्यन्ति, चन्द्रमा अतिशीतं स्रावयिष्यति, अर्यमा अत्युष्णं तप्स्यति, अतिशीतोष्णव्याप्तो लोकः क्लेशमवाप्स्यति, भस्म-दृषद-ऽग्निकण-क्षार-विष-मल-विद्युन्मयाः सप्त मेघा वर्षिष्यन्ति, एकैकस्य मेघस्य सप्त सप्त दिनानि यावद् वर्षा भविष्यति, यैः कास-श्वास-शूल-कुष्ट-जलोदर-ज्वर

मिन्द्रः शिक्षयित्वा दत्तनामानं कल्किनः पुत्रं राज्ये स्थापयिष्यति, गुरु संघयोर्नमस्कारं कारयिष्यति, इन्द्रः स्वस्थाने यास्यति, ततो दत्तराजा पितुः पापफलं ज्ञात्वा पुण्ये तत्परो भविष्यति, निरंतरं जिनेश्वराणा चैत्यानि कारयित्वा सर्वपृथ्वीं जिनालयैः शोभायमानां करिष्यति, तदा पुनर्जिनधर्ममहिमा प्रचुरो भविष्यति, । अथाग्रे पञ्चमकाले चतुर्विधश्रावक-श्राविका-साधु-साध्वीनां संख्या कथ्यते— षोडशसहस्राधिका एकादशलक्षा (११२६०००) राजानः पंचमकाले जिनमतभक्ता भविष्यन्ति, एककोटिमिता (१००००००), जिनशासनप्रभावका मन्त्रिणो भविष्यन्ति, पुनः पञ्चमकाले श्रीसुधर्मस्वामिप्रमुखाश्चतुरधिकद्विसहस्रप्रमाणा (२००४) युगप्रधानपद-धारका महोपकारिण आचार्या भविष्यन्ति, तत्रापि सुधर्मजम्बूस्वामिनौ तद्भवे एव मुक्तिं यास्यतः, शेषाः सर्वे एकावतारिणो भविष्यन्ति। ततो युगप्रधानसदृशा आचार्याः प्राणिनां मोहान्धकारे मार्तण्डसदृशाः षोडशाधिकैकादशलक्षैकादशसहस्रमिता (११११०१६) एतावन्तो अन्येऽपि आचार्या-श्चारित्रपालका भविष्यन्ति, पुनः पञ्चमारके तेतीस लाख चालीस हजार चारसौ उन्नीस (३३४०४१९) एतावन्तो मध्यमगुणधारका आचार्या भविष्यन्ति, पुनः पंचावनकोटि पंचावनलक्ष पंचावनसहस्र पंचशत पचवीस (५५५५५५५२५.) अधमाचार्या भविष्यन्ति, पुनः पंचावनलाखकोटि, पंचावनहजारकोटि चौवनसौ कोटि चउमालीसकोटि एतावन्त उपाध्याया वाचनाचार्या भविष्यन्ति, पुनः सत्तरलाखकोटि नवहजारकोटि एकसौकोटि एकवीसकोटि एकलाख साठहजार एतावन्तः साधवो भविष्यन्ति, पुनः पञ्चमारके दशकोटाकोटि द्वादशशतकोटि बाणवेकोटि बत्तीसलाख निनाणवे हजार एकसौ एतत्प्रमाणाः साध्व्यो भविष्यन्ति, पुनः पञ्चमारके सोलाकोटिलाख तीनकोटिहजार तीनसौकोडी सत्तरकोडी चौरासीलाख एतावत्प्रमाणाः श्रावकाः भविष्यन्ति, पुनः पञ्चमारके पैंतीस-कोडिलाख बाणुहजारकोडी पांचसौकोडी बत्तीसकोडी एतावत्यः श्राविका भविष्यन्ति, एतावत् पञ्चमारके संघस्य प्रमाणम्. अत्र

करिष्यति, पुनर्नवीननवीनकरं करिष्यति ततो लोकानां मस्तकेऽसद्भूतानि कलंकानि दत्त्वा धनवतां धनं ग्रहीष्यति, अनेकच्छलं कृत्वा लोकानां धनापहारं करिष्यति, यदा सर्वे लोका निर्धना भविष्यन्ति रूप्य-सुवर्णादि सर्वं धनं नाशं यास्यति, तदा चर्ममयीं मुद्रां प्रवर्तयिष्यति, वैश्यापाखण्डिसर्वदर्शनिनां समीपे कल्की करं लास्यति, तस्य राजमध्ये लोकानां गृहे भोजनार्थं धातुमयं भाजनं न स्थास्यति, तदा वृक्षपत्रमध्ये भोजनं करिष्यन्ति, पुनः कल्की राजा मार्गे गच्छतः साधून् दृष्ट्वा लुब्धः सन् भिक्षायाः षष्ठांशं मार्गयिष्यति, तदा सर्वे साधवः एकत्रीभूय कायोत्सर्गं करिष्यन्ति शासनदेवतां चाराधयिष्यन्ति, शासनदेवता प्रकटीभूय साधुभिक्षाषष्ठांशं निवारयि-ष्यति, पुनर्वेषधारिणो वेषं त्याजयिष्यन्ति, एतादृशो महादुरात्मा भविष्यति, पुनः कियति काले गते भिक्षाषष्ठांशस्य स्मरणं करिष्यति, यदा धनार्थमाचार्यादीन् सर्वसाधून् संमेल्य वाटके क्षेप्स्यति रोधयिष्यति, तदा संविज्ञाचार्यप्रमुखाः ससंघाः शासनदेवताराधनार्थं कायो-त्सर्गं करिष्यन्ति, संघकायोत्सर्गात् शासन देवता आगमिष्यति युक्तितः कल्किने उपदेशान् दास्यति तथापि स न मानयिष्यति, तस्मिन् समये इन्द्रस्यासनं कम्पयिष्यति तदा स वृद्धब्राह्मणरूपं कृत्वा यत्र कल्की सिंहासनोपरि स्थितस्तत्रागमिष्यति, ततः कल्किनं कथयि-ष्यति-अहो राजन् ! एते निरपराधिनः साधवः किं रुद्धाः एभिस्तवापराधः कः कृतः ? तदा कल्की तं वदिष्यति-अहो ब्राह्मण ! सर्व-दर्शनिभिर्मम करो दत्तः परमेते भिक्षवो भिक्षाषष्ठांशमपि न ददति, ततो मया एते रुद्धाः सन्ति, तत इन्द्रो वदिष्यति-एषां पार्श्वतस्तव किमपि न मिलिष्यति एषां पार्श्वे किमपि नास्ति पुनर्भिक्षाषष्ठांशमपि तव न दास्यंति एषामयं व्यवहारो नास्ति, पुनस्त्वं भिक्षा भागं मार्गयन् लज्जां न यासि, एषां साधूनां त्वं त्यागं कुरु, ईतरथा तव महत्कष्टमुत्पत्स्यति, एतादृशमिन्द्रवचनं श्रुत्वाऽपि न त्यक्ष्यति ततो भाद्रपदशुक्ला-ष्टम्यां ज्येष्ठानक्षत्रे इन्द्रो रोषं गतः सन् चपेटाप्रहारात् कल्किनं मारयिष्यति सर्वायुः षडशीति ८६ वर्ष प्रपाल्य नरकं यास्यति, ततोऽर्हद्धर्म-

स्य राजधानी भविष्यति, अनहल्लपत्तनस्य द्वितीयं नाम विजयपुरं भविष्यति, मुंजस्योज्जयिनीदेशं दास्यति, अपराजितस्यान्यमण्डलं दास्यति, कल्किनो राज्यावसरे म्लेच्छक्षत्रिययो रुधिरेण पृथिवी स्नानं करिष्यति, तस्यैकोनकोटिसुवर्णानां कोष्ठागारा भविष्यन्ति, चतुर्दशसहस्रप्रमाणा हस्तिनो भविष्यन्ति, सार्द्धचतुर्दशसहस्राधिकसप्ताशीतिलक्षा (८७१४५९००) घोटका भविष्यन्ति, पञ्चकोटिप्रमाणाः पदातयो भविष्यन्ति, दासादीनां तु बह्वीः संख्या भविष्यन्ति, नमःखलनाम त्रिशूलं भविष्यति, दृषन्मयतुरंगमः आरोहणार्थं वाहनं भविष्यति, दुरात्मा अत्यन्तकषायो भविष्यति, यदा कल्की राज्यं करिष्यति, तदा मथुरामध्ये कृष्ण-बलभद्रयोरायतनं पतिष्यति, बहुडम दुर्भिक्षरोगैर्मनुष्याः पीडां प्राप्स्यन्ति, पञ्चसु स्तुम्भिकासु बहु धनमस्तीति लोकानां मुखात् श्रुत्वा आनन्दराज्ञा निष्पादिताः पञ्च सुवर्णमयीः स्तुम्भिकाः कल्की खनयिष्यति, सर्वनिधानं निष्कासयिष्यति, तत्र गोरूपा लवणदेव्या मूर्तिः दृषन्मयी प्रकटीभविष्यति; तां गृहीत्वा राजादिप्रमुखा सर्वलोकाः संभूय नगरचतुष्पथमध्ये स्थापयिष्यंति, कदाचिदवसरे साधवो गौचर्यर्थं चतुष्पथमध्ये निःसरिष्यन्ति, सा साधून् दृष्ट्वा देवानुभावतः शृंगाग्रेण साधूनां मारणार्थमुद्यमवती भविष्यति, तदा गीतार्थाः सर्वे साधव एकत्रीभूय विचारं करिष्यन्ति, अत्र जलोपसर्गः प्रचुरो भविष्यति इति ज्ञात्वा सुविहितक्रियाधारका ये साधवो भविष्यन्ति ते सर्वे विहारं करिष्यन्ति, ये भक्तपानलोलुपा भविष्यन्ति गीतार्थवचनं नांगीकरिष्यन्ति अविवेकिनः सन्तः तत्र स्थास्यन्ति, ततः सप्तदशाहोरात्रं यावत् वर्षा भविष्यति, अत्यन्तवृष्ट्या कल्किनो नगरं जलाच्छादितं भविष्यति, गंगाजलं नगरेण सह एकत्री भविष्यति, कल्किनो नगरात् प्रणश्य कुत्रापि उच्चस्थले स्थास्यति, जलोपद्रवनिवर्तनाद् नवीनं नगरं स्थापयिष्यति, जलप्रवाहतो नव नन्दस्य सुवर्णमय्यः डुंगरिकाः प्रकटीभविष्यन्ति, ता दृष्ट्वा प्रचुरलोभी भाविष्यति, प्रथमं ये मनुष्याः करं न दत्तवन्तस्तेषामुपरि करं स्थापयिष्यति, ये करं दत्तवन्तस्तेषां मस्तके बहुकरं

न्ति, पुनर्हे गौतम् ! म्लेच्छकुले पाटलीपुरपत्तने कलंकी * राजा भविष्यति, पुनः पाटलीनगरस्य रुद्रनाम पुनश्चतुर्मुख इति नाम स्थापयिष्यति । जसनामचाण्डालस्य गृहे भार्या यशोदा तत्कुक्षौ त्रयोदश मासान् यावद् कल्किगर्भः स्थास्यति, चैत्रशुक्लाष्टम्यां जयश्री-दिवसस्य रात्रिसमये मकरलग्नस्य षष्ठांशे वहमाने भौमवासरे चन्द्रेऽर्कलग्ने स्थिते चन्द्रनामयोगे आगते अश्लेषाप्रथमपादे कलंकिनो जन्म भविष्यति, त्रिहस्तशरीरोन्नतत्वं भविष्यति, कपिलवर्णाः केशा मस्तके भविष्यन्ति, नेत्रे पीते भविष्यतः, तीक्ष्णस्वरो भविष्यति, महा-विद्यावान् दीर्घहृदयो गुणरहितश्च भविष्यति, तस्योत्पत्तेरारभ्य पञ्चमे वर्षे उदरपीडा भविष्यति, सप्तमे वर्षेऽग्निपीडा भविष्यति, एकादशे वर्षे तस्य द्रव्यप्राप्तिः भविष्यति, अष्टादशे वर्षे कार्तिकमासे शुक्लपक्षे प्रतिपदि तिथौ शनिवारे तुलाचन्द्रे स्वातिनक्षत्रे नन्दनदिने सिद्धयोगे बवकरणे रावणमुहूर्त्ते राज्याभिषेको भविष्यति, तस्य आनन्दनामा तुरंगमो भविष्यति, दुर्भासकनामा कुन्तो भविष्यति, मृगांकनामा मुकुटो भविष्यति, दैत्यसूदनखड्ग भविष्यति, तस्य कटिप्रदेशे चन्द्रसूर्यौ भविष्यतः, पुनः कल्की विक्रमादित्य संवत्सरमुत्थाप्य अमितसुवर्णदानान् स्वसंवत्सरं स्थापयिष्यति, एकोनविंशतितमे वर्षे निजभुजबलेनार्धभरतत्रिखण्डं साधयिष्यति, सार्धविंशतिवर्षे अर्बुदराज्ञः पुत्रीं परिणेष्यति, अन्यासां बह्वीनां राज्ञीनां पतिर्भविष्यति, एवं ताभिः सह महाभोगे भुंज्यमाने तस्य महापराक्रमधारिणश्चत्वारः पुत्रा भविष्यन्ति, तन्ना-मान्याह-दत्त १ विजय २ मुंज ३ अपराजिताख्याः ४. कल्किनः पाटलीपुरे राजधानी भविष्यति, तस्य पाटलीपुरस्य कलंकिपुर मिति द्वितीयं नाम भविष्यति, दत्तस्य प्रथमपुत्रस्य राजधानी भविष्यति, तस्य नगरस्य दत्तपुरं नाम भविष्यति, विजयस्यानहल्लपत्तन-

* पंचमारके धर्मोन्नतिकारका त्रयोविंशतिः उदयाः भविष्यंति तेषु च चतुरधिकद्विसहस्रयुगप्रधाना भविष्यन्ति तथा सम्प्रति तृतीयोदयो वर्तते पर' च अष्टमोदये श्रीप्रभयुगप्रधानसमये कलकी राजा भविष्यति, इति ज्ञेयम् ।

तस्य भविष्यन्ति, अयुतप्रमाणा रथा भविष्यन्ति, एकादश लक्षाणि तुरंगाणां भविष्यन्ति, अष्टादश लक्षाः पदातयो भविष्यन्ति, स श्रीकुमारपालराजा कस्मिंश्चित् समये वज्रशाखायां मुनिचन्द्रकुलोत्पन्नं श्रीहेमचन्द्रसूरिं प्रतिनन्दिष्यति, आचार्यमुखाद् धर्मोपदेशं श्रुत्वा सम्यक्त्वसहितं श्रावकद्वादशव्रतमंगीकरिष्यति, देवगुरुप्रणतिं विना भोजनं न करिष्यति, दृढव्रतपालको भविष्यति, पृथिवीं जिनप्रासादमण्डितां करिष्यति, एकस्मिन् प्रस्तावे श्रीहेमाचार्यमुखात् व्याख्याने श्रीतीर्थानां व्याख्यां श्रोष्यति, तत्र जीवितस्वामिमूर्तेः संबंधं श्रुत्वा वीतभयपत्तनमार्गे दुर्गकारापने श्रीजिनप्रतिमां मनुष्येभ्यः प्रकटं कारयिष्यति, तां प्रतिमां पत्तने जिनालये स्थापयिष्यति शुभबुद्ध्या मानयिष्यति, ततः प्रतिमार्थं यदुदायिराज्ञा ग्रामादिदत्तमभूत् तत् प्रकटीभविष्यति, तावन्तं ग्रामशासनादिकं कुमारपालोऽपि दास्यति, सदैवार्चां करिष्यति, सदैव जिनं वन्दिष्यति, स्वदारसंतोषी भविष्यति, वर्षाकालमध्ये त्रिविधं शीलं पालयिष्यति, कदाचिद् मनसः शीलभंगो भविष्यति तर्हि उपवासादि करिष्यति, पुनरष्टाशदेशेऽमारिपटहं दास्यति, वर्षाकाले सेनासमूहं न करिष्यति, जीवरक्षादक्षो भविष्यति, अर्हन्मतभक्तिमान् भविष्यति, शुद्धसम्यक्त्वव्रतधारको भविष्यति, पंचमकाले श्रीकुमारपालं विना अन्यः को भविष्यति ? । पुनर्हे गौतम ! पञ्चमारके कलहकारका भववृद्धिजनका असमाधिस्थाना अनिर्वेदकारका एतादृशाः श्रमणाः पञ्चभरतैरवते च भविष्यन्ति, पुनस्ते श्रमणा मन्त्रतन्त्रयन्त्रादौ नित्यमुद्यमवन्तो भविष्यन्ति, पुनरागमार्थज्ञाता स्तोका एव स्थास्यंति, सिद्धान्तशास्त्रस्य कश्चिदेवाभ्यासं करिष्यंति, धनलोभार्थं ज्योतिष्कादिकं धारयिष्यति, उपकरणवस्त्रपात्रार्थं वर्षाकाले श्रावकैः सह युद्धं करिष्यति, यथा राजा प्रजापार्श्वे कलहं कृत्वा दण्डं लास्यति तथा तेऽपि साधवः श्रावकपार्श्वे धनादिग्रहणं करिष्यन्ति, बहवो मुण्डा अल्पाः श्रमणाश्च भविष्यन्ति, पुनर्हे गौतम ! पञ्चमकाले म्लेच्छराजानो बलवन्तो भविष्यन्ति, उत्तमराजानो हीनबला भविष्य-

गवर्णने कथिताः । पुनर्हे गौतम ! कलियुगसंबन्धिनां मानवानां मध्ये लज्जा न भविष्यति, निष्कलंककुलजाताः स्तोका भविष्यन्ति, रम्यवस्तूनां धरित्र्यां हानिर्भविष्यति, लघवः सुताः तरुणाश्च मरणं यास्यन्ति, पुनर्मातरः पितरश्च अतिदीर्घायुषो भविष्यन्ति, ब्राह्मणाः शस्त्रधारका भविष्यन्ति, वेदपाठ-षट्कर्मवर्जिताश्च भविष्यन्ति, सुता मातापित्रोर्विनयं न करिष्यन्ति, पुत्रा मातापितृभ्यो दुःखं दास्यन्ति, वध्वः श्वश्रूणां विनयं न करिष्यन्ति, वधूः सर्पिणीतुल्या भविष्यति, श्वश्रूभिः कार्ये कथिते वधू रोषं कृत्वा सर्पिणीवत् प्रत्युत्तरवचनरूपं डंकप्रहारं दास्यति, श्वश्रूश्च कालरात्रीतुल्या वधूं हीलयिष्यति; यथा जनानां कालरात्री दुर्लङ्घ्या भवति तथा श्वश्रूरपि वधूजनानां ताडनातर्जनादि कुर्वती दुर्लंघ्या ज्ञेया, अपूज्यलोकाः पूजां प्राप्स्यन्ति, अर्चायोग्या गुणवन्तो न पूजा प्राप्स्यन्ति, शिष्या गुरूणां विनयं न करिष्यन्ति, पुनर्गुरवोऽपि शिष्याणां हितशिक्षाद्युपदेशं न दास्यंति, पुनर्मन्त्रतन्त्रौषधिज्ञानरत्नविद्याधनायुःफलपुष्परसरूपसौभाग्यसंपत्तिसंहननबलयशःकीर्तिगुणशोभादीनि वस्तूनि पञ्चमारके हानिं यास्यन्ति, ज्ञानादिधर्मो हीनतां यास्यति, वस्तुगानादि विपरीतं जनाः करिष्यन्ति, धर्मे मूर्खत्वं भविष्यति, देवानां मध्ये देवत्वं न भविष्यति, सतीनां मध्ये सतीत्वं न भविष्यति, निःसंगानां मध्ये वैराग्यं न भविष्यति, तपस्विनः स्पृहायै तपस्यां करिष्यन्ति, सत्यशौचतपः क्षमादिकानां हानिर्दिने दिने भविष्यति, धरित्र्यामल्पफलादीनि भविष्यन्ति ।

पुनः प्रभुर्वक्ति-हे गौतम ! सौराष्ट्रगुर्जरदेशस्य समीपे अनुक्रमेण अणहिल्लपाटणपुरे मन्निर्वाणात् एकोनसप्तत्यधिकषोडशशतवर्षे (१६६९) व्यतिक्रान्ते श्रीकुमारपालराजा भविष्यति, कीदृशः ? चौलुक्यकुलमध्ये चन्द्रसदृशो महाबलवान् अखण्डजिनाज्ञाधारको भविष्यति, पराक्रमेण, दानेन, कीर्तिगुणेन, न्यायेन, विवेकेन, धैर्येण राज्यलीलया सत्त्वगुणेनाद्वितीयो भविष्यति. उत्तरदिशायां यवनदेशं यावत्, पूर्वदिशि गंगापर्यन्तं, दक्षिणदिशि पश्चिमदिशि च समुद्रपर्यन्तं देशान् साधयिष्यति, एकादशशतानि हस्तिनः

करिष्यन्ति, पुनरग्रे गच्छता वने एकस्यां शकट्यां हस्तिनौ योजितौ दृष्टौ, एकस्यां शकट्यां गर्दभौ योजितौ दृष्टौ परं हस्तिनौ परस्परममिलितौ चलतः गर्दभौ परस्परं मिलितौ चलतः, एतादृशं विचारं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वदति हे राजन् ! कलियुगे हस्तिसदृशा उत्तमकुले प्रसूता जनाः परस्परं क्लेशं करिष्यन्ति अन्योऽन्यमीर्ष्यां च करिष्यन्ति, पुनर्गर्दभसदृशा नीचकुलोत्पन्ना नीतिधारका भविष्यन्ति परस्परं स्नेहवन्तो भविष्यन्ति, प्रायेण अन्त्यकुलोत्पन्ना धरित्रीपतयो भविष्यन्ति, पुनर्हंससदृशा उत्तमकुलोत्पन्नाः दासत्वं करिष्यन्ति ॥ अन्यदा पंच पाण्डवा अनुक्रमेण वनवासमध्ये स्थिताः सन्तो युधिष्ठिरराज्ञा भीमादीनां चतुर्णां भ्रातॄणां चतुर्षु प्रहरेषु रात्रौ यामिकत्वेन रक्षिता, अथ प्रथमप्रहरे भीमो जागर्ति चत्वारो भ्रातरः सुप्ताः सन्ति तस्मिन् प्रस्तावे कलिरूपपिशाचस्य वचनं श्रुत्वा भीमः क्रोधमागू वभूव पिशाचरूपकलेर्मारणार्थं धावितः, कलिना सह भीमो युद्धमकार्षीत् , क्रोधेन रक्तनेत्रे कृत्वा लीलया प्रेतरूपकलिना बलवान् भीमो निर्जितः, द्वितीयप्रहरे युद्धं कृत्वा कलिनाऽर्जुनोऽपि जितः, तृतीयप्रहरे नकुलोऽपि जितः, चतुर्थप्रहरे सहदेवोऽपि जितः, अथ चत्वारोऽपि भ्रातरः पराजयं प्राप्ताः सन्तः सुप्ताः सन्ति, अस्मिन्नवसरे पश्चिमरात्रे युधिष्ठिरो जागृतवान् तदा कलिरूपपिशाच आगत्य युधिष्ठिरं वदति, हे राजन् ! भवतः पश्यतो भवद्भ्रातॄन् मारयिष्यामि, एतादृशं प्रेतवचनं श्रुत्वा राजा युधिष्ठिर किंचिन्मात्रमपि क्रोधं न कृतवान् , प्रतिवचनमपि न दत्तवान् , क्षमा कृत्वा स्थितः, क्षमा कीदृशी ? सर्वकल्याणकारिका सर्वसत्त्वप्रीतिजनिका सर्वधर्मप्रधाना एतादृशी क्षमा राज्ञामंगीकृता, तदा राज्ञ उपशमं दृष्ट्वा प्रेतः शान्तिं गतवान् राज्ञो मुष्टिमध्ये चागतः, भ्रातरः सर्वेऽपि उत्थिताः, तदा रात्रिसंबन्धिनी सर्वाऽपि वार्ता युधिष्ठिरेण भ्रातॄणामग्रे कथिता, राज्ञा मुष्टिमुद्घाट्य प्रेतः स्ववशवर्त्तिभूतो दर्शितः, क्षमाप्रभावतोऽयं वशवर्ती जातः, एतादृशा अष्टोत्तरशतदृष्टान्ता लौकिकपुराणादावपि कलियु-

पुनः राजा युधिष्ठिरोऽग्रे गतः सन् कूपप्रणालिकाजलं कूपे पतत् दृष्ट्वा विस्मयं प्राप्तः सन् पृच्छति, तदा ब्राह्मणो वक्ति—हे राजन् ! कृषिवाणिज्यादिभिर्महाक्लेशात् लोका धनमुपार्जयिष्यन्ति तद्धनं सर्वं राजलोका ग्रहीष्यन्ति, सत्युगे राजानः स्वस्य धनं दत्त्वा प्रजां पुत्रवत् ज्ञास्यन्ति कलियुगे राजानः प्रत्युत प्रजाया धनं लास्यन्ति इति वैपरीत्यं भविष्यति । राजा—अग्रे गच्छन् वनखण्डमध्ये महाप्रधानचम्पकवृक्षावृतः पार्श्वतः एकः कण्टकवृक्षो दृष्टः, तदवसरे बहवो लोकाः कण्टकवृक्षस्य सुगन्धचोवाचन्दनविलेपनैः पूजां कुर्वन्तो दृष्टाः, चम्पकवृक्षस्तु सुगन्धपुष्पैर्युक्तः शाखाप्रतिशाखाभ्यां शोभमानोऽस्ति, तं त्यक्त्वा कण्टकवृक्षमर्चितं दृष्ट्वा राजा विस्मयं प्राप्तः सन् ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति—हे राजन् ! लोकाः कलियुगे गुणवन्तमुत्तमाचारवन्तं त्यक्त्वा पापीयसो दुर्जनस्य नीचस्य पूजां करिष्यन्ति, एतादृशं श्रुत्वा राजाऽग्रे गतः पुरतः एकां महतीं शिलां बालाग्रे बद्धामाकाशे लम्बायमानां दृष्ट्वा आश्चर्यं प्राप्तः सन् ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति—हे राजन् ! कलियुगे पापरूपां शिलामल्पधर्मरूपबालाग्रेण तरिष्यन्ति, अन्यच्च यदा बालरूपं धर्मं त्रोटयिष्यन्ति तदा समकालं मनुष्या ब्रुडिष्यन्ति । पुनः राजाऽग्रे गतः फलार्थं वृक्षस्य पीडां कुर्वन्तः केचिद् पुरुषा दृष्ट्वा राजा ब्राह्मणं पृच्छति—एतस्य फलं वद, ब्राह्मणो वक्ति-हे राजन् ! कलियुगे पिता वृक्षतुल्यः पुत्रः फलसदृशः—अयमत्र भावार्थः पुत्रफलार्थं वृक्षः पिता कष्ट सहिष्यति, पुनः राजऽग्रे गतः एकस्मिन् स्वर्णकटाहे उत्तमान्नपाचनयोग्ये मांसं पच्यमानं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वदति-हे राजन् ! आत्महितकारिणं कुटुम्बं जनाः त्यक्ष्यन्ति, अन्यलोकार्थं स्वशीर्षं दास्यन्ति, बह्वीं प्रीतिं करिष्यन्ति उत्तमजनसंगं न करिष्यन्ति, अग्रे गत्वा सर्पस्य पूजां गरुडस्य चापूजां दृष्ट्वा ब्राह्मणं पृच्छति, विप्रोऽवादीत्-हे राजन् ! दयारहितो धर्मिजनः सर्पतुल्यः तस्य बहवो लोका आदरं करिष्यन्ति, सत्कारं च करिष्यन्ति, गरुडसदृशा गुणवन्त उत्तममहाधर्मज्ञास्तेषां निन्दां

लोकाः सर्वे प्रेतसदृशा भविष्यन्ति, राजलोका लुब्धा भविष्यन्ति, पुनरविवेकिनो लोका मूर्खाः कलाहीनाश्च भविष्यन्ति, दातारो दारिद्र्ययुक्ता भविष्यन्ति, लक्ष्मीधराः कृपणा भविष्यन्ति, पापिनो दीर्घजीवा भविष्यन्ति, उत्तमधर्मिणामायुः स्तोकं भविष्यति, राज्ञां कुलानि हीनानि भविष्यन्ति, पुनः सेवका उत्तमकुलवन्तो भविष्यन्ति, सज्जना मनुष्या दुःखिनो भविष्यन्ति, दुर्जना मनुष्याः सुखिनो भविष्यन्ति, एवं हे गौतम ! पंचमकालस्य स्वरूपं त्वं जानीहि ।

पुनर्लोकाः कलियुगस्य स्वरूपमेवं वदन्ति–द्वापरयुगे राजा युधिष्ठिरोऽभूत् , एकस्मिन् दिने स वने गतः, तत्र वने एका वृहती गौः लघुगोस्तनपानं कुर्वती दृष्टा, स्वसमीपे ब्राह्मणमिति पप्रच्छ—इदमाश्चर्यं विपरीतं पश्य, तदा ब्राह्मणो वदति–हे राजन् ! आगामिकाले कलियुगमध्ये हीनसत्त्वा मनुष्या भविष्यन्ति, लक्ष्मीं विना दुःखिनौ सन्तौ मातापितरौ कस्मैचित् धनवते कन्यां दत्त्वा धनं लात्वा ततः पश्चात् स्वनिर्वाहं करिष्यतः, एतादृशमुपनयं श्रुत्वा पुनः राजा युधिष्ठिरोऽग्रे गतः, पुरतः समानश्रेणिबद्धजलभृतानि त्रीणि सरांसि दृष्टानि, तत्र प्रथमैकसरसो जलमुच्छलन् मध्यस्थं तटाकं त्यक्त्वा तृतीयसरसि पतति, मध्यस्थसरसि एकबिन्दुमात्रमपि न पतति; एतादृशमाश्चर्यं दृष्ट्वा राजा ब्राह्मणं पृच्छति इदं किंकारणम् ? ब्राह्मणो वक्ति–हे राजन् ! त्वं शृणु–आगामिकाले यथा प्रथमसरसो जलं द्वितीयं तटाकं त्यक्त्वा तृतीये पतितं तथा हे राजन् ! स्वस्य संबन्धिनं त्यक्त्वा अन्यलोकैः सह जनाः प्रीतिं करिष्यन्ति, पुनः राजा युधिष्ठिरोऽग्रे गच्छन्नेकमाश्चर्यं पश्यति जलेन क्लिन्नं वालुकासमूहं तस्य बहवो मनुष्याः संभूयरज्जूः कुर्वन्ति परं रज्जुः त्रुटति यत्ने कृतेऽपि न तिष्ठति, एतादृशं व्यतिकरं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति–हे राजन् ! कृषिकारकलोका बहुभिः क्लेशैः कलियुगे धनमुपार्जयिष्यन्ति, तद् धनं चौराऽग्निराजदंडप्रमुखस्य भयेन मनुष्याणामन्यत्र गमने कृतेऽपि विनाशं यास्यति,

हरिवंशकुलोत्पत्तिः ७, चमरेन्द्रोत्पातः ८, एकस्मिन् समयेऽष्टाधिकशतमुक्तिगमनं ९, असंयतिपूजा १०, एतानि दश वस्तूनि अनन्त-काले गते सति भवन्ति । बहवो लोकाः क्रोधवन्तो भविष्यंति, पुनर्दुःषमकालप्रभावतो लोका मर्यादां त्यक्ष्यन्ति, धर्मबुद्धेर्नाशो भवि-ष्यति, लोका वक्रा मूर्खाश्च भविष्यन्ति, यथा कालहीनता भविष्यति तथा कुतीर्थे मतिं धारयिष्यन्ति, पुनर्लोकाः परोपकार-धर्मव-र्जिता भविष्यन्ति, महान्ति नगराणि ग्रामसदृशानि भविष्यन्ति, ग्रामाः श्मशानसदृशा भयंकरा भविष्यन्ति, राजानः प्रजापालने यमसदृशा भविष्यन्ति, पुनर्हे गौतम ! धनवन्तो व्यवहारिणो निर्धना भविष्यन्ति, पुनर्देवा दर्शनं न दास्यन्ति, मनुष्याणां जातिस्म-रणज्ञानादीनि न भविष्यन्ति, मनुष्या लज्जामर्यादारहिता भविष्यन्ति, पृथिव्यां दुष्टजीवा बहवो भविष्यन्ति, पुनर्लोकाः परस्परं विघ्नं दृष्ट्वा संतोषं प्राप्स्यन्ति, लोकानां पापकरणे चत्वारो हस्ता भविष्यन्ति, पुनर्धर्मकार्येऽलसाः प्रमादिनश्च भविष्यन्ति, आत्मनः कार्यं लोकानामुदरमध्ये प्रवेशं करिष्यन्ति, पुनर्हे गौतम ! परजीवानामुपद्रवकरणे तत्परा भविष्यन्ति, पुनः पंचमकालसंबन्धिनो जीवा महानिर्दया भविष्यन्ति, महादीर्घरोपधारका भविष्यन्ति, भद्रकजीवान् विप्रतारयिष्यन्ति, धर्ममूर्तिमन्तः स्तोका भविष्यन्ति, पापा-नामाकराः स्थाने बहवो भविष्यन्ति, अत्यन्त लोभवन्तो भविष्यन्ति, मिथ्यात्विनोऽभिमानिनोऽनाचारिणोऽन्यायिनश्च लोका बहवो भविष्यन्ति, पुनर्हे गौतम ! कुलवध्वो लज्जामर्यादारहिता भविष्यन्ति, वेश्यासमानाश्च भविष्यन्ति, राजा भृत्येभ्यो दण्डं दास्यति, पृथिव्यां तिमिंगिलन्यायो भविष्यति, चौरकुले जाताश्चौरा भवन्ति परं राजानोऽपि चौरसदृशा भविष्यन्ति, लोकानां धनमपहरिष्यन्ति, लोकान् दरिद्रिणः करिष्यन्ति, पुनर्हे गौतम ! पंचमकालमध्ये लोकानामग्निर्बह्वीं पीडां करिष्यति, गोप्रमुखाणां जीवानां बहुवधो भविष्यन्ति, जिनालयाः पतिष्यन्ति, पुनर्दुःखदारिद्र्युपद्रवमलोत्सर्गमारीप्रमुखैः कृत्वा धरित्री शून्या भविष्यति, देशो भंगं यास्यति,

स्वर्णपौरुषादिः सिद्धिं यास्यति, धैर्यादिगुणविख्यातस्य विक्रमादित्यस्य स्थाने स्थाने मनुष्या देवाश्च प्रशंसां करिष्यन्ति, पुनः स राजा सर्वलोकानां दानसन्मानादिकं कृत्वा सर्वाननृणीकरिष्यति, स्वनाम्ना च संवत्सरप्रवृत्तिं करिष्यति, यस्य देवा अपि स्तवनं करिष्यन्ति, महाबलवान् प्रजापालकः परदुःखनिवारकः परस्त्रीसहोदरो राजा विक्रमादित्यो भविष्यति, ततः पंचशतचतुरशीतिवर्षे (५८४) व्यतिक्रान्ते श्रीवज्रस्वामी भविष्यति, ततो दशमपूर्वार्धस्य कीलिकासंहननस्य च विच्छेदो भविष्यति, तदनन्तरं षोडशाधिकषट्शतवर्षे (६१६) पुष्पमित्रेण सार्धं नवमं पूर्वं विच्छेदं यास्यति, पुनर्मम निर्वाणाद् विंशत्यधिकषट्शतवर्षे (६२०) आचार्यादयो ग्राममध्ये स्थास्यन्ति (?), मम निर्वाणाद् नवाधिकषट्शतवर्षे (६०९) रथनूपुरनगराद् दिगम्बरमतोत्पत्तिर्भविष्यति, श्रीविक्रमादित्यात् पंचत्रिंशदधिकशतवर्षे (१३५) गते शाकी राजा शालिवाहनो भविष्यति, पंचाशीत्यधिकपंचशतवर्षे (५८५) गते हरिभद्रसूरिर्भविष्यति अनेकग्रन्थकर्ता महाप्रभावको, मन्निर्वाणात् त्रिनवत्यधिकनवशतवर्षे (९९३) कालिकाचार्यो भविष्यति, यस्येन्द्रो वन्दनां करिष्यति, यः कालकसूरिः पर्युषणापर्व पंचमीतः चतुर्थ्यां कारणादानीतवान्, मन्नि[illegible]णात् सप्तत्यधिकद्वादशशतवर्षे (१२७०) व्यतिक्रान्ते बप्पभट्टिसूरिर्भविष्यति सर्वविद्याविशारदः, तद्वाक्याद् गोपपर्वते आमराजा जिनालयं कारिष्यति, तत्र सार्धत्रिकोटिस्वर्णप्रतिमां स्थापयिष्यति । मन्निर्वाणात् त्रयोदशशतवर्षे (१३००) बहवो मतभेदा भविष्यन्ति, बहुमोहस्य कारणात् दुःषमकालप्रभावतश्चानेकगच्छभेदा भविष्यन्ति, केचित् तपोऽहंकारं कारिष्यन्ति, केचिच्च धर्मक्रियायां शिथिला भविष्यन्ति, क्रियावन्तोऽपि साधवः परस्परं क्लेशं करिष्यन्ति । पुनरस्यामवसर्पिण्यां दश अच्छेरका जाताः तानाह—

समवसरणे उपसर्गः १, गर्भापहारः २, स्त्रीतीर्थंकरः ३, परिषदभावः ४, कृष्णस्यामरकंकागमनं ५, चन्द्रसूर्यमूलविमानागमनं ६,

श्रेणिः ५, उपशमश्रेणिः ६, केवलज्ञानम् ७, परिहारविशुद्धि-सूक्ष्मसंपराय-यथाख्यातचारित्राणि ८, सिद्धिगतिः ९, जिनकल्पकः १०, एतानि दश वस्तूनि जम्बूस्वामितो विच्छेदं यास्यन्ति, ततो दुःषमकालप्रभावतश्चतुर्दशपूर्वधारी जम्बूस्वामि प्रतिबोधकः निजपट्टप्रभावकः श्रीप्रभवस्वामी भविष्यति. तत्पट्टे चतुर्दशपूर्वधरः दशवैकालिककर्ता मनक-पिता श्रीशय्यम्भवसूरिः भविष्यति, तत्पट्टे चतुर्दशपूर्वधारी यशोभद्रसूरिर्भविष्यति, तच्छिष्यौ सम्भूतिविजय-भद्रबाहुनामानौ चतुर्दशपूर्वधरौ भविष्यतः, ततो मम निर्वाणात्-सप्तत्यधिकशतवर्षे ( १७० ) अनेकशास्त्रकर्ता भद्रबाहुः स्वर्गे यास्यति, ततो मम निर्वाणात् पंचदशाधिकद्विशतवर्षे ( २१५ ) चतुर्दशपूर्वधारी सम्भूतिविजयशिष्यः श्रीस्थूलिभद्रो देवलोकं यास्यति, ततः प्रथमं संहननं वज्रऋषभनाराचाख्यं विच्छेदं यास्यन्ति, ततोऽर्थतः चतुष्पूर्व-सूक्ष्मसंपराय-महाप्राणायामध्यानाख्यानि एतानि विच्छेदं यास्यन्ति, ततः मन्निर्वाणाद् त्रिशतवर्षे ( ३०० ) उज्जयिन्यां नगर्यां सम्प्रति राजा भविष्यति, स च आर्यसुहस्तिसूरिणामुपदेशाद् जातिस्मरणज्ञानमवाप्य जैनधर्ममंगीकरिष्यति, स्वभुजबलात् त्रिखण्डभोक्ता भविष्यति, ज्ञानवान् दानवान् न्यायी धर्मज्ञो विनयवान् पराक्रमी च भविष्यति, मुक्ताफलवद् निर्मलजिनालयैः कृत्वा धरित्रीं देदीप्यमानां करिष्यति, पुनः स राजा अनार्यदेशे लोकानामुपकारार्थं सम्यक्त्वधारिणां जीवाजीवादिनवतत्त्वविदामुपदेशदानार्थं तादृशानां श्रावकाणां धर्मसंयोगं कारयिष्यति, ततो महासंविज्ञगीतार्थानां साधूनां म्लेच्छधरित्र्यां विहारं कारयिष्यति, अनया रीत्या तीर्थंकराणां धर्मस्य सर्वदेशे प्रवृत्तिं करिष्यति, एतादृशो महादृढधर्मा अनुक्रमेण स्वर्गं यास्यति. पुनर्मन्निर्वाणात्-सप्तत्यधिकचतुःशतवर्षे ( ४७० ) उज्जयिन्यां श्रीविक्रमादित्योराजा भविष्यति, श्रीसिद्धसेनदिवाकराचार्यस्योपदेशं श्रुत्वा जिनशासनस्योपरि भक्तिमान् भविष्यति, सम्यक्त्वं सम्यग्रीत्या पालयिष्यति, तस्य सत्त्वसिद्धा अग्निवेतालाद्यनेकदेवाः साहाय्यं करिष्यन्ति, विद्या

न्तु कुदर्शनस्य पूजादि भविष्यति ८, नवमे शुष्कं सरोवरं दृष्टं तेन यत्र यत्र देशे जिनानां कल्याणकानि तत्र तत्र धर्महानिर्भविष्यति ९, दशमे सुवर्णपात्रे क्षीरं भक्षयन् श्वा दृष्टस्तेन उत्तमा लक्ष्मीरधमगृहे गमिष्यति १०, एकादशे गजारूढो वानरो वनचरो दृष्टः तेन सुखारूढा दुर्जना भविष्यन्ति, इक्ष्वाकुवंशीयानां यादवप्रमुखाणां च हानिर्भविष्यति ११, द्वादशे समुद्रो मर्यादां मुंचन् दृष्टः, तेन राजानोऽन्यायकर्तारो भविष्यन्ति, क्षत्रियाश्च कुमार्गगामिनो भविष्यन्ति १२, त्रयोदशे महारथे वत्सा युक्ता दृष्टाः, तेन वृद्धावस्थायां चारित्रं जना न ग्रहीष्यन्ति, परं वत्सतुल्या लघुवयसः साधवो भविष्यन्ति, ये च वैराग्यभावेन चारित्रं ग्रहीष्यन्ति ते च प्रमादिनो भविष्यन्ति १३, चतुर्दशे महार्घ्यं रत्नं तेजोहीनं दृष्टम्. तेन भरते ऐरवते च साधवोऽसमाधिकराः कलहकरा उपद्रवकराश्च भविष्यन्ति, तथा श्रमणा अपि स्तोका भविष्यन्ति १४, पंचदशे राज्ञः कुमारो वृषभारूढो दृष्टः, तेन क्षत्रिया मिथ्यात्ववासिनो भविष्यन्ति १५, षोडशे गजकलभयुगलं युद्धं कुर्वद् दृष्टम् तेन मुनिवरा अल्पस्नेहा अकालव्यसनिनोऽहर्निशं युद्धकराश्च भविष्यन्ति, गुरुशुश्रुषाकरा न भविष्यन्ति १६, एवं श्रुत्वा चन्द्रगुप्तो नाम राजाऽनशनं गृहीत्वा धर्मध्यानेन स्वर्गं गतः । इति षोडशस्वप्नविचारः कथितः । एतादृशं प्रभोर्वाक्यं श्रुत्वा गौतमस्वामी चित्ते विस्मयं विधाय प्रभोर्वन्दनां कृत्वा भाविस्वरूपं पप्रच्छ—अहो स्वामिन् ! लोकालोकप्रकाशक ! पंचम—षष्ठारकयोः स्वरूपं कथय, प्रभुर्वक्तिस्म—हे गौतम ! त्वं सावधानीभूय शृणु—मम निर्वाणात् त्रिवर्षसार्धाष्टमासे व्यतिक्रान्ते चतुर्थारक उत्तरिष्यति, अग्रे च पंचमारक आयास्यति, ततो मम निर्वाणाद् द्वादशवर्षे व्यतिक्रान्ते तव मोक्षो भविष्यति, ततोऽस्मन्निर्वाणाद् विंशतिवर्षे गते सुधर्मस्वामिनो मोक्षो भविष्यति, ततोऽस्मन्निर्वाणाच्चतुष्षष्टिवर्षे गते जम्बूर्मुक्तिं यास्यति, ततो जम्बूस्वामितो दश वस्तूनि विच्छेदं यास्यन्ति, तान्याह—आहारकशरीरं १, मनःपर्यवज्ञानम् २, पुलाकलब्धिः ३, परमावधिज्ञानं ४, क्षपक—

न्ताए वट्टमाणस्स पच्छिमे समये सोलससुमिणा दिट्ठा—तत्थ पढमे सुमिणे कप्परुक्खस्स साहा भग्गा १, बीए अकाले सूरो अत्थमिओ २, तइए चंदो सयच्छिड्डीभूओ ३, चउत्थे भूया नच्चंति ४, पंचमे दुवालसफणो कण्हसप्पो दिट्ठो ५, छट्ठे आगयं विमाणं पडियं दिट्ठं ६, सत्तमे असुइट्ठाणे कमलं संजायं ७, अट्ठमे खज्जोओ उज्जोअं करेइ ८, नवमे महासरोवरं सुक्कं दक्खिणदिसाओ थोवजलं लभन्ति ९, दसमे सुनहो सुवण्णपत्ते पायसं भक्खेइ १०, इक्कारसमे हत्थिआरूढो वणचरो दिट्ठो ११, दुवालसमे सायरं मंजायं मुंचइ १२, तेरसमे महारहे वच्छा जुत्ता दिट्ठा १३, चउदसमे महग्घं रयणं तेअहीणं दिट्ठं १४, पनरसमे रायकुमारो वसहारूढो दिट्ठो १५, सोलसमे गयकलहजुयला जुज्झंता दिट्ठा १६, एएण सुमिणाणुसारेण सासणे किं किं भविस्सइ ? इइ चंदगुत्तस्स रायस्स वयणं सुच्चा भद्दबाहुगणहरो युगप्पहाणो भवोदहितारगो चंदगुत्तस्स संघसमक्खं भणइ–चंदगुत्ता ! सुमिणाणुसारेण अत्थं कहेमि तं जहा"–प्रश्नसूत्रं सुगमत उत्तरसूत्रं व्याख्यायते-षोडशस्वप्नानां मध्ये प्रथमं तावत् चन्द्रगुप्तेन राज्ञा कल्पवृक्षस्य शाखा भग्ना दृष्टा, तस्य फलम् अतः पश्चात् कोऽपि राजा संयमं न ग्रहीष्यति १, द्वितीयस्वप्ने सूर्यस्याकाले एवास्तत्वं दृष्टं तेन केवलज्ञानं विच्छेदं यास्यति २, तृतीये चन्द्रः शतच्छिद्रो दृष्टस्तेन एकस्मिन् धर्मेऽनेके मार्गा भविष्यन्ति ३, चतुर्थे भूता नृत्यन्तो दृष्टास्तेन कुमतिजना भूता इव नर्त्स्यन्ति ४, पंचमे द्वादशफणः कृष्णसर्पो दृष्टस्तेन द्वादश वर्षाणि यावद् दुर्भिक्षं भविष्यति, कालिकसूत्रप्रमुखाणि श्रुतानि विच्छेदं यास्यन्ति, चैत्यद्रव्यधारिणो भिक्षुकाश्च, तत्र ये साधुधर्मकांक्षिणः ते सर्वे दक्षिणस्यां दिशि वलक्ष्यां गमिष्यन्ति ५, षष्ठे विमानं पतितं दृष्टं तेन जंघाचारणा-विद्याचारणाश्च साधवो भरते ऐरावते च नाऽऽगमिष्यन्ति ६, सप्तमे कचवरधरित्र्यां कमलमुद्गतं दृष्टं तेन धर्मश्चतुर्णां वर्णानां मध्ये वैश्यवर्गमध्ये भविष्यति, सूत्ररुचिश्चाल्पजनानां भविष्यति, ७, अष्टमे खद्योत उद्योतं करोति, तेन जिनधर्मे उदयपूजासत्कारो न भविष्यति पर·

अमात्यं च तथाविधचेष्टारहितं ज्ञात्वा ते ग्रथिलाः सर्वे विचारयन्ति—राजाऽमात्यौ ग्रथिलो जातौ अतएव अस्माकं कार्यं न कुर्वन्ति, अत एतौ उत्थाप्य अन्यौ राजामात्यौ करिष्यामः, एतादृशं ग्रथिललोकानां विचारं श्रुत्वा अमात्यो राजानं वक्तिस्म, एते सर्वेऽपि लोका आवामुत्थाप्य अन्यौ राजामात्यौ स्थापयिष्यन्ति तदा कमपि उपायं कृत्वा आवयोः रक्षा कार्या, तदा राजा अमात्यं कथयतिस्म, भवता कश्चिदुपायो विधेयो येनाऽऽवयो रक्षा स्याद् , तदा विचार्य अमात्यो वदति स्म–हे राजन् ! अन्यः कश्चिदुपायो नास्ति अत आवामपि ग्रथिलौ भवाव तदा इदं राज्यं स्थास्यति, इति विचार्य राजामात्यौ जानन्तौ अपि ग्रथिलौ भूत्वा, एभिः सार्धम् आत्मराज्यरक्षार्थं मिलितौ, ततः कियति दिने गते सति पुनः सुवृष्टिर्जाता तदा नवीनोदकस्य पाने सति सर्वे लोकाः सावधाना जाताः । एवं दुःषमकाले क्रियावन्तो गीतार्था अपि हीनाचारिभिः सार्धं सदृशीभूय विचरिष्यन्ति । एतादृशं स्वप्नफलविचारं श्रुत्वा गृहस्थावासतः उद्विग्नीभूय श्रीवर्धमानस्वामिसमीपे व्रतमंगीकृत्य पुण्यपालो मोक्षसुखभाग् बभूव । अत्र केचिद् श्रीभद्रबाहुस्वामिना उक्तान् अपि स्वप्नान् व्याख्यायन्ति, तथाहि–"ते णं काले णं, ते णं समए णं पाडलिपुरे नाम नयरे होत्था, जहा णं चंपा तहा भणियव्वा, तत्थ णं पाडलिपुरे नयरे पाडलनामवणसंडे होत्था, तत्थ णं पाडलिपुरे चन्दगुत्ते नाम राया होत्था, ते णं कालेणं ते णं समए णं चन्दगुत्तनामराया समणोवासगो अभिगयजीवाजीवो जाव अट्ठिमिज्जापवयणरागरत्तो, अह अण्णया कयावि पक्खियपोसहम्मि पडिजागरमाणस्स सुहपत्तेसु ओहीरमाणे ओहीरमाणे सोलससुविणा दिट्ठा, पासिता, चिंता समुप्पन्ना, अह कमेण दिवायरे उट्ठिए पोसहं पारेइ । ते णं काले णं, ते णं समए णं संभूयविजयसीस्से भद्दबाहुनाम गणहरे जुगप्पहाणे गामाणुगामं विहरमाणे पंचसयसमणपरिवरिया पाडलिपुरे पाडलिवणसंडे समोसरिए, राया आगओ जहा कोणिए, पंचविहेणं अभिगमेणं वन्दणेणं सोलससुमिणाणं अत्थं पुच्छइ—भयवं ! अज्ज रयणीए मम धम्मचि-

युक्ता नाधमकुले, परन्तु धर्मोत्पत्तिः कालप्रभावतो नोत्तमकुले भविष्यति, इति षष्ठस्वप्नफलम् । यथा कश्चिद् मन्दबुद्धिः कृषिकारो
धान्यबीजमूषरक्षेत्रे वपति तथा मूर्खबुद्धिमन्तः पुमांसः पात्रापात्रमनालोक्य पात्रबुद्ध्या कुपात्रे दानं दास्यन्ति, इति सप्तमस्वप्नफलम् ।
अष्टमस्वप्नफलम्—स्वर्णकलशसदृशा ज्ञानादिगुणयुक्ताः साधवः स्तोका भविष्यन्ति न च तेषां पूजाप्रभावनामपि कोऽपि करिष्यति,
परन्तु ये बाह्याऽडम्बरवन्तो ज्ञानक्रियारहिताः साध्वाभासाः तान् लोकाः पूजयिष्यन्ति, गीतार्था अपि साधवो हीनाचारिभिः सह
मिलिताः चलिष्यन्ति, यथा बहून् ग्रथिलान् लोकान् दृष्ट्वा सज्जनलोका अपि तेषां मध्ये मिलिताः सन्तः जानन्तोऽपि स्वयमात्मजी-
वितरक्षार्थं ग्रथिला भविष्यंति तथा । अथ तत्कथा—पृथिवीपुरे नगरे पूर्णभद्रनामा राजा आसीद् , तस्य महाबुद्धिनिधानः चतुरः स-
कलकार्यकुशलः सुबुद्धिनामा मन्त्रीश्वरोऽभूद् ; अथैकदा प्रस्तावे राजसभामध्ये लोकदेवनामा नैमित्तिकः समागतः, तदा अमात्येन पृष्टं,
हे नैमित्तिकचूडामणे ! आगामिकालस्य शुभाशुभवार्तां कांचित् प्रकाशयतु, तदा नैमित्तिकेन निजनिमित्तशास्त्रं सम्यक् पर्यालोच्य स्व-
ज्ञानबलात् कथितम्—हे मन्त्रीश्वर ! अतो दिनाद् एकस्मिन् मासे मेघवृष्टिर्भवियष्ति, तज्जलपानं च ये करिष्यन्ति ते सर्वे मनुष्या ग्रथिलाः भ-
विष्यन्ति, ततः पश्चात् कियति दिवसे शुभा वृष्टिर्भविष्यति, तज्जलपानाच्च पुनः सर्वे सावधाना भविष्यन्ति; एतादृशं नैमित्तिकस्य वचनं श्रुत्वा
राजामात्याभ्यां नगरमध्ये घोषणा कारिता । यत् सर्वैः लोकैः पानीयस्य संग्रहः कर्तव्यः, तदनन्तरं सर्वैरपि राजवचनं श्रुत्वा पानीयस्य
संग्रहः कृतः । अथ नैमित्तिककथनानुसारेण वर्षा जाता, तदा सर्वैरपि लोकैः वर्षापानीयस्य पानं न विहितम् , कियति दिवसे गते पूर्वसं-
गृहीतं जलं यदा सम्पूर्णं जातं तदा राजाऽमात्याभ्यां विना सर्वैः सामन्तादिभिरपि वर्षापानीयं पीतम् , तेन च सर्वग्रामो ग्रथिलः जातः
अथ सर्वे लोका एकत्रीभूय नग्नाः सन्तः नृत्यन्ति हसन्ति अन्याश्च कुचेष्टाः कुर्वन्ति, राजामात्याभ्यां विना सर्वे तादृशं कुर्वन्तः राजानम्

हे स्वामिन् ! अद्य रात्रौ मया अष्टौ स्वप्ना दृष्टाः,ताननुक्रमेण भवतामग्रे कथयामि—जीर्णशालायां स्थितो हस्ती दृष्टः १, कपिश्च-पलतां कुर्वन् दृष्टः २, क्षीरवृक्षः कण्टकैर्व्याप्तो दृष्टः ३, चतुर्थे च स्वप्ने काको दृष्टः ४, पञ्चमे मृतः सिंहो भयं कुर्वन् दृष्टः ५, षष्ठे स्वप्नेऽशुचिभूमिकायामुत्पन्नमरविन्दं दृष्टम् ६, सप्तमे स्वप्ने ऊषरक्षेत्रे बीजमुप्तं दृष्टम् ७, अष्टमे स्वप्ने स्वर्णकलशो म्लानो दृष्टः ८, इति राज्ञा उक्ते एतेषां च फले पृष्टे प्रभुर्वक्ति—हे राजन् ! एषां फलमेकाग्रचित्तेन शृणु—अस्मिन् पञ्चमारके दुःख-दारिद्र्य-रोग शोक-भयैर्व्याप्तो गृहस्थाश्रमो जीर्णशालासदृशो भविष्यति; यस्मिन् गृहस्थरूपो हस्ती रक्तः सन् स्थास्यति; दुःखं च सुखं कृत्वा मानयिष्यति परमुत्तमसुखदात्रीं व्रतशालां नांगीकरिष्यति, इति प्रथमस्वप्नफलम् । पुनः पञ्चमकाले कपिवत् चपला अल्पसत्त्वा जीवा ज्ञान-क्रियायामादरभाजो न भविष्यन्ति, साधवश्च शिथिलाचारा भविष्यन्ति, ये पुनः दृढव्रतधारका धर्मकार्ये शिक्षां दास्यन्ति तेषां हास्यं च करिष्यन्ति, यथा ग्रामीणलोका नगरस्थलोकानां हास्यं कुर्वन्ति; तथा करिष्यन्ति, इति द्वितीयस्वप्नफलम् । तथा ज्ञाने क्रियायां च भक्तिमन्तो जिनशासनोन्नतिकारकाः सप्तक्षेत्रीवित्तव्ययविधायकाः शुभगुणवन्तश्चारित्ररागिणः क्षीरवृक्षतुल्या ये श्रावकास्तान् वेषमात्रधारिणोऽहंकारवन्तो गुणवत्साधुपूजामसहमाना लिंगिनः कण्टकतुल्याः रोधयिष्यन्ति, इति तृतीयस्वप्नफलम् । यथा अतिस्वच्छजलभृतां वापीं दृष्ट्वा काको न तत्र रागं करोति, एवं ज्ञानक्रियायुक्तान् अपि साधून् स्वगच्छे दृष्ट्वाऽपि रागं न साधवः प्राप्स्यन्ति, यथा काकस्य रागं न वापी प्राप्नोति तथा साधवोऽपि गच्छस्य रागं न करिष्यन्ति इत्यर्थः । परन्तु यत्र गच्छे मन्दाऽऽचाराः साधवः तत्र सुन्दरं स्वगच्छं त्यक्त्वा यास्यन्ति आत्मनः पण्डितं मन्यमानाः, इति चतुर्थस्वप्नफलम् । जातिस्मृत्यादिरहितं मृतसिंहतुल्यं जिनदर्शनं न परतीर्थिकात् पराभवं प्राप्स्यति परं परदर्शनानां भयं करिष्यन्ति, इति पञ्चमस्वप्नफलम् । पद्महृदे कमलोत्पत्तिर्युक्ता, न अशुचिभूमौ, एवं धर्मोत्पत्तिरपि उत्तमकुले

आगतः, तत्र बहुलविप्रगृहे परमान्नस्य पारणं चक्रे, तत्र पञ्च दिव्यानि प्रादुर्भूतानि । तत्र च सार्धद्वादशस्वर्णकोटीनां देवैर्वर्षा कृता । अनन्तरं क्रमेण विहरतः श्रीवीरप्रभोः गोपालक–चण्डकौशिकसर्प–शूलपाणियक्ष–संगमदेव–कटपूतनाव्यन्तरीप्रमुखैः बहव उपसर्गाः कृताः, तथापि प्रभुर्ध्यानात् किंचिन्मात्रमपि न चचाल; मेरुवन्निष्प्रकंप आसीत्, श्रीवीरप्रभोः चातुर्मासी षण्मासी–द्विमास्यादि प्रचण्डतपः क्रियायामुद्यतस्य पक्षाधिकसार्धद्वादशवर्षाणि अतिक्रान्तानि । तस्मिन् समये जृम्भिकग्रामे ऋजुवालुकानदीतीरे श्यामाककुटुम्बिनः क्षेत्रस्य समीपे शालवृक्षस्याधोभागे गोदोहासनेन स्थितस्य षष्ठतपोयुक्तस्य वैशाखशुक्लदशम्यां तृतीयप्रहरे शुक्लध्याने वर्तमानस्य श्रीवीरप्रभोश्चतुर्णां घातिकर्मणां क्षये सति केवलज्ञानं केवलदर्शनं च समुत्पन्नम् । तत एकादश्यां मध्यमपापायां महासेनवने तीर्थं प्रवर्तितम् , शक्रादिदेवैरेकत्रीभूय समवसरणं रचितम्, पश्चाद् इन्द्रभूत्याद्येकादश गणधराः श्रीवीरेण स्थापिताः । अथ प्रभोः चतुर्दशसहस्रमिताः साधवः संजाताः, चन्दनबालादिषट्त्रिंशत्सहस्रमिताश्च साध्व्योऽभूवन् , शंख–शतकादि एकोनषष्टिसहस्राधिकलक्षप्रमाणाः श्राद्धाः, सुलसा–रेवतीप्रमुखाष्टादशसहस्राधिकत्रिलक्षप्रमाणाः श्राविकाश्च संजाताः । अथ प्रभोश्चतुर्मासीनां संख्या कथ्यते— दीक्षाऽनन्तरं प्रथमचतुर्मासी अस्थिग्रामे शूलपाणियक्षगृहे कृता, त्रिचतुर्मासी चम्पानगर्याम् , विशालायां–वाणीयग्रामे द्वादश चतुर्मास्यः कृता, राजगृहनगर्यां नालन्दपाटके चतुर्दश चतुर्मास्यः, षट् चतुर्मास्यः मिथिलानगर्यां भगवता कृताः, द्वे चतुर्मास्यौ भद्रिकानगर्यां कृते, एका चतुर्मासी आलम्भिकानगर्यां कृता, एका चतुर्मासी म्लेच्छभूमिकायां कृता, एका चतुर्मासी श्रावस्तीनगर्यां कृता, एका च मध्यमपापायां हस्तिपालराज्ञः सभायामन्तिमा कृता, तत्र अन्तिमचातुर्मास्यां श्रीवीरप्रभुः स्वस्दायुषोऽन्तं ज्ञात्वा भव्यलोकोपकारार्थं षोडशप्रहरान् यावद् देशनांदत्तवान् , तस्मिन्नवसरे पुण्पालराजा प्रभोर्वन्दनार्थमागतः, श्रीवीरप्रभोर्वन्दनां कृत्वा हस्तद्वयं सम्पुटीकृत्य इति-वक्ष्यमाणं पृष्टवान्-

षट्पञ्चाशद्दिक्कुमारीणामासनानि चकम्पिरे, अवधिना प्रभोर्जन्म ज्ञात्वा अत्यन्तप्रमुदिताः सन्त आगत्य जन्मकार्यं कुर्वन्ति । तदनन्तरं-चतुष्षष्टिसुरेन्द्राणामासनानि चकम्पिरे, ततस्तेऽपि अवधिना विज्ञाय अत्यन्तप्रमुदिताः सन्त आगत्य त्रिःप्रदक्षिणीकृत्य जिनाम्बां जिनं च नत्वा मातरमवस्वापिनीं निद्रां दत्त्वा प्रभुं गृहीत्वा मेरुपर्वतोपरि गत्वा स्नात्रमहोत्सवमहंपूर्विकया चक्रुः । पश्चात् मातुः समीपे स्थापयित्वा मातरवस्वापिनीं निद्रां संहृत्य नमस्कृत्य स्वस्थानं जग्मुः । अथ यस्माद् दिनात् प्रभुर्गर्भे आगतस्तस्माद् दिनाद् राजा धनधान्यैर्वृद्धिमाप, स्वर्णरत्नादीनां च वृद्धिः संजाता. ततो गुणनिष्पन्नं सर्वस्वजनसमक्षं माता-पितृभ्यां द्वादशे दिने वर्धमानकुमार इति नाम प्रदत्तम् , देवैश्च अनन्तसत्त्वमनन्तधैर्यं दृष्ट्वा महावीर इति नाम विदधे । अथ भोगसमर्थं ज्ञात्वा पित्रा परं प्रमोदतो यशोमतीनाम्न्या राजकन्यया सह पाणिग्रहणं कारितम् । अथ प्रभोः सुपार्श्वनामा पितृव्यः, नन्दिवर्धननामा ज्येष्ठो भ्राता, सुदर्शनानाम्नी भगिनी, यशोमती नाम्नी पत्नी, प्रियदर्शनानाम्नी च पुत्री आसीद् । श्रीवीरप्रभुः अष्टाविंशतिवर्षाणि यावद् गृहावासे तस्थौ । भगवता पूर्वं गर्भे एवाभिग्रहः कृतोऽभूयत् जीवतोः सतोः मातापित्रो मया दीक्षा न गृहीतव्या इति । अथ मातापितृभ्यां देवलोके प्राप्ते अभिग्रहं पूर्णं सञ्जातं ज्ञात्वा प्रभुर्दीक्षां ग्रहीतुं तत्परोऽभूत् , तदा नन्दिवर्धनराज्ञ आग्रहात् पुनरपि वर्षद्वयं गृहस्थावासे तस्थौ; तत्र सांवत्सरिकं दानं दत्तम् । अथ लोकान्तिकदेवा आगत्य जानन्तमपि प्रभुं दीक्षावसरं ज्ञापयन्ति-'अहो स्वामिन् ! धर्मतीर्थप्रवृत्तिं कुरु' इति देववचनं श्रुत्वा प्रभुः षष्ठतपसा संयुतः चन्द्रप्रभानाम्नीं शिबिकामारुह्य देवमनुष्यपरिकरेण युतः क्षत्रियकुण्डनगरतो निःसृत्य ज्ञातवनखण्डे आगत्य शिबिकातः उत्तीर्य मार्गशीर्षकृष्णदशम्यामपराह्णे एकाकी एकदेवदूष्येण वस्त्रेण सहितः दीक्षां जग्राह । तस्मिन् समये चतुर्थं मनःपर्यवज्ञानमुत्पन्नम् । अथ दीक्षां गृहीत्वा प्रभुरन्यत्र विजहार । प्रव्रज्यादिनाद् द्वितीये दिने कोल्लाकसन्निवेशग्रामे

प्राणतनामदशमदेवलोकस्य पुष्पोत्तरविमानाच्च्युतः, आषाढशुक्लषष्ठीदिने उत्तराफाल्गुनीनक्षत्रे चन्द्रयोगे आगते सति क्षत्रियकुण्डग्रामनगराधिपतिश्रीसिद्धार्थराज्ञो भार्यायाः त्रिशलायाः कुक्षावुत्पन्नः। यस्यां रात्रौ भगवानुत्पन्नः तस्यां रात्रौ गर्भप्रभावात् त्रिशलाराज्ञ्या चतुर्दश स्वप्ना दृष्टाः, तानाह-सिंहः, गजः, वृषभः, लक्ष्मीः, पुष्पमाला, चन्द्रः, सूर्यः, ध्वजः, पूर्णकलशः, पद्मसरः, समुद्रः, देवविमानम्, रत्नराशिः, निर्धूमाग्निश्च । एवमेते स्वप्नाः क्रमेण दृष्टाः ❀ ततः चैत्रशुक्लत्रयोदश्यामर्धरात्रे श्रीवीरप्रभोः जन्म जातम् , तस्मिन् समये षट्पंचा-

*—अत्र सामान्येन नाममात्रेण संक्षिप्तं श्रीवीरचरित्रं दर्शितम् , अतएव देवलोकात् च्युत्वा आषाढशुक्लषष्ठ्यां देवानंदागर्भागमनं तथैव द्व्यशीतिदिनव्यतीते इन्द्रेण त्रिशलागर्भे अवतारितः, ( गर्भापहारः कारितः, इत्यर्थः ) एष च विशेषार्थो न दर्शितः । जैनसिद्धांते विशेषार्थे विद्यमानेऽपि सामान्यव्याख्याऽवसरे विशेषार्थस्य व्याख्यानं न भवति, यथा-कल्प-आवश्यक-आचारांगादौ आगमपंचांगीशास्त्रेषु ' देवानंदागर्भात् द्व्यशीतिदिनव्यतीतेषु सत्सु हरिणेगमेषिदेवेन त्रिशलागर्भे स्थापितः श्रीवीरप्रभुः ' एतद्विशेषव्याख्याविद्यमानेऽपि पंचाशकसूत्रवृत्तौ सामान्यव्याख्याऽवसरे तस्योल्लेखो न कृतः, तेन तस्य तत्र अभावो न भवति , तथैव अत्राऽपि देवानंदागर्भागमने विद्यमानेऽपि तस्योल्लेखो न कृतः, तथापि तस्य अभावो न भवति. अतएव अत्र सामान्यविशेषापेक्षया तद् अवगंतव्यम् । किमुक्तं भवति श्रीवर्द्धमानस्वामिनः विशेषतः षट्सु कल्याणकेषु आगमानुसारेण विद्यमानेषु अपि, अत्र सामान्यापेक्षया त्रिशलागर्भागमन-जन्म-दीक्षादिपंचकल्याणकानि उक्तानि. तथैव पंचाशकसूत्रवृत्तावपि-सर्वजिनेंद्रापेक्षया च्यवन—जन्म-दीक्षादिपंचकल्याणकानि-सामान्येन उक्तानि । परं च कल्प-स्थानांग-आचारांग-आवश्यकनिर्युक्ति-चूर्ण्यादिआगमेषु-महापुरुषचरित्र-वीरचरित्र-त्रिषष्टिशलाकापुरुषचरित्र-कल्पनिरुक्त-टिप्पणकादि प्राचीनशास्त्रेषु च विशेषेण च्यवन गर्भसंक्रमण-जन्म-दीक्षादिषट्कल्याणकानि दर्शितानि, तेनात्र विसंवादो न संभाव्यः समवायांगसूत्रवृत्ति-आवश्यकचूर्णि-लोकप्रकाश-दशाश्रुतस्कंधादिशास्त्रानुसारेण श्रीवीरस्य च्यवनद्वयस्य संसिद्धत्वात्. सामान्यविशेषापेक्षया च अस्य विशेषनिर्णयो कल्पद्रुमकलिकाया प्रथमव्याख्यानात्, अस्मत् निर्मितबृहत्पर्युषणानिर्णयस्योत्तरार्धाच्च अवगंतव्य इति मणिसागरः।

विहरन् जीवितस्वामिश्रीमहावीरप्रतिमावन्दनार्थं गतः, एतस्मिन् प्रस्तावे संप्रति राजा राजमार्गे गच्छन् सुस्थितसूरिं दृष्ट्वा जातिस्मरणभाग् बभूव । ततः राजा समीपे आगत्य बहुभक्तिपूर्वकं श्रीगुरुं ननाम । करद्वयं संयोज्य राजा गुरुं प्रति वक्तिस्म–'हे स्वामिन् ! मां जानीथ' इति पृष्टे गुरुराह–हे राजन् ! भवन्तं को नाम न जानाति ?; ततो राजा पुनरुवाच-हे ज्ञानसमुद्र ! ज्ञानविशेषेण भवताऽहमुपलक्षितो न वा ? इति मया पृच्छ्यते, तदा सूरिश्चमत्कारं प्राप्य श्रुतज्ञानोपयोगं दत्त्वा उवाच–भो राजन् ! त्वं पूर्वभवे संवेगवानस्माकं शिष्यो बभूव, उत्तमदीक्षाप्रभावतो भवान् राजा जातः, एषा च सम्पत् प्राप्ता । एतादृशं गुरोर्वचनं श्रुत्वा आचार्ये प्रीतिमान् राजा वक्ति–हे स्वामिन् ! मया बुभुक्षितेन रंकेन इदं राज्यं प्राप्तं तत्सर्वं युष्माकं प्रसादफलं; इतरथा मम राज्यं कुतः ? तस्मादिदं राज्यं भवद्भिर्ग्राह्यं; यथाऽहमनृणी स्याम्, एतादृशं राज्ञो वाक्यं श्रुत्वा गुरुरुवाच–हे निर्मलबुद्धे राजेन्द्र ! अस्माकं राज्यस्यवाञ्छा नास्ति, वयं तु शरीरेऽपि निः–स्पृहाः किं पुनः राज्ये, तस्माद् हे राजेन्द्र ! अस्माकं राज्येन सह किमपि प्रयोजनं नास्ति, इदं राज्यं भवद्भिः पुण्यात् प्राप्तं; ततो हे राजेन्द्र ! पुनः पुण्ये उद्यमः कर्त्तव्यः, निर्मलं सम्यक्त्वं च पालनीयम् । श्रीजिनेश्वरजगन्नाथस्य निरन्तरं पूजां कुरु । पुनः सुसाधूनां निर्ग्रन्थाना पंचसमितिसमितत्रिगुप्तिगुप्तानां सप्तदशभेदसंयमपालकानां द्विचत्वारिंशदाहारदूषणवर्जितानां भव्यजीवोपकारकाणां सेवां कुरु, दानादिचतुर्विधस्य धर्मस्याराधने उद्यमं कुरुष्व, एष धर्मो विशेषेण पर्वसु आराधनीयः, एतादृशं गुरुवाक्यं श्रुत्वा राजा उवाच–हे स्वामिन् ! संवत्सरादि समस्तपर्व जिनशासने प्रसिद्धं वर्तते, तस्य पर्वणो महिमा श्रावकैः बहुतरो मन्यते; परं लोकोत्तरं दीपावलिपर्व कुतः प्रवृत्तं ? अस्मिन् पर्वणि चारुवस्त्रभूषणादीनि मनुष्या धारयन्ति, पुनः वृषभादिशृंगरंजनक्रियां गृहांगणप्रमुखसंस्कारादीनि च कुर्वन्ति, तस्य किं कारणम् ? इति राज्ञा पृष्टे सति गुरुर्वक्तिस्म–हे राजन् ! एतस्य सम्बन्धं त्वमेकाग्रचित्ततया शृणु । श्रीवर्धमानस्वामी

धर्मकर्माणि विधाय तत्पर्वाराधनीयं, येनेह परत्र च सर्वेष्टसिद्धिः ॥

संवद्व्योमरसाष्टरात्रिप्रमिते ( १८६० ), मासे शुचौ शोभने । पक्षे प्रोज्ज्वलताद्युते सुविहिते, सम्यग्द्वितीयातिथौ ॥
श्रीपूज्यजिनहर्षसूरिगणभृद्राज्ये मुदाष्टाह्निका—व्याख्यानं सुगमं हितं सुविहितं श्रीजेसलाद्रौ पुरे ॥ १ ॥
श्रीमंतो गुणशालिनः समभवन्, प्रीत्यादिमाः सागरा-स्तच्छिष्याऽमृतधर्मवाचकवरा आसन् स्वधर्मादराः ॥
तच्छिष्यैर्जिनराजराजिचरणांभोजप्रसक्तैः क्षमा-कल्याणाभिधपाठकैः सुमनसां श्रद्धावतां प्रीतये ॥ २ युग्मं ॥
मुनेरुदयरंगस्या-ग्रहाद्व्याख्यानमादरात् ॥ इदं व्यधायि प्राचीनं पद्यबन्धं विलोक्य तत् ॥ ३ ॥

॥ इति पर्युषणाद्यष्टाह्निकाव्याख्यानं सम्पूर्णम् ॥

## अथ दीपमालिकाव्याख्यानम् ॥ ११ ॥





श्रीनेमीशं जिनं नत्वाऽजिमगंजपुरे स्थितम् । दीपोत्सवस्य व्याख्यानं, लिख्यते देवभाषया ॥ १ ॥

अस्मिन् जंबूद्वीपे भरतक्षेत्रस्य मध्यखंडे मालवदेशे अलकातुल्या उज्जयिनी नाम नगरी बभूव । तस्यां सूर्यवत् तेजस्वी भूपगुणसमन्वितः संप्रतिनामा राजा राज्यं करोतिस्म । अथैकदा उज्जयिन्यां सुस्थितसूरिनामा आचार्यः षट्त्रिंशद्गुणैर्विभ्राजमानो ग्रामानुग्रामं

दार्थमुद्यतो भवति, तावदेव सा तस्य खड्गधारां बबन्ध, न पुनस्तस्य सत्वस्य. ततो राजा खड्गधाराबन्धनाद्विलक्षः सन् कंठनालविडंबकं नवं नवं खड्गं गृहीतवान्, यदासौ भूपतिर्मनागपि सत्वान्न चचाल तदा ते स्त्रियौ स्वकीयं रूपं प्रादुःकृत्याऽत्यादराज्जयजयेत्युचतुः, पुनश्च—

जय ! त्वं वृषभस्वामि ! कुलसागरचन्द्रमाः । जय ! सत्ववतां धुर्यः, जय ! चक्रीशनंदनः ! ॥ १ ॥

अहो ! तव धैर्य ! अहो ते मनसो निश्चयः ! यत्स्वस्य विनाशेऽपि मनाक् स्वव्रतं न त्यक्तवान्. देवेन्द्रः स्वसभायां देवानां पुरस्त्वातुलं सत्त्वं विशेषतः प्रशशंस, हे राजन् ! आवाभ्यां अश्रद्धानाभ्यां स्वर्गादागत्य स्वनिश्चयात्त्वं क्षोभयितुमारब्धः, परं त्वां क्षोभयितुं कोऽपि न समर्थः. हे जगत्प्रभुकुलावतंस ! हे वीर ! त्वयैव इयं पृथ्वी रत्नसूरिति सत्यं नाम बिभर्ति, इत्थं तयोः स्तुवत्योस्तत्र देवेंद्र उपागमत्, जयजयशब्दमुच्चरन् पुष्पवृष्टिं च कृतवान् . तदा प्रतिज्ञाभ्रष्टा उर्वशी इन्द्रेण सोपहासं निरीक्षिता सती तत्पुरतो नृपगुणान् जगौ. इन्द्रोऽपि तस्मै वरमुकुटकुंडलांगदहारान् दत्वा च ताभ्यां सह स्वर्गं ययौ. सूर्ययशा अपि सत्यप्रतिज्ञः प्रमुदितः सन् सन्नीत्या पृथ्वीं पालयतिस्म. अथ स राजा भरतेशवत् पृथ्वीं जिनगृहमंडितां कुर्वन् श्रीसंघयात्रया जन्म पवित्रयन् श्रीयुगादिजिनचरणवत् नित्यं चतुर्दश्यष्टमीपर्व आराधयामास, तथा व्रतधारिणः श्रावकान् स्वगृहे भोजयामास. पूर्वं भारतेन कांकिणीरत्नरेखाभिः श्रावका अंकिताः, सूर्ययशसा तु सौवर्णोपवीतेन तेन तेंचिताश्चक्रिरे. तस्य राज्ञ उदारचरिता बहवः कुमारा आसन् . यथा ऋषभस्वामिन ईक्ष्वाकुवंशो वव्रृते, तथा सूर्ययशसः सूर्यवंशोऽभवत् ; सोऽप्येकदा पितृवत्स्वरत्नदर्पणे पश्यन् संसारासारतां धारयन् केवलज्ञानं प्राप्य बहून् भव्यान् प्रतिबोध्य मुक्तिं प्राप । इति निजनियमदृढपालने सूर्ययशोनृपकथा ॥ भव्यात्मभिरष्टाह्निकापर्वणीत्थं

करणमंगीकृतमेव, अहमेकदा त्वत्परीक्षार्थं त्वत्तस्तद्याचितवती, त्वं तु हहा स्वल्पेन कार्येण क्रोधवशं गतः, हे नाथ ! अहं शीलादपि सुखादपि उभयस्माद् भ्रष्टा, तस्मान्मम चिताग्निसेवनमेव श्रेयःश रणमस्तु. इति तद्वचः श्रुत्वा तन्मग्नमानसो नृपः स्ववाक्यं स्मरन् जगाद, हे प्रिये ! ताततातेन च यत्कृतं तत्पर्वणो नाशं तत्पुत्रोऽहं कथं कुर्वे ? हे हरिणाक्षि ! मम सकलां पृथ्वीं कोशं गजाश्वादीं च सर्वान् त्वं स्वयं गृहाण; परं येन न सौख्यं, न च धर्मस्तदकृत्यं मां मा कारय ? ततः सापि ईषद्विहस्य कोमलवाण्या प्रोवाच, हे राजन् ! भवादृशां सत्यवचनमेव सद्वृत्तं, यतो येन पापिना स्वांगीकृतविघातः कृतः सोऽशुचिस्तस्य भारात्पृथ्वी अतिषीदति. हे नाथ ! यदि त्वया इदमपि कार्यं न सिद्ध्यति तदा राज्यादिदातृत्वं कथं सेत्स्यति ? त्वदर्थं मया पितुर्विद्याधरैश्वर्यं त्यक्तं मयैतद्राज्यादिना किं कुर्वे ? अथ हे स्वामिन् ! यदि पर्वभंगं न कर्त्ता, तर्हि मत्पुरतो युगादीशप्रासादं पातय ? इति तद्वचनश्रवणमात्रेणैव नृपो वज्राहत इव मूर्छां प्राप्य गतचैतन्यो भुवि पपात. तदैव मंत्रिणा आदेशादाकुलैस्तत्परिकरजनैः शीतलजलादिसंसेकान्नृपो लब्धचैतन्यो विहितः; अथ सूर्ययशा नृपः स्वपुरः स्थितां तां स्त्रियं दृष्ट्वा कुपितो जगाद, रे अधमे ! अयं तवाचारो वाण्या मत्पुरः स्वकुलाधमतां विकिरति, यत उद्गारवदाहारो भवेत्, त्वं विद्याधरपुत्री न, किंतु चांडालपुत्री दृश्यसे, मया मणिभ्रमेणैव काचखंडादरश्चक्रे, यो देवस्त्रैलोक्यनाथस्त्रैलोक्यवंदितस्तत्प्रासादभंगकृत् कोऽपि कथं भवेत् ? तस्मात् हे स्त्रि ! स्वयं स्ववचसा बद्धं मामनृणं कर्तुं धर्मलोपं विनाऽन्यद्याचस्व ? पर्वलोपं चैत्यध्वंसं चाहं सर्वथा न करोमि, तत् श्रुत्वा सापि ईषद्विहस्य पुनस्तमुवाच-हे नाथ ! अन्यदन्यदिति च तद्वचो दूरतो याति, यदीदं त्वं नांगीकर्त्ता, तर्हि त्वं स्वयं स्वपुत्रस्य शिरश्छित्वा सद्यो मह्यं देहि ? अथ राजा विमृश्य वदतिस्म, हे सुलोचने ! मत्सुतो मत्तोऽभवत्, तस्मान्मम शिरस्तव करतलस्थमस्तु, इत्युक्त्वा नृपः करेण खड्गं गृहीत्वा यावत् स्वशिरच्छे-

तपश्च कर्त्तव्यं, जिनपूजाश्च विधेया, इत्थमेतानि पर्वाण्याराधयन् जनः पुण्यान्यर्जयति, ततः क्रमेण कर्माणि क्षपयित्वा मुक्तिं याति, अतो हे कान्ते ! सप्तम्यां त्रयोदश्यां च लोकप्रबोधाय अयं पटहोद्घोषो मयादेशात्प्रजायते. अथोर्वशी एतन्नृपवचः श्रुत्वा तन्निश्चयचमत्कृतापि मायावचनप्रपंचेन जगाद, हे नाथ ! इदं मनुष्यत्वमिदं रूपमिदं राज्यं सर्वं तपःक्लेशादिभिस्त्वया कथं विडंब्यते ? यथेच्छं सुखानि भुंक्ष्व ? पुनर्मानवो भवः क ? राजसद्भोगाश्च क ?

अथ कर्णयोस्तप्तत्रपुतुल्यं तस्यास्तद्वचनं श्रुत्वा नृप उवाच रे रे धर्मनिंदामलिनस्वभावेऽधमे ! इयं तव वाणी मनागपि विद्याधरकुलाचारोचिता न दृश्यते, तव सकलं चातुर्यं धिक्, रूपं वयः कुलं च धिक्, येन त्वं जिनपूजादिकं सद्धर्मकृत्यं निंदसि, पुनर्मनुष्यत्वसद्रूपारोग्यराज्यादीनि तपसा प्राप्यंते, तत्तपः कः कृतज्ञो नाराधयेत् ? यो नाराधयेत् स कृतघ्न एव, धर्माराधनतो हि देहस्य विडंबनं न स्यात्, धर्मं विना केवलं विषयैस्तु विडंबनमेव, तस्माद्यथेच्छं धर्मः कर्त्तव्यः, पुनः पुनर्मानवो भवः क ? व्रतधीः का ? मृगसिंहादिबाला अपि अष्टम्यां पाक्षिके चाहारं न गृह्णंति, तर्हि अहं कथं गृह्णामि ? तेषां ज्ञातृत्वं च धिगस्तु, ये सर्वधर्मकारणं पर्वाराधनं न कुर्वंति. श्रीयुगादिजिनोपदिष्टमिदमुत्तमं पर्वास्ति, तदहं तपो विना कंठगतप्राणैरपि पर्व वृथा न कुर्वे, हे स्त्रि ! मम राज्यं प्रयातु, प्राणक्षयोऽस्तु, परं पर्वतपसोऽहं भ्रष्टो न भवामि ! तत इत्थं क्रोधाकुलं नृपवचः श्रुत्वा उर्वशी मोहमायां कुर्वंती पुनरुवाच–स्वामिन् ! भवतः कायक्लेशो माभूदिति प्रेमरसत एव मयैतद्वचः प्रोक्तं, तस्मात्क्रोधावसरोऽत्र नास्ति. पूर्वंतु आवाभ्यां पितृवाक्यविमुखीभ्यां स्वच्छंदचारी नृपतिर्न वृतः, सांप्रतं पूर्वकर्मपरिपाकात् त्वं वरो वृतस्तेनावयोः संसारसौख्यं शीलं च सर्वमकस्माद्गतं, यदि स्वाधीनपुंस्त्रियोर्योगो भवेत्तदा सांसारिकं सुखं स्यात्, अन्यथा रात्रिदिवसयोगवद्विडंबनमेव, हे स्वामिन् ! पुरा नाभेयजिनाग्रे त्वया तु मद्वाक्य-

उवाच. आवां मणिचूड विद्याधरराजस्य पुत्र्यौ, आबाल्यात्कलास्वेवादरवत्यौ अभूतां, क्रमेण यौवनं प्राप्ते वीक्ष्य अस्मत्पिता वरचिंतां कर्तुं लग्नः, आवां स्वमदृशं पतिमलभमाने स्थाने स्थाने अर्हच्चैत्यानां नमस्याभिर्निजं जन्म सफलं कुर्वहे । पुनर्मानवो भवः क्व ? इयमयोध्यापि तीर्थभूतास्ति, अतोऽत्र भरतकारिते चैत्ये आदिजिनं नमस्कर्तुमावयोरागमनमभूत् . एवं कथयंत्योस्तयोर्मंत्री उवाच–अमुना सूर्ययशसा नृपेण सह युवयोः संगमः श्रेष्ठो; यतोऽसो ऋषभस्वामिनः पौत्रो भरतचक्रिणः पुत्र सर्वकलासंपूर्णः सौम्यः सद्गुणवान् बलवांश्च अस्ति तस्मान्निश्चितं ऋषभस्वामी युवयोस्तुष्टो यदुत अकस्मात्सूर्ययशा वरः प्राप्तः । मंत्रिणि एवं वदति सति ते तमूचतुः आवां हि स्वाधीनं पतिं मुक्त्वान्यं पतिं नैवाश्रयावहे. ततोऽमात्यो नृपाज्ञया ते इत्यवोचत् , युवयोर्वाचमन्यथा कुर्वन्नृपतिर्मया निषेध्यः, मंत्रिणा एवमुक्ते सति तदैव श्रीयुगादीशसमक्षं तेषां पाणिग्रहोत्सवः संजातस्ततस्तयोः प्रीतिरसाकृष्टो भूपतिः संसारे तद्भोगमेव सारं मन्यमानोऽहर्निशं ताभ्यां सह विविधान् भोगान् भुंजानो विस्मृतान्यकृत्यः सुखेन कालं निनाय । अथ एकदा संध्यासमये ताभ्यां पत्नीभ्यां युतः सूर्ययशा नृपो गवाक्षं ययौ, तदा भो लोकाः ! श्वोऽष्टमीपर्व भावि, ततस्तदाराधने सादरैर्भाव्यमिति पटहोद्घोषणां ताभ्यां कपटस्त्रीभ्यां श्रुत्वा ततोऽवसरं विज्ञाय रंभाऽजानतीव नृपतिं प्रति सादरा सती भंभावादनकारणमपृच्छत् । नृपतिरुवाच हे रंभे ! शृणु, ? अस्माकं तातेनोक्तं चतुर्दश्यष्टमीरूपं पर्वास्ति, यथामावास्या पौर्णमासी अष्टाह्निकाद्वयं चातुर्मासत्रियं वार्षिकं पर्युषणाख्यं च पर्व एतानि अन्यान्यपि पर्वाण्युक्तानि संति; ज्ञानाराधनार्थं पंचमी च प्रोक्तास्ति । एतेषु पर्वदिनेषु विहितं पुण्य स्वर्गमोक्षसुखप्रदं भवेत् . तस्माच्चतुःपर्व्यामखिलं गृहव्यापारं परित्यज्य शुभं कर्म विधेयं; पुनश्चतुःपर्व्यां स्नान–स्त्रीसंग–कलह–द्यूतक्रीडा–परद्रव्य–मात्सर्य–क्रोधादिकषायसंगप्रमादादि न किमपि कर्त्तव्यं, प्रियेष्वपि ममता न विधेया, परमेष्ठिस्मरणादिशुभध्यानवता भाव्यं, सामायिकं पौषधं च षष्ठाष्टमप्रमुखं

कंपते, समुद्रो वा मर्यादां त्यजेत्, कल्पवृक्षो वा निष्फलो भवेत् तथाप्येषः कंठगतैः प्राणैरपि जिनाज्ञावत् स्वकृतं निश्चयं न मुंचति, अथोर्वशींद्रवचः श्रुत्वा किंचिन्मनसि विचार्य प्रत्युत्तरमुवाच–हे स्वामिन् ! युक्तायुक्तज्ञस्त्वं मनुष्येषु निश्चयं किं श्लाघसे? यः सप्तधातुनिष्पन्नशरीरोऽन्नजीवकः स देवैरप्यचाल्य इति कः श्रद्दधाति ? मद्गानरसपूरेण केषां विवेकप्रमुखा गुणा न विलयं यांति ? तत्र गत्वा तमप्यहं सद्यो व्रताद् भ्रंशयिष्ये, इति प्रतिज्ञां विधाय रंभया सहिता उर्वशी हस्तेन वीणां दधाना स्वर्गात् भूमिमवतरतिस्म; अयोध्यानिकटोद्याने च श्रीऋषभस्वामिनश्चैत्ये मोहोत्पादकमत्यद्भुतं रूपं कृत्वा गायतिस्म; तद्गानमोहिताः पक्षिमृगसर्पाद्या अपि आलेख्यलिखिता इव पाषाणघटिता इव वा निश्चलनेत्रास्तस्थुः ।

इतश्च श्रीसूर्ययशा अश्वं वाहयित्वा पश्चाद्वलमानः पथि तयोरतिमधुरगानध्वनीन् शुश्राव, तदा वाजि-गज-पत्तयः पदमपि यानेऽसमर्था अभूवन्. एतत्स्वरूपं दृष्ट्वा नृपोऽमात्यं प्रति सादरमुवाच–भो मंत्रिन् ! संसारे नादसमः सुखदः कोऽपि न दृश्यते. यद्वशात्पशवोऽप्यमी ईदृग्मोहिताः संति । नादेन देव-दानव नृप-कामिन्यादयः सर्वेऽपि प्रायो वशी भवन्ति. ततो वयमपि ऋषभस्वामिनं नमस्कर्तुं तत्र चैत्ये यामस्तत्र गत्वा एतद्गेयस्वादमपि लप्स्यामहे । इत्थमामंत्र्य तद्गानमोहितो भूपालो मंत्रिणा सह जिनचैत्यान्तर्जगाम । तत्र हस्तयोर्वीणां बिभ्रत्यौ, गीतध्वनिं कुर्वत्यौ कामभार्येव दिव्यसौंदर्ये द्वे कुमारिके विलोक्य स्नेहचक्षुर्विमुक्तैः कामबाणैर्हृदि विद्धो नृपश्चिंतयामास. एतयोरिदमत्यद्भुतं रूपं कस्य पुण्यवतो भोगाय भविष्यति ? ततो राजा मुहुर्मुहुस्तयोश्चक्षुषी क्षिपन् युगादीशितुः पादौ प्रणम्य चैत्यान्निःसृत्य बहिर्प्रदेशे उपविष्टस्तयोः कुलादिकं ज्ञातुं मंत्रिणे आदिष्टवान्, मंत्र्यपि नृपादेशात्तयोः समीपं गत्वा सुधामधुरया वाचा संभाष्य इत्थमालपत्. हे कन्यके ! युवां के? युवयोः पतिः कः ? किमर्थमिहागमनं चेत्येतत्सर्वं वदत. अथ मंत्रिवचः श्रुत्वा तयोरेका

स्मरणं प्राप्य जिनधर्मानुरक्तोऽभूवं, ईदृशोपायं विना मम जैनधर्मप्राप्तिः कुतः ? अनार्यत्वमहापंके निमग्नोऽहं त्वयोद्धृतस्त्वत्प्रसादादेव च मे चारित्रावाप्तिर्जाता, ततः श्रेणिकाभयकुमारादयः सर्वेऽपि लोकास्तमृषिं वंदित्वा तुष्टमनसः स्वस्थानं ययुः; ततो मुनि राजगृहपुराभ्यर्णे समवसृतं श्रीवीरस्वामिनमभिवंद्य तच्चरणकमलसेवया स्वकीयं जन्म सफलीकृत्य क्रमेणायुः क्षये शिवं प्राप ॥ इति श्रीजिनदर्शनमाहात्म्ये आर्द्रकुमारदृष्टांतः ॥

पुनरत्र पर्वणि यत्कर्त्तव्यं तदाह–तपोविधानादि, यथाशक्ति तपसि यत्नो विधेयः, चतुर्थ-षष्ठा-ष्टमादितपः कार्यमित्यर्थः, तत्र यदि कश्चित् स्नेहवशात्तन्निषेधं करोति तथापि तल्लोपबुद्धिर्न धार्या श्रीभरतपुत्रसूर्ययशोनृपवत् , तत्कथा चेयं—

अयोध्यायां नगर्यां सूर्ययशा नृप आसीत् , स च त्रिखंडभूमिस्वामी नीतिवत् अखंडशासनो दुष्टान् वैरिणः स्ववशे नीतवान् , इंद्रेणोपढौकितं मुकुटं शिरसि धृतवान ; तस्य मुकुटस्यैव माहात्म्याच्च स नृपः सुरसेव्योऽप्यभूत् , तस्य राज्ञो राधावेधपणात् प्राप्ता कनकविद्याधरपुत्री जयश्रीर्नामपट्टराज्ञी बभूव, अन्यान्यपि तस्य बहूनि कलत्राणि आसन् . स राजा चतुःपर्वीं विशेषेणाष्टमीं चतुर्दशीं च प्रत्याख्यानपौषधादितपसा आराधयति स्म, जीवितादप्यत्पर्वादरोऽस्य चेतसि अतिवल्लभोऽस्ति, तेनासौ जीवितादपि पर्वाणि रक्षति। अथैकदा सौधर्मेन्द्रः सुधर्मासभामाश्रितो ज्ञानात्तन्निश्चयं ज्ञात्वा चमत्कृतिं प्राप, तदोर्वशी देवी विश्ववशीकरणसामर्थ्यं बिभ्राणाऽकस्मात्सुरेंद्रशिरःकंपं दृष्ट्वा प्रोवाच. स्वामिन् सांप्रतं शिरः कंपनकारणं तु न किमपि दृश्यते तत किं निमित्तं तुष्टेन नाथेन शिरःकंपः कृतस्तदा सुरेंद्र उवाच-मयाधुना ज्ञानदृष्टया भरतक्षेत्रे ऋषभस्वामिनः पौत्रो भरतचक्रिणः पुत्रोऽयोध्याधिपः सूर्ययशा नाम राजा सात्त्विकानां शिरोमणिर्दृष्टः, स चाष्टमीचतुर्दशीपर्वणस्तपसः कृतबहुयत्नैः सुरैरपि चालयितुं न शक्यते, यदि सूर्यः पूर्वदिशमतिक्रम्य पश्चिमायामभ्युदेति तथा मेरुर्वातैः

यः, एवं स मुनिर्गोशालं निरुत्तरीचक्रे तदा जय जय शब्दं कुर्वद्भिः खेचराद्यैश्च तस्य महामुनेर्बह्वी प्रशंसा कृता ॥

तत आर्द्रकऋषिर्हस्तितापसाश्रमसमीपे आययौ, तत्रस्थास्तापसाश्च एकं महांतं हस्तिनं हत्वा तन्मांसं भुंजाना बहून दिवसान् व्यतीयंति, ते चैवमूचुः, एकस्यैव हस्तिनो हननं वरं, यत एकजीवघातेन भूयान् कालोऽतिगम्यते, मृगतित्तिरमत्स्याद्यैर्धान्यैश्च बहुभिरपि न तथा, तस्मात्तद्भक्षणं न युक्तं बहुपापसद्भावात् तदा च ते मिथ्याधर्मनिष्टास्तपस्विनो मारणार्थं एकं महान्तं गजं बबंधुः यत्र शृंखलाबद्धः स गज आसीत्तेनैव मार्गेण करुणानिधिः स महर्षिर्जगाम, तदा स हस्ती मुनिपंचशतीयुतं बहुभिर्जनैर्वंद्यमानं तं महर्षिं दृष्ट्वा लघुकर्मत्वादित्यचिंतयत् , अहमप्येनं मुनिं वंदेयं यदि बद्धो न भवेयं, बद्धस्तु किं करवाणि ? एवं चिंतयतस्तस्य महर्षेर्दर्शनात्सद्योऽयः शृंखला व्यशीर्यत, अथ स हस्ती निरर्गलः सन् तं मुनिं वंदितुमभ्यागात् , तदा लोका एष मुनिर्हतो हत इति ब्रुवाणाः पलायनं चक्रिरे, मुनिस्तु तथैव तस्थौ, गजोऽपि नम्रीकृतकुंभस्थलः सन् तं मुनिं नमतिस्म, शुंडादण्डं प्रसार्य मुनिपादौ स्पृष्ट्वा स्पृष्ट्वा परमं सुखं प्राप, ततः स गजः समुत्थाय भक्त्या मुनिं पश्यन् अव्याकुलः सन् अरण्यानीं प्रविवेश, तदात्यद्भुतं तत्प्रभावं दृष्ट्वाऽतिकोपं प्राप्तास्ते तापसा अपि आर्द्रकुमारसाधुना प्रत्यबोध्यंत, ततस्तत्प्रेषिताश्चैते श्रीवीरसमवसरणे गत्वा दीक्षां जगृहुः ॥

अथ श्रेणिकराजापि तथा गजमोक्षणं तापसप्रतिबोधं च श्रुत्वाऽभयकुमारयुक्तस्तत्रागात्, मुनिर्भक्त्या वंदमानं राजानं धर्मलाभाशिषं ददौ, अथ शुद्धभूतले आसीनं मुनिं राजा पप्रच्छ हे भगवन् ! हस्तिमोक्षणान्मम महदाश्चर्यं समजनि । मुनिरूचे–हे राजन् ! हस्तिमोक्षणं न दुष्करं, किन्तु आमतंतुपाशमोक्षणं मां दुष्करं प्रतिभासते । राज्ञा पृष्टं स्वामिन् तत्कथं ? तदा स मुनिः सकलामपि स्वां कथां कथयामास । तत आर्द्रकुमारोऽभयं प्रत्यभाषत त्वं मम निष्कारणोपकारी धर्मबांधवोऽभूत् , हे मित्र ! त्वत्प्रेषितार्हत्प्रतिमादर्शनादहं जाति-

अथ प्रतिज्ञापूर्णीभवनानंतरं स वैराग्यपूर्णमानसो रात्रेः पश्चिमे प्रहरे इत्यचिंतयत् , मया प्राग्भवे मनसैवव्रतं भग्नं तेनाहमनार्यत्वं प्राप्तोऽस्मि, अत्र भवे पुनर्व्रतं गृहीत्वा मुक्तवतः का गतिर्मे भविष्यति ? इदानीमपि प्रव्रज्यां गृहीत्वा तपसा आत्मानं शोधयामि, इति विचिंत्य प्रातःकाले श्रीमतीं पत्नीं स्वसुतं च संभाष्य तदनुमतिं च लात्वा साधुलिंगं समादाय निर्ममत्वो गृहान्निर्ययौ । अथ राजगृहं व्रजन् अंतराले चौर्यवृत्तिं कुर्वाणां स्वसामंतपंचशतीं ददर्श, तैरप्युपलक्ष्य भक्त्या वंदितः, स साधुस्तानवादीत् युष्माभिर्महापापहेतुरेषाजीविका किमादृता ? तैरुक्तं हे प्रभो ! अस्मान् वंचयित्वा यदा त्वं पलायितस्तदोदितो लज्जया भूपतेर्मुखं न दर्शयामः, तवैवान्वेषणे लग्नाः पृथ्वीं भ्रमंतश्चौर्यवृत्त्यैव जीवामः, मुनिरुवाच अयुक्ता वृत्तिर्भवद्भिरादृता, केनापि पुण्ययोगेनेदं मानुष्यकं प्राप्य स्वर्गापवर्गप्रदो धर्म एव सेव्यो हिंसाऽसत्यचौर्याब्रह्मपरिग्रहपरित्यागः कर्त्तव्यः, हे भद्रा ! यूयं स्वामिभक्ताः स्थ, प्राग्वदहं युष्माकं स्वामी-अतो ममैव मार्गं प्रपद्यध्वं, ततस्ते प्रोचुः पूर्वं त्वमस्माकं स्वाम्येवाभूः, सांप्रतं तु गुरुरप्यसि यतस्त्वयाऽस्मभ्यं धर्मो ज्ञापितोऽथास्मान् दीक्षयानुगृहाण; तत आर्द्रकुमारस्तान् प्रव्राज्य तैः सहितः श्रीमहावीरं वंदितुं राजगृहाभिमुखं ययौ, मार्गे गच्छतस्तस्य गोशालोऽभिमुखो मिलितो विवादं कर्तुं प्रवृत्तः, भूचराः खेचराश्चापि सहस्रश आयाताः कौतुकार्थिनस्तस्थुः ॥

अथ गोशालोऽवदत् भवतां तपःकष्टं वृथैव, यतः शुभाशुभफलानां कारणं नियतिरेवास्ति, ततो मुनिरवादीत् पौरुषमपि कारणं मन्यस्व, यदि सर्वत्र नियतिमेव कारणं मन्यसे तर्हि अभीष्टसिध्यर्थं सर्वाः क्रिया वृथा प्रसज्येरन् , तथाहि–हे नियतिवादिन् ! सर्वदा स्वस्थाने एव किं न तिष्ठसि ? भोजनाद्यर्थं च कथमुद्यमं करोषि ? एवं स्वार्थसिद्धये नियतिवत्पौरुषमपि साध्यमस्ति, अर्थसिद्धौ नियतेरपि पौरुषमाधिक्यं भजते, तथाहि आकाशात्पानीयं पतति, परं भूखननादपि तद्भवेत्, यतो नियतिर्बलीयसी, परं नियतेरपि पौरुषं बली-

यथा प्रतिदिनं यातायातांश्च सर्वानपि साधून् पश्यामि, धेष्ठयुवाच इह पत्तने ये केऽपि भद्र्पयः ममायाति तेभ्यस्त्वं प्रत्यहं स्वयं भिक्षां देहि, येन सर्वेषां दर्शनं स्यात् , ततः सापि प्रत्यहं तथैव चक्रे, तल्लक्षणं दिदृक्षमाणां च मुनीनां चरणानवंदत, अथ द्वादशे वर्षे स महामुनिर्दिग्मूढः सन् तत्रागतस्तल्लक्षणदर्शनात्तयोपलक्षितश्च, तदा श्रीमती तमृषिमुवाच हे नाथ ! तत्र देवकुले तदा यो मया वृतः स मम वरस्त्वमेवासि, मद्भाग्यैरत्राधुनागतोऽसि, अथ मां मुग्धां त्यक्त्वा क यास्यसि, यदा त्वं दृष्टनष्टोऽभूः; तद्दिनादारभ्य मम महादुःखेन कालोऽगमत् , तस्मात्प्रसादं विधाय मामंगीकुरु, एवं स्थितेऽपि यदि मामवमन्यसे तर्हि अग्निप्रवेशं कृत्वा तुभ्यं स्त्रीहत्यापातकं दास्ये, तदान्यैरपि तत्पित्रादिभिर्महाजनैर्विवाहाय अभ्यर्थितः स साधुव्रतारंभनिषेधकं तद्देवीवचनं सस्मार, ततस्तद्भोग्यकर्मोदयादृणमोक्षमिव कर्तुं तां श्रीमतीं पर्यणयीत् । अथ श्रीमत्या सह चिरं भोगान् भुंजानस्य तस्य क्रमेण पुत्रः संजातः, स च क्रमेण वर्द्धमानो राजशुक इव वक्तुमुल्लसज्जिह्वोऽभवत् , तावति पुत्रे संजाते सति स आर्द्रकुमारो हर्षितः सन् श्रीमतीं प्रोवाच, अतः परं ते पुत्रः सहायोऽस्तु, अहं प्रव्रजामि, तदा बुद्धिनिधिः श्रीमती सुतं प्रत्ययमरं ज्ञापयितुं तूलपूणिकासहितं तर्कुमादाय समुपाविशत् , तदा तूलकर्त्तनक्रियां कुर्वाणां तां विलोक्य स बालकः पप्रच्छ हे अंब ! एतत्पामरलोकोचितं कर्म किं प्रारब्धं ? सा प्रोचे-हे पुत्र ! तव पिता त्वां मां च त्यक्त्वा प्रव्रज्यार्थं गंतुमनो वर्त्तते, गते चास्मिन् पतिहीनाया मे तर्कुरेव शरणं, तदा बालको बाल्यान्मनाक्षरैरुवाच-अहं बद्ध्वा धारयिष्यामि कथं मे पिता यास्यति ? इत्युक्त्वा तन्तुभिः पादौ बबन्ध. आर्द्रकुमारोऽपि तन्मधुरं बालवचोवृंदं श्रुत्वा सुतस्नेहादेवमुवाच, हे पुत्र ! यावद्भिस्तंतुभिर्मे पादौ बद्धौ तावंति वर्षाणि पुनर्गृहे स्थास्यामि, गणयित्वा बंधनानि अच्छोटय ? ततो गणिता द्वादशबंधा अभवन्, तेन स द्वादश वर्षाणि पुनर्गृहे स्थास्ये इत्युक्त्वाऽवाहयत् ॥

मुनिस्तीक्ष्णं व्रतं पालयन् भूमंडले विचरन् अन्यदा वसंतपुरपत्तनं प्राप्य कस्मिंश्चिद्देवकुले कायोत्सर्गेण च तस्थौ ॥

इतश्च तस्मिन्नगरे देवदत्तो नाम महाश्रेष्ठ्यभूत्, तस्य धनवती नामा पत्न्यासीत्, अथ बन्धुमतीजीवो देवलोकाच्च्युत्वा श्रीमतीनामा अद्भुतरूपा तयोः पुत्री समजनि, सा च धात्रीभिर्लाल्यमाना क्रमेण रजःक्रीडोचितं वयः प्राप, एकदा तत्र देवकुले पौरकन्याभिर्युक्ता श्रीमतीकन्या पतिवरणक्रीडया रंतुमाययौ, तदा सर्वाः कन्या भर्त्तारं वृणुतेत्यूचुस्तत कयापि कोऽपीत्येवं सर्वाभिः स्वरुचिवरा वृताः, श्रीमत्योक्तं हे सख्यो ! मया तु अयं पूज्यो वृतस्तदा साधुवृतमिति देवता प्रोवाच, पुनर्गर्जितं तन्वाना सा एव देवी तत्र रत्नान्यवर्षत् , श्रीमती गार्जिताद्भीता तस्य मुनेः पादेऽलगत् , स मुनिः क्षणमात्रं स्थित्वाऽचिंतयत् , इह तस्थुषो ममानुकूलं उपसर्गोऽभूत् , अतोऽत्र न स्थेयमिति विचिंत्य सोऽन्यत्रागात् . तदा अस्वामिकं धनं राज्ञ एवेति निश्चयं कृत्वा तानि रत्नान्यादातुं राजा तत्राजगाम, राजपुरुषास्तद्द्रव्यस्थानं नागसंकुलं ददृशुः, देवतया चोक्तं एतद् द्रव्यमस्यै कन्यायै मया वरके प्रदत्तमस्ति, इति श्रुत्वा नृपो विलक्षः सन् स्वस्थानं ययौ, ततस्तत्सर्वं धनं श्रीमतीपिता श्रेष्ठी जग्राह । अथ कियता कालेन श्रीमतीं परिणेतुं बहवो वरा अढौकंत, तत्स्वरूपं पित्रा पुत्र्यै उक्तं-तदा श्रीमती जगाद–हे तात ! यो महर्षिर्मया वृतः स एव मम वरः, तद्वरणे देवता य द्रव्यमदात् तद् द्रव्यं गृह्णता त्वयापि तदनुमतमेव, ततस्तस्मै मां कल्पयित्वान्यस्मै दातुं नार्हसि, उक्तं च—

सकृज्जल्पंति राजानः, सकृज्जल्पंति साधवः ॥ सकृत्कन्याः प्रदायत, त्रीण्येतानि सकृत् सकृत् ॥ १ ॥

एतत् श्रुत्वा श्रेष्ठ्यूचे, स तु भ्रमर इव एकत्र नावतिष्ठतेऽतः कथं प्राप्यते पुनरत्रायास्यति न वा, आयातोऽपि कथं ज्ञायते ? किं तस्याभिज्ञानं ? तदा श्रीमत्या उक्तं-हे तात ! मया तद्दिने गार्जितभीतया तच्चरणे विलग्नयाभिज्ञानं दृष्टमस्ति, तस्मादतः परं तथा कुरु

प्रतिमां पूजयन्नार्द्रकुमारो दिवसानतिवाहयतिस्म, एकदा कुमारो नृपमेवं व्यजिज्ञपत् हे तात ! स्वमित्रमभयकुमारं द्रष्टुमिच्छामि, आर्द्रकनृपोऽवादीत् , हे वत्स त्वया तत्र गमनेच्छा न कर्त्तव्या, अस्माकमपि स्थानस्थितानामेव श्रेणिकेन सह मैत्र्यमस्ति; तदा पित्राज्ञया निषिद्धोऽभयसंसर्गं प्रति उत्कंठितश्चार्द्रकुमारोऽपि न तस्थौ न च जगाम, तथा स आसने शयने याने भोजनेऽन्यक्रियासु च अभयकुमारेणाश्रितां दिशं नेत्रयोरग्रे चकार, पुनः कीदृशो मगधदेशो, राजगृहपुरं च कीदृक्; तत्र गमने कस्को मार्ग इत्थं पार्श्ववर्त्तिनो जनान् पप्रच्छ; तस्मिन्नवसरे आर्द्रकनृपो दध्यौ, कदापि कुमारो मामकथयित्वैव निश्चितमभयसमीपे यास्यत्यतो यत्नः कर्त्तव्यस्ततो नृपः पंचसामंतशतानि इत्यादिशत् , अहो ! अयं कुमारो देशांतरं गच्छन् भवद्भिरक्षणीयस्तदा ते सामंता देहच्छायेव तत्पार्श्वं न त्यजन्ति स्म, कुमारोऽप्यात्मानं देहधृतमिवामंस्त, ततोऽभयसमीपगमनं मनसि अवधार्य प्रत्यहमश्ववाहनभूमौ अश्ववाहनं कर्त्तुमारेभे, ते सामंताश्च अश्वारूढा अंगरक्षकाः संतः पार्श्वे तस्थुः, कुमारोऽश्वं वाहयन् तेभ्यः किंचिदग्रे गत्वा न्यवर्त्तत, एवं चाश्वं वाहयन् सोऽधिकाधिकं ययौ, पुनः पुनर्व्याघुट्य ययौ च, इत्थ तेषां विश्वासमुत्पाद्यान्यदार्द्रकुमारो निजैः प्रतीतिमत्पुरुषैः समुद्रे यानपात्रं प्रगुणं कारयित्वा तच्च रत्नादिभिः प्रपूर्य जिनप्रतिमां च तत्रारोप्य तथैवाश्वं वाहयन् दूरगमनाददृश्यीभूय तद्यानपात्रमारुह्य आर्यदेशं ययौ, ततो यानपात्रादुत्तीर्य तां प्रतिमामभयकुमाराय संप्रेष्य सप्तक्षेत्र्यां धनान्युप्त्वा यतिलिंगं गृहीतवान् , स च यावत्सामायिकमुच्चारयितुमारेभे तावदाकाशस्थितया देवतया उच्चैः स्वरेणोचे-यद्यपि त्वं महासत्त्वस्तथापि सांप्रतं दीक्षां मा ग्रहीः, अद्यापि ते भोगफलं कर्मास्ति तद्भुक्त्वावसरे व्रतं गृह्णीथाः, यतो भोग्यं कर्म तीर्थकृतामप्यवश्यं भोक्तव्यं, तस्मात् हे महात्मन् ! तेन व्रतेनालं यद् गृहीतमपि त्यक्ष्यते; यथा तेन भोजनेन किं यद्भुक्तमपि वम्यते; इत्थं बहुधा निषिद्धोऽप्यार्द्रकुमारः स्वपौरुषमंगीकृत्य देवी वाचमनादृत्य स्वयं दीक्षामाददे, स प्रत्येकबुद्धो

शमाचख्यौ. ततः कुमार एकांते स्थित्वा तां पेटामुद्घाट्य तन्मध्यस्थां तमस्युद्योतकारिणीं तां श्रीऋषभस्वामिप्रतिमां दृष्ट्वा स्वचित्ते चिंतयामास, किमिदं किंचिदुत्तमं देहाभरणमस्ति, तत् किं मूर्ध्नि आरोप्यं, कंठे वा हृदये वान्यत्र कुत्रचिदारोप्यं, क्वापीदं दृष्टपूर्वमिव मां प्रतिभासते, परं स्मृतिपथं नायाति, इत्थमत्यर्थं चिंतयत आर्द्रकुमारस्य जातिस्मरणजनिकी मूर्च्छा समजनिष्ट, तत उत्पन्नजातिस्मरणः स कुमारः संप्राप्तचेतनः सन् स्वयमेव एवं निजपूर्वभवकथां चिंतयामास, तथाहि—

इतो भवात्तृतीये भवे मगधदेशे वसंतपुरेऽहं सामयिको नाम कुटुम्बी अभूवं; मम बंधुमती भार्याभूत्, एकदा सुस्थिताचार्यसमीपे तया सह अहमर्हद्धर्ममश्रौषं, ततः सभार्योऽपि अहं प्रतिबुद्धो गृहवासविरक्तः सन् तत्पार्श्वे प्रव्रज्यां गृहीतवान्, क्रमेण गुरुणा सह विहरन् एकस्मिन् पत्तनेऽगां, बंधुमती साध्व्यपि अपरसाध्वीसंगता तत्रागात्, एकस्मिन्नह्नि तां पश्यन् पूर्वभोगान् स्मरन् अहं तस्यामनुरक्तोऽभूवं, तच्चान्यसाधवे आख्यां, सोऽपि प्रवर्त्तिन्यै आचख्यौ, सा पुनर्बंधुमत्यै आचख्यौ, तदा बंधुमती विषण्णा सती प्रवर्त्तिनीं प्रोवाच, एष गीतार्थोऽपि यदि मर्यादां लंघेत तदा का गतिः, असौ मां देशांतरं गतामपि यावच्छ्रोष्यति तावन्मोहप्रभावान्मयि रागं न त्यक्षति, तस्मात् हे भगवति ! अहं निश्चित्तं मरणं प्रपत्स्ये, येन नास्य नापि मे शीलखंडनं जायते, इत्युक्त्वा सा साध्वी अनशनं कृत्वा शुद्धभावनया प्राणांस्तत्याज, देवत्वं च प्राप, ततस्तां मृतां श्रुत्वा मया विचिंतितं सा महानुभावा निश्चितं व्रतभंगभयान्मृता, अहं पुनर्भग्नव्रतस्ततो मामपि जीवितेन अलं, तदाहमप्यनशनं कृत्वा विपद्य देवोऽभूवं, ततश्च्युत्वाहमत्रानार्यदेशे धर्महीनः समुत्पन्नोऽस्मि, सांप्रतं यो मम प्रतिबोधकः स मे बंधुः स एव च गुरुरस्ति, केनापि भाग्योदयेनाभयकुमारमंत्रिणाहं बोधितः, परमद्यापि मन्दभाग्योऽस्मि यतस्तं द्रष्टुमसमर्थः, तस्मात् पितरमनुज्ञाप्यार्यदेशं गमिष्यामि, यत्र मे गुरुरभयकुमारोऽस्ति, इत्थं मनोरथं कुर्वन् आदिमार्हतः

मंत्रिणा सार्द्धं राजगृहपुरं गत्वा श्रेणिकाय अभयाय च प्राभृतान्यर्पयामास, तथा नृपपुत्र आर्द्रकुमारस्त्वया सह मैत्र्यं कर्त्तुमिच्छतीत्यभयाय मंत्री संदेशमुवाच । तदा जिनशासने कुशलोऽभयः स्वचेतसि इत्यचिंतयत्; निश्चितं स कुमारो विराधितश्रामण्यत्वादनार्येषु जातोऽस्ति, परं स राजपुत्रो महात्मा नियमादासन्नभव्योऽस्ति, यतोऽभव्यदूरभव्यानां तु कदापि मया सह मैत्र्यभिलाषो न भवेत्, तस्मात्केनाप्युपायेन तं जिनधर्मानुरक्तं विधाय धर्ममार्गे प्रवर्त्तयामि, तत्र चायमुपायोऽस्ति, प्राभृतच्छलेन यदि तत्रार्हत्प्रतिमां प्रेषयामि, तद्दर्शनाच्च यदि तस्य जातिस्मरणज्ञानमुत्पद्यते तदेष्टसिद्धिः स्यादित्युपायं विचिंत्य छत्रसिंहासनादिप्रातिहार्यविराजितां रत्नमयीं प्रथम जिनेन्द्रप्रतिमां * पेटीमध्ये धृत्वा तदग्रे सकलानि धूपघटिकादिदेवपूजोपकरणानि मुमोच, ततस्तद्द्वारे तालकं दत्वाऽभयो निजमुद्रया तां मंजूषां मुद्रयामास. अथ कियद्भिर्वासरैः श्रेणिको नृपस्तमार्द्रकेशपुरुषं प्रियालापपूर्वकं प्रभूतैः प्राभृतैः सह विससर्ज, अभयोऽपि तां पेटां तस्य हस्ते समर्प्य तं सत्कृत्य अमृततुल्यवाण्या इत्युवाच, एषा पेटा आर्द्रकुमारस्य पुरस्तादुपढौकयतां, तथा तस्य मद्वन्धोरिदं वक्तव्यं, त्वया एकांतप्रदेशे एकाकिना स्थित्वा इयं पेटा स्वयमुद्घाट्य तदंतर्गतं वस्तु स्वयं द्रष्टव्यं, अन्यस्य कस्यचिन्न दर्शनीयं, ततोऽभयोक्तं वचोंगीकृत्य स पुमान् स्वपुरं ययौ, तानि च प्राभृतानि स्वस्वामिने स्वामिपुत्राय चार्पयामास, तथार्द्रकुमारायाभयोक्तसंदे-

*अत्रकेऽपि जिनेन्द्रप्रतिमास्थाने रजोहरणमुखवस्त्रिका प्रेषणं वदन्ति तथा प्राचीनजैनशास्त्रे जिनेन्द्रप्रतिमोल्लेखस्याभावं दर्शयन्ति तदसत्यं, यतः—जीवाभिगम–भगवती—ज्ञाताधर्मकथा–राजप्रश्नेणयावश्यकनिर्युक्त्यागमपंचांगीप्राचीनशास्त्रे स्थाने स्थाने जिनप्रतिमोल्लेखो विस्तरेण दर्शितः, तथा रायप्पसेणयादिषु आगमेषु (धुवं दाऊण जिणवराणं) इति वचनात् जिनेन्द्र प्रतिमा जिनेन्द्र सदृशत्वेन उक्ता, किंच सूत्रकृदङ्गव्याख्याप्रभृतिषु अभयकुमारेण आर्द्रकुमाराय प्रथम जिनेन्द्र प्रतिमा प्रेषिता इत्येवलिखितमस्ति, अतो रजोहरणमुखवस्त्रिकाप्रेषणस्य कथनं तु अयुक्तमेव, अस्य विशेषनिर्णयः प्रतिमाशतक, सम्यक्त्वशल्योद्धारादिग्रन्थादवगन्तव्यः ॥ इति ॥

जिनदर्शनादेव बहूनां भव्यानां बोधिबीजावाप्तिर्भवत्यार्द्रकुमारवत् , तद्वृत्तांतस्त्वित्थं—

अस्मिन् भरतक्षेत्रे समुद्रतीरे आर्द्रको नाम यवनदेशोऽस्ति, तत्रार्द्रकपुरं नाम नगरं, तत्रार्द्रकनामा राजा बभूव, तस्य चार्द्रका नाम्नी पट्टराज्ञी, तयोरार्द्रकुमारो नाम पुत्रोऽभूत् , स च क्रमेण संप्राप्तयौवनः स्वेच्छया मनोज्ञान् भोगान् भुंजानः सुखेन तिष्ठतिस्म, तस्या चार्द्रकराजस्य श्रेणिकराजेन सह परंपरागता परमप्रीतिरभूत् . एकदा श्रेणिको नृपः प्रचुरं प्राभृतं प्रगुणीकृत्य आर्द्रकराजसमीपे निजामात्यं प्रैषीत् , सोऽमात्योऽपि कियद्भिर्दिनैस्तत्र गतः, आर्द्रकनृपेण बहुवादरेण संभाष्य तेन मंत्रिणा उपनीतानि प्राभृतानि गृहीतानि, पृष्टं च तस्मै मद्बंधोः श्रेणिकस्य कुशलं वर्त्तते ? ततस्तेनापि तत्रत्यसकलकुशलोदंतनिवेदनेन राज्ञो मनसि परमानंदः संपादितः, तस्मिन्नवसरे आर्द्रकुमारो नृपं पप्रच्छ भो तात ! कः श्रेणिको येन सः तवेदृशी प्रीतिर्वर्त्तते, ? राजा प्रोवाच, मगधदेशस्वामी श्रेणिकनृपो विद्यते, तत्कुले मत्कुले च परंपरागता प्रीतिरस्ति, एतत्पितृवचः श्रुत्वार्द्रकुमारोऽपि मंत्रिणमुवाचः भो मंत्रिन् ! त्वत्स्वामिनः कश्चित्संपूर्णगुणोपेतः पुत्रोऽस्ति ? तेन सहाहमपि मैत्र्यं कर्त्तुमिच्छामि, मंत्र्युवाच श्रेणिकभूपस्य अभयकुमारो नाम पुत्रोऽस्ति, स च सकलकलानिधिः सर्वबुद्धिसमुद्रो मंत्रिपंचशत्या–अधिपो महादयावान् महादाताऽतिदक्षो निर्भयो धर्मज्ञः कृतज्ञश्च विद्यते, किं बहुना ? ते केऽपि जगति गुणा न सन्ति ये ऽभयकुमारे निवासं न कृतवंतः, इत्थं मंत्रिवचनादभयकमारगुणान् श्रुत्वार्द्रकुमारः पितुराज्ञां समादाय मंत्रिणं प्रत्युवाच, मामनापृच्छय त्वं स्वदेशं मा यासीः, तत्र गच्छता त्वयाऽभयं प्रति स्नेहद्रुमबीजतुल्यं मद्वचः श्रोतव्यमिति, ततो मंत्र्यपि, तद्वचनमंगीकृत्य राज्ञाऽनुसृष्टः सन् वेत्रिणा दर्शितं निवासस्थानं ययौ, अथान्यदार्द्रकनृप प्रवरमौक्तिकादीनि प्राभृतान्यर्पयित्वा स्वपुरुषं तं मंत्रिणं च श्रेणिकपार्श्वे प्रैषीत् , तदार्द्रकुमारोऽपि तस्यैव मंत्रिणा हस्तेऽभयकुमारनिमित्तं विद्रुममौक्तिकादीन्यनुपमवस्तूनि प्रेषितवान् . अथ स सुमान्

मनोवाक्कायशुद्ध्याऽत्र पर्वणि पूजास्नात्रादिकं विधेयं, तदवसरे च भगवतः छद्मस्थत्व–केवलित्व–सिद्धत्वरूपमवस्थात्रयं भावनीयं, यदुक्तं—ण्हवणच्चणेहिं छउमत्थ–वत्थपडिहारगेहिं केवलियं ॥ पलियं कुस्सगोहिय । जिणस्स भाविज्ज सिद्धत्तं ॥ १ ॥ द्रव्यपूजासाम-ग्र्यभावे तु भावपूजैव कर्त्तव्या, सा चेत्थं–प्रातः श्रीजिनगृहं गत्वा शुद्धभावेन भगवद्दर्शनं कार्यं, भगवन्मुद्रां विलोक्य च तद्गुणगण-स्मरणं विधेयं, तत्फलं यथा–दर्शनाद् दुरितध्वंसी, वंदनाद्वांछितप्रदः । पूजनात्पूरकः श्रीणां, जिनः साक्षात्सुरद्रुमः ॥ १ ॥ पुनः श्री-

शालागृह पौषधशाला तत्र वा तत् सामायिक कार्यं श्राद्धैः सदा नोभयसन्ध्यमेवेत्यर्थ । कथं विधिना—खमासमणं दाउं इच्छाकारेण संदिसह भगवन् सामाइय मुहपत्तिं पडिलेहेमित्ति भणिय, बीय खमासमणपुव्व मुहपत्तिं पडिलेहिय, खमासमणेणं सामाइय संदिसाविय, बीय खमासमणपुव्व सामाइय ठामित्ति वुत्तं खमासम-णदाणपुव्वं अद्धावणय गत्तो पचमंगलं कड्ढित्ता "करेमि भन्ते ! सामाइय सावज्ज जोग पच्चक्खामि जाव नियम पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भन्ते ! पडिक्कमामि निन्दामि गरिहामि अप्पाणं वोसिरामि त्ति" सामाइयसुत्तं भणति, तउ पच्छा इरियं पडिक्कमति इत्यादि पूर्वसूरिनिर्दिष्टविधानेन । अत्र च ईर्या प्रतिक्रम्यैव सामायिकोच्चारणं यत्केचिदाचक्षते तत्सिद्धान्तानुत्तीर्णम्, यत उक्तमावश्यकचूर्णी, बृहद् वृत्त्यादौ—" करेमि भन्ते ! सामाइयं सावज्जं जोग पच्चक्खा-मि जाव साहू पज्जुवासामि दुविहं तिविहेणामिति, काउण पच्छा इरिअ पडिक्कमइ त्ति" इत्यादि- सर्वमान्यप्राचीनशास्त्रे प्रकटतया प्रथमं करेमिभंते उच्चारणानंतरं पश्चाद् इर्याप्रतिक्रमणं दर्शित. यथा—उत्तराध्ययन—आवश्यकनिर्युक्त्यादिप्राचीनशास्त्रे षडावश्यकविधि संक्षिप्तःसामान्येन दर्शितः परं तस्य विशेषार्थः भावपरंपरानुसारेण गुरुपरं-पराया पूर्वाचार्यविरचितविधिवादशास्त्रतो वा ज्ञायते, ततः तस्यानुसारेणैव विशेषतः सप्रति षडावश्यकविधिः क्रियते । तथैव अत्रापि संक्षिप्तमात्रसामान्येन सामायिकविधिः दर्शितः, परं तस्य विशेषविधि पूर्वाचार्यविरचितविधिवादशास्त्रतोऽवगतव्यः । तथा उत्तराध्ययनादिगताऽऽवश्यकविधि संक्षिप्त ज्ञात्वा तस्यानादरकरणे सूत्रार्थोत्थापनदोषप्रसगः स्यात्, तथैव अत्राऽपि एतद्विधेरनादरकरणे शास्त्रपाठोत्थापनदोषप्रसगः स्यात्, अतएव तदनुसारेण भव्यात्मभिः समाचरणीय, परं जिनाज्ञाविरुद्धाचरणं न युक्त "पयमपि असद्दहंतो सुत्तत्थं मिच्छादिट्ठीओ" इति वचनात् । इति । श्रीमत् सुमतिसागरमहोपाध्यायाना लघुशिष्य पं० मुनि–मणिसागरः ।

तस्मात् शुभ आचारो येषां ते शुभाचारास्तैः श्रावकैराश्रव–कषायरोधः कर्त्तव्य इत्युक्तं। अथ पुनरत्र पर्वणि यत्कर्त्तव्यं तदेव श्रावकविशेषणद्वारेणाह–कीदृशैः श्रावकैः, सामायिकजिनपूजातपांसि तेषां विधानं करणं, तदादीनी तत्प्रभृतीनि कृत्यानि-कार्याणि तेषु तत्परैरित्यर्थः, एतावतात्र पर्वणि सुश्रावकैः सामायिकं कार्यं, * सामायिकस्वरूपं चेदं—

समता सर्वभूतेषु, संयमः शुभभावना ॥ आर्त्तरौद्रपरित्याग--स्तद्धि सामायिकं व्रतम् ॥ १ ॥

दिवसे दिवसे लक्खं, देइ सुवण्णस्स खंडि एगो ॥ एगो पुण सामाइयं, करेइ न पहुप्पए तस्स ॥ २ ॥

आदिपदात्पौषधं कार्यं, पौषधफलमिदं—

पोसहि य सुह भावे। असुहाइं खवेइ नत्थि संदेहो ॥ छिंदइ नरयतिरियगइं, पोसहं विहि अप्पमत्तणं ॥ १ ॥

तत्करणसामर्थ्याभावेऽस्मिन् पर्वणि सुश्रावकैर्यथाशक्ति जिनानां द्रव्यपूजा भावपूजा च कर्त्तव्या, पूजाफलमिदं—

सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे। सयसाहस्सिया माला, अणंतं गीयवाइए ॥ १ ॥

---

* --सामायिकविधिविषय आवश्यकचूर्णि–बृहत्वृत्ति–लघुवृत्ति–पचाशकचूर्णि–वृत्ति–योगशास्त्रवृत्ति–श्राद्धदिनकृत्यसूत्र-वृत्ति–श्रावकप्रतिक्रमणचूर्णि–वृत्ति – श्रावकप्रज्ञप्ति–शतपदी–विचारामृतसंग्रहादिगतशास्त्रीयपाठाः विस्तरभयात् नात्र लिख्यन्ते–तथापि सङ्क्षेपतः श्रावकधर्मप्रकरणवृत्तिपाठोऽत्र दर्श्यते तथाहि–अथ यत्र क्रियमाणं श्राद्धाना सामायिकं निष्प्रत्यूहं निर्वहति तत्स्थानमुपदिशति—

चैत्यालये स्वनिशान्ते, साधूनामन्तिकेऽपि वा। कार्यं पौषधशालायां, श्राद्धस्तद्विधिना सदा ॥ १ ॥

चैत्यालये विधिचैत्ये, स्वे निशान्ते स्वगृहेऽपि विजनस्थान इत्यर्थ। पौषो ज्ञानादीनां धीयतेऽनेनेति पौषध पर्वानुष्ठानम् उपलक्षणात् सर्वधर्माऽनुष्ठानार्थ,

स एव चौरः समाहूय पृष्टोऽहो कया तव बहूपकारः कृत ? इति, तेनाप्यभाणि भो महाराज ! 'चतुरो दिनान् यावन्मरणभयभीतेन मया न किंचित्स्नानभोजनादिसुखमज्ञायि, अद्य पंचमेऽहनि अस्याः पंचम्या राज्याः मुखादभयदानाकर्णनेन परमसुखमनुभूयते, अतएव तस्या उपकारः सर्वतो महान्' एतच्चौरवचः श्रुत्वा सर्वैरपि सा प्रशंसिता, पट्टराज्ञी च कृता, अतः सर्वदानानामभयदानं श्रेष्ठमिति ज्ञापितं। ततः सुश्रावकेणात्र पर्वणि खंडन-पेषण-वस्त्रक्षालनाद्यारंभो विवर्जनीयः, तैलिक-लोहकार-भ्राष्ट्रकर्मकारकादिषु वाचा धनव्ययेन चारंभो निवारणीयः, स्वशक्त्या बंदिमोक्षश्च कार्यः, ग्रामनगरमध्येऽमारीघोषणा कारयितव्या, येन केनापि प्रकारेण जीवरक्षा कार्या ॥

द्वितीयाश्रवपरित्यागे मृषावचनमत्र पर्वणि न वक्तव्यं, गालिप्रदानादिकठिनवाणी न वाच्या, सर्वथा वाक्शुद्धिः कार्या। तृतीयाश्रवपरित्यागे परधनग्रहणं विवर्जनीयं, द्रव्यस्य हि जंतूनां बाह्यप्राणरूपत्वात्, तदपहारस्य च मरणरूपकष्टहेतुत्वात्। चतुर्थाश्रवपरित्यागेऽत्र पर्वणि ब्रह्मचर्यं पालनीयं, स्त्रीसंगो विवर्ज्य इत्यर्थः, परस्त्रीसेवनं तु लोकद्वयविरुद्धत्वात् सुश्रावकेणावश्यमेव वर्ज्यं। पञ्चमाश्रवपरित्यागे धनधान्यादिनवविधपरिग्रहे परिमाणं कार्यं, परिग्रहतृष्णाऽपरिमिता न धार्या, इच्छापरिमाणं विधेयमित्यर्थः। तथा पुनःस्मिन् पर्वणि कषायरोधः कर्त्तव्यः, कषायाश्चत्वारः क्रोध-मान-माया-लोभाख्यास्तेषां परित्यागो विधेयः, क्रोधोदये हि कलहोत्पत्तिश्चिरंतनप्रीतिनाशश्च, मानोदये विनयनाशस्तथा च सद्ध्यानवतामपि मुनीनां केवलावाप्तौ अंतरायः स्यात्, राजर्षिबाहुबलिवत्, एवं मायोदये लोभोदयेऽपि च बहवो दोषा उत्पद्यन्ते, अतश्चत्वारोऽपि कषायास्त्याज्याः,-उक्तंच—

कोहो पिइं पणासेइ। माणो विणयनासणो ॥ माया मित्ताणि नासेइ। लोहो सव्वविणासणो ॥ १ ॥

दीयते म्रियमाणस्य, कोटिजीवितमेव च ॥ धनकोटिं न गृह्णीयात्, सर्वो जीवितामिच्छति ॥ १ ॥
अपि च—या दद्यात्कांचनं मेरुं, कृत्स्नां चापि वसुंधराम् ॥ एकस्य जीवितं दद्यान्नहि तुल्यमहिंसया ॥ २ ॥

अतोऽभयदानख्यापनार्थं कथानकमुच्यते--तथाहि--वसंतपुरेऽरिदमनो राजा, तस्य पंच राज्यः, तासु चैका दुर्भगा, चतस्रोऽत्यंतव- ल्लभाः, एकदा चतुर्वधूसमेतो राजा निजप्रासादगवाक्षस्थो नानाविधक्रीडाविलासं कुर्वंस्तिष्ठति, तस्मिन्नवसरे एकश्चौरो राजमार्गेण नीय- मानो राज्ञा सपत्नीकेन दृष्टः, स च कीदृशः ? कंठन्यस्तरक्तकणवीरमालो, रक्तवस्त्रपरिधानो, रक्तचन्दनानुलिप्तगात्रः पुरस्ताद्वाद्यमानव- ध्यडिंडिमः, इत्थं विविधविडंबनाभिर्विडंब्यमानं तं चौरं दृष्ट्वा राज्ञीभिः पृष्टं, किमकार्यमनेनाकारीति, तदा एकेन राजपुरुषेण तासां पुरः कथितं, परद्रव्यापहारेण राजविरुद्धमनेन कृतमिति, ततः संजातकृपया एकया राज्या विज्ञप्तो राजा, स्वामिन् ! यो भवता मह्यं प्राग्वरः प्रतिपन्नः सोऽधुना दीयतां, येनाहमेकदिनमुपकरोमि चौरं, तदा कथंचिद्राज्ञा प्रतिपन्नं तद्वचः, ततस्तया स्नानादिपुरस्सरं दीनारसहस्रव्ययेन विविधवस्त्रालंकारैरलंकृतः स चौरः, ततो द्वितीयया द्वितीयदिने राजानं विज्ञप्य दीनारदशसहस्रव्ययेन स सत्कृतः, ततस्तृतीयया तृतीयदिने स दीनारलक्षव्ययेन स उपचरितः, ततश्चतुर्थ्या दीनारकोटिव्ययेन चतुर्थो दिवसोऽतिवाहितः, ततः पंचम्या दुर्भगया राज्या पंचमदिने राज्ञः समीपमागत्य विनयेन नम्रया दीनवचसा नृपो विज्ञप्तः, स्वामिन् ! मम दुर्भगाया उपरि भवदीया तादृशी कृपा नास्ति, तेन मया कदापि भवंतो न याचिताः, अधुनाऽस्य चौरस्य जीवितदानं मया त्वां याच्यते, तदा राज्ञापि जीवित- प्रदानपूर्वकं चौरः प्रदत्तोऽनया च तं चौरं स्वगृहे नीत्वा सामान्यभोजनेन भोजयित्वा कथितं मया तुभ्यं जीवितं प्रदत्तं, पुनश्चौर्यं मा कार्षीस्ततोऽसौ हृष्टस्तदा सपत्नीभिर्हसितं नास्य त्वया किंचित् सुखकारि कृतं, तासां च परस्परं बहूपकारविषये विवादे संजाते राज्ञा

तोरणादिभिरलंकृतानि अतिसुन्दराणि संति, तत्र देवेंद्रा बहुदेवदेवीपरिवृताः प्रवर्द्धमानभावेनाष्टाह्निकमहोत्सवं कुर्वन्ति, जल-चंदन-पुष्प-धूपाद्यष्टद्रव्यैर्जिनबिंबानि पूजयंति, जिनगुणान् गायंति, नाटकं च विदधति, इत्थमष्टदिवसावधि महोत्सवं समाप्य पुनः स्वस्थानं गच्छति. एवं श्रावकैरपि श्रीमत्तीर्थंकरप्रकाशितेऽस्मिन् ❀ पर्वणि समागते धर्मणि यत्नो विधेयः, तथा चास्मिन् पर्वणि श्रावकाणां कृत्यान्याह–

आश्रवकषायरोधः कर्त्तव्यः श्रावकैः शुभाचारैः । सामायिकजिनपूजा–तपोविधानादिकृत्यपरैः ॥ १ ॥

तत्राश्रवाः पंच ते चामी–प्राणातिपात–मृषावादाऽ–दत्तादान-मैथुन-परिग्रहस्तेषां रोधो निरोधः, अर्थात्त्यागः कर्त्तव्यः, एतावता प्रथमं द्वींद्रियादयो ये त्रसजीवास्तेषां विराधनाः श्रावकैर्वर्ज्याः, सर्वदानेषु अभयदानमेव श्रेष्ठं, यदुक्तं सूत्रकृदंगे—' अभयप्पदाणमिति ' अन्यत्राप्युक्तं च—

---

❀निशीथभाष्य–चूर्णि-बृहत्कल्पभाष्य चूर्णि-वृत्ति-स्थानांगसूत्रवृत्ति-समवायागसूत्रवृत्ति-कल्पसिद्धान्त-व्याख्यादिशास्त्रानुसारेण जैनटिप्पणकसद्भावे अधिकमास आगते आषाढ-चातुर्मासात् विंशत्या दिनैः पर्युषणाकरणं प्रोक्तं, तथा अधिकमासाऽभावे पचाशतैव दिनैः प्रोक्तं, परं च जैनटिप्पणकाऽभावे संप्रति लौकिकटिप्पणके मासवृद्धिर्भवतु वा मा भवतु तथापि पचाशतैव दिनैः पर्युषणाकरणमर्यादा सर्वगच्छीयपूर्वाचार्यैः प्रमाणीकृता आसीत्, अतएव पंचाशतैव दिनैः द्वितीयश्रावणे प्रथमभाद्रपदे वा पर्युषणाया आराधनं युक्तियुक्तं शास्त्रसम्मतं जिनाज्ञानुसारं च ज्ञेयं, परं नअशीतिदिनैः। अस्य विशेषनिर्णयः कल्पसूत्रस्य कल्पद्रुमकलिकाया नवमव्याख्यानाद् अस्मत् कृतबृहत्पर्युषणानिर्णयग्रंथाच्च अवगंतव्यः, इति हस्ताक्षराणि श्रीमत् सुमतिसागरमहोपाध्यायानां लघुशिष्य पं० मुनि-मणिसागरस्य ।

## ॥ श्रीपर्युषणाद्यष्टाह्निकाव्याख्यानम् ॥ १० ॥





शांतीशं शांतिकर्त्तारं, नत्वा स्मृत्वा च मानसे । अष्टाह्निकाया व्याख्यानं, लिख्यते गद्यबंधतः ॥ १ ॥

इह च सकलदुष्कर्मवारिणि विमलधर्मकर्मकारिणि इह परत्र च कृतप्रभूतशर्मणि श्रीपर्युषणादिपर्वणि समागते सति, सकलसुरासुरेंद्राः संभूय श्रीनंदीश्वरनामनि * अष्टमद्वीपे धर्ममहिमानं कर्तुं गच्छंति; तत्र तावन्नंदीश्वरद्वीपस्य मध्यभागे चतुर्दिक्षु चत्वारोंजनगिरयः संति, अंजनवर्णाः पर्वता इत्यर्थः । तेषां प्रत्येकं चतुर्दिक्षु चतस्रो वाप्यः संति, तासां वापिनां मध्यभागेषु दधिमुखाः पर्वताः संति, दधिवर्णाः श्वेतवर्णा इत्यर्थः । पुनर्द्वयोर्वाप्योरंतरे द्वौ द्वौ रतिकरपर्वतौ वर्त्तेते, रक्तवर्णा इत्यर्थः । एवं चैकैकांजनगिरिः, समंताच्चत्वारो दधिमुखाः, अष्टौ च रतिकराः संति, संमिलने द्वादश, त्रयोदशश्च स्वयमंजनगिरिः, इत्थं चतुर्दिक्षु चतुर्णामंजनगिरीणां सपरिकराणां मीलने जाता द्विपंचाशद्गिरयः, ते च पृथग्नामसंख्यया–चत्वारोंजनगिरयः ( ४ ), षोडश दधिमुखाः ( १६ ), द्वात्रिंशद्रतिकरपर्वताः ( ३२ ), तेषामुपर्येकैकं जिनभवनमस्तीति द्विपंचाशज्जिनभवनानि संति, तेषु च जिनचैत्येषु प्रत्येकं चतुर्विंशत्यधिकशतं जिनबिंबानि संति, सर्वेषां मिलनेऽष्टचत्वारिंशदधिकचतुःषष्टिशतानि ( ६४४८ ) जिनबिंबानि भवंति, तानि च सर्वाण्यपि चैत्यानि चतुर्द्वाराणि शाश्वतानि प्रवर-

*एकलक्षयोजनप्रमाणो जम्बूद्वीपः, द्विलक्षयोजनप्रमाणो लवणसमुद्रः, एवं द्वीप समुद्राणां द्विगुणद्विगुणकरणेन–धातकी-पुष्कर-वारुणी-क्षीर घृत-इक्षु-यावत् षोडशाब्ज-अष्टत्रिंशत् कोटि-चत्वारिंशत् लक्षाः-( १६३८४०००००० ) एतावत् योजनप्रमाणोऽष्टमनंदीश्वर नामको द्वीपोऽस्ति ॥

स्थानांतरे मोचनं प्रेष्यप्रयोगः २, कंचित् कार्येणाकारयंतं दृष्ट्वा स्वकार्यसाधनार्थं शब्दकरणं शब्दानुपातः, ३, तथैव परं प्रति स्वस्य रूपदर्शनं रूपानुपातः ४, अभिगृहीतदेशाद् बहिः कार्यज्ञापनाय पाषाणादिक्षेपणं पुद्गलक्षेपः ५ ॥ एकादशे पौषधव्रते पंचातिचाराः, यथा-अप्रतिलेखितदुःप्रतिलेखितशय्यासंस्तारकासेवनं १. अप्रमार्जितशय्यासंस्तारकासेवनं २, अप्रतिलेखितादिभूमिकासु उच्चारप्रस्रवणपरिष्ठापनं ३, अप्रमार्जितादिभूमिकासु उच्चारादिपरिष्ठापनं ४, प्रभातसमये अमुकमाहारं पाचयिष्यामीत्यादिप्रकारचिंतनं ५ ॥ द्वादशे अतिथिसंविभागव्रते पंचातिचाराः, यथा–साधुसमागच्छंतं दृष्ट्वाऽदानबुद्धया देयद्रव्यस्य सचित्तोपरिस्थापनं १, सचित्तेन फलादिना देयवस्तुन आच्छादनं २, स्वकीयमपि मोदकादिद्रव्यमन्यदीयमेतदिति कथनं ३, यदि एतेन निःस्वेनापि दानं दत्तं तत्किमहमतोऽपि हीन इति मात्सर्याद्दानं ४, आहारमानीय भुंजानानां भुक्तवतां साधूनां निमंत्रणं, यथा मदीयोऽभिग्रहोऽपि न भज्यते, वस्तुतोऽपि एते न गृह्णंतीत्यभिप्रायेणेति ५ ॥ इत्थं द्वादशव्रतानां षष्ठ्यतिचाराः, सर्वेऽपि मिलिताः ( १२४ ) इति. एषां मध्ये ये केऽप्यतिचारा लग्ना भवेयुस्तेषां मे मिथ्यादुष्कृतमस्तीति संघादिसमक्षं वाच्यं, ततः सर्वेष्टार्थसिद्धिः ॥

इति चातुर्मासिकत्रयव्याख्यानं समाप्तं ॥ ९ ॥



भ्यो दानं ३, कुप्यस्य स्थालादीनां दशकादेः संयोज्य पंचकादिकरणं ४, पूर्वं सामान्यतो नियमं विधाय पश्चात् सगर्भयोर्द्विपदचतुष्पदयोर्ग्रहणं ५ ॥

अथ षष्ठे दिक्परिमाणाख्ये गुणव्रते पंचातिचाराः, यथा–ऊर्ध्वाधस्तिर्यक् ३ प्रमाणातिक्रमेण वस्त्वानयनप्रेषणाभ्यां त्रयोतिचाराः ३, अन्यदिग्योजनानामन्यस्यां दिशि क्षेपणं क्षेत्रवृद्धिः ४, किंचित् स्वयमेव कृतदिक्प्रमाणविस्मरणं स्मृत्यंतर्धानं ५ ॥ सप्तमे भोगोपभोगव्रते पंचातिचाराः, यथा–सचित्तभक्षणकृतनियमस्य कृततत्परिमाणस्य वा पुंसो दाडिमादि यत्सचित्तं वस्तु तस्य भक्षणं १, पक्वाम्रफलादिसचित्तप्रतिबद्धं तस्य भक्षणं २, अचालितकणिकादि 'अप्पोल' मित्युच्यते, तस्य भक्षण ३, पृथुकादि 'दुप्पोल' मित्युच्यते, तस्य भक्षणं ४, अतृप्तिजनका लघुबीजा औषधयस्तुच्छौषधयस्तासां भक्षणं ५ ॥ अष्टमे अनर्थदण्डविरमणे पंचातिचाराः, यथा–कामोद्दीपकशास्त्राभ्यासः कदर्पः १, मुखाक्षिभ्रूविकारपूर्विका भंडचेष्टा कौकुच्यं २, गाल्याद्यसंबद्धप्रलापित्वं मौखर्यं ३, संयुक्तस्य उदूखलमुशलघरट्टादेर्धारणं संयुक्ताधिकरण ४, स्नानादिसमये अधिकतैलमृत्तिकादिसामग्रीमेलनं,सरोवरादौ स्नानादिकरणेन पृथिव्यप्कायादिविराधनं च भोगोपभोगातिरेकः ५ ॥

अथ नवमे सामायिकव्रते पंचातिचाराः, यथा–मनसि पापव्यापारचिंतनं मनोदुःप्रणिधानं १, विकथाकरणं वाग्दुःप्रणिधानं २, अप्रतिलेखिते स्थाने हस्तादिक्षेपणं कायदुःप्रणिधानं ३, सामायिकं कृत्वा मुहूर्त्तमात्रमपि तदासेवनया अकरणं अनवस्थानं ४, सामायिकं मया कृतं न वेति स्मृतिविहीनता ५ ॥ दशमे देशावकाशिकव्रते पंचातिचाराः, यथा—परं प्रति त्वया इदमानेतव्यमित्युक्त्वाभिग्रहविषयकदेशात्परतो वस्त्वानयनं आनयनप्रयोगः १, त्वयेदं मम वस्तु गृहादौ नेतव्यमित्युक्त्वा स्वपार्श्वस्थाधिकवस्तुनोऽभिगृहीतदेशा

अथ द्वादशव्रतानां षष्ठ्यतिचारा उच्यंते. तत्र प्रथमं स्थूलप्राणातिपातविरमणव्रते पंचातिचाराः यथा—निर्दयतया पश्वादीनां कशादिभिस्ताडनं वधः १, रज्ज्वादिभिर्गाढबंधनं बन्धः २, शस्त्रेण कर्णादिकर्त्तनं वृषणच्छेदनं च छविच्छेदः, छविः शरीरं तस्य छेद इति व्युत्पत्तेः ३, वृषभादीनां स्कंधे पृष्ठे च सामर्थ्यातिरिक्तभारारोपणमिति भारः ४, वृषभादीनां वेलाप्राप्तावपि अन्नजलघासनिवारणा भक्तपानव्यवच्छेदः ५ ॥ स्थूलमृषावादविरमणव्रते पंचातिचाराः, यथा—त्वं चौरस्त्वं जार इत्यादि परं प्रति अविचार्यभाषणं सहसाभ्याख्यानं १, एकांते स्थितान् कानपि विलोक्य एते राजविरुद्धं चिंतयंतीति प्रकाशनं रहोभ्याख्यानं २, विश्वासिभिः स्वदारैः स्वमित्रैर्वा यत्प्रच्छन्नं कथितं तस्यान्येषामग्रे प्रकाशनं स्वदारमन्त्रभेदः ३, कष्टे पतितस्य कस्यचित् पृच्छतोऽलीकमीदृशं वदेरित्यादिशिक्षणं मृषोपदेशः ४, कूटलेखश्च प्रतीतः ५ ॥ स्थूलादत्तादानविरमणव्रते पंचातिचाराः, यथा—चौराहृतवस्तुग्रहणं स्तेनाहृतं १, चौराणां शंबलादिदानेन साहाय्यकरणं स्तेनप्रयोगः २, घृतादौ तादृशवस्तुनो वशादेर्मीलनं तत्प्रतिरूपक्षेपः ३, विरोधिराज्ये लाभार्थं वस्तुविक्रयणार्थं गमनं विरुद्धगमनं ४, लोकप्रसिद्धतुलामानयोर्न्यूनाधिककरणं कूटतुलाकूटमानं ५ ॥ स्थूलमैथुनविरमणव्रते पंचातिचाराः यथा—वेश्यायां १, विधवायां २, कन्यायां ३ वा गमनं अपरिगृहीतागमनं १, भाटकप्रदानेन स्तोककालं यात्मीया कृता तस्यां गमनं ईत्वरीगमनं २, अंगं स्त्रीपुरुषचिह्नं, तदन्यानि अंगानि कुचकक्षोरुवदनादीनि तेषु रमणं अनंगक्रीडा ३, स्वापत्यानामिव अन्यापत्यानां परिणयनं परविवाहकरणं ४, कामभोगेषु गाढाभिलाषस्तीव्रानुरागः ५ ॥ स्थूलपरिग्रहपरिमाणव्रते पंचातिचाराः, यथा—गणिम १ धरिम २ मेय ३ परिच्छेद्य ४ भेदाच्चतुर्विधस्य धनस्य शालिगोधूमादेर्धान्यस्य च समर्घस्य सत्यंकारादिना स्वीकृत्य नियमावधिं यावत्तत्रैव व्यवस्थापनं १, क्षेत्रवास्तुनोर्मध्यवर्तिवृत्त्यादिदूरीकरणेन एकीकरणं २, पूर्णेऽवधौ ग्रहीष्यामीति बुद्ध्या रूप्यस्वर्णादेर्भार्यादि-

पंचदश कर्मादानातिचाराः ॥

ज्ञानस्याष्टौ अतिचाराः यथा—अकालवेलायां प्रतिषिद्धदिने वा श्रुताध्ययनं १, गुरोर्ज्ञानोपकरणानां पुस्तकादीनां वा पादादिसंघट्टनेनाऽविनयकरणं २, तथा एषामेव बहुमानस्याऽकरणं ३, उपधानयोगादि विना श्रुताध्ययनं ४, यस्य पार्श्वे श्रुतमधीतं तस्य गुरोर्नाम्नोऽपलपनं ५, देववंदनप्रतिक्रमणादौ शुद्धाक्षराणामपठनं ६, तत्रैव शुद्धार्थस्यापठनं ७, तत्रैवाऽशुद्धयोः सूत्रार्थयोः पठनं ८, इति ज्ञानस्याष्टौ अतिचाराः ॥

दर्शनस्याप्यष्टौ अतिचारास्तथाहि—देवगुरुधर्मविषये शंकाकरणं १, सर्वाण्यपि दर्शनानि शोभनानीति श्रद्धाकरणं २, धर्मस्य फले संदेहकरणं ३, मिथ्यादृष्टीनां महत्त्वं दृष्ट्वा तदुपरि तीव्ररागकरणं ४, साध्वादीनां गुणश्लाघाया अकरणं ५, नवप्रतिबुद्धश्राद्धादेः स्थिरताया अकरणं ६, साधर्मिकाणां वात्सल्याऽकरणं ७, सति सामर्थ्ये जिनशासनस्य प्रभावनाया अकरणं ८, इति दर्शनस्याष्टौ अतिचाराः ॥

तथा पंचानां समितिनामीर्यादीनां ५, तिसृणां च गुप्तीनां मनोगुप्त्यादीनां ३, तथाविधाऽपालने चारित्रस्याष्टौ अतिचाराः । तथा 'अणसणमूणोयरिया' इत्यादि द्वादशतपोभेदानां सम्यगकरणे तपसो द्वादशातिचाराः । तथा मनोवीर्य १ वचनवीर्य २ कायवीर्याणां ३ देववंदन-प्रतिक्रमण-स्वाध्याय-दान-शीलादौ अस्फोरणे वीर्यस्य त्रयोऽतिचाराः । सम्यक्त्वस्य पंचातिचाराः, यथा—श्रीजिनेंद्रोक्तपदार्थेषु सन्देहः शंका १, अन्यान्यदर्शनाभिलाषः कांक्षा २, धर्मफलं प्रति सन्देहो विचिकित्सा, अथवा मलमलिनवपुषः साधून् दृष्ट्वा जुगुप्साकरणं विचिकित्सा ३, मिथ्यादृष्टीनां प्रशंसनं कुलिंगप्रशंसा ४, मिथ्यादृष्टिभिः सह परिचयः कुलिंगसंस्तवः ५ ॥

पत्तेयं २४ ॥ बारस तव १२ विरयतिग ३ । पण सम्म ५, वयाणं पत्तेयं ६९ ॥ १ ॥ व्याख्या–संलेखनायाः पंचातिचारास्तथाहि— अत्र इतस्तपः प्रभावादहं मनुष्यो राजादिर्भूयासमिति इहलोकाशंसा १, इतोऽनुष्ठानात्परलोके देवो भूयासमिति परलोकाशंसा २, कृतानशनोऽहं लोकैः पूज्योऽस्मि, अतश्चिरं जीयासमिति जीविताशंसा ३, अपूज्यत्वाद्व्याधिपीडितत्वाद्वा शीघ्रं म्रियते चेद्वरमिति यत्प्रार्थनं तन्मरणाशंसा ४, रूपं शब्दश्च कामौ, गंधरसस्पर्शा भोगास्ते मम प्रशस्ता भूयासुरिति या इच्छा सा कामभोगाशंसा ५, संलेखनां कृत्वा यद्येवं चिंतयति तदातिचाराः, एषु च यदि कोऽपि कालयत्रसंबंधी अतिचारो लग्नो भवेत्तदा तस्य मे मिथ्यादुष्कृतमिति संघादिसमक्षं वाच्यं, एवमग्रेऽपि बोध्यम् ।

अथ पंचादश कर्मादानातिचाराः यथा—

आजीविकादिनिमित्तं काष्ठदहनेन अंगाराणां करणं, तद्विक्रयणं, इष्टिकापाचनमित्यादि अंगारकर्म १, वृक्षादेः पत्रपुष्पादेर्वा छेदनविक्रयणादि वनकर्म २, शकटानां तदंगानां च निष्पादनवाहनादि शकटकर्म ३, शकटवृषभादीनां भाटकेनार्पणं भाटककर्म ४, हल कुद्दालादिभिर्भूमिविदारणं पाषाणादिघटनं यवादिधान्यानां भुंजनादिकरणं च स्फोटककर्म ५, प्रथमत एव म्लेच्छादिभ्यो मूल्यदानेन गजदंताद्यानाय्य विक्रयणं, आकाराद्वा स्वयमानीय विक्रयणं दंतवाणिज्यं ६, लाक्षा–नीली–मनःशिलादेः सुलितधान्यादेश्च विक्रयो लाक्षावाणिज्यं ७, घृत–तैलादि रसविक्रयो रसवाणिज्यं ८, यस्मिन् भक्षिते प्राणी म्रियते तद्विषं, तस्य वाणिज्यं ९, द्विपद–चतुष्पदादि विक्रयः केशवाणिज्यं १०, तिलेक्ष्वादीनां यंत्रैः पीडनं यंत्रपीलनं ११, वृषभादेर्वृषणकर्णादिच्छेदनं निर्लांछनकर्म १२, क्षेत्रादौ वह्नेर्ज्वालनं दवदानं १३, गोधूमादेः पोक्षः ( पार्थः ) सरोहृदादिशोषश्च प्रसिद्धः १४, असत्यो दुःशीला दास्यादयस्तासां पोषणमसतीपोषः १५ ॥ इति

तथा तपो हि दुष्टाष्टकर्मविनाशकं सकललब्धिजनकं बाह्याभ्यंतरभेदतो द्वादशविधं दृढप्रहारिवद्भव्यात्मभिः समाचरणीयं । तपोमुखानीत्यत्र मुखशब्द आद्यर्थस्तेन भावनादिपरिग्रहः, इति व्याख्यातं ब्रह्मक्रियादिपदं यत्र । किंचात्रधर्मार्थिनात्मनिंदा कर्त्तव्या, न परनिंदा, तत्र चित्रकृत्पुत्रीदृष्टांतः, स चैवं–कांचनपुराधीशेन जितशत्रुराजेन स्वस्य नवीनसभायां कनकमंजरी नामचित्रकरसुतानिर्मितं चित्रमयूरं साक्षान्मयूरमिव दृष्ट्वा तच्चातुर्यगुणरंजितेन सा परिणीता, तया च स्वबुद्ध्या प्रत्यहं नवनवकथाकथनेन नृपः षण्मासान् यावत् स्ववासे आनीतः, तदा राज्ञा बहु मन्यमानापि सा प्रतिदिनं स्वगृहे एकांतदेशे उपविश्य पितृगृहसंबंधिसामान्यवेषं परिधाय हे आत्मन् ! राजमान्यत्वमस्थिरमस्ति, अतोऽहंकृतिर्न विधेया, तव पितृगृहसंबंधिनी त्वियं ऋद्धिरस्तीत्यादिवचनैरात्मानं निंदति स्म. अथ छलं पश्यंतीभिः सपत्नीभिस्तथाकुर्वाणां तां विलोक्य नृपायोक्तं, एषा तु भवतां कार्मणं करोति, ततो राज्ञा परीक्षार्थमेकदाकस्मादागत्य तामात्मनिंदां कुर्वाणां दृष्ट्वा तुष्टेन पट्टराज्ञी कृता, अपराश्चापमानिताः, एवं धर्मार्थिभिरात्मनिंदा कार्येति ॥

अन्यच्च चातुर्मासिकपर्वाराधयितुकामैर्भव्यात्मभिरस्मिन् दिने स्वे स्वेऽतिचारा आलोचनीयाः, गुर्वादिसमक्षं च तेषां मिथ्यादुष्कृतं च वाच्यं, तत्र साधूनां चरणसप्तति (७० , करणसप्तति (७०) मिलनाच्चत्वारिंशदधिकशत (१४०) मतिचारा भवंति, ते च ग्रन्थगौरवभयान्न लिख्यंते. * । श्रावकाणां तु चतुर्विंशदधिकशतमतिचाराः ( १२४ ) स्युस्ते संक्षेपतो दर्श्यंते—पण संलेहण ५ पन्नरस–कम्म १५, नाणाइ अट्ठ

* संक्षेपतो गाथाद्वयं यथा–वय ( ५ ) समणधम्मं ( १० ) संजम ( १७ ) वेयावच्चं च ( १० ) बंभगुत्तीओ ( ९ ) ॥ नाणाइ तिअं ( ३ ) तव ( १२ ), कोह निग्गहो ( ४ ) होइ चरणमेयं ॥ १ ॥ पिंड विसोही ( ४ ) समिई ( ५ ) भावणा ( १२ ), पडिमा य ( १२ ) इंदिय निरोहो (५)॥ पडिलेहण ( २५ ) गुत्तीओ ( ३ ), अभिग्गहो ( ४ ) चेव करणं तु ॥ २ ॥

अथ देवार्चनस्नात्रविलेपनानि व्याख्यायन्ते—देवस्य श्रीजिनेंद्रस्य तत्प्रतिमायाश्च अर्चनं वासादिना, स्नात्रं जलादिना, विलेपनं च चन्दनादिना कर्त्तव्यमेतत्पदत्रयेण सर्वोऽपि पूजाप्रकारः सूचितः । पूजाफलं चेदं—सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे ॥ सयसाहस्सिया माला, अणंतं गीयवाइयं ॥ १ ॥ इत्यादि, अत्र दृष्टांताः स्वयं वाच्याः । अथ ब्रह्मक्रिया १ दान २ तपोमुखानि ३ व्याख्यायंते, तत्र ब्रह्मक्रिया-ब्रह्मचर्यं सुदर्शनश्रेष्ठ्यादिवत् शीलव्रतपालनमित्यर्थः, तत्फलं यथा—जो देइ कणयकोडिं, अहवा करेइ कणयजिणभवणं ॥ तस्स न तत्तिय पुन्नं, जत्तिय बंभव्वए धरिए ॥ १ ॥ ॥ इति । तथा दानं हि अभयं १ सुपात्रा-२ नुकंपो ३ चित ४ कीर्त्ति ५ भेदात्पंचविधं, तत्र द्वाभ्यां मोक्षः, त्रिभिश्च भोगप्राप्तिः, इहाभयदाने दृष्टांतो यथा—

राजगृहे सभास्थितेन श्रेणिकनृपेण प्रोक्तं, संप्रति नगरे किं वस्तु सुलभं स्वादु चास्ति ? क्षत्रियाः प्रोचुर्मासं समर्घं स्वादु चास्ति, तदा अभयकुमारेण चिंतितं, एते निर्दयाः, अथ यथा पुनरप्येवं न जल्पेयुस्तथा कुर्यां, ततो रात्रौ सर्वक्षत्रियगृहेषु पृथग्पृथग्गत्वाऽभय एवमवादीत्—भो क्षत्रियाः ! राजपुत्रशरीरे महाव्याधिरुत्पन्नोऽस्ति, यदि मनुष्यसत्कं कालेयमांसं टंकद्वयमितं दीयते तदा स जीवति नान्यथेति वैद्यैरुक्तमस्ति. ततो यूयं राज्ञो ग्रासजीविनो भवद्भिरेवैतत्कार्यं कर्त्तव्यं. तदा एकेनोक्तं दीनारसहस्रं गृहाण ? परं मां मुंच ? अन्यत्र गच्छ ? अभयेन तद् गृहीतं, एवं रात्रौ प्रतिगृहं परिभ्रम्य तैर्दत्तानि बहूनि दीनारलक्षणाण्यादाय प्रभाते नृपसभायां तद्धनं क्षत्रियभ्यो दर्शितं, प्रोक्तं च अहो गतदिने यूयमेव वदथ यन्मांसं सुभलमिति. अद्य तु एतावता द्रव्येणापि तन्मांसं न प्राप्तं, ततो लज्जितास्तेऽभयेन हक्किताः, ततो मांसभक्षणनियमं प्रापिताश्च, अत्रार्थे श्लोकः—स्वमांसं दुर्लभं लोके, लक्षेणापि न लभ्यते ॥ अल्पमूल्येन लभ्यते । पलं परशरीरजं ॥ १ ॥ एवमन्यैरप्यभयदानबुद्धिर्धार्येति ॥

अथावश्यकपदं व्याख्यायते, तत्रोभयकालं यदवश्यं कर्त्तव्यं तदावश्यकं प्रतिक्रमणमित्यर्थः, तत्फलं चेदं—आवस्सएण एएण । सावओ जइवि बहुरओ होइ ॥ दुक्खाणमंतकिरियं । काही अचिरेण कालेण ॥ १ ॥ व्याख्या—श्रावको यद्यपि बहुरजस्को बहुपापयुक्तो भवति तथाप्येतेनावश्यकेन कृत्वा स्तोकेन कालेन दुःखानामंतक्रियां विनाशं करिष्यतीति, किंच— आवस्सअं उभयकालं, ओसहमिवं जे करंति उज्जुत्ता ॥ जिणविज्जकहियविहाणा, अकम्मरोगा य ते हुंति ॥ २ ॥ व्याख्या—श्रावका उपयोगयुक्ताः संतः प्रभातसंध्याकालयोर्जिनवैद्यकथितविधिना सम्यक्प्रकारेण औषधमिवावश्यकं कुर्वंति ते कर्मरोगरहिता भवंतीति. प्रतिक्रमणनियमे साजणसिंहदृष्टांतः । स चैवं—साजणसिंहनामा श्रेष्ठी द्विसंध्यं कालवेलायां प्रतिक्रमणं विना भोजनं न कार्यमिति नियमवान् बभूव. एकदा पीरोजपातसाहेन केनचिदपराधेन स कारागारे क्षिप्तस्तदा तत्र स्थितेनापि तेनारक्षकपुरुषेभ्यः पंचाशत्पंचाशन्मितान् सुवर्णनिष्कान् दत्त्वा प्रत्यहं प्रतिक्रमणं कृतं, अन्यदा रत्नद्वयपरीक्षणव्यतिकरे तृतीयं रत्नं जगन्मध्ये त्वमिति वचनात्प्रसन्नेन सुरत्राणेन स मुक्तः सन्मानितश्च. तदा तैर्भीतैरारक्षकैर्निष्कास्तस्य पश्चात्प्रदत्तास्ततः श्रेष्ठिना ते निष्कास्तेभ्य एव दत्ताः, प्रोक्तं च अहो एतद्धनं कियत् ! यतोऽमूल्यं प्रतिक्रमणं मया कृतं भवत्साहाय्यादिति दृष्टांतः ॥

अथ पौषधं व्याख्यायते— धर्मस्य पोषं पुष्टिं दत्ते तत्पौषधं, तच्चाहार १ शरीरसत्कार २ गृहव्यापार ३ अब्रह्म ४ निवृत्तिरूपं बोध्यं, तत्फलं चेदं—पोसहि य सुहे भावे । असुहाइ खवेइ नत्थि संदेहो ॥ छिंदेइ निरयतिरिगइं । पोसह विहिअप्पमत्तेणं ॥ १ ॥ पौषधव्रतस्थिरत्वे कामदेवदृष्टांतः—यथा कामदेवश्रावकः पौषधे स्थितः सन् निशायां मिथ्यात्विदेवेन—दुष्टगज १ नाग २ पिचाश ३ रूपैर्बहुधा क्षोभितोऽपि मनोवाक्कायैर्मनागपि न क्षुभित इति.

नर्त्तकीनिमग्नचित्तोऽपि तयोर्निर्विकारभावदर्शनात् सद्यः संप्राप्तवैराग्योऽनित्यादिभावनां भावयन् केवलज्ञानं प्राप, देवैर्महोत्सवो विहितो, वंश एव च सिंहासनं बभूव, तत्स्वरूपदर्शनान्नृपादयोऽपि प्रतिबुद्धाः ॥ इति ॥ परिज्ञायामिलापुत्रदृष्टांतः ॥७॥ अथ परिहरणीयवस्तुत्यागे तेतलिपुत्रदृष्टांतो यथा—तेतलिपुरे कनककेतुर्नामराजा, स च राज्यलोभाज्जातमात्रान् स्वपुत्रान् विनाशयति. तस्य राज्ञस्तेतलिपुत्रनामामात्यस्तस्य पोट्टिलानाम भार्या, सा च प्रथमं मंत्रिणोऽतिवल्लभासीत् , पश्चात्कथंचिदनिष्टा जाता. एकदा तस्या गृहे आहारार्थमेका साध्वी समुपागता, मंत्रिपत्न्या तां प्रति प्रणम्य भर्तृवशीकरणोपायः पृष्टः, साध्व्या प्रोक्तं धर्मः सेव्यो येन सर्वेष्टार्थाः सिद्ध्यंति, ततः सा संसाराद्विरक्ता सती दीक्षाग्रहणार्थं पतिं पप्रच्छ, मंत्रिणोक्तं दीक्षां गृहाण, परं यदि त्वं देवपदं प्राप्नुयास्तर्हि मां प्रतिबोधयः, तयापि तद्वचोंगीकृत्य दीक्षामादाय आयुःक्षये समाधिना मृत्वा देवपदं प्राप्तं, अथ मंत्रिणा राज्ञ एकः पुत्रो जातमात्र एव प्रच्छन्नं गृहीत्वा स्वगृहे वार्द्धित आसीत् . एकदा कनककेतुनृपे परलोकं गते सति मंत्रिणा स कनकध्वजकुमारो राज्ये स्थापितः, राजकार्यममात्याधीनं कृतं, ततो मंत्री अहर्निशं राजकार्ये मग्नः सन् कदापि धर्मकृत्यं न कृतवान्. तस्मिन्नवसरे देवपदं प्राप्तया पोट्टिलया मंत्रिणस्तत्स्वरूपं दृष्ट्वा तत्प्रतिबोधाय नृपादयः सर्वेऽपि लोकास्तत्पराङ्मुखा विहिताः, ततो नृपस्थानं गतेन मंत्रिणा क्वाप्यादरमलभमानेन सद्यो गृहमागत्यात्मनः कुमरणाशंकया स्वहस्तेनैवानेके मरणप्रयोगाः कृताः, परं देवेन सर्वेऽपि वैयर्थ्यं नीताः, ततो विलक्षीभूय स्थितं मंत्रिणं प्रति देवः प्रादुर्भूय उवाच, भो मंत्रिन् ! ईदृक्संसारस्वरूपं विद्यते, तत्त्वतो न कोऽपि कस्यापि स्वजनोऽस्ति. इत्यादिवचनैर्मंत्रिणं प्रतिबोध्य देवः स्वस्थानं ययौ, मंत्र्यपि सर्वं विभवं परित्यज्य सद्यो दीक्षां जग्राह। इति प्रत्याख्याने तेतलिपुत्रदृष्टांतः ॥ इति सागारिकपदं व्याख्यातम् ॥

सर्वजीवैः सह क्षामणां कृत्वा तत्र स्थितः सन् स्वयमेव तत्कटुकतुंबिकाशाकं भुक्तवान् , न पुनः परप्राणि वधभिया परिष्ठापितवान्. ततः सद्यो मृत्वा स सद्गतिं प्राप्तः ॥ इति ॥ निष्पापाचरणे धर्मरुचिर्दृष्टांतः ॥ ६ ॥ अथ पापत्यागेन यद्वस्तुतत्त्वज्ञानं, तत्र इलापुत्रदृष्टांतो यथा--इलानगरे धनदत्तश्रेष्ठी, तस्य इलादेवीसेवनात् इलापुत्रोनाम पुत्रो जातः, स चैकदा तत्रागतानां विदेशिनटानां नृत्यं पश्यन् अतिसुन्दररूपां नर्त्तकपुत्रीं विलोक्य प्राग्भवस्नेहात्तस्यामत्यन्तानुरक्तो बभूव, ततः सद्यो गृहमागत्य पितरं प्रति उवाच-भो तात ! मां प्रति नर्त्तकपुत्रीं परिणायस्व, नोचेद् मरणमेव शरणीकरिष्ये, परमपरकन्यापाणिग्रहणं सर्वथा न विधास्ये, तदा पित्रा तस्यात्याग्रहं विज्ञाय कथमपि निषेद्धुमशक्नुवता वृद्धनटसमीपं गत्वा तस्य पुत्री मार्गिता. नटेनोक्तं यद्ययमस्मत्कलां शिक्षयित्वा बहुधनं चोपार्ज्य अस्मज्ज्ञातिं पोषयेत् तर्हि-अस्मत्पुत्र्याः पाणिग्रहणं कुर्यात्. श्रेष्ठिना तद्वचः श्रुत्वा इलापुत्रं प्रति सर्वोऽपि वृत्तांतः प्रोक्तः, इलापुत्रस्तु तदप्यंगीकृत्य हठेन गृहान्निर्गत्य नटेषु संमिलितः, ततः कियता कालेन तेषां सर्वकलासु निपुणो भूत्वा वेन्नातटनगरं प्राप्तः, तत्र राज्ञे स्वकलादर्शनाय स्वयं वंशमारुह्य रमतेस्म. सा नटपुत्री च वंशपार्श्वे स्थिता गानं करोतिस्म, तदा तां नटपुत्रीं विलोक्य राजा चलचित्तः सन् चिंतयतिस्म, यद्येष इलापुत्रो वंशान्निपत्य म्रियते तर्हि एनां कन्यामहं गृह्णामि. अथ इलापुत्रः सर्वा एव कलाः कृत्वा वंशादुत्तीर्य दानग्रहणेच्छया नृपपुर स्थितः, राज्ञोक्तं व्यग्रतया मया नृत्य न दृष्टं, ततः पुनः कुरु ? तदा तेन धनलिप्सया पुनर्नृत्यं कृतं, परं राज्ञा तन्मरणमिच्छता पुनस्तथैवोक्तं. ततः सतृतीयवारं पुनः- वंशमारुह्य रमतेस्म. तस्मिन्नवसरे एकभाग्यवतः श्रेष्ठिनो गृहे एकः साधुराहारार्थं गतस्तदा सर्वालंकारविभूषिताऽतिसुन्दरांगी श्रेष्ठिपत्नी सद्यः समुत्थाय सानंदं वंदनां विधाय मोदकैः स्थालं भृत्वा साधुं प्रतिलाभयति, साधुरप्यधोदृष्टिः सन् 'इत्थं इत्थमिति' शब्दमुच्चरन्नाहारं गृह्णाति. एतत्स्वरूपं वंशारूढेन इलापुत्रेण दृष्टं, तदासौ स्वयं

तत्प्राप्त्यर्थं समपरिणामं दधानः, करस्थं खड्गादि तत्रैव परित्यज्य तन्मुनिस्थाने एव कायोत्सर्गेण तस्थौ. तदानीं हि रुधिरगन्धादुपागतेन कीटिकागणेन तच्छरीरं सच्छिद्रं कृतं, परं स मनागपि न चचाल, तृतीयदिने तत्रैव कालं कृत्वा स्वर्गं प्राप्तः ॥ इति ॥ समाप्तो चिलातीपुत्रदृष्टांतः ॥४॥ अथ स्तोकाक्षरैर्महार्थकथने लौकिकः पंडितचतुष्टयदृष्टान्तो यथा—वसन्तपुरे जितशत्रुराजा, तस्यैकदा शास्त्रश्रवणेच्छासीत्, तदा चतुर्भिः पंडितैः श्लोकलक्षप्रमितमेकैकं ग्रंथं विधाय नृपाय निवेदितं, नृपेणोक्तं—एते ग्रंथा अतिमहांतो मया स्तोककालेन श्रोतुं न शक्यंते, तस्मात्स्वल्पाक्षरैरेवैतेषां सारं वदत, तदा चतुर्भिः पंडितैः सारभूतमेकं श्लोकं निष्पाद्य नृपाग्रे प्रोक्तं, तथाहि—जीर्णे भोजनमात्रेयः, कपिलः प्राणिनां दया ॥ बृहस्पतिरविश्वासः, पंचालः स्त्रीषु मार्दवं ॥१॥ व्याख्या—आत्रेयनामा विद्वान् वक्ति—प्रथमं भुक्ते आहारे जीर्णे सति पुनः भोजनं कार्यमिति वैद्यग्रंथपरमार्थः १, कपिलपंडितः प्राह—सर्वेषां प्राणिनां दया कार्येति धर्मशास्त्रपरमार्थः २, बृहस्पतिनामा विद्वान् वदति—कस्यापि विश्वासो न कार्य इति नीतिशास्त्रसारः ३, पंचालो विद्वान् ब्रुते—स्त्रीषु मृदुता धार्या परं तासामंतो न ग्राह्य इति कामशास्त्ररहस्यं ४, एवं स्तोकाक्षरैर्बह्वर्थकथनं द्वादशांगीरूपं संक्षेपसामायिकं बोध्यं ॥५॥ अथ निष्पापाचरणे धर्मरुचिसाधुदृष्टांतो यथा—धर्मघोषाचार्यस्य शिष्यो धर्मरुचिनामा साधुर्नगरे आहारार्थं भ्रमन् रोहिणीनामब्राह्मण्या गृहे भिक्षार्थं प्रविष्टः, तया कुटुम्बनिमित्तं मिष्टभ्रान्त्या निष्पादितं कटुकतुंबिका शाकं विषप्रायं विज्ञाय दुष्टबुद्ध्या साधवे दत्तं, साधुना तु सरलस्वभावेन तद् गृहीत्वा स्वस्थाने आगत्य गुरुभ्यस्तद्दर्शितं. गुरुभिस्तद् दृष्ट्वा प्रोक्तं भो महानुभाव ! इदं शाकं विषप्रायमस्ति. तस्मान्निरवद्यस्थंडिले गत्वा परिष्ठापय । तदा धर्मरुचिसाधुर्गुर्वाज्ञया निर्वद्यभूमौ गत्वा यावत्तच्छाकं परिष्ठापयितुं लग्नस्तावत्तन्मध्यात्पतितबिंदुमात्रे एव तद्गन्धाकृष्टा बह्व्यः कीटिकाः संमिलितास्तद्गन्धग्रहणेनैव च मृताः, अथैवं बहुकीटिकामरणं दृष्ट्वा पापभीरुः साधुर्जीवदयां चिंतयन्

मटैर्निरुद्ध्य निजगृहं चागत्य प्रच्छन्नं स्थितः, ततः स दत्तो मतिमोहात्सप्तममपि दिनमष्टमं मन्वानोऽथाचार्यप्राणैः शांतिकं कुर्वे इति विचिन्त्य गृहान्निर्गतः, तदा एको मालिकः पुर्यां प्रविशन् कार्याकुलत्वात् राजमार्गे एव मलोत्सर्गं कृत्वा तत्पुष्पैराच्छादयामास, तावत्तत्रैव मार्गे गच्छतो दत्तस्याश्वखुरोत्क्षिप्ता सा विष्टा मुखे पतिता. तदा स विष्टास्वादाच्चमत्कृतः सन् पश्चान्निवृत्तस्तदैतस्य बहुविधदुराचारेण खिन्नैर्मूलमंत्रिभिर्जितशत्रुनृपः पंजरान्निष्कास्य राज्ये स्थापितः, दत्तस्तु छलाद् बद्ध्वा राज्ञे समर्पितः; राज्ञा च स कुंभ्यां प्रक्षिप्य अधश्चाग्निं प्रज्वाल्य श्वानान् ( शुनो ) विमुच्य स कदर्थितः सन् मृत्वा नरकं गतः आचार्यास्तु बहुधा सन्मानिताः, इति सत्योक्तौ कालिकाचार्यदृष्टांतः ॥३॥ अथ स्तोकाक्षरैर्महातत्त्वज्ञाने चिलातीपुत्रदृष्टांतो यथा—राजगृहनगर्यां धनदत्तनामा व्यवहारी, तस्य चत्वारः पुत्राः, सुसमानामपुत्री, चिलातीपुत्रनामैको दासश्चासन्. एकदा श्रेष्ठी तं दासं दुराचारिणं विज्ञाय गृहाद् बहिर्निष्कासितवान्. सोऽपि ततो निःसृत्य चौरपल्ल्यां गत्वा स्थितः । अथान्यदा स चिलातीपुत्रो बहुचौरान् संमेलयित्वा राजगृहनगर्यामागतः, तत्र स्वयं च तस्य श्रेष्ठिनो गृहे प्रविश्य सुसमानामकन्यां चादाय सद्यो गृहान्निर्गतः, तावत् श्रेष्ठ्यपि कन्यानयनार्थं चतुष्पुत्रसहितस्तत्पृष्ठे चलितः एवं च कियति मार्गेऽतिक्रान्ते श्रेष्ठिनमत्यासन्नमागतं वीक्ष्य भीतश्चिलातीपुत्रः सुसमाया मस्तकं छित्त्वा करे च तद् गृहीत्वा, द्वितीयकरे च रुधिरलिप्तं खड्गमुत्पाट्य पर्वतोपर्यारुरोह, श्रेष्ठी तु तत्स्वरूपं दृष्ट्वा विषण्णः सन् पश्चाद्वलितः, अथ चिलातीपुत्र एतादृशभयंकररूपेणाग्रे चलन् मार्गे कायोत्सर्गस्थं साधुं च विलोक्य इत्थमुवाच, भो मुंड ! धर्मं कथय ? नोचेदनेन खड्गेन तवापि शिरश्छेत्स्यामि, साधुना तत्स्वरूपं वीक्ष्य झटिति ' णमो अरिहंताणं ' इति पदमुच्चार्य आकाशे चोड्डिय उपशम १ विवेक २, संवरेति ३ पदत्रयात्मकं धर्मं तदग्रे उक्त्वाऽन्यत्र जग्मे. अथ चिलातीपुत्रस्तमर्थं विचारयन् आत्मनि तन्मध्यगमेकमपि गुणमपश्यन्

मेतार्यमुनिः प्राग्भवाचरितदुरितवशाद्राजगृहनगर्यां चांडालकुले समुत्पन्नः, चांडालया च जन्मसमय एव मृतवत्सायै धनदत्तश्रेष्ठिपत्न्यै स प्रच्छन्नमर्पितस्तद्गृहे स वृद्धिं प्राप्तः, क्रमेण यौवने प्राग्भवमित्रदेवसाहाय्याद्दष्टौ श्रेष्ठिकन्या एकां च श्रेणिकनृपपुत्रीं स परिणीतवान् . ततो द्वादशवर्षांते देववचनात् श्रीवीरप्रभुसमीपे प्रव्रज्यामादाय बहुदेशेषु विहरन् एकदा राजगृहनगर्यां स्वर्णकारगृहे भिक्षार्थं प्रविष्टः, तत्र स्वर्णकारे भिक्षानयनार्थं गृहांतः प्रविष्टे सति पश्चात् श्रेणिकनृपस्य देवपूजानिमित्तं तत्कृता अष्टोत्तरशतप्रमिताः स्वर्णयवाः क्रौंचपक्षिणा भक्षितास्ततश्चोड्डीय स भित्त्युपरि स्थितः, तावत् स सुवर्णकारः शुद्धाहारमानीय बहिः समागतः, स्वर्णकारस्तत्र स्वर्णयवानपश्यन् तं साधुमेव तच्चौरं विचिन्तयन् जगाद–भो साधो ! इहस्था यवाः केन गृहीताः ? तदा साधुना चिंतितं यदि पक्षिणा भक्षिता इति वक्ष्ये तर्हि मद्वचनादसौ एनं क्रौंचं हनिष्यति एवं विचिंत्य तेन मौनमाश्रितं, ततोऽतिरुष्टेन स्वर्णकारेण साधोर्मस्तकमार्द्रवार्ध्रेण बद्धं, तदा साधोश्चक्षुषी निःसृत्य पतिते, महती वेदना समुत्पन्ना, ततः स साधुरन्तकृत्केवली भूत्वा मुक्तिं प्राप्तः । इत्थं प्राणांतोपसर्गेऽपि तेन मेतार्यमुनिना जीवदयैव मनसि धृता, न किमप्यन्यच्चिंतितं, एवमन्यैरप्याचरणीयम् । इति । समयिके मेतार्यदृष्टांतः ॥ २ ॥ अथ सत्यवादे कालिकाचार्यदृष्टांतो यथा–तुरीमिणीनगर्यां कालिकाचार्याणां भागिनेयेन दत्तनाम्ना पुरोहितेन छलात्स्वामिनृपं कारागारे निक्षिप्य स्वयं च राज्यभारं बिभ्रता अन्यदा च मातुः प्रेरणयाऽऽचार्यसमीपं गतेन तेन उन्मत्ततया धर्मेर्ष्यया च सक्रोधं श्रीगुरुभ्यो यज्ञफले पृष्टे सति गुरुभिर्धैर्यमवलम्ब्य तस्याग्रे यज्ञो हिंसारूपो हिंसायाः फलं च नरक इति सत्यमेव वचः प्रोक्तं, न पुनरन्यथा. ततः कोऽत्र प्रत्यय इति तेन पृष्टे सति गुरुणोक्तं, तस्मिन्नेव दिने तव मुखेऽकस्माद्विष्टा पतिष्यति. ततोऽतिक्रुद्धेन दत्तेनोक्तं त्वं कथं मरिष्यसि ? गुरुणोक्तमहं समाधिना मर्त्तास्मि, मृतोऽपि च स्वर्गं गतास्मि । तदा दत्तः साहंकृतिः सन् तत उत्थाय सूरिं च स्व-

रागद्वेषभयादिपरिहारेण यथास्थितकथनं ३, समासः-स्तोकाक्षरैः कर्मनाशकस्तत्त्वबोधः ४, संक्षेपः-स्तोकाक्षरा महार्था द्वादशांगी ५, अनवद्यं-निःपापाचरणं ६, परिज्ञा-पापत्यागेन समंताद्वस्तुतत्त्वज्ञानं ७, प्रत्याख्यानं-परिहरणीयवस्तुत्यागः ८ इत्यष्टौ नामानि. अथैषां क्रमेणाष्टौ दृष्टांता दर्श्यते, तत्रादौ दमदन्तदृष्टांतो यथा—

हस्तिशीर्षनगरे दमदंतो राजा, तस्य चैकदा हस्तिनागपुरस्वामिभिः पांडवैः कौरवैश्च सह सीमानिमित्तं महान् विवादः संजातः, तदनंतरं कियद्भिर्दिनैर्दमदंते जरासंधनृपसेवार्थं गते सति पांडवकौरवैश्च तद्देशो भग्नस्तां वार्त्तां श्रुत्वा क्रुद्धो दमदंतः सद्यो बहुसैन्यमादाय हस्तिनागपुरोपरि समागतस्तत्र चोभयेषां परस्परं महद्युद्धं संजातं, परं दैववशात्पांडवाः कौरवाश्च भग्नाः; दमदंतस्तु विजयं प्राप्य स्वस्थानमायातः, तत एकदा स नृपः संध्यायां पंचवर्णवार्दलस्वरूपं दृष्ट्वा संप्राप्तवैराग्यः संसारमपि तादृशमेवासारं विभावयन् प्रत्येकबुद्धतया प्रव्रजितः, ततः प्रतिग्रामं विहरन् अन्यदा हस्तिनागपुरे प्रतोल्या बहिर्देशे कायोत्सर्गेण स तस्थौ, तदा राजवाटिकां गच्छद्भिः पांडवैर्मार्गे तं मुनिं विलोक्य लोकमुखाच्च तं दमदंतराजर्षिं विज्ञाय सद्योऽश्वेभ्य उत्तीर्य विधिनाभिवन्द्य तस्य द्विविधमपि बलं प्रशंस्य अग्रे चलितं, ततः कौरवाः समेतास्तेषु वृद्धेन दुर्योधनेन तथैव तं दमदंतं विज्ञाय बहुभिर्दुर्वाक्यैस्तिरस्कृत्य साधुसमीपं च बीजपूरफलं प्रक्षिप्य अग्रे चलितं, ततो 'यथा राजा तथा प्रजेति' न्यायात्तदनुगच्छद्भिः सर्वैरपि सैनिकैः काष्ठपाषाणादेर्निःक्षेपाद् समन्तादुच्चैस्तरं चत्वरमिव विदधे. अथ पश्चाद्वलमानाः पांडवा मुनिस्थाने तन्महच्चत्वरं दृष्ट्वा लोकेभ्यः प्रश्नपूर्वकं तत्सर्वं कौरवकृतं दुश्चेष्टितं ज्ञात्वा सद्यस्तत्रागत्य पाषाणादिदूरीकरणपूर्वकं तं दमदंतं प्रणम्य स्वस्थानं गताः, एवं पांडवैः सन्मानितः कौरवैश्चापमानितोऽपि स मुनिः उभयत्र समभावं बभार, मनागपि रागद्वेषौ न कृतवान्। इति समभावे दमदंतदृष्टांतः ॥ १ ॥ अथ दयापूर्वकवृत्तौ मेतार्यदृष्टांतो यथा—

माराध्यं, एतावता सम्यग्दृष्टिभिर्मिथ्यात्वपरिहारेण देवपूजन-गुरुसेवन-जैनागमश्रवण-धर्मक्रियानुमोदन-तीर्थयात्राकरण-जिनकल्या-
णकभूमिस्पर्शनादिभिः सततं सम्यक्त्वं निर्मलं कार्यमिति, उक्तं च—
जम्मं दिक्खा नाणं, तित्थयराणं महाणुभावाणं ॥ जत्थ य कयनिव्वाणं अगाढं दंसणं होइ ॥१॥इति॥ प्रसंगत उक्तं,
अथ प्रथमं सामायिकस्वरूपमुच्यते, समस्य-रागद्वेषरहितस्य सतो-जीवस्य आयो-ज्ञानादीनां लाभ प्रशमसुखरूपः समायः, स एव-
सामायिकं, मनोवाक्कायचेष्टापरिहारेण मुहुर्त्तं यावत् सर्ववस्तुषु समपरिणाम इत्यर्थः, उक्तं च, निंदपसंसासु समो, समो य माणावमाण-
कारीसु । समसयणपरियणमणो । सामाइयं संगओ जीवो ॥ १ ॥ जो समो सव्वभूएसु, तसेसु थावरेसु य ॥ तस्स सामाइयं होइ, इमं
केवलिभासियं ॥ २ ॥ तथा सामायिकस्थितः श्रावको गृहस्थोऽपि यतितुल्यो भवति, यतः—सामाइयंमि उ कए, समणो इव सावओ
हवइ जम्हा ॥ एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥ १ ॥ अत एव सामायिकस्थस्य देवस्नात्रपूजनादावप्यधिकारो नास्ति; सामा-
यिकरूपे भावस्तवे प्राप्ते सति द्रव्यस्तवकरणानौचित्यात् । सामायिकस्य दुर्लभता कथितास्ति, यथा—सामाइयसामग्गिं, देवावि चिंतंति
हियमज्झंमि ॥ जइ हुइ मुहुत्तमेगं, ता अह्म देवत्तणं सहलं ॥ १ ॥ इति ॥ इह सामायिककर्त्ता श्रद्धालुर्द्विविधः ऋद्धिमान् अनृद्धिकश्च;
तत्र य ऋद्धिरहितः स साधुसमीपे जिनगृहे पौषधशालायां स्वगृहे वा निर्विघ्ने स्थाने सामायिकं कुरुते, यस्तु राजादिर्महर्द्धिकस्तस्य सामायि-
कविधानं महताडंबरेणोपाश्रयमागत्योचितं भवति, यत ईदृशा अपि सामायिकं कुर्वंतीति लोके जिनशासनस्य महाप्रभावना संजायते इति.
अथ सामायिकस्याष्टौ नामानि उच्यंते—सामाइयं १ समइयं २ सम्मवाओ ३ समास ४ संखेवो ५ । अणवज्जं च ६ परिण्णा ७,
पच्चक्खाणे य ८ ते अट्ठ ॥ १ ॥ व्याख्या—सामायिक-समभावः १, समयिकं-सम्यग्दयापूर्वकं सर्वजीवेषु प्रवर्त्तनं २, सम्यग् वा

तरसं चिर्भटिकादिफलं जीवाश्रयत्वाद्वर्जनीयं, पुनः सच्छिद्रमपरिपक्वं फलमपि अंतर्जीवसद्भावात्त्याज्यं, एवमन्यदपि अज्ञातफलादियद्-भक्ष्यवस्तु तत्सर्वं परिवर्ज्यं, उक्तं च—

अज्ञातकं फलमशोधितपत्रशाकं, पूगीफलानि सकलानि च हट्टचूर्णं ॥
मालिन्यसर्पिरपरीक्षकमानुषाणा-मेते भवंति नितरां किल मांसदोषाः ॥ १ ॥

पुनर्यद् द्रव्यं ग्रीष्मादिकाले शीघ्रविनाशि भवति तत्तत्सोपयोगेन सता निरवद्यमेव सेव्यमिति ॥

अथ विशेषतोऽस्मिन्पर्वणि कृत्यं दर्शयति—

सामायिकावश्यक-पौषधानि, देवार्चन-स्नात्र-विलेपनानि। ब्रह्मक्रिया-दान-तपोमुखानि, भव्याश्चतुर्मासिकमंडनानि॥१॥

व्याख्या--भो भव्या! एतानि सामायिकादिधर्मकृत्यानि चातुर्मासिकस्य मंडनानि–अलंकारभूतानि विद्यंते, ततो भवद्भिस्तानि सेव्यानीति ज्ञेयं, यद्यपि चातुर्मासिकत्रयमस्ति तथापि यदुद्दिश्य व्याख्यानं विधीयते तन्नाम ग्राह्यं, तत्र न कोऽपि दोषः, अत्र हि कश्चित्पुमान् सामायिकं करोति, कश्चित्प्रतिक्रमणं, कश्चित्पौषधमित्यादि योज्यं, यथाशक्ति एतानि कर्त्तव्यानीति न कश्चिद्विरोध इति, इह प्रथमं तिथयो विलोक्याः, ते च त्रिधा तथाहि–"चाउद्दसट्ठ-मुद्दिट्ठपुण्णमासिणीत्ति" सिद्धांते उक्तत्वात्, मासमध्ये द्वे चतुर्दश्यौ, द्वे अष्टम्यौ, आमावास्या, पूर्णिमा च, षट् चारित्रतिथयः, आसु चारित्रमाराध्यं. शीलांगाचार्यैर्हि–गीतार्थैरादृत्वात्, उद्दिष्टशब्देन जिनकल्याणकतिथयः पर्युषणातिथिरपि च ग्राह्या, द्वितीयापंचम्येकादश्यो ज्ञानतिथयः, एषु ज्ञानमाराध्यं, अन्ये दर्शनतिथयस्तेषु दर्शन-

## अथ श्रीचातुर्मासिकव्याख्यानं प्रारभ्यते ॥ १ ॥

स्मारं स्मारं स्फुरज्ज्ञानं, धाम जैनं जगन्मतम् ॥ कारं कारं क्रमांभोजे, गौरवे प्रणतिं पुनः ॥ १ ॥
निबद्धां प्राक्तनप्राज्ञैर्वीक्ष्य व्याख्यानपद्धतिम् ॥ लिख्यते लेशतो व्याख्या, चातुर्मासिकपर्वणः ॥ २ ॥ युग्मम् ॥

इहाषाढ २ कार्तिक २ फाल्गुन ३ चातुर्मासिकानामन्यतमे चातुर्मासिकपर्वणि समागते सति अन्योऽन्यसापेक्षव्यवहारनिश्चयाभ्यां युक्तं श्रीजिनशासनं विज्ञायैकांतवादनिराकरणेन आवश्यकग्रंथोक्त-समाहिताक्षर- शुद्धटंकरूप्यलक्षणचतुर्थ-भंगतुल्यं द्रव्यभावलिंगं संयुक्तमिच्छद्भिः स्याद्वादरुचिभिर्धर्मार्थिभिः प्राणिभिः सम्यग्धर्मकृत्यं कर्त्तव्यम् । अत्र हि चत्वारो भंगाः प्रोक्ताः संति, तथाहि—अशुद्धं रूप्यमशुद्धमुद्रं १, अशुद्धं रूप्यं शुद्धमुद्रं २, शुद्धं रूप्यमशुद्धं मुद्रं ३, शुद्धं रूप्यं शुद्धं मुद्रं ४. तत्र प्रथमे भंगे चरकपरिव्राजकादयः १, द्वितीये पार्श्वस्थादयः २, तृतीये प्रत्येकबुद्धा अंतर्मुहूर्त्तकालमगृहीतद्रव्यलिंगाः ३, चतुर्थे साधवो द्रव्यतो भावतश्च शुद्धिभाजः ४. एतेषु चतुर्थभंग एव शुद्धत्वादुपादेय इति । अथ श्राद्धानां प्रथमतः सामान्येन किंचिन्नित्यकर्त्तव्यमुच्यते । एतद्दुरंतानंतभवभ्रमण भीरुभिर्जैनमार्गानुसारिभिः श्रद्धालुभिः सर्वदा बहुसावद्यव्यापाराः वर्जनीयाः, विशेषतः फाल्गुनादिमासेषु तिलादिधान्यं न रक्षणीयं बहुत्रसजीवोत्पत्तिविनाशसंभवात् , तथा संधानमात्रफलादीनां यदि संसक्तं भवेत्तदा त्याज्यं, जंतुभिमिश्रं फलं मधुकबिल्वादि, पुष्पमरणिशिग्रूमधुकादि त्याज्यं, वर्षाकाले तंदुलीयादिपत्रशाकं न भक्षणीयं, बहुसूक्ष्मत्रसजीवमिश्रत्वादिति, योगशास्त्रे हेमाचार्यैर्गुर्जरादौ महाजनप्रसिद्धैरुक्तमस्ति, फाल्गुनपूर्णिमात आरभ्य कार्तिकपूर्णिमां यावत् प्रायेण पत्रशाकं न भक्ष्यमिति । तथातिपक्कं श्लथीभूतं चलि-

रिसहेस समं पत्तं, निरवज्जं इक्खुरससमं दाणं ॥ सेयांससमो भावो, हविज्ज जई मग्गिय हुज्जा ॥४॥ इयं गाथा स्पष्टार्था।

ननु त्रैलोक्यपूज्यस्यापि भगवतः कथमेतावान्—अन्तरायोऽजनिष्ट ? तत्रोच्यते—प्राक्कृतकर्मोदयाद्, तथाहि—कस्मिंश्चित् प्राग्भवे ऋषभस्वामिजीवेन पथि व्रजता धान्यखले धान्यं भक्षयतो बलीवर्दान् तोदनेन कर्षुकैस्ताडयमानान् विलोक्य चिन्तितमेते मूढाः वृषभमुखेषु शिक्यबन्धनं न जानते, तस्मिन् क्षणे स्वयं तत्र स्थित्वा स्वहस्तेन वृषभमुखेषु तद्बन्धनोपदेशश्चक्रे, तदानीं च बलीवर्दैः निःश्वासानां षष्ट्यधिकत्रिशती मुमुचे, तस्मिन् कर्मणि उदिते सति भगवानत्र भवे वर्षमेकं यावद् आहारविघ्नं लेभे, तस्मिन् कर्मणि क्षयोपशमं च प्रापिते श्रेयांसदत्तमाहारं लब्धवान, श्रेयांसश्च तद्दानफलेन मुक्तिसुखभाग् बभूव, तद्दिनादेव साधुभ्यः प्रासुकाहारदानविधिः सर्वैरपि लोकैरज्ञायि। ततश्च भगवान् ऋषभदेवो वर्षाणामेकसहस्रं यावत् छाद्मस्थ्येन विहृत्य तपस्तप्त्वा घातिकर्मचतुष्टयं क्षपयित्वा केवलज्ञानं प्राप्य वर्षसहस्रोनपूर्वलक्षं यावदार्यक्षेत्रेषु विहृत्य बहुभव्यान प्रतिबोध्य अष्टापदपर्वतोपरिदशसहस्रमुनिमहितेन मोक्षं जगाम. इति श्रुत्वा भो भव्याः ! रत्नत्रयात्मके मोक्षमार्गे बह्वादरेण यतध्वम् इति श्रेयः ॥

अक्षयादितृतीयाया, व्याख्यानं वीक्ष्य प्राक्तनम्। अलेखि सुगमं कृत्वा, क्षमाकल्याणपाठकैः ॥ १ ॥

॥ इति श्री अक्षयतृतीयाव्याख्यानं सम्पूर्णम् ॥ ८ ॥



एतच्च भगवतः पारणकं श्रेयांसगृहे वैशाखशुक्लतृतीयायामभूद् , तद्दानस्य अक्षयसुखजनकत्वेन तद्दिनस्याक्षयतृतीया, इति प्रसिद्धिर्बभूव, शेषाणामजितादित्रयोविंशतितीर्थंकराणाममृतरससदृशोपममृतरसतुल्यं परमान्नं घृतखण्डमिश्रितक्षैरेयीरूपं भोजनकं पारणके आसीद् इति प्रथमगाथार्थः । अथ पंचदिव्यानि एव आह—

घुट्टं च अहो दाणं, दिव्वाणि य आहयाणि तूराणि । देवा वि सन्निवइया, वसुहारा चेव वुट्ठा य ॥ २ ॥

गाथार्थः—यदा श्रेयांसगृहे भगवता पारणकं कृतं तदा देवैः, 'अहोदानमहोदानमिति'घुष्टम्—उद्घोषणा कृता, तथा देववृन्देन दिव्यानि तूर्याणि वादित्राणि आहतानि--वादितानि, आकाशे बधिरितदिक्चक्रा देवदुन्दुभयो नेदुरित्यर्थः, तथा देवाः—तिर्यग्जृम्भकादयोऽपि सन्निपतिताः—आगताः, तथा वसुधारा च वृष्टा—सार्धद्वादशकोटिमितसौवर्णिकादिवृष्टिरभूदित्यर्थः । उपलक्षणात् सुगन्धिजलवृष्टिः सुगन्धपुष्पवृष्टिश्चाभूदिति ज्ञेयम् , एतदेव स्पष्टयति—

भवणं धणेण भुवणं, जसेण भयवं रसेण पडिहत्थो । अप्पा निरुवमसुखं, सुपत्तदाणं महग्घवियम् ॥३॥ इति ।

गाथार्थः—दानावसरे भवनं—श्रेयांसगृहं धनेन—स्वर्णरत्नादिमयेन भृतमिति शेषः, भुवनं--स्वर्ग-मृत्यु-पाताल-लोकरूपं यशसा भृतम्—अहो ! श्रेयांसकुमारेण त्रिजगत्पतये केनाऽप्यदत्तपूर्वं दानं दत्तमिति त्रिलोकिव्यापिनी तस्य कीर्तिरभूदिति भावः, भगवान् ऋषभस्वामी इक्षुरसेन प्रतिहस्तः—लाभभागभूद् संयमलाभस्य इक्षुरसाहारपूर्वकत्वाद्; आत्मा—श्रेयांसजीवो निरुपमं सुखं प्राप्तवान्, अतः सुपात्रदानं महाप्रशस्यम् ।

कानर्थमूलकारणं परमाणुमात्रमपि परिग्रहं न वांछति; किं पुनः मणिस्वर्णकन्याश्वगजमौक्तिकादिकमिति सम्यग् विचार्य गवाक्षादुत्तीर्य यत्र श्रीऋषभदेवस्तत्र समागत्य हर्षभरेण पुलकितशरीरो भगवन्त त्रिःप्रदक्षिणीकृत्य वन्दयित्वा उवाच-हे भगवन् ! प्रसन्नो भव, अष्टादशकोटाकोटिसागरोपमानि यावद् विच्छिन्नस्य प्रासुकाहारदानविधेः सम्यक् प्रदर्शनेन भव्यजन्तून् निस्तारय, गृहाण च मद्गृहे प्राभृतार्थं समागतान् शतसंख्यान् इक्षुघटान् इति । अथ स्वामिनाऽपि चतुर्ज्ञानयुक्तेन द्रव्यक्षेत्रादिसामग्रीं सम्यग् ज्ञात्वा इक्षुरसग्रहणाय करद्वयं प्रसारितम्, तदा श्रेयांसो रत्नपात्रतुल्याय श्रीमद्भगवते त्रिकरणशुद्ध्या इक्षुरसरूपं निर्दुष्टमाहारं ददानो हर्षभरेण स्वचित्ते शरीरे च न ममौ*, आत्मानं धन्यं मन्यमानः त्रिजगत्पूज्येन भगवता आहारग्रहणेनानुगृहीतोऽहमिति चिन्तयन् यावत् स्वहस्तेन इक्षुरसभृतै-र्घटैर्भगवन्तं प्रीणयन् तिष्ठति, तावद् देवैर्हर्षभरेणाकाशे पंच दिव्यानि प्रकटीकृतानि, एतदेवाह श्रुतकेवली भगवान् भद्रबाहुः–'उसभस्स उ पारणए' इत्यादि, गाथा पूर्वं दर्शिता । अथ गाथार्थः—ऋषभस्य लोकनाथस्य प्रथमतीर्थंकरस्य प्रथमपारणके इक्षुरस आसीद्,

*आनंदाश्रुणि रोमांचो, बहुमानं प्रियंवचः । किंचानुमोदना पात्र–दानभूषणपंचकम् ।। १ ।।
अनादरो विलंबश्च वैमुख्यमप्रियंवच । पश्चात्तापश्च सदाने, स्मृतं दूषणपंचकम् ।। २ ।।
दानं ख्यातिकरं सदा हितकरं, संसारसौख्यंकरं । नृणां प्रीतिकरं गुणाकरकरं, लक्ष्मीकरं किंकरं ।
स्वर्गावासकरं गतिक्षयकरं, निर्वाणसंपत्करं । वर्णायुर्बलबुद्धिवर्धनकरं, दानं प्रदेयं बुधैः ।। ३ ।।

इहादौ श्रीऋषभस्वामिसम्बन्ध उच्यते, श्रीऋषभस्वामी सर्वार्थसिद्धविमानात् च्युत्वा आषाढकृष्णचतुर्थ्यां श्रीमरुदेवाकुक्षावुत्पन्नः, नवमासान् चतुर्दिनाधिकान् गर्भे स्थित्वा चैत्रकृष्णाष्टम्यामर्धरात्रे जन्म संप्राप्तः, विंशतिपूर्वलक्षाणि कुमारपदं भुक्त्वा त्रिषष्टिपूर्ववर्षं राज्यं प्रपाल्य चैत्रकृष्णाष्टम्यां दीक्षां जग्राह. तदा हस्तिनागपुरे श्रीबाहुबलिपुत्रस्य श्रीसोमयशोनृपस्य पुत्रः श्रेयांस आसीद् । अथ भगवान् प्राक्तनकर्मोदयाद् वर्षं यावद् आहारालाभाद् निराहारो विहरन् हस्तिनागपुरे समाययौ, तस्यां रात्रौ श्रेयांसादिभिः त्रिभिस्त्रयः स्वप्ना लब्धाः, तथाहि—श्यामीभूतं मेरुममृतघटैः प्रक्षाल्याहमुज्ज्वलकार्षमिति श्रेयांसो लब्धवान् १, तथा सूर्यबिम्बात् च्युतं किरणसहस्रं श्रेयांसेन सूर्यबिम्बे स्थापितमिति स्वप्नं सुबुद्धिनामा श्रेष्ठी लब्धवान् २, तथा एकः शुगे बहुभिर्वैरिभिः रुद्धः, श्रेयांससाहाय्याद् जयं प्राप्तवान्, इति स्वप्नं च सोमयशाः राजा लब्धवान् ३, प्रातः सभायां सर्वेऽपि मिलिताः स्वं स्वं स्वप्नमुक्तवन्तश्च, ततः स्वप्नविचारं कृत्वा नृपादिभिः सर्वैरपि उक्तम्—अद्य श्रेयांसस्य कश्चिदपूर्वो महान् लाभो भविष्यतीति । तदा भगवान् भिक्षार्थं इतस्ततो भ्रमन् श्रेयांसगृहसमीपमाययौ, श्रेयांसः स्वामिनं दृष्ट्वा हर्षं प्राप्तः, लोकास्तु पूर्वं साधुमुद्रायाः अदर्शनेन अन्नदानविधेरज्ञानाद् भगवन्तं मणिस्वर्णगजाश्वादिभिर्निमन्त्रयामासुः, भगवांस्तु तैर्दीयमानं वस्तु किमपि न गृह्णातिस्म, तदा भगवानस्माकमुपरि अतीव रुष्टोऽस्ति, येनास्माकं किमपि वस्तु न गृह्णाति इति ते लोकाः कोलाहलं चक्रुः । एवमेकः संवत्सरो व्यतिक्रान्तः, तस्मिन्नवसरे श्रेयांसो भगवन्मुद्रां विलोक्य 'अहो दृष्टं मया ईदृक्रूपं कदाचिद्' इति ऊहापोहं कुर्वाणो जातिस्मरणं ज्ञानं प्राप्य भगवता सह स्वस्याष्टभवसंबन्धं च ज्ञात्वा प्राक् स्वयमनुभूतं साधुभावं स्मृत्वा चिन्तयतिस्म—अहो ! अज्ञानविजृम्भितमेतद् संसारिजीवानां, येनैते एव कुर्वन्ति—यतः त्रैलोक्यराज्यं तृणाय मन्यमानो भगवान् विषयतृष्णां त्यक्त्वा सांसारिकसुखं च किंपाकफलतुल्यं गणयन् साधुत्वमंगीकृत्य मोक्षसुखार्थं यतमानोऽने-

चले बालिनामा महामुनिर्मोक्षं प्राप्तः । श्रीकृष्णपुत्रौ शाम्ब-प्रद्युम्ननामानौ मुनी सिद्धिं गतौ । दशरथपुत्रो भरतोऽपि तत्रैव शिवं प्राप्तः । शुकनामा मुनिः, शैलकाचार्य-पन्थको च मुक्तिं प्राप्तौ । राम-भरत-द्राविडनरपतिनारदाद्या मुनयोऽप्यत्रैव मुक्तिं प्राप्ताः, पाण्डवप्रमुखाः सत्पुरुषा अपि श्रीसिद्धाचले मुक्तिं प्रापुः । चैत्रीपूर्णिमादिने उपवासं कृत्वा श्रीसिद्धाचलतीर्थे गत्वा पूजाध्यानदानादीन् ये प्राणिनः कुर्वन्ति ते नरकतिर्यग्गतिविच्छेदं कुर्वन्ति, इत्यादि पर्वाराधनस्वरूपं प्रोक्तम् । तद्दिने श्रीगुरुपार्श्वाद् मन्त्राक्षरपूतं स्नात्रजलं गृहीत्वा गृहादौ सेचनीयम्, तेन मरकोपद्रवादि भयं याति, सदाऽऽनन्दश्च भवति, ऋद्धिं वृद्धिं सुखं च जनः प्राप्नोति । अस्मिन् पर्वणि समागते केचिद् दानं ददति, केऽपि शीलं पालयन्ति, केचिद् भावं भावयन्ति, वक्तॄणां श्रोतॄणां च सदाश्रेयो भवतु ।

नन्दे-रसे-सिद्धिचन्द्रे ( १८६९, ) प्रमिते वत्सरे वरे । इयं व्याख्या गुणग्राह्या, चैत्रशुक्लाष्टमीतिथौ ॥ १ ॥

दुर्गे जेसलमेरौ च, कृतावासेन धीमता । गणिनाऽमरचन्द्रेण, वाचकेन सुसाधुना ॥ २ ॥

तच्छिष्यजीवराजेन, कृता व्याख्या मनोरमा । चैत्रशुक्लपूर्णिमायाः, कीर्तिरत्नसहायतः ॥ ३ ॥

इति चैत्रशुक्लपूर्णिमाव्याख्यानं समाप्तम् ॥ ७ ॥

---

## अथ अक्षयतृतीयाव्याख्यानम् ॥ ८ ॥

प्रणिपत्य प्रभुं पार्श्वं, श्रीचिन्तामणिसंज्ञकम् । अक्षयादितृतीयाया, व्याख्यानं लिख्यते मया ॥ १ ॥

उसभस्सयपारणए, इक्खुरसो आसि लोगनाहस्स । सेसाणं परमन्नं, अमियरससरिसोवमं आसी ॥ २ ॥

शुद्धभावेनोपवासं कृत्वा श्रीजिनालये स्नात्रपूजामहोत्सवादि करणीयम्, सर्वजिनानां पूजा विधेया, सद्गुरुमुखाच्च तस्मिन् दिने चैत्री व्याख्यानश्रवणं कार्यं, दीनहीनजनेभ्यो दानं देयं; शीलं च पालनीयं; जीवरक्षा विधेया, विधिपूर्वकं विमलगिरिपट्टं उच्चैः स्थापयित्वा मुक्ताफलैस्तन्दुलादिभिश्च महतीं पूजां विधाय गुरुसमक्षं पंचशक्रस्तवादिभिर्देवान् वन्दित्वा शुभध्यानेन दिनरात्रीकृत्यं विधाय पारणवेलायां मुनिभ्यो दानं दत्त्वा पारणकं विधेयम्, पंचदशवर्षाणि यावदेवं प्रतिवर्षं व्रतमाराधनीयम्, पश्चादुद्यापनं यथाशक्ति समाचरणीयम्, तेन निर्धनो धनी भवेद्, पुत्र–कलत्र–सौभाग्य–कीर्त्ति–देवसुखं शिवपदप्राप्तिश्च भवेत्, तथा स्त्रीणां पतिवियोगो न भवति, रोग-शोक–वैधव्य–दौर्भाग्य–मृतवत्सात्व पारवश्यादि सर्वं कर्मफलं नश्यति। अस्या आराधने स्त्री पतिवल्लभा भवति, विषकन्या भूत–प्रेत–शाकिन्यादिग्रहादिकष्टं विलयं याति, बहुनां किं भावेनाऽऽराधिता चैत्रीपूर्णिमा मुक्तिं ददाति, इति गणधरमुखात् श्रुत्वा सा बाला हर्षं प्राप, उक्तवती चाहं एतद् व्रतं करिष्यामि। तदा जनन्या सह सा बाला गुरुं नत्वा गृहे गत्वाऽवसरे चैत्रीपूर्णिमाऽऽराधनं कृतवती, तदा सा सुखिता जाता, विषयविकारस्यापि शान्तिः संजाता, परमपदे मनोऽभूद्, प्रति वर्षं व्रतं कुर्वत्या पूर्णे व्रते शुभभावेनोद्यापनं कृतम्, पुण्डरीकगणधरध्यानेन श्रीसिद्धाचलयात्राकरणेन श्रीऋषभदेवस्य जापेन प्रान्तेऽनशनं विधाय कालं कृत्वा सौधर्मदेवलोके देवत्वेनोत्पन्नाः, तत्र देवसंबन्धिनो भोगान् भुक्त्वा महाविदेहे क्षेत्रे सुकच्छविजये वसन्तपुरे नरचन्द्रस्य राज्ञो राज्ये ताराचन्द्र–श्रेष्ठिनो गृहे तारानाम्न्या भार्यायाः कुक्षौ पुत्रत्वेन स जीव उत्पन्नः, नाम्ना पूर्णचन्द्रो, द्वासप्ततिकलाकुशलो जातः, पंचदशकोटिद्रव्यं, पंचदश भार्याः, पंचदश पुत्रा, इत्यादि सर्वं सुखं प्राप्तवान्, तद्भवे पुनः स चैत्रशुक्लपूर्णिमाऽऽराधनं कृत्वा, प्रान्ते श्रीजयसमुद्रगुरुपार्श्वे दीक्षां गृहीत्वा, तत्र च शुभध्यानेन केवलज्ञानं प्राप्य मुक्तिं गतः। एवं चैत्र्याराधने बहवो जनाः परमानन्दं प्राप्ताः, पुनरपि विमला-

भर्तुः समीपे समागता, तदा भर्त्रा प्रोक्तम्-अद्य वारकं तव नास्ति कथं त्वया मर्यादा लंघिता ?, सा कामविह्वला भर्तारं प्रत्युवाच-केयं मर्यादा ?, तदा भर्त्रा प्रोक्तम्-कुलोद्भवानां मर्यादोल्लंघनं न युक्तं; समुद्रोऽपि मर्यादां न मुंचति; सत्पुरुषः स्वमर्यादया न चलति। ततः सा संतोषरहिता कलुषवदना मित्रश्रियं प्रति द्वेषमुद्वहन्ती स्वगृहे समागता, सपत्न्या सह पतिसंबन्धवियोगमिच्छन्ती कनकश्रीः (चन्द्रश्रीः) विषयप्रमादव्याकुला सती मन्त्रतन्त्रयन्त्रोपायकार्मणादिसामग्रीं विधाय तस्याः शरीरे भूत-प्रेत-शाकिनी-डाकिनीप्रवेशं कारितवती, साऽपि कर्मयोगात् पारवश्यं प्राप्ता। अथ कनकश्रीः सपत्नीशरीरं कुचेष्टितं ज्ञात्वा जहर्ष, पुनः स्ववशीकरणबलेन भर्तारं स्ववशी चक्रे, भर्ताऽपि लघुपत्नीं दृष्ट्वा पूर्वकर्मफलं विचिन्त्य तत्याज। कनकश्रीर्हर्षिता, धनावहश्रेष्ठी कनकश्रिया सह विषयसुखं भुंजानः सन् कालं निनाय। कियति काले गते सति सा कनकश्रीर्मृता त्वत्पुत्री जाता, सपत्नीपतिवियोगकरणेन विषकन्या कर्मविपाकं पतिविरह-पीडापीडितं भोगसुखरहितं कर्मोपार्जितं, तेन कारणेन तव पुत्री महादुःखेन दुःखिताऽस्ति, कर्मणां विचित्रा गतिरस्ति। तदा तज्जननी प्राह-हे गुरो ! इयं पतिविरहेण पीडिता वृक्षशाखायां पाशं बद्ध्वा मरणाय समुद्यता, तावन् मया एतत्स्वरूपं दृष्ट्वा पाशं छित्त्वा भवत्समीपे समानीता भवद्भिर्दीक्षा प्रदीयताम्, तदा गणधरः प्राह-हे भद्रे ! एषा तव पुत्री दीक्षायोग्या नास्ति, नितरां चंचलस्वभावा बाला वर्तते, इति गुरुवचनं श्रुत्वा तन्माता प्राह-अस्या योग्यं धर्मकृत्यं कथ्यतां येन दुष्टकर्मविपाको दूरीभवेद्। गुरुरपि ज्ञानबलेन तस्या योग्यं व्रतं कथयतिस्म-हे भद्रे ! चैत्रशुक्लपूर्णिमाऽऽराधनं कुरु, तस्या आराधनेऽस्याः पूर्वकर्मविनाशो भविष्यति, इति श्रुत्वा तस्याः कन्याया अपि गुरुज्ञानयोगाद् रुचिः समुत्पन्ना, तदा सा सावधानीभूय गुरुवाणीमश्रृणोद्, तदा गणधरेणोक्तम्-श्रीसिद्धाचलतीर्थं शाश्वतमस्ति, तत्रानन्तानन्तकालेनानन्ता जीवाः सिद्धाः, सकलतीर्थेषु मुख्यम्, तस्य चैकविंशतिर्नामानि सन्ति, तैर्ध्यानं विधेयम्, चैत्रीपूर्णिमादिने

उत्तरश्रेण्यां च गगनवल्लभप्रमुखाणि षष्ठिर्नगराणि वासयित्वा प्रदत्तानि; तत्र विद्याबलेन लोकान् वासयित्वा यावन्ति नगराणि तावंतो देशान् संस्थाप्य तौ पृथक् पृथग् नमिविनमी तत्र राज्यं पालयामासतुः। तौ चिरकालं राज्यसुखमनुभूय प्रान्ते सर्वसंगं परित्यज्य दीक्षां गृहीत्वा श्रीविमलाचले समागत्य श्रीदेवाधिदेवं युगादिदेवं भावेनाऽभिनम्य तत्रैव तीर्थे मुक्तिं प्रापतुः, इति नमिविनमिसम्बन्धः।

अथ श्रीऋषभदेवस्य प्रथमगणधरः पुण्डरीकनामाऽत्रैव मुक्तिं प्राप्तस्तत्सम्बन्धश्चायम्।

श्रीआदिनाथपुत्रो भरतः, तस्य पुत्रः पुण्डरीकः, श्रीप्रभोः पार्श्वे धर्मं श्रुत्वा प्रतिबुद्धः सन् दीक्षां गृहीत्वा प्रथमगणधरो जातः, पञ्चकोटिसाधुपरिवृतः गणधरो ग्रामानुग्रामं विहरन् सौराष्ट्रदेशे समागतः तदागमनं श्रुत्वाऽनेकभूपमण्डलीकसामन्तश्रेष्ठि-नरनारीगणा वन्दनार्थमाययुः, गुरुरपि यथायोग्यं धर्मदेशनां ददाति स्म। तस्मिन्नवसरे एका सबाष्पजला सशोका चिन्तासागरसंप्रविष्टा दीना महिला समागता, तया सार्ध विधवा दौर्भाग्ययुक्ता एका कन्याऽपि समागता। श्रीपुण्डरीकगणधरं नमस्कृत्यावसरं प्राप्य कन्यया सह सा स्त्री इति पप्रच्छ-हे भगवन्! अनया कन्यया पूर्वभवे किं पापं कृतं, येन विवाहसमये करमोचनवेलायामेवास्याः पतिर्मरणं प्राप्तः? इति प्रश्ने कृते सति गणधरः प्राह-हे भद्रे! अशुभकर्मणोऽशुभमेव फलम्, तथाहि-जम्बूद्वीपे पूर्वमहाविदेहे मनोरमं विश्वविख्यातं कैलासपर्वताकारतुंगप्राकारवेष्टितं नानादेशोद्भवजनाकुलं विशालशालगृहैर्मण्डितं चन्द्रकान्तनामकं नगरं बभूव। तत्र श्रियो धाम सकलकलागुणगणग्रामो जगति प्रसिद्धः समरसिंहो नाम महीपतिरभूत्। तस्य शीलालंकारधारिणी धारिणीनाम्नी वल्लभा बभूव। तत्र नगरे महाधनाढ्यः परमश्राद्धो जिनभक्तिरतोऽनेकगुणसागरो धनावहनामा श्रेष्ठी बभूव। तस्य कर्मयोगाद् द्वे भार्ये बभूवतुः, एका कनकश्रीः द्वितीया मित्रश्रीस्ताभ्यां भार्याभ्यां सह स श्रेष्ठी सुखेन कालं गमयतिस्म। अथैकदा मदनपरवशात् कनकश्रीर्मित्रश्रियो वारकं समुल्लंघ्य

## अथ चैत्रीपूर्णिमाव्याख्यानम् ॥ ७ ॥

तीर्थराजं नमस्कृत्य, श्रीसिद्धाचलसंज्ञकम् । चैत्रशुक्लपूर्णिमाया, व्याख्यानं क्रियते मया ॥ १ ॥

सिज्झो विज्झायर चक्की, नमिविनमिमुणी, पुण्डरीओ मुणिन्दो । बालीपज्जुम्नसंबो, भरहसुगमुणी, सेलगो पंथगो य ॥ रामो कोडीपंच, दविडनरवई, नारओ पण्डुपुत्ता ॥ मुत्ता एवं अणेगे, विमलगिरिमहं, तित्थमेयं नमामि ॥ १ ॥

व्याख्या—अहमेतत् तीर्थं नमामि यत्रानेक प्राणिनः सिद्धा बभूवुः, ते के ? तानाह—यत्र विमलाचले विद्याधरादिचक्रवर्तिनः सिद्धाः—मुक्तिं प्राप्ताः, पुनर्युगादिदेवस्य पौत्रकपुत्रौ नमिविनमिनामानौ मुक्तिं गतौ, तत्सम्बन्धोऽयम्-अयोध्यायां नगर्यां भगवान् ऋषभदेवः स्वज्येष्ठपुत्राय भरताय राज्यं दत्त्वाऽन्येषामपि यथायोग्यं देशं विभज्य स्वयं दीक्षां गृहीतवान्, तदा नमिविनमिनामानौ कस्मैचित् कार्याय कुत्रचित् प्रदेशे गतावभूताम्, भगवता तु राज्यविभागावसरे तौ विस्मृतौ, दीक्षाग्रहणानन्तरमयोध्यायां समागतौ भरतं पप्रच्छतुः—ऋषभदेवोऽस्माकं पिता क्वास्ति ?, भरतेनोक्तं—स्वामिना दीक्षा गृहीता, युवाभ्यां मम सेवा कर्तव्या, अहं युवाभ्यां देशग्रामं दास्यामि, तदा तौ भरतमपमान्य राज्यार्थं स्वामिसमीपे आगत्य विहारं कुर्वतो भगवतोऽग्रे कण्टकादिकं मार्गाद् निवारयन्तौ कायोत्सर्गे स्थितस्य भगवतो दंशमशकादीन् उड्डापयन्तौ प्रातर्वन्दनापूर्वकं 'स्वामिन् ! राज्यप्रदो भव' इत्युक्तवन्तौ नित्यं तिष्ठतः स्म । एकदा वन्दनार्थमागतेन धरणेन्द्रेण तयोरुपरि महतीं कृपां विधाय भगवद्रूपं कृत्वा ताभ्यामष्टचत्वारिंशत्सहस्रपठितसिद्धविद्याः प्रदत्ताः, षोडशविद्यादेव्याः समाराधनं च दत्तम्, वैताढ्यपर्वते दक्षिणश्रेण्यां रथनूपुरचक्रवालप्रमुखाणि पञ्चाशन्नगराणि,

स्य दश उपवासाः प्रायश्चित्तम् , एककलशप्रमाणजलप्रक्षेपणे शतमुपवासानां प्रायश्चित्तम् , मूत्रप्रक्षेपणे पंचाशदुपवासाः, छगणप्रक्षेपणे पंचविंशतिरुपवासाः, एकगालिप्रदाने पंचदशोपवासाः, गीतगानेऽसभ्यगाने सार्धशतमुपवासाः, तत्संबन्धिवादित्रताडने सप्ततिरुपवासाः, एककरीषप्रक्षेपणे विंशतिरुपवासाः, छगणहारप्रक्षेपणे जन्मान्तरे शतं वाराः स्वस्य भस्मीभवनं भवति, श्रीफलप्रक्षेपणे सहस्रशो भस्मीभवनं भवति, एकपूगीफलप्रक्षेपे पंचाशद् वाराः, धूलिप्रक्षेपे पंचविंशतिर्वाराः, होलिकागर्तखनने शतं वाराः, होलिकायां काष्ठप्रक्षेपे सहस्रशो भस्मीभवनं भवति । होलिकादाहकरणे सहस्रशश्चाण्डालकुलोत्पत्तिः, होलिकाव्रतकारकस्य सहस्रशो म्लेच्छकुले उत्पत्तिर्भवति, एवं पापं विज्ञाय श्रेयोऽर्थिभिरात्महितेच्छुभिः द्रव्यहोलिकां त्यक्त्वा भावहोलिकां एवं आराध्यते, तेनैवात्र जगति इष्टार्थः प्राप्यते, इति ।

संवद्बाणकृशानुसिद्धिवसुधा, (१८३५) संख्ये नभस्येऽसिते ॥ पक्षे पावनपञ्चमीसुदिवसे पाटोधिसंज्ञे पुरे ।
श्रीमच्छ्रीजिनलाभसूरिगणभृत्तुल्यप्रतापोद्धुरे ॥ कान्ते श्रीजिनचन्द्रसूरिमुनिपे धर्मेशतां बिभ्रति ॥ १ ॥
श्रीमन्तो गुणशालिनः समभवन्, प्रीत्यादिमाः सागरा–स्तच्छिष्याऽमृतधर्मवाचकवराः, सन्ति स्वधर्मादराः ॥
तत्पादाम्बुजरेणुराप्तवचनस्मर्ता विपश्चित्क्षमा–कल्याणः कृतवानिदं सुविशदं व्याख्यानमाख्यानभृद् ॥ २ ॥

इति होलिकाव्याख्यानं समाप्तम् ॥ ६ ॥

सह पौषधप्रतिक्रमणसामायिकादिधर्मकृत्यं करोतिस्म, यथाशक्ति व्रतनियमपालनमपि करोति । अथ तस्या गृहसमीपे मिथ्यात्वि-
लोका वसन्ति, तेषां मिथ्यात्विनां पुत्रीभिः सह सा तिष्ठति, उत्तिष्ठति, भ्रमति, ब्राह्मणाः कथां यत्र वाचयन्ति तत्र गत्वा कदापि कथां
अपि श्रृणोतिस्म । यद्यपि सा जैनं धर्मं पालयति, तथापि संगतिवशाद् मिथ्यात्वस्याप्यादरं कृतवती, यथा—ज्येष्ठ-श्रावणमासयोः
गणगोरपूजनात् सुन्दरवरप्राप्तिः धनधान्यप्राप्तिः एतादृश्यो वार्तास्तस्यै रोचन्ते । अथैकदा कुमारी मनसि व्यचिन्तयत्-यद् जैनधर्मे
वीतरागो देवोऽस्ति, स च न कमपि सुन्दरमसुन्दरं करोति; सांख्यादिदर्शने तु ब्रह्मा जगतः कर्ताऽस्ति, विष्णुः रक्षणं करोति, शिवः
संहारं करोति, ततो यदि ईश्वर—पार्वत्योः पूजा विधीयते तौ च तुष्टौ स्यातां तदा मनोवाञ्छितसांसारिकसुखस्य लाभो भवेत् । एवं
विचार्य गणगोरप्रभृतिमिथ्यात्विपर्वसु आदरवती अभूत् । अथ तस्या मातापितरौ बहुनिषेधं कृतवन्तौ-यत् त्वं हे पुत्रि ! मिथ्यात्वि-
पर्वण आराधनां मा कुरू, चिन्तामणिसमानं जैनं धर्मं प्रक्षीय काचशकलतुल्यमन्यं धर्मं मा गृहाण, अमृतस्वादं त्यक्त्वा विषस्वादं मा
स्वीकुरु, विषपानेन दुःखिता भविष्यसि; इत्यादि बहु कथितं परन्तु मिथ्यात्विपरिचयवशाद् तया किंचिदपि न मेने, मिथ्यात्विप-
र्वाराधनां कर्तुं लग्ना, यथा यथा मिथ्यात्विजनाः प्रशंसन्ति तथा तथा साऽऽनन्दं दधार । अथ मातापितृभ्यां सा परिणायिता, अल्प-
कालेनैव मृत्वा मनोरथश्रेष्ठिनः पुत्री संजाता, कथावाचकव्यासस्य पुत्री यया सह बाल्यावस्थात एव होलिकादिमिथ्यात्विनां व्रत-
मकरोद्; सा मृत्वा ढुण्ढा संजाता, कथावाचकश्च कामपालः संजातः, पूर्वत्र संबन्धाद् ढुण्ढा कामपालस्य होलिकया सह समागमं कृत-
वती । इत्थं वृथैव संभूतं होलिका पर्वं विज्ञाय सुधीभिः भव्यात्मभिः शुभार्थं तन्न कर्तव्यम्, किन्तु तस्मिन् दिने प्रतिक्रमण-व्रत-
जिनपूजादिधर्मकार्यं विधेयम्, होलिकासंबन्धि किमपि कार्यं न विधेयम् । यो हि होलिकाज्वालायां गुलालस्यैकां मुष्टिं प्रक्षिपति

गृहात्, ततः कुमारेण सा तत्राऽऽनीता, तां दृष्ट्वाऽसौ मम पुत्रीति श्रेष्ठिनोक्तम्, तदा कामपाल उवाच—हे सरलश्रेष्ठिन्! त्वं निजपुत्रीं वह्निदग्धां किं न जानासि ?, पूर्वं सूर्यदेवगृहे त्वत्पुत्र्यां मम भार्याभ्रमोऽभूद्; अधुना मद्भार्यायां तव निजपुत्रीभ्रमो जातः, द्वयोः रूपस्य परस्परसादृश्याद् अपरं कारणं नास्ति. तत एवं श्रुत्वा हर्षितः श्रेष्ठी तं जजल्प—इतः प्रभृति त्वद्भार्या मम पुत्रीस्थाने भवतु, इयमेव हि मत्पुत्रीति तद्दिनादारभ्य श्रेष्ठी प्रीत्या तस्यै वस्त्रालंकारभोजनादिकं सर्वमपि पूरयामास। अथ सा ढुण्ढा परिव्राजिका मृता पिशाची बभूव, पूर्वभवं स्मृत्वा तया ज्ञातम्-दुष्टा एतन्नगरवासिनो लोकाः, ये मह्यं भिक्षामपि न ददुः, ततः सा कोपचित्ता लोकचूरणाय तन्नगरोपरि महतीं शिलां चक्रे, पुनः प्रबलभाग्ययुक्तां होलिकां प्रतिहन्तुं न समर्था बभूव, ततो भीताः पौरलोकाः बलिं चक्रुः, तदा पिशाची कस्यचिच्छरीरेऽवतीर्य उवाच-भो लोकाः! पूर्वं कुलद्वयवत्सलाहं भण्डान् भरडांश्च त्यक्त्वाऽन्यान् सर्वलोकान् हनिष्यामि, ततो लोका मरणाद् भीताः सन्तोऽन्यं जीवितोपायमलभमानाः स्वयमपि भण्डभावमाश्रित्य स्वजीवितकृते मुक्तसज्जनमर्यादा असत्यवचनभाषिणो दुष्टवादित्रवादिनः, एवं भण्डा जाताः, पुनर्भस्मधूलिकर्दमादिभिर्मलिनदेहा भरडाप्राया बभूवुः। ततः प्रतिवर्षं होलिकादिनाद् द्वितीयदिने धूलिहरिकापर्व प्रवृत्तं, ततः सा प्रसन्नीभूय स्वस्थानं गता।

## अथ होलिकापूर्वभवः कथ्यते।

पाटलीपुरनगरे ऋषभदत्तनामा श्रेष्ठी निवासमकरोद्, तस्य चन्द्राननानाम्नी पत्नी। अथ तयोर्द्वयोः पुत्रयोरुपरि देवीनाम्नी पुत्री जाता, सा च रूपलावण्यादिगुणैरतीव शोभिताऽऽसीद्। सा च अष्टवर्षीया जाता ततः पितृभ्यां पाठिता, ततः सा कन्या स्वमात्रा

जिकया सा होलिका पृष्टा-हे पुत्रि ! कथय ते मनोगत चिन्ताम् ? तदा कथितस्तया तदग्रे स्वाभिप्रायः, ततः परिव्राजिकया प्रोक्तम्-हे पुत्रि ! रविदिने पूजामिषात् सूर्यदेवगृहे त्वमागच्छेः, तत्राहं तव कुमारसंगं कारयिष्यामि, यतो जन्ययात्राजागरिकोत्सवेषु दुर्लभस्यापि जनस्य संगमः स्यात्, यथेप्सितव्यभिचारसिद्धिर्भवेद्, इति लोकोक्तिरस्ति। ततो रविदिने होलिका तत्र गता, कुमारोऽपि तपस्विन्याः संकेतितस्तत्रायातः ततः सा विधिना सूर्यमूर्तिं प्रपूज्य यावत् प्रतिचचाल तावत् कुमारस्तामालिलिंग, तदा तया कुमारपृष्टे हस्तप्रहारं दत्त्वा पूत्कारः कृतः, अहं परपुरुषस्पर्शसंजातपातकस्य शुध्यर्थमग्निप्रवेशं करोमि, तदा तां मरणाभिमुखीं गूढदम्भां पुत्रीं वीक्ष्य बलाज्जनको गृहमानीतवान्, ततः फाल्गुनपूर्णिमारात्रौ तपस्विनी पुनः तयोः संगमं कारयामास; स्वयं च तत्समीपे गृहे सुप्ता, सिद्धकार्यत्वाद् गाढनिद्रां प्राप्ता।

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णो न भिद्यते। द्विकर्णस्य च मन्त्रस्य ब्रह्माऽप्यन्तं न गच्छति ॥ १ ॥

इति वाक्यं विचार्य होलिका निजगृहे सुप्तां तापसीं गृहं च दग्ध्वा शीघ्रं कुमारसहिता तत्स्थानान्नष्टाऽन्यत्र स्थिता। प्रभाते पुत्रीं दग्धां ज्ञात्वा श्रेष्ठी बहु विललाप, तदा लोकास्तां सतीं ज्ञात्वा तदीयभस्म प्रणमंतिस्म, तत्प्रभृति सर्वत्र प्रतिवर्षं तद्दिने होलिकापर्व प्रवृत्तं, तदधुनाऽपि परमार्थशून्या लोकाः कुर्वन्ति। अथ कतिषु दिनेषु गतेषु स कुमारो होलिकां प्रोचे-अधुना धनं नास्ति तेन धनार्जनाय विदेशं व्रजामि, ततस्तयोक्तम्-स्वामिन् ! मदुक्तमुपायं कुरु यतो धनप्राप्तिः स्याद्, त्वं हि मत्पितृहट्टे याहि, तस्मान्मूल्येन शाटिकामानय, ततस्तेन तत्र गत्वा तथैव सानीता, भार्यया प्रोक्त न एषा मम योग्या, अन्यामानय, ततः पुनस्तेन तत्र गत्वा सा पश्चाद् दत्ता अपराऽऽनीता, साप्ययोग्या उक्ता पश्चाद् दत्ता, तदा श्रेष्ठिना उक्तम्—तव पत्नी स्वयमागत्य सम्यक् परीक्ष्य विशिष्टशाटिकां

# अथ होलिकाव्याख्यानम् ॥ ६ ॥

होलिका फाल्गुने मासे, द्विविधा द्रव्य–भावतः । तत्राद्या धर्महीनानां द्वितीया धर्मिणां मता ॥ १ ॥

लोके हि इदं पर्व होलिकेति वदन्ति, होलिका तु द्विविधा द्रव्यतो भावतश्च, तत्र येऽज्ञानिनः सदसद्विवेकविकलाः प्राकृतलोकप्रवाहरक्ताः श्रीजिनधर्मविमुखा गतानुगतिकाः लोकास्ते काष्ठच्छगणादिना वह्निमयीं द्रव्यहोलिकां कुर्वन्ति, धर्मपर्वं विराधयन्ति, अपरदिने च धूलिक्रीडनाऽवाच्यजल्पन–मलमूत्रजलाच्छोटन–स्त्र्यादिवस्त्राकर्षण–रासभारोपितनरपीडनादिकं कुर्वन्ति । सर्वमपीदमनर्थदण्डं विज्ञाय धार्मिकैः परिहर्तव्यम् । ये पुनः धर्मिणस्ते तपोरूपजाज्वल्यवह्निना कर्मदलच्छगणभस्मीकरणरूपां भावहोलिकां कुर्वन्ति सद्ध्यानरूपिजलखेलनादिकं च कुर्वन्ति । ननु कुत इदं लौकिकं रजः पर्वं प्रवृत्तमिति ? प्रश्नमाशंक्य सम्प्रदायगम्यं तत्कथानकमुच्यते–पूर्वदेशे जेतपुरं नाम नगरमस्ति, तत्र च जयवर्मा राजा, मदनसेना च तत्पट्टराज्ञी, अमात्यो मतिचन्द्रनामा । तत्रैव मनोरथनामा श्रेष्ठी, तस्य चत्वारः पुत्राः, तेषामुपरि अतीव रूपवती होलिकानाम्नी पुत्री, सा च पित्रा महोत्सवेन विवाहिता, परं कर्मवशाद् विधवा जाता, सा सदा पितृगृहे तिष्ठति, अन्यदा गवाक्षस्थिता सा वंगदेशस्वामित्रिभुवनपालभूपस्य पुत्रं कामपालनामानं विलोक्य कामाकुला जाता, सोऽपि तां दृष्ट्वा ऽत्यर्थं कामव्याप्तः संजातः, तदा श्रेष्ठी तां पुत्रीं गुप्तपीडापीडितां दृष्ट्वा विषादं प्राप्तः, इतश्च तत्र पुरे एका परिव्राजिका वसतिस्म, सा च द्विजकुलोत्पन्न–चंडरुद्रभाण्डस्य पुत्री, अचलभूतिनाम भरडकस्य पत्नी 'ढुंढा' इति नाम्ना विख्याता, कूटकपटकारिणी लोकानां भूतकर्मादिकं करोतिस्म, तथा सा क्षुधातुरा कृशांगी भिक्षार्थं दिने दिने गृहं गृहं प्रतिभ्रमतिस्म, पर लाभान्तरायवशात् क्वापि भिक्षां न लभते, ततः सा लोकेभ्यः कोपं चकार । अथ मनोरथश्रेष्ठिना सा सत्कृत्य याचिता, हे मातर्मम सुतां पटूवीं कुरु, ततो रहसि परिव्रा–

बभूव । ततः क्रमेण कर्माणि क्षपयन् द्वादशगुणस्थानान्त्यसमये घातिकर्मचतुष्टयं शुक्लध्यानेन क्षपयित्वा त्रयोदशगुणस्थानप्रथमसमये केवलज्ञानं प्राप्य बहून् भव्यान् प्रतिबोधयन् पृथिव्यां विजहार । ततः द्विसप्ततिपूर्वलक्षाणि सर्वायुः प्रपाल्य चतुर्दशे गुणस्थाने पंचह्रस्वाक्षरोच्चारणकालमाने योगनिरोधं कृत्वा शेषकर्मचतुष्टयं क्षपयित्वा मुक्तिं प्राप्तः । इह शरीरं त्यक्त्वा पूर्वप्रयोगबन्धनच्छेदादिना सिद्धशिलोपरि योजनान्ते सिद्धक्षेत्रे एकस्मिन् समये गत्वा साद्यनन्तस्थित्या स्थितवान् । इत्थं पिंगलरायतो मेरुत्रयोदश्या महिमा प्रवृत्तः । पूर्वं रत्नमया मेरवो ढौकिताः, पश्चात् कियत्कालं यावत् स्वर्णमयाः, ततः पश्चाद् रूप्यमयाः, अस्मिन् काले घृतमया मेरवः प्रवृत्ताः सन्ति, इत्थं मेरुत्रयोदश्याः महिमानं श्रुत्वा भो भव्याः ! शुद्धभावेन विधिना एतद् व्रतं कर्तव्यम्, येन इह परत्र च सर्वप्रकारसुखसंपत्तिः प्रादुर्भवेदिति ॥

सम्वद्व्योमरसाष्टेन्दु ( १८६० ) मिते फाल्गुनमासके ॥ असितैकादशीतिथ्यां बीकानेराख्यसत्पुरे ॥ १ ॥
व्याख्यानं प्राक्तनं वीक्ष्य निबद्धं लोकभाषया ॥ अलेखि संस्कृतीकृत्य क्षमाकल्याणपाठकैः ॥ २ ॥
संविग्नवाचनाचार्यपदस्थानं सुधीमताम् । श्रीयुक्तामृतधर्माणां शिष्यैरामोदतस्त्वदः ॥ ३ ॥ त्रिभिर्विशेषकम्,

॥ इति मेरुत्रयोदशीव्याख्यानं सम्पूर्णम् ॥ ९ ॥

रत्नमय मेरुपञ्चकं श्रीजिनाग्रे ढौकनीयम्—मध्ये एको महान् मेरुः, चतुर्दिक्षु चत्वारो लघवः, तदग्रे चतुर्दिक्षु चत्वारो नन्द्यावर्ताः कर्तव्याः। दीपधूपादिपूर्वकं बहुविधाः पूजाः कर्तव्याः। एवं मासत्रयोदशकं यावत्, अथवा वर्षत्रयोदशकं यावत् कर्तव्यम्। तथा 'ॐ ह्रीँ श्रीऋषभदेवपारंगताय नमः' एतत् पदं द्विसहस्रवारान् जपनीयम्, एवं प्रतिमासं कुर्वतः सकलरोगक्षयो भवति, इह परत्र च सुखं संपद्यते। यदि त्रयोदश्यां पौषधं कुर्यात् तर्हि प्रागुक्तं कर्तव्यं सर्वं पारणकदिने कृत्वा गुरुं प्रति अतिथिसंविभागं विधाय पारणकं कुर्यात्। इत्थं गुरुवचः श्रुत्वाऽनन्तवीर्यो राजा व्रतं अंगीकृत्य गुरून् नत्वा स्वस्थानं ययौ। अथ पिंगलरायकुमारः प्रथम-माघकृष्णत्रयोदश्यां प्रथमं व्रतं कृतवान् तावता चरणांकुरौ प्रादुर्भूतौ, एवं त्रयोदशमासान् यावत् कुर्वतः सुन्दररूपौ-पादौ प्रकटीभूतौ। राजाऽतीव हर्षं प्राप्तः, धर्मस्य महिमानं विलोक्य उल्लसितः सन् विशेषतो धर्मं कर्तुं प्रवृत्तः। ततः षोडशमासे कुमारेण गुणसुन्दरी परिणीता, अन्यासामपि बहूनां राजकन्यानां पाणिग्रहणं चक्रे। ततोऽनन्तवीर्येण राज्ञा कुमाराय राज्यं दत्त्वा गांगिलमुनिपार्श्वे चारित्रं गृहीत्वा निरतिचारं तत् प्रतिपाल्य श्रीशत्रुंजयेऽनशनं कृत्वा शिवपदं प्राप्तम्। ततः पिंगलरायनृपः मन्नीत्या प्रजां पालयन् पुनः—त्रयोदशवर्षाणि यावद् मेरुत्रयोदशीमाराध्य प्रान्ते उद्यापनं चकार। तत्र त्रयोदशजिनगृहाणि कारयामास, त्रयोदश स्वर्णमयीः प्रतिमाः, त्रयोदश रूप्यमयीः त्रयोदश रत्नमयीश्च निर्मापयामास। त्रयोदशविधैः रत्नैर्मेरुपञ्चकं निर्माप्य ढौकयामास। त्रयोदशवारान् श्रीसंघेन सह तीर्थयात्रां चकार। त्रयोदशसाधर्मिकवात्सल्यान् कृतवान्, एवं बहुधा ज्ञानभक्तिमपि चकार। ततः कियन्ति पूर्वाणि व्रतसहितं राज्यं प्रपाल्य स्वकीय-महसेनकुमाराय राज्यं दत्त्वा श्रीसुव्रताचार्यसमीपे बहुभिरन्यपुरुषैः सह दीक्षां जग्राह। द्वादशांगीमधीत्य चतुर्दशपूर्वधरः संजातः, क्रमेण आचार्यपदं च संप्राप्तः, ततः क्षपकश्रेण्यारोहार्थमष्टमगुणस्थाने शुक्लध्यानं ध्यातुमुद्यतो

पुत्रपादाय उपरि गत्वा सूर्यकुंडजलेन पुत्रं स्नपयामास । परं तज्जलं देवताऽधिष्ठितमस्ति स्वयंप्रभस्य च न तत्कर्माद्यापि क्षीणं तेन तज्जलं पादौ न स्पृशति । तद् दृष्ट्वा सर्वेऽपि संघलोकाः विस्मिता जाताः, तदा सर्वैरपि मुनीश्वरः पृष्ठः-स्वामिन्! किमत्र कारणम्? मुनिरुचे--अनेन बहुभवेभ्यः प्राग देवद्रव्यं भक्षितमस्ति, तथा एकस्या मृग्याश्चत्वारोऽपि पादाश्छिन्नाः तत्कर्म बहु क्षीणं किंचिदद्यापि अवशिष्टं वर्तते, तेन तीर्थजलं न स्पृशति तीव्रकर्मणां भुक्तिं विना क्षयाभावात् । एतद् मुनिवचनं श्रुत्वा माता, पिता, पुत्रश्च त्रयोऽपि वैराग्यं प्राप्ताः, ततः श्रीऋषभदेवचरणान् अभिवन्द्य गृहमागत्य धर्मकरणोद्यता बभूवुः । इत्थं षोडशसहस्रवर्षाणि कुष्ठत्वगादिपीडामनुभूय तत्कर्मालोच्य कालं कृत्वा प्रथमदेवलोके देवत्वेनोत्पन्नः, ततश्च्युत्वा हे राजन्! अनन्तवीर्योऽयं तव पुत्रः पिंगलायननामा संजातः । इत्थं गांगिलमुनिः कुमारस्य प्राग्भवमुक्त्वा पुनरुवाच—

मद्यपानाद् यथा जीवो, न जानाति हिताऽहिते ॥ धर्माधर्मौ न जानाति, तथा मिथ्यात्वमोहितः ॥१॥

मिथ्यात्वेनालीढचित्ता नितान्तं, तत्त्वातत्त्वं जानते नैव जीवाः ।

किं जात्यन्धाः कुत्र चिद्वस्तुजाते, रम्यारम्यव्यक्तिमासादयेयुः ? ॥२॥

अभव्याश्रितमिथ्यात्वेऽनाद्यनन्ता स्थितिर्भवेत् ॥ सा भव्याश्रितमिथ्यात्वेऽनादिसान्ता पुनर्मता ॥३॥

ईदृक्-मिथ्यात्वोदयाद् जीवाः कर्माणि बध्नन्ति, तत्पुत्रेणापीत्थमेव दुष्कर्मोपार्जितं तेन पङ्गुर्जातः । एतद् मुनिवचः श्रुत्वा राजा उवाच-हे स्वामिन्! एतत् कर्म केन पुण्येन नश्यति? मुनिना उक्तम्-हे राजन्! तृतीयारकप्रान्ते सार्धाष्टमासयुक्तवर्षत्रये शेषे सति माघकृष्णत्रयोदश्यां श्रीऋषभदेवस्वामिनो निर्वाणकल्याणकमभूत्, तेन तद्दिनं श्रेष्ठमस्ति । तद्दिने चतुर्विधाहारत्यागेन उपवासं कृत्वा

एकदा प्रभोश्छन्नायाभरणानि गृहीत्वा क्वचिद् अनाचारं सेवितवान्, तदा श्रेष्ठिना तत्स्वरूपं ज्ञात्वा गृहाद् बहिर्निष्कासितः । ततो वनमध्ये भ्रमन् आखेटकसंगेन बहून् मृग--शशकादीन् जन्तून् विनाशयन्नुदरपूर्तिं चकार । अथ तत्रैव वने तापसाश्रमो विद्यते तत्र बहवस्तापसास्तपस्यां कुर्वन्ति, मृगा अपि तत्राऽऽगत्य उपविशन्ति । एकदा एका सगर्भा मृगी तत्राऽऽगच्छन्ती तेन सामन्तसिंहेन तीक्ष्णशस्त्रेण पादेषु प्रहृता तस्याश्चत्वारोऽपि पादाः छिन्नाः, सा अधः पतिता तापसैर्दृष्टा, ततस्तैः सद्यस्तत्राऽऽगत्य धर्मः श्रावितः सा मृत्वा सद्गतिं प्राप्ता । ततस्तापसाः सामन्तसिंहं प्रत्येवमुक्तवन्तः—रे दुष्ट ! यथा त्वयाऽस्माकं मृग्याः पादाश्छिन्नास्तथा त्वमपि परत्र पंगुत्वं प्राप्नुयाः । इत्थं शापं दत्त्वा ते स्वाश्रमं जग्मुः । सामन्तसिंहोऽपि तापसान् क्रुद्धान् दृष्ट्वा भीतः सन् नष्ट्वा वनं गतः, दुष्कर्मयोगात् संमुखं सिंहो मिलितः, सद्यस्तेन सिंहेन हतः, स मृत्वा नरकं गतः । ततश्च्युत्वाऽसंख्येयान् तिर्यङ्नरकादिभवान् कृत्वाऽकामनिर्जरया बहूनि कर्माणि क्षपयित्वा महाविदेहे कुसुमपुरनगरे विशालकीर्त्तिनृपस्य गृहे शिवानामदास्याः पुत्रत्वेनोत्पन्नः । तया वज्र इति स्थापितं नाम, क्रमेण तरुणो जातः । नृपसेवां करोतिस्म, परं प्राक्कृतकर्मोदयात् तच्छरीरे गलत्कुष्ठरोग उत्पन्नः । हस्तौ, पादौ च गलित्वा पतितौ पङ्गुर्जातः । अथ मरणसमये शिवादास्या नमस्कारमन्त्रः श्रावितः, ततः समाधिना मृत्वा व्यन्तरो जातः, ततश्च्युत्वा जम्बूद्वीपे भरतक्षेत्रे सौहार्दपुरनगरे सूरदासश्रेष्ठिगृहे वसन्ततिलकाभार्यायाः स्वयंप्रभो नाम पुत्रो जातः, । स च गुणवान्, विवेकवान्, परं चरणे व्रणरोगयुक्त एवोत्पन्नस्तेन चलितुं न शशाक । क्रमेण अष्टवर्षवया अभूत्, एकपुत्रत्वात् पितरौ तद्दुःखदुःखितावभूताम् । तस्मिन् समये श्रीशत्रुंजयतीर्थयात्रार्थं संघोऽगमद्, तदा तत् श्रुत्वा श्रेष्ठी अपि सरोगपुत्रसहितः संघमध्ये चचाल । क्रमेण सिद्धक्षेत्रे संघः समागतः, ततो विधिना गिरिमारुह्य श्रीऋषभदेवभक्तिं चकार, तदा सूरदासश्रेष्ठी अपि सभार्यः

तथा धर्मस्य मूलं दया, पापस्य मूलं हिंसा, एको हिंसां करोति, अन्यः कारयति, अपरोऽनुमन्यते एते त्रयोऽपि सदृशपापभाजः, पुनर्यो हिंसां कुर्वन् मनसि त्रासं न प्राप्नोति तस्य हृदये दया नास्ति, यो जीवो निर्दयः सन् बहून् एकेन्द्रियान् विनाशयति स परभवे वातपित्तादिरोगभाग् भवति । यः पुनर्द्वीन्द्रियान् विनाशयति स परत्र मूकः, मुखरोगी दुर्गन्धनिःश्वासश्च भवति, यश्च त्रीन्द्रियाणां विनाशकः स नासिकारोगी भवेत् । चतुरिन्द्रियविनाशकरतु अक्ष्णा काणः अन्धो वा, क्लिन्ननेत्रो वा भवेत् । यस्तु पंचेन्द्रियविनाशकः स परत्र बधिरो भवति, यः पुनः पंचप्रकारानपि जीवान् विनाशयति स भवान्तरे पंचापीन्द्रियाणि पटूनि न प्राप्नोति, तस्माद् भो भव्याः ! हिंसाऽनृतादिकं सर्वथा त्याज्यमित्यादिधर्मोपदेशं श्रुत्वा राजा पप्रच्छ—स्वामिन् ! मत्पुत्रः केन कर्मणा पंगुर्जातः ? तदा गांगिलमुनिरुवाच—अस्य प्राग्भवं शृणु; अस्मिन् जम्बूद्वीपे ऐरवतक्षेत्रे अचलपुरनाम्नि नगरे महेन्द्रध्वजो नाम राजा, उमया पट्टराज्ञी तयोः सामन्तसिंहो नाम पुत्रोऽभूत् । स च लेखनशालायां पठनार्थं गच्छन् द्यूतकृत्संगाद् द्यूतं शिक्षितवान्, क्रमेण सप्तव्यसनसेवनतत्परोऽभूत् । राज्ञा बहुधा निषिद्धोऽपि यदा व्यसनसप्तकं न तत्याज, तदा अयोग्यं ज्ञात्वा स्वदेशाद् बहिर्निष्कासितवान् । ततोऽपि व्यसनमत्यजन् देशाटनं कुर्वन् सुरपुरनगरे समागतः, तत्र चम्पक श्रेष्ठिना सुन्दराकारं विलोक्य उत्तमपुरुषोऽयमिति ज्ञात्वा सुकुमारोयम्, अस्मात् कार्यान्तरं न भविष्यतीति च विचिन्त्य स्वगृहपार्श्ववर्तिजिनगृहरक्षार्थं स सामन्तसिंहः स्वगृहे स्थापितः । अथ स दुष्टात्मा जिनाग्रे ढौकितानि तन्दुलपूगीफलादीनि प्रच्छन्नं गृहीत्वा द्यूतक्रीडार्थं ययौ । कियद्भिर्दिनैः श्रेष्ठिना तद् ज्ञात्वा तस्मै उक्तम्—हे भद्र ! यः पुमान् देवद्रव्यादिकं भुंक्ते सोऽनन्तकालं संसारपरिभ्रमणं करोति, तस्मात् त्वया अतः परमेतत् कार्यं न कर्तव्यम् । इत्थं बहुधोपदेशो दत्तस्तथापि स दुष्टो मिथ्यात्वाज्ञानतीव्रकर्मोदयाद् न ततोऽपि विरमतिस्म ।

कुमारः सत्वरं प्रेषणीयः, इति श्रुत्वा राजा उद्विग्नचित्तः संजातः, ततः सद्य उत्थाय स्वमन्दिरे एकान्तदेशे गत्वा राज्याः, प्रधानस्य चाग्रे इत्थमुवाच—अथ किं कर्तव्यम् ? पुत्रस्तु पंगुर्वर्तते एतस्य कथं भविष्यति ? पंगवे कः स्वकन्या प्रदास्यति ? तदा प्रधानमंत्री किंचिद् विचार्य तान् सेवकान् आहूय इत्युवाच—साम्प्रतमिह कुमारो नास्ति तन्मातुलगृहे वर्तते । मातुलगृहं तु इतो द्विशतयोजनेषु मुहनीपत्तने समस्ति तेन सांप्रतं लग्नं न भवेत्, पश्चाद् ज्ञास्यते ॥ एतत् श्रुत्वा सेवकाः प्रोचुः—हे स्वामिन् ! पन्था दूरे वर्तते, अतो लग्नं निर्धार्य देयं, स्वयमपि लग्नोपरि शीघ्रं समागन्तव्यम् । एतत् सेवकवचनं श्रुत्वा मासषोडशकानन्तरं लग्नं भविष्यति, इति निर्धारितम् । ततो लग्नं गृहीत्वा सेवका मलयदेशं गताः । अथ राजा अनन्तवीर्यश्चिन्तातुरः सन्नुवाच—अथाऽत्र क उपायः कर्तव्यः ? षोडशमासास्तु सत्वरमेव यास्यन्ति । तदा नृप-राज्ञी-प्रधानैर्बहुी चिन्ता कृता परं कोऽप्युपायो न लब्धः । अस्मिन्नवसरे नगर्युद्याने साधुपंचशतीपरिवृतश्चतुर्ज्ञानधरो गांगिलनामा साधुः समवसृतः, वनपालकेन प्रतिपत्तिं कृत्वा नगरमध्ये गत्वाऽनन्तवीर्यराजाय वर्धापनिका दत्ता । राजा तन्मुखात् साध्वागमनं श्रुत्वा तं संतोष्य हस्त्यश्वादिबहुऋद्धिसमेतो वन्दनार्थं निस्सृतः । क्रमेण तत्र गत्वा विधिना मुनीन् अभिवन्द्याग्रे उपविष्टः, पर्षद् मीलिता, मुनिरुपदेशं ददौ । स च इत्थम्—

जीवदयाइ रमिज्जइ, इन्दियवग्गो दमिज्जइ सयावि ॥ सच्चं चेव वदिज्जइ, धम्मस्स रहस्सं इणमेव ॥१॥
जयणा उ धम्मजणणी, जयणा धम्मस्स पालिणी चेव ॥ तह वुड्ढिकरी जयणा, एगंतसुहावहा जयणा ॥२॥
आरंभे नत्थि दया, महिलासंगेण नासए बंभं ॥ संकाए सम्मत्तं, पवज्जा अत्थगहणेणं ॥३॥
जे बम्भचेरभट्ठा, पाए पाडंति बम्भयारीणं ॥ ते हुंति टुंटमुंटा, बोहिवि पुण दुल्लहा तेसिं ॥४॥

कृतवान्। ततस्तमन्तःपुरे एव ररक्षतुः बहिर्न प्रकटी चक्रतुः। यदा पुनः लोकाः पप्रच्छुस्तदा एवमूचतुः—कुमारस्य रूपमत्यद्भुतं वर्तते, मा कदाचिद् दृष्टिदोषो भवेद् इति न प्रादुष्क्रियते। तदा सर्वस्मिन्नपि नगरे एषा प्रवृत्तिः प्रादुर्भूता। यदुत पिंगलरायकुमारतुल्यः पृथिव्यामपरः कोऽपि रूपसौन्दर्यवान् नास्तीति। अथैवं क्रमेण कुमारो वृद्धिं प्राप्तः। अस्मिन्नवसरे अयोध्यानगरीतः सपादशत (१२५) योजनेषु मलयनामा देशोऽस्ति, तत्र ब्रह्मपुरं नाम नगरम्, तत्र च इक्ष्वाकुवंश्यः काश्यपगोत्रीयः शतरथो नाम राजा तस्य च इन्दुमती नाम्नी पट्टराज्ञी। तत्कुक्षिसंभवा गुणसुन्दरी नाम पुत्री, सा चातिशयरूपलावण्यसौभाग्यादिगुणयुक्ताऽभूत्। तस्य राज्ञः पुत्रो नास्ति सैवैका पुत्री आसीद्, अतस्तेन मातापित्रोरतिवल्लभा आसीद्। अथ पुत्रीं वरयोग्यां ज्ञात्वा तद्योग्यवरालाभाच्च राजा तद्विवाहचिन्तातुरो बभूव। तस्मिन्नवसरे तन्नगरवासिव्यापारिणः शकटेषु विविधानि क्रयाणकानि भृत्वा देशान्तरं चलितास्तदा राज्ञा तेभ्य उक्तम्—देशान्तरे भ्रमद्भिर्भवद्भिर्गुणसुन्दरीयोग्यवरप्राप्तौ सत्यां विवाहसम्बन्धः कार्यः, इति नृपवचनं श्रुत्वा तथेति प्रतिपद्य ते चलिताः। क्रमेण बहूनि नगराणि विलोकयन्तोऽयोध्यां नगरीं प्राप्ताः, तत्र च क्रयाणकानि सर्वाण्यपि विक्रीतानि भूयान् लाभः संजातः, अपराणि तत्रत्यानि क्रयाणकानि संगृहीतानि। यदा ते चलनार्थमुद्यता जातास्तदा स्वनृपवचनं संस्मृत्य तन्नगरवासिलोकानां मुखात् कुमारस्याद्भुतं रूपं श्रुत्वा नृपसमीपे गत्वा कुमारेण सह गुणसुन्दर्या विवाहसम्बन्धं चक्रुः, राज्ञाऽपि शुल्क (कर) मोचनादिना तेषां बह्वादरश्चक्रे, ततस्ते हर्षिताः सन्तः स्वदेशं प्रति चेलुः, क्रमेण स्वनगरं गत्वा राज्ञोऽग्रे सर्वं वृत्तान्तं कथयामासुः, राजापि कुमारस्याद्भुतरूपसौभाग्यादिगुणान् श्रुत्वा संतोषं प्राप्तः। अथ यदा कन्या वरयोग्या जाता तदा कुमारस्य आकारणार्थं राज्ञा स्वसेवकाः प्रेषिताः, तेऽपि अयोध्यां गत्वा अनन्तवीर्यं नृपं प्रोचुः—हे महाराज! विवाहार्थं

## अथ मेरुत्रयोदशी व्याख्यानम् ॥ ५ ॥

मारुदेवं जिनं नत्वा, स्मृत्वा सद्गुरुभारतीम्। मेरुत्रयोदशीपर्व-व्याख्यानं लिख्यते मया ॥ १ ॥

इहाष्टमहाप्रातिहार्यविराजितेन जगद्गुरुणा श्रीवर्धमानस्वामिना श्रीगौतमादीनामग्रे यथा माघकृष्णत्रयोदश्या माहात्म्यमुक्तं, तथा-परंपरयाऽऽयातमस्माभिरुच्यते, श्रीऋषभदेवाऽजितनाथयोरन्तरे पञ्चाशल्लक्षकोटिसागरोपमानि व्यतिक्रान्तानि, तन्मध्ये अयोध्यायां नगर्यां इक्ष्वाकुवंशयः काश्यपगोत्रीयोऽनन्तवीर्यो नाम राजा बभूव, स च बहुलहस्त्यश्वरथपदात्यादिसेनानायकः। तस्य च-राज्ञः पञ्चशतानि राज्य आसन् , तन्मध्ये प्रियमती नाम पट्टराज्ञी बभूव, धनंजयो नाम चतुर्बुद्धिनिधिर्महामात्यश्च आसीत्॥ सुखेन राज्यं पालयतो राज्ञ एकदा मनसि महाचिन्ता समुत्पन्ना-यदुत्तमो ममैकोऽपि पुत्रो नास्ति, क एतद्राज्यस्य भोक्ता भविष्यति ? पुत्रं विना गृहं शून्यप्रायमिति। ततो राज्ञा अनेके उपायाः कृताः परं पुत्रोत्पत्तिर्न जाता। तस्मिन्नवसरे एकदा एकः कोणकनामा साधुराहारार्थं राज्ञो गृहे समागतः, तदा नृपराज्यौ उत्थाय विधिना वन्दित्वा शुद्धाहारेण प्रतिलाभ्य करद्वयं संयोज्य मुनिं पप्रच्छतुः-स्वामिन् ! अस्माकं पुत्रो नास्ति स कदापि भविष्यति न वा ? मुनिरुवाच-ज्योतिष्कनिमित्तादिकं मुनिर्न भाषते, तदा नृपराज्ञीभ्यां पुनः पुनः प्रार्थनायां कृतायां मनसि दयां धृत्वा मुनिना उक्तम्-हे राजन् ! तव पुत्रस्तु भावी परं पङ्गुर्भविष्यति, एतदुक्त्वा मुनिर्गतः, तदा भूपराज्ञीभ्यां चिन्तितम्-अस्माकं पङ्गुरपि पुत्रस्तु भावी। क्रमेण राज्ञी सगर्भा जाता, पूर्णे काले पंगुं पुत्रं प्रासूत। राजा पुत्रजन्मं श्रुत्वा हर्षितः सन् महोत्सवं चकार, द्वादशे दिवसे सर्वमपि कुटुम्बं भोजयित्वा कुमारस्य पिंगलराय इति नाम

बिम्बानि कारितानि पश्चात् कतिपयदिने वैराग्यवासितः श्रेष्ठी गृहभारं सुन्दरनाम्नि ज्येष्ठे पुत्रे नियोज्य सर्वानाहूय कथयति-स्म-हे पुत्राः! युयं दशमीदिने सप्तदशप्रकारेण वामेयमर्चित्वा व्याख्यानं श्रुत्वा गृहे समागत्य साधून् प्रतिलाभ्य एकासनेन भोजनं कृत्वा चतुर्विधाहारनियमो ग्राह्यः, पारणकदिने स्वामिवात्सल्यं कर्तव्यम्, एवं विधिना वयं सुखिनो जाताः, भवद्भिरपि एवं कर्तव्यम्, येन सुखिनो भविष्यन्ति। एवं पुत्राणां शिक्षां दत्वा गुरुपार्श्वे गत्वा एवं वदति-स्वामिन्! ममोपरि कृपां विधाय चारित्रं देहि येन स्वर्गाऽपवर्गौ प्राप्नोमि, तदा गुरुणा कथितं-यथा रुचिस्तथा कुरु। एवं श्रुत्वा गुरुणां पार्श्वे चारित्रं गृहीतम्। विविधानि षष्ठाष्टमादीनि तपांसि कुर्वाणो द्वादशवर्षप्रान्ते पञ्चदशदिनानि अनशनं विधाय अष्टादशदोषरहितः समाधिना मृत्वा दशमे देवलोके विंशतिसागरोपमायुर्देवत्वेनोत्पन्नः, अनुक्रमेण देवसुखं भुक्त्वा प्राणतकल्पात् च्युत्वा इहैव जम्बूद्वीपे महाविदेहे पुष्कलावतीविजये मंगलावत्यां नगर्यां सिंहसेनराजस्य गुणसुन्दरीभार्यायाः कुक्षिसरोवरे मरालवत् पुत्रो जयसेननाम्ना प्रकटिष्यति। तत्र संसारसुखं भुक्त्वा पश्चात् चारित्रं ग्रहीष्यति, एकादश अंगानि द्वादशोपांगानि पठिष्यति। एकाकी विहारं कुर्वन्नेकदा कायोत्सर्गं स्थास्यति, तत्रोपवनाधिष्ठायको देवो मिथ्यात्ववासितः तस्य श्रमणस्यैकविंशत्युपसर्गान् नकुल-वृश्चिक-पन्नग-गज-सिंह-व्याघ्र-पिशाच-राक्षस-खेचर-वेताल-प्रमुखान् करिष्यति। मुनिस्तु शमदमगुणेन, शुभध्यानेन चतस्रघातिकर्मणां क्षयं कृत्वा केवलं प्राप्स्यति। शीलत्यपि चारित्रं गृहीत्वा प्रतिपाल्य देवलोकं गता महाविदेहे सेत्स्यति, एवं श्रीवर्धमानस्वामिना गौतमाग्रे निरूपितम्, तद् हे भव्याः! इदं व्रतमवश्यं कर्तव्यं येन सुखं स्याद्। अस्य चारित्रस्य श्रवणमात्रेण इह भवे धनधान्यादिकं परभवे स्वर्गापवर्गसुखं जनः प्राप्नोति॥

इति श्रीपूर्वाचार्यहेमचन्द्रसूरिकृतसपादलक्षग्रन्थमध्यात्त्विमं पौष-दशम्या-व्याख्यानं समाप्तम्॥ ४॥

श्रीणिदिनेषु एकभक्तकरणम्, भूमिशयनम्, ब्रह्मव्रतपालनम्, द्वयोः टंकयोरावश्यकम्, देववन्दनम्, जिनालये स्नात्रादिमहोत्सवविधानम्,

'ॐ ह्रीं श्रीपार्श्वनाथाय अर्हते नमः' इति द्विसहस्रवारं गुणनीयं। पारणान्ते च स्वामिवात्सल्यं, एवं दिग्वर्षं (१०) यावद् विधिना कर्तव्यम्। एवमाराधनेनेहलोके धनधान्यसौभाग्यादिकम्, परलोके च स्वर्गसुखं क्रमेण च मोक्षसुखं भविष्यति। एवं श्रुत्वा हर्षोत्कर्षप्रफुल्ललोचनः श्रेष्ठी जैनं धर्मं गृहीत्वा गुरुं वन्दित्वा स्वगृहं गतः, आचार्यश्चान्यत्र विहृतवान्। श्रेष्ठिना दशमी आराधितुमारब्धा, दशमासेषु गतेषु कालकूटद्वीपाद् पोताः समागताः तदनुचरमुखात् श्रुत्वा श्रेष्ठी न श्रद्दधौ, तदा तत्प्रियया शीलवत्योक्तम्–स्वामिन्! तत् सत्यमेव जानातु, माऽसत्यं मन्यताम्। यतोऽद्य निजगृहे निधानं प्रकटं भविष्यति तदा तु सत्यमित्युक्त्वा निधानस्थाने निधिदर्शनार्थं गतवन्तौ, तदा ताभ्यां निधानानि विलोकितानि। श्रेष्ठी स्वप्रियामुवाच–हे प्रिये! जैनशासन–प्रभावात् प्रवहणवर्धापिका समागता, एकादशस्वर्णकोटिमानो निधिरपि प्रादुर्भूतः। वामेयजिनप्रसादात्, श्रीगुरुणामुपदेशादहं श्रीमान् जातः। अथ जैनधर्मवासनया सुखेन कालो गच्छति, श्रेष्ठिपदमपि पुनः प्राप्तम्, श्रेष्ठिनो दशपुत्राः संजाताः राज्ञा संमान्य निजसमीपे स्थापितः। पुनरेकदा श्रीदेवेन्द्रसूरिर्विहरन् तत्रैवोपवने समवसृतः, तत् श्रुत्वा श्रेष्ठी वन्दनार्थं गतः वन्दित्वा यथास्थानं स्थितः, गुरुणा देशना दत्ता, देशनान्ते श्रेष्ठी पप्रच्छ–हे स्वामिन्! दशम्या उद्यापनं किं कर्तव्यम्? गुरुणा प्रोक्तम्–हे श्रेष्ठिन्! प्रष्टकानि दशपुस्तक–दशलेखनानि, दशपुस्तकबन्धनानि, दशस्थापनार्चायासनानि (ठवणी), दश जपमालाः, दश चन्द्रोदयाः दशजिनालयानि दश जिनबिम्बानि, दीवि, आरति, एवं सर्वं दश–दशसंख्याकं कर्तव्यम्। एवं ॰त्वा श्रेष्ठिनोद्यापनिकां कृत्वा मणिमयानि जिन–

चेतना लक्षणश्चात्मा, सामान्येन बुधैः स्मृतः ॥ संसारात्मा तथा जीवः, परमात्मा द्विधा मतः ॥ २ ॥
संसारात्मा सदा दुःखी, जन्म-मरण-शोकभाक् ॥ चतुरशीतिलक्षासु, योनिषु भ्राम्यते सदा ॥ ३ ॥
न सा जातिर्न सा योनिर्न तत् क्षेत्रं न तत् कुलम् ॥ यत्र कर्मवशादात्मा नोत्पन्नोऽयमनेकधा ॥ ४ ॥
एगया देवलोएसु, नरएसु वि एगया ॥ एगया असुरं कायं, जहा कम्मेहिं गच्छइ ॥ ५ ॥
एगया खत्तिओ होइ, तओ चण्डाल-वुकसो ॥ तओ कीड-पयंगो य, तओ कुन्थु-पीपिलिया ॥ ६ ॥
सुभगो दुर्भगः श्रीमान, रूपवान् रूपवर्जितः ॥ स एव सेवकः स्वामी, नरो नारी नपुंसकः ॥ ७ ॥
संसारी कर्मसम्बन्धाद्, नटवत् परिभ्राम्यति । अनन्तकालपर्यन्तं, जीवः संसारवर्त्मनि ॥ ८ ॥
भव्यजीवे दयादानं, धर्मकल्पतरूपमम् । दानशीलतपोभावं, शाखा मुक्तिसुखं फलम् ॥ ९ ॥
धर्मादेव कुले जन्म, धर्माद्धि विपुलं यशः ॥ धर्माद् धनं सुखं रूपं, धर्मः स्वर्गाऽपवर्गदः ॥ १० ॥

दोहा—धर्म करत संसारसुख, धर्म करत निर्वाण । धर्म पंथ साधन विना, नर तिर्यंच समान ॥ १ ॥
सुपुरुष तीन पदार्थ साधे, धर्म वीशेष जानी आराधे । धर्म प्रधान कहे सब कोई, अर्थ काम धर्म हित होई ॥ २ ॥

इत्यादिधर्मकथां श्रुत्वा श्रेष्ठी जीवाऽजीवादि नवपदार्थयुक्तं सम्यक्त्वरत्नं प्राप्तः, पुनः पप्रच्छ—हे भगवन् ! एवं किमपि तपस्याफलमुपदिश्यतां येन मम गृहे निधानं प्रकटयति । तदा मुनिना प्रोक्तम्—भोः श्रेष्ठिन् ! पौषकृष्णदशम्यां व्रतं गृहाण, तद्दिने श्रीपार्श्वनाथस्य जन्मकल्याणकमासीद्, नवमीदिने, दशमीदिने, एकादशीदिने एवं

धनमर्जय काकुत्स्थ !, धनमूलमिदं जगत् । अन्तरं नैव पश्यामि, निर्धनस्य शवस्य च ॥ १ ॥

दुहा—बाप कहे मेरे पूत सपूता, बेन कहे मेरा भइया ॥ घर जोरू भी लेत बलैयां, सोई बडो जांकी गांठ रुपैया ॥ १ ॥

अथ श्रेष्ठी निर्धनत्वेन दुःखेन कालं गमयतिस्म । कतिपयदिने तस्य नगरे श्रीदेवेन्द्रसूरिः समवसृतः, तद्वर्धापनिका वनपालेन राज्ञे निवेदिता । राज्ञा वनपालो बहुद्रव्यदानेन तोषितो विसृष्टः, पश्चाद् राजा, श्रेष्ठिवर्गः, सूरेन्द्रश्रेष्ठी, सर्वनगरलोकश्च वन्दनार्थं निर्ययौ । मुनिसमीपे आगत्य मुनिं वन्दित्वा सर्वे यथास्थानं निषण्णाः, मुनिभिर्देशना प्रारब्धा—भो भव्याः ! संसारे सारं धर्मपदार्थः श्रेयान् । यतः—

धर्मतः सकलमंगलावलि-र्धर्मतः सकलसौख्यसंपदः ॥ धर्मतः स्फुरति निर्मलं यशो, धर्म एव तदहो ! विधीयताम् ॥१॥

विवेकः परमो धर्मो, विवेकः परमं तपः ॥ विवेकः परमं ज्ञानं, विवेको मुक्तिसाधनम् ॥ २ ॥

भक्ष्याऽभक्ष्यविचारः स्याद्, गम्यागम्यविभेदकृत् ॥ मार्गाऽमार्गपरिज्ञानं, गुणाऽगुणविचारणा ॥ ३ ॥

निद्राऽऽहारो रतिर्भीतिः, पशूनां च नृणां समम् । विवेकोऽन्तरमत्रास्ति, तं विना पशवः स्मृताः ॥ ४ ॥

एक उत्पद्यते जन्तुर्यात्येकश्च भवान्तरम् । एको दुःखी सुखी चैकस्तथैकः सिद्धिसौख्यभाक् ॥ ५ ॥

इत्यादिदेशनां श्रुत्वा पर्षदाः स्वं स्वं स्थानं जग्मुः, तदा सूरश्रेष्ठी पप्रच्छ—हे भगवन् ! जीवस्य किं लक्षणम् ?

तदा मुनिनोक्तम्-हे श्रेष्ठिन् ! ज्ञान-दर्शन-चारित्रयुक्त-तपो-वीर्योपयोगवान् स जीवः यतः—

नाणं च दंसणं चेव, चरित्तं च तवो तहा ॥ वीरियं उवयोगो य, एयं जीवस्स लक्खणम् ॥ १ ॥

परलोके देवादिऋद्धिमनुभूय परम्परया निर्वाणं प्राप्नोति, एवं भगवता उक्ते श्रीगौतमस्वामी प्राह–हे भगवन् ! पुरा केनेयं समाराधिता ? तत् कथ्यताम् । भगवानुवाच–हे गौतम ! श्रीवामेयं मां चान्तरा सूरदत्तश्रेष्ठिना सम्यगाराधिता, तथाहि—जम्बूद्वीपे भरतक्षेत्रे सुरेन्द्रपुरनाम नगरमस्ति, तत्र नरसिंहो नाम राजा राज्यं करोतिस्म, तस्य चतुरा गुणवती शीलालंकारयुता गुणसुन्दर्यभिधाना पट्टराज्ञी विराजतेस्म । तस्य नगरे सूरदत्तश्रेष्ठी परिवसतिस्म । तस्य शीलालंकारधारिणी पतिव्रता शीलवतीनाम्नी पत्नी आसीद् । यद्यपि धनदवद् महाधनाढ्यो यशस्वी च स श्रेष्ठी, परं मिथ्यात्ववासितः सांख्यमतावलम्बी त्रिदण्डिभक्तः शैवधर्माराधनतत्परः जैनधर्मं न जानाति, यतः—

न देवं नाऽदेवं न शुभगुरुमेवं न कुगुरुं ॥ न धर्मं नाऽधर्मं न गुणपरिणद्धं न विगुणम् ॥
न कृत्यं नाकृत्यं न हितमहितं नापि निपुणं ॥ विलोकन्ते लोका जिनवचनचक्षुर्विरहिताः ॥ १ ॥

स कदापि जिनवचनं न शृणोति मिथ्यात्वेन ग्रसितो राहुणा विधुवत् जीवशरीरमेकं मन्यते । परं राजमान्यो नगरे बहुमान्यः श्रेष्ठिपदे आसीद्, एवं काले याते एकदा सार्ध द्व्यशतप्रमितानां प्रवहणानां चतुर्विधं क्रयाणकं भृत्वा भृत्यान् रत्नद्वीपे प्राहिणोद् । तत्र गत्वा क्रयविक्रयं कृत्वा पुनः नवीनं क्रयाणकं भृत्वा मध्यसमुद्रे आगतास्तावद् पूर्वकृतकर्मोदयेन उल्कापातप्रचण्डपवनवेगेन ते प्रवहणाः कालकूटद्वीपे गताः गृहे नागताः । पुनश्च श्रेष्ठिगृहे एकादशस्वर्णकोटिद्रव्यं भूमिगृहे स्थापितमासीद्, तत् पन्नगवृश्चिकांऽगारकरूपेण जातम् यानि च ग्रामान्तरात् पंचशतानि आगच्छन्ति शकटानि तेषामुपरि भिल्लघाटिः पतिता तान्यपि गतानि । ततश्च श्रेष्ठी निर्द्रव्यो जातः श्रेष्ठिपदं च गतं महादरिद्रश्च संजातः, ततो लोके सन्मानमपि गतम् । यतः—

॥ इति श्रीमौनैकादश्या माहात्म्यं [ व्याख्यानं ] सम्पूर्णम् ॥ ३ ॥

अथ श्रीपौषदशमी व्याख्यानं प्रारभ्यते ॥ ४ ॥

प्रणम्य पार्श्वनाथांघ्रिपंकजं सर्वसौख्यदम् । समस्तमंगलश्रेणिलतापल्लवताऽम्बुदम् ॥ १ ॥
भव्यजीवप्रबोधार्थं, जन्तूनां च सुखाप्तये । पौषकृष्णदशम्याश्च, माहात्म्यं कथ्यतेऽधुना ॥ २ ॥

इह जम्बूद्वीपे भरतक्षेत्रे मगधजनपदे चम्पानाम्नी सुमनोहरा नगरी चाऽस्ति, तस्याः समीपे पूर्णभद्राख्ययक्षाश्रिते उपवने श्रीचरमतीर्थाधिपतिमहावीरस्वामी एकदा समवसृतः । तदुपदेशश्रवणार्थं वन्दनार्थं च श्रीमगधाधिपतिः समागतः । स च भगवन्तं त्रिःप्रदक्षिणीकृत्य यथास्थाने समुपविष्टः । तदा स्वामी संसारसागरनिमज्जतामुद्धारकारिणीं देशनां प्रारेभे—

जीवदया रक्खिज्जइ, इन्द्रियवग्गो दमिज्जइ सयावि । सच्चं चेव वदिज्जइ, धम्मस्स रहस्समिणमेव ॥ १ ॥

इत्यादिदेशनां श्रुत्वा केचिद् भद्रकतां प्राप्ताः केचिद् श्राद्धधर्मं केचिच्च साधुधर्ममंगीकृतवन्तः, तदानीं श्रीगौतमस्वामी श्रीवीरं वन्दित्वा पप्रच्छ–हे स्वामिन् ! पौषदशमीमाहात्म्यं कथ्यताम्, ? एवं श्रुत्वा, वर्धमानस्वामी कथयति–हे इन्द्रभूते ! पौषदशम्यां श्रीनाभेयजिनजन्मकल्याणकं वर्तते, तद्दिने द्विसन्ध्यमावश्यकं कर्तव्यम् । देववन्दनां भूशयनं ब्रह्मचर्यपालन जिनालयेऽष्टविध–सप्तदशविधस्नात्रमहोत्सवादिकं विविधाऽऽडम्बरेण जिनपूजां च विधाय गुरुसमीपे गत्वा उपदेशः श्रोतव्यः । पश्चाद् गृहं गत्वा एकासनेन भोजनं कृत्वा चतुर्विधाऽऽहारनियमो ग्राह्यः, नवम्यामेकादश्यां चापि एकवारमेव भोक्तव्यं, एतद्विधिना दश वर्षाणि यावत् क्रियमाणे साऽराधिता भवति । मनोवाक्कायेन त्रिकरणशुद्ध्या अस्या आराधक इह भवे धनधान्य-पुत्रकलत्रादिसौख्य प्राप्य

जानिते द्वे शते षष्ठे, अष्टामानां शतं तथा । चतुष्टयं चतुर्मास्या, एकं षाण्मासिकं तपः ॥ १ ॥
स मौनैकादशीतिथ्यास्तपस्तपन् विशेषतः । पाठको द्वादशांगीनां शुद्धां दीक्षामपालयत् ॥ २ ॥ इति

अथैकदा एकादश्यां मौनमास्थाय तपः कुर्वति सुव्रते तत्परीक्षार्थं कश्चिद् मिथ्यादृष्टि देवः कस्यचित् साधोः कर्णयोः महतीं वेदनामकारयत्, तस्य वेदना महति उपचारे कृतेऽपि न शाम्यति, तदा तेन देवेन साधुना पुरत उक्तम्—अस्य वेदना सुव्रतमुनेः भैषज्यात् क्षयं यास्यति, यदि स एव स्वस्थानाद् बहिरागत्य उपचारं करिष्यति इति, तत् श्रुत्वा ते साधवः तत्रागत्य उपचारार्थं सुव्रतमभ्यर्थयन्, सुव्रतोऽपि मौनी रात्रौ न स्वस्थानाद् बहिर्याति, ततः देवानुभावतः स वेदनार्तो मुनिः सुव्रतं मस्तके मारयति ततः सुव्रतस्यातीववेदना संभूता परन्तु स मुनिश्चिन्तयति—

अर्हन्तो भगवन्तो ये, साधवो गणधारिणः । इन्द्राश्चन्द्रा दिनेन्द्राश्च, नागेन्द्रा व्यन्तरेन्द्रकाः ॥ १ ॥
सचक्रवर्तिनो वासुदेवाः प्रतिनारायणाः । बलदेवा नराधीशा, मानवा अपरेऽपि च ॥ २ ॥
कर्मणा पापिनाऽनेन, ते सर्वेऽपि विडम्बिताः । कियन्मात्रो वराकोऽहं, पुरस्तात् तस्य कर्मणः ॥ ३ ॥
अरे जीव ! क्षमस्व त्वमुदितं कर्म तेऽस्ति यत् । तद् भोगेन विना नैव, प्रक्षीयेत कदाचन ॥ ४ ॥
लद्धं अलद्धं पुव्वं-जिणवयण सुभासिअं अमियभूयं । गहिउं सग्गइमग्गो—नाहं मरणाउ बीहेमि ॥ ५ ॥
तपस्तीव्रं घरट्टोऽयं, क्षमामर्करिकान्वितः । धृतिहस्तो मनःकीलः, कर्मधान्यानि चूर्णयेत् ॥६॥ इति

अथ विभंगज्ञानेन मुनिमक्षुभितं मत्वा देवः विशेषेणोपसर्गान् अकरोद्, मुनिस्तु क्षपकश्रेणिमारूढः केवलज्ञानं प्राप्तवान् भव्यान्

स्याज्यः इति इदानीं दीक्षां चेत् सुगुरुयोगतो गृह्णामि तदा वरम्, इति चिन्तयतस्तस्य प्रातःकालः सञ्जातः, उद्याने च तरणतारणसमर्थाः चतुर्ज्ञानधरा गुणसुन्दरसूरयः समागताः, तान् वन्दनार्थं सर्वोऽपि लोको गतः, निजतनूज-स्त्रीपरिवारेण संयुतः श्रेष्ठी अपि गतवान् यावत् वन्दित्वा सर्वे स्थिता तावद् गुरुभिः देशना प्रारब्धा-यो यतीनां केवलिप्रज्ञप्तः अहिंसालक्षणः सप्तदशविधः विनयमूलः क्षान्तिप्रधानः महाव्रतपुरस्सरो धर्मः तेन पवनवद् द्रुतं मोक्षं व्रजेत्, यस्तु द्वादशव्रतात्मकः श्रावकधर्मस्तेन तुरंगवेगवद् व्रजेत, इति अल्पकालेनैव सर्वदुःखान्तकरः साधुधर्मः द्रुतं मोक्षगमनाय सेव्यः। यदुक्तम्—

चारित्ररत्नान्न परं हि रत्नं, चारित्रवित्तान्न परं हि वित्तम्। चारित्रलाभान्न परो हि लाभश्चारित्रयोगान्न परो हि योगः॥ १॥

दीक्षा गृहीता दिनमेकमेव, येनोग्रचित्तेन शिवं स याति। न तत् कदाचित्तदवश्यमेव, वैमानिकः स्यात् त्रिदशप्रधानः॥ २॥

इत्यादि देशनां श्रुत्वा सुव्रतोऽब्रवीत्-हे तारक! अहं संसारकान्तारादुद्विग्नोऽस्मि इति, गृहभारं पुत्रे समारोप्य श्रीमतां समीपे दीक्षां ग्रहीष्यामि, इति श्रुत्वा गुरुः उवाच-यथासुखं प्रवर्तस्व प्रतिबन्धं मा विधेहि। ततः श्रेष्ठी गृहं गत्वा कुटुम्बं भोजयित्वा स्वजनपुत्राणामग्रे दीक्षाऽऽदेशममार्गयत्। तैरनुमतः सुव्रतः एकादशभिः स्त्रीभिः सह प्रवव्राज। शीघ्रमेव तपोविशेषात् कायबलं क्षयीकृत्य मासिकेनाऽनशनेन तस्य एकादशपत्न्योऽपि केवलं प्राप्य शिवं गताः। अथ सुव्रतः मुनिर्ग्रहणासेवनाशिक्षां पठित्वा साधुधर्मं चरति। यदुक्तम्—

जयं चरे जयं चिट्ठे, जयमासे जयं सुए। जयं भुंजंतो भासंतो, पावकम्मं न बंधई॥ १॥

एवं पवित्रं चारित्रं पालयामास तथा विशेषतः षष्ठाष्टमादितपः कृतवान् तस्य संख्या लिख्यते—

बहुप्राभृतपूर्वं सुव्रतः पादयोर्लग्नः, राज्ञाऽपि व्यतिकरः पृष्टः, सुव्रतेन कथितः वृत्तान्तः पुनः धर्मोपदेशं दत्त्वा राजा तोषितः, राज्ञा उक्तम्-वरं वृणु, तदा सुव्रतेन उक्तं-अवध्याश्चौरा इति । राज्ञा तथा स्वीकृते शासनदेव्या तलारक्षकाः चौराश्च मुक्ताः । श्रेष्ठिनाऽपि पारणकं कृतम् । पुनरपि एकदा दावानल इव समग्रं पुरं ज्वालनाय अग्निरुत्थितः, तदा नगरस्थः सर्वलोक इतस्ततः नष्टः किन्तु गृहीतपौषधः श्रेष्ठी स्वव्रतरक्षार्थं न कुत्रापि गतः, सर्वनगरमरण्यमिव ज्वलित परन्तु सुव्रत श्रेष्ठिनो हट्ट-गृहादि किमपि न अज्वलत् । प्रातः काले समुद्रे द्वीप इव तस्य हट्टगृहादि वीक्ष्य सर्वेऽपि पौराः सुव्रतं प्रशंसयामासुः, यथा—

सत्त्वेन धार्यते पृथ्वी, सत्त्वेन तपते रविः । सत्त्वेन वायवो वान्ति, सर्वं सत्त्वे प्रतिष्ठितम् ॥१॥

अहो धर्मस्य माहात्म्यमस्याहो दृढता व्रते । पालयेद् व्रतमेवं यो, द्विधाऽप्यस्य शिवं भवेत् ॥२॥

यतः-धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं ॥ धर्मेणैव भवंति निर्मलयशो विद्यार्थसंपत्तयः ॥

कांताराच्च महाभयाच्च सततं धर्मः परित्रायते ॥ धर्मः सम्यगुपासितो हि भवति स्वर्गाऽपवर्गप्रदः ॥३॥

अथ एकादशीव्रते पूर्णे जाते श्रेष्ठी उद्यापनाय मुक्ताफलानि रत्नानि शंखः प्रवालकानि स्वर्णानि कलधौतानि ताम्राणि पित्तलानि त्रपूणि कांस्यानि पट्टकूलानि, बहुविधानि धान्यानि पक्वान्नानि, नालिकेर-द्राक्षासहकारादीनां फलानि, स्वर्ण-रूप्यकानां पुष्पाणि अशोकादीनां पुष्पाणि, इत्यादीनि अनेकानि वस्तूनि एकादशसंख्यया जिनेन्द्राग्रे ढौकयामास । एवं विस्तारेण उद्यापनं कृत्वा संघ-पूजनं साधर्मिकवात्सल्यादीनि सप्तक्षेत्र्यां धनवपनं च विधाय मानुषं जन्म कृतार्थं कृतवान् । अथैकदा वृद्धावस्थायां रात्रौ मनसि श्रेष्ठी चिन्तयति-मया जन्मपर्यन्तं श्रावकव्रतं पालितं मौनैकादशीतपोऽपि तदुद्यापनादिना पूर्णं कृतम्, अथ असारः संसारः पूर्वं पश्चाद् वा

विज्ञाय पुनरपि गुरुसमीपे आजन्म यावद् मौनैकादशीतपः उच्चचार। गुरुणा उक्तम्—एकादशांगानामाराधना कर्तव्या, सम्यक् तपः कार्यम्, पूर्वभवे एकादशीव्रतं कृत्वा निर्मलज्ञानमाप्तवान्, तदुद्यापनवशाच्च अत्र एकादशस्वर्णकोटयः प्राप्ताः, निर्मलं यशः, लोके प्रभुत्वम्, अधिकारित्वम्, नगरश्रेष्ठित्वम् च प्राप्तम्, अतएव तपसि उद्यमो विधेयः। एवमुक्त्वा धर्मलाभाशिषं दत्त्वा गुरवोऽन्यत्र विहृताः। अथ सुखेन सह कुटुम्बेन श्रेष्ठी एकादशीदिवसे प्रहराष्टकं आहारादित्यागरूपं पौषधं विदधाति। लोकेऽपि मौनैकादशीपर्वणः प्रसिद्धिर्मान्यता च जाता, यतः वृद्धमान्यं सर्वे मानयन्ति यथा महादेवेन भाले स्थापितत्वात् तत्कलामात्रमपि चन्द्रं द्वितीयादिने लोकाः पूजयंति एवं च अनेके लोका मौनैकादशीमाराधयन्ति। अथ एकदा सकुटुंबेन तेन श्रेष्ठिना मौनैकादशीतिथ्याम् अहोरात्रपौषधः कृतः पौषधग्राहिभिः सर्वैरपि रात्रौ कायोत्सर्गः कृतः। अथैकदा चौरैर्ज्ञातम् मौनैकादश्यां सुव्रतःश्रेष्ठी न ब्रूते अपह्रियमाणमपि वस्तु न पश्यति इति विचार्य चौरघाटी तद्गृहे प्रविष्टा उद्योतं (दीपकं) विधाय चौरा यावत् पश्यन्ति तावत् सर्वत्र पदे पदे स्वर्णराशिमेव पश्यन्ति, यावता गृण्हन्ति तावता शासनदेव्या सर्वे चौराः स्तम्भिताः, अतएव शासनदेवी पूज्यते कायोत्सर्गेणाऽऽराध्यते* । अथ प्रातःकाले स्तम्भितान् सायुधान् परद्रव्यहरणांतान् चौरान् दृष्ट्वा लोकाः मीलिताः। तलारक्षकाश्च तान् वेष्टयित्वा स्थिताः। अथ सकुटुम्बः सुव्रतः स्थापनाचार्यसमीपे पौषधं प्रपाल्य उपाश्रयं गत्वा गुरून् नत्वा धर्मं श्रुत्वा गृहे समागतः, तत्र चौरान् दृष्ट्वा मा राजा चौरान् मारयतु इति बुद्ध्या श्रेष्ठिना मौनं कृतम्, ततः तलारक्षका अपि शासनदेव्या स्तंभिताः, अथ मध्यान्हे समागतो राजा,

* तान् स्तम्भितान् प्रातः तलारक्षको दृष्ट्वा भूपालसमीपे निनाय, राज्ञा वधाय आदिष्टाः, प्रातः श्रेष्ठी पौषधं पारयित्वा प्राभृत लात्वा राज्ञः पार्श्वे गत्वा सर्वान् अमोचयत् इत्याद्यपि समुपलभ्यते पाठः।

रूपलावण्यसंयुक्ता, नरा जात्यादिसंभवः। विद्याहीना न राजन्ते, ततोऽमुं पाठयाम्यहम् ॥१॥

इति चिन्तयित्वा महामहैः पितरौ उपाध्यायसमीपे द्वासप्ततिकलाभ्यासं कर्तुं मुमुचतुः। अनायासेन सकला अपि कला अल्पकाले एव पपाठ। षड्विधावश्यकसूत्रादिकं श्रावकाचारमपि पपाठ, प्राप्तयौवनस्य तस्य पिता–श्रीकान्ता, पद्मा, लक्ष्मीः पद्मलता, तारा, रम्भा, पद्मिनी, गौरी, गांगेया, रतिः, इतिनाम्योः महर्द्धिकव्यवहारिणां एकादशकन्याः पारिणायिताः, ताभिः रूपलावण्यशालिनीभिः सह भोगान् भुञ्जानः दोगुन्दकसुर इवाभवत्। तदनंतरं तस्मिन् गृहभारं समारोप्य स श्रेष्ठी प्रव्रज्यां गृहीत्वा सम्यक्प्रपाल्य प्रान्तेऽनशनं विधाय मृतः स्वर्गं च प्राप्तः। अथ गृहस्वामी सुव्रतः श्रेष्ठी पूर्वजन्मनि एकादशीमाराधितवान् तत एकादशस्वर्णकोटिनां नायको जातः। तथा एकादशस्वर्णकोटीश्वरो दाता भोक्ता नगरश्रेष्ठिसुवर्णपट्टालंकृतभालो राजमान्यः सत्यवादी सर्वत्र विश्रुतो अतिप्रतापी सज्जनश्रेष्ठः व्यापारिकशिरोरत्नं सुखेन कालं निनाय। अथ कालान्तरेण एकादशस्त्रीणामेकैकः पुत्रो जातः, एवमेकादश पुत्राः, तत्परिवारोऽपि विपुलो जातः, अथान्येद्युः उद्याने धर्मघोषो मुनीश्वरः सपरिवारः समवसृतः, राजादयः सुव्रतश्च वन्दितुं गताः गुरुणाऽपि तदानीं तपो महिमा व्याख्यातः—

यद् दूरं यद् दुराराध्यं, यच्च दूरे व्यवस्थितम्। तत् सर्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥ १ ॥

तत्रापि पञ्चमीतपसा ज्ञानपञ्चकस्यावाप्तिः, अष्टमीतपसाऽष्टकर्मनिषूदनम्, एकादशीतपसा एकादशांगानां सुखागमनम्, चतुर्दशीतपसा चतुर्दशानां पूर्वाणामागमनम्, पौर्णमासीतपसा संपूर्णागमनं एवं श्रुत्वा सुव्रतो मूर्च्छामापन्नो जातिस्मृत्या पूर्वभवं मौनैकादशीतपोविधानं

धातकीखण्डे इषुकारभूधरात् पश्चिमे दिग्विभागे विजयं नाम पत्तनमस्ति, तत्र पृथ्वीपालो नाम राजाऽभूत्, तस्य च औदार्यचातुर्य-शीलादिगुणशालिनी चन्द्रवती नाम प्रिया, तत्र च व्यवहारिशिरोमणिः प्रबलव्यापारोपार्जितबहुधनः षड्विधावश्यकरतः सत्पुत्रयुतो जिनभक्तिकारकः सूरनामा श्रेष्ठी । स च वृद्धावस्थायामेकदा गुरुसमीपमागत्य भक्त्या प्रणम्य उवाच—भगवान् ! ईदृग्विधं धर्मं कथय येन स्वल्पेनाऽपि कर्मक्षयः स्यात्, गुरुणा एकादशीव्रतमादिष्टम्, अथ स गुर्वाज्ञया गृहमागत्य एकादशवर्षैकादशमासपर्यंतं* यावत् तपश्चकार, समाप्ते च व्रते तेन विधिपूर्वमस्या उद्यापनमपि कृतम् , अथ उद्यापनदिवसात् पञ्चदशे दिवसे आकस्मिकेन उदरशूलेन मृत्वा एकादशे आरण्ये देवलोके एकविंशतिसागरपरिमितायुः देवो जातः । देवलोकसुखमनुभूय ततश्च्युत्वा सौर्यपुरे समृद्धिदत्तव्यवहारिक-गृहे प्रीतिमतीप्रियाकुक्षौ पुत्रत्वेनोत्पन्नः, तस्य नालस्थापनार्थं यदा गर्तं खनितुमारब्धं तदा गर्तखननस्थाने निधिर्निर्गतः, तद्वर्धा-पनिका सर्वत्र जाता, जाताऽऽह्लादः श्रेष्ठी महीयांसं जन्मोत्सवं दशदिवसपर्यन्तं कृतवान् । निवृत्तेऽशुचिकर्मणि प्राप्ते च द्वादशे दिवसे ज्ञातिबांधवान् भोजयित्वा गर्भस्थेऽस्मिन् मातुर्व्रतेच्छाऽभूदिति गुणनिष्पन्नं सुव्रत इति नाम कृतवान् पिता । न पुनर्मंगला-दिवन्निरर्थकम् । उक्तं च—

भौमं मंगल वृष्टिनाम करणे, भद्रा कणानां क्षये ॥ वृद्धिः शीतलकाचदुष्टापिटके, राजारजः पर्वणि ॥
मिष्टत्वं लवणे विषे मधुरता, दग्धे गृहे शीतलं ॥ पात्रत्वं च पणाङ्गनासु गदितं नाम्ना परं नाथकम् ॥१॥

अथ पञ्चभिः धात्रीभिः लाल्यमानोऽसौ अवर्धत, अनुक्रमेणायम् अष्टवार्षिकः संजातः, तं पुत्रं वीक्ष्य तत्पित्रा चिंतितम्—

* लघिष्ठं मौनैकादशीव्रतमेकाद शमासपर्यन्तं मौनेन कृतवान् इत्यापि पाठः ।

दिवसयोरेकभक्तं (एकवारं भोजनम्) कर्त्तव्यम्, पारणकदिवसे जिनगृहे गन्तव्यम्, जिनस्याग्रे फलानि उपढौक्य भावतः जिनार्चा कर्तव्या, ततो गुरुसमीपे गत्वा नत्वा ज्ञानपूजां विधाय साधूनां संविभागं कृत्वा पारणा कर्त्तव्या, एकादशवर्षैकादशमासपर्यन्तं यावत् व्रतं कर्त्तव्यम्, द्वादशे वर्षे व्रते पूर्णे पौषधं पारयित्वा गुरूनभिवन्द्य जिनदेवस्याग्रे एकादश पक्वान्नानि एकादश फलानि एकादशविधानि धान्यानि एवं सुन्दरं वस्तु एकादशसंख्यया उपढौकनीयम्, जघन्यतोऽपि एकादशश्रावकवात्सल्यम्, संघपूजा, एकादशांगपुस्तकलेखनम्, इत्यादि उद्यापनं कर्त्तव्यम्—अत्र कथानकम्—

एकदा ग्रामानुग्रामं विहरन् सर्वज्ञो भगवान् नेमिनाथो द्वारिकायां समवासरत् तं वन्दनार्थं श्रीकृष्णः समागतवान्, वन्दित्वा कृष्णोऽवोचत्--स्वामिन्! षष्ठ्यधिकशतत्रयदिनमध्ये एकं सारं वासरं कृपां कृत्वा मम निवेदय यमाराध्य दानशीलतपोव्रतशक्तिहीनोऽप्यहम् निस्तीर्णो भवामि. भगवान् उवाच–यद्येवं तर्हि त्वं मार्गशीर्षशुक्लैकादशीमाराधय यतः—

अपि मिथ्यादृशां मान्या, सा मौनैकादशी तिथिः। मार्गशीर्षाख्यमासस्य, शुक्लपक्षे प्रकीर्तिता ॥१॥
तत्र पुण्यं कृतं स्वल्पमपि प्रौढफलं भवेत्। तस्मादाराधनीया सा, विशेषेण विशारदैः ॥२॥
सर्वेभ्योऽपि च पर्वेभ्यः, पर्व पर्युषणाह्वयम्। दिनेभ्योऽप्यखिलेभ्योऽयं, तथा मुख्योऽस्ति वासरः ॥३॥
श्रमणैः श्रमणीभिश्च, श्रावकैः श्राविकादिभिः। धर्मकर्म विधातव्यमस्मिन् दिने विशेषतः ॥४॥

इति श्रुत्वा श्री कृष्ण उवाच–विभो! पूर्वं केनाऽपि एकादशीव्रतमाचीर्णम्? तस्य च कीदृशी फलप्राप्तिर्जाता? स्वामी प्राह—

सन्मुखं गत्वा महताऽऽडम्बरेण श्रीयुगादिजिनबिम्बं रथे संस्थाप्य पूजास्नात्रमहोत्सवादिकरणेन महाकर्मराशिः दूरीक्रियते, महती पुण्यवृद्धिश्च भवति, तेनान्ये पर्वदिने पूजापौषधादिकरणेन दिवसः सफलः क्रियते ।

त्रिमुनिश्चाष्टभूवर्षे, [१८७३] दुर्गे च जेसलाभिधे ॥ गणिना जयसारेण, व्यलेखि शिष्यहेतवे ॥१॥

इति श्रीकार्त्तिकपूर्णिमायाः व्याख्यानं सम्पूर्णम् ॥२॥

## अथ मौनैकादशी व्याख्यानम् ॥ ३ ॥

अरस्य प्रव्रज्या नमिजिनपतेर्ज्ञानमतुलं, तथा मल्लेर्जन्म व्रतमपमलं केवलमलम् ।
वलक्षैकादश्यां सहसि लसदुद्दाममहसि, क्षितौ कल्याणानां क्षिपतु विपदः पञ्चकमिदम् ॥१॥

अर्थः—अरस्य-अरजिनस्य प्रव्रज्या-दीक्षा, नमिजिनपतेः-नमिनाथस्य अलतुम्-अनुपमं ज्ञानम्, तथा मल्लेः-मल्लिजिनस्य जन्म, अपमलम्-मलरहितं व्रतम्--दीक्षा, अलम्--सर्वद्रव्यगुणपर्यायप्रेक्षणे समर्थम्, केवलम्-केवलज्ञानं च; लसदुद्दाममहसि तेजोवति, सहसि--मार्गशीर्षमासे वलक्ष्यैकादश्यां--शुक्लैकादश्यां सञ्जातं कल्याणानां इमं पञ्चकं क्षितौ विपदः क्षिपतु ।

यथाऽस्मिन् भरते कल्याणानां पञ्चकं सञ्जातमेवं पञ्चसु भरतेषु पञ्चसु च ऐरवतेषु--क्षेत्रेषु मीलित्वा जातं पञ्चाशत् (५०) कल्याणानाम् । एवं भूतभाविवर्त्तमानकालाऽपेक्षया जातं सार्धशतं (१५०)। एकोपवासेऽपि सार्धशतोपवासफलं भवति । अस्मिन् दिने उपवासं कृत्वा मौनमाधाय अहोरात्रं पौषधं विधाय स्थेयम्, भणनं गुणनं विना नाऽन्यत् किमपि वक्तव्यम् । पारणकोत्तर-

द्विद्विकोटिपरिवारेण परिवृतौ फाल्गुनशुक्लदशम्यां नमिविनमी विद्याधरराजर्षी श्रीसिद्धशैले शिवपुरं गतौ, पुनः नमिविनमिराज्ञोः पुत्र्यश्चतुष्षष्टिः त्रिमलगिरौ चैत्रशुक्लचतुर्दश्यामनशनं कृत्वा शिवपुरीं प्राप्ताः, तेन शिवमन्दिरारोहणे सोपानसदृशो वाच्यः, पुनः पापमलपरिहरणे नीरवद् ज्ञेयः, तेन विमलगिरिरिति कथ्यते, पुनः पापारिगञ्जनेऽतीव शूरवद् ज्ञेयः। पुनर्येन नरभवं प्राप्य शत्रुञ्जये गत्वाऽऽदिजिनभक्तिपूर्वकं द्रव्यभावाऽर्चनं न कृतं तेन नरत्वं पशुरिव हारितम्, यस्तीर्थबुद्धया स्वहृदये संप्रधार्य श्रीशत्रुञ्जये गत्वा आदिजिनं नमति तस्य जीवितं सफलं स्यात्, स्तोककालमध्ये शिवसुखं प्राप्नोति। एवं गुरुमुखात् सिद्धगिरेर्महान्तं महिमानं श्रुत्वा सिद्धशैलपर्वतवन्दनार्थं पञ्चपञ्चकोटिमुनिपरिवारपरिवृतौ द्राविडवारिखिल्लौ वल्कलचीवरधारिणौ तापसौ स्वगुरोराज्ञां गृहीत्वा श्रीशत्रुञ्जयं प्रति चेलतुः, गुरुरपि अन्यत्र स्थाने विजहार। अथ द्राविडवारिखिल्लौ क्रमेण सपरिवारौ श्रीशत्रुञ्जयगिरौ आरोहणसमये एतादृशमवग्रहं जग्राह—यदाऽऽवयोः कर्मक्षयो भविष्यति तदाऽऽहारं ग्रहीष्यावः, एवं द्राविडवारिखिल्लौ चातुर्मासकालावग्रहमभिगृह्य श्रीशत्रुंजये चातुर्मास्यां तस्थतुः, भावतः साधुधर्ममंगीचक्रतुः, आत्मानं भावानुसारिणं प्रवर्तयन्तौ तपः तप्तवन्तौ, शुभध्यानयोगेन कर्मराशिदूरीकरणेन चातुर्मासीप्रान्तदिवसे प्रवर्तमाने कार्तिकशुक्लपौर्णमासीदिने क्षीणमोहेन त्रयोदशगुणस्थानकारोहणेन शुक्लध्यानेन ध्यायमानेन घनघातिचतुष्कर्मराशिक्षपणेन केवलज्ञानं केवलदर्शनं च तयोरुत्पन्नम्। चतुर्दशरज्जुलोकं ददृशतुः। बहुभव्यजीवान् प्रतिबोध्याऽऽयुष्कादिचतुष्कर्मराशिं क्षपयित्वा द्राविड-वारिखिल्लराजर्षी दशकोटिमुनिभिः सह मुक्तिपुरीं प्रापतुः, अचलाक्षयगतिं शिवं निरुपद्रवं पदं लब्धम्। तेन कार्तिकशुक्लपूर्णिमाऽतीवोत्तमा वर्तते, तस्माद् अद्य दिवसे श्रीशत्रुञ्जय-

ऋतुः, कन्दमूलाद्याहारं कुर्वन्तौ वल्कलचीवरं धारयतः, तपः करणेन कृशतनू जातौ। एवं बहुकालो गतः। अथास्मिन्नवसरे केचित् साधवस्तीर्थयात्राकरणार्थं मार्गे तत्रैव वने आगताः, द्राविडवारिखिल्लावपि तान् साधूनवलोक्य बह्वादरं दत्तवन्तौ, साधवोऽपि गमनागमनमालोच्य भूमिं प्रमार्ज्य तरोस्तले स्थिताः, द्राविडवारिखिल्लावपि मुखाग्रे उपविष्टौ, तस्मिन्नवसरे तरुशाखात एकश्चटको मुखाग्रे पतितः, तं चटकं स्तोकायुषं ज्ञात्वा मुनिना करुणां विचार्य नमस्कारः सुश्रावितः, विमलगिरेर्महिमा कथितः, तेन चटकेन मनसि धर्मोपदेशो दधे, तद्धर्मप्रभावात् प्रथमकल्पे देवो जातः, स देवः साधिकमुहूर्त्तान्तरे मुनीनां पार्श्वे आगत्य मुनीनां चरणानानम्य मुनीनामग्रे उपविष्टः, तस्मिन्नवसरे देवस्य महर्द्धिं रूपं चावलोक्य द्राविडवारिखिल्लौ मुनिं प्रति पप्रच्छतुः, हे स्वामिन्! अयमत्यन्तरूपकान्तिधारकः कः सुरोऽस्ति? तदा मुनिराह अयं चटको मृत्वा एतत्स्थानात् सुर उत्पन्नोऽस्ति, नमस्कारश्रवणेन तीर्थराजशत्रुञ्जयोज्ज्वलभावधारणेन चास्मिन् समये तीर्थराजमानम्य अत्रागतोऽस्ति। एतद्गुरुमुखान्निशम्य तौ पुनः पप्रच्छतुः–हे स्वामिन्! स विमलगिरिः कीदृशोऽस्ति, किञ्च तन्माहात्म्यमित्यावयोरुपरि कृपां कृत्वा सुश्रावय, तदा मुनिराह–अस्मिन् जम्बूद्वीपे दक्षिणार्धभरते श्रीशत्रुञ्जयगिरिरष्टोत्तरशतनाम्नाऽलंकृतं महातीर्थमस्ति, पुनः शत्रुञ्जयः १ पुण्डरीकः २ सिद्धगिरिः ३ विमलगिरिः ४ सुरगिरिः ५ इत्यादिभिः एकविंशतिनामभिः लोके प्रसिद्धोऽस्ति, एष गिरिर्नामनिक्षेपेण निश्चलोऽस्ति, अनन्तकालापेक्षया सिद्धशैलोपरि अनन्ता मुनयो मुक्तिं गताः; पूर्वमपि सम्प्रतिनाम्नश्चतुर्विंशतितमजिनस्य प्रथमगणधरः कादम्बगिरिनामा मुक्तिं गतः, इहैव वर्तमानकाले प्रथमजिनस्य प्रथमगणधरः पुण्डरीकनामा चैत्रशुक्लपूर्णिमायां पञ्चकोटिमुनिभिः सह श्रीशत्रुञ्जये शिवपुरीं गतः। तेन पुण्डरीकगिरिरिति कथ्यते, पुनः

न्यमादाय सन्मुखं चचाल स्वस्वदेशसीमां च रुरोध। क्रमेणोभयभ्रातृबहुसेनासमुदायेन द्वादशवर्षं यावत् महायुद्धकरणे बहवो गजा अश्वा-मनुजा भूमौ पतिताः, रुधिरसरितः प्रचलिताः, एतादृशः संग्रामो जायते, तस्मिन् समये द्राविडराजा वनक्रीडाकरणार्थं वने जगाम, तद् वनमनेकाम्रनिम्बकदम्बादिगुल्मलतापत्रपुष्पफलवनद्धर्या विभ्राजमानं सरोनिर्झरणैः शोभितमेतादृशं वनं द्राविडराजा पश्यति, तस्मिन्नेव वनमध्यभागे तापसगणास्तपः कुर्वन्ति, ते परिव्राजका राज्ञा ददृशिरे। अश्वादुत्तीर्य तत्र पार्श्वे गत्वाऽभिवन्द्य स्वोचितस्थाने तस्थौ। तस्मिन्नवसरे एकेन तापसेन धर्मोपदेशो दत्तः, तन्मध्ये संसारासारताऽपि दर्शिता तदुक्तम्-

गयकन्नचंचलाए अपरिचित्ताए रायलच्छीए। जीवा सकम्मकलमलभरिय भारत्तो पडन्ति अहे ॥ १ ॥

इत्यादिधर्मोपदेशं श्रुत्वा संसारमसारं ज्ञात्वा क्रोधं त्यक्त्वा एवं मनसि चिन्तयति-अहो! मम जीवितं धिक्, एक एव मद्भ्राता तेन सहाहं युयुधे द्वादश वर्षाणि संजातानि, एतदनिष्टं कार्यं कृतं, स्तोकजीवनोपरि एतद् वैरं किं क्रियते? राज्यलोभाद् एतदनिष्टं कृतम्, एवं विचार्य द्राविडस्तापसाश्रमादुत्थाय स्वसहोदरापराधक्षामणार्थं वारिखिल्लसेनामध्ये आयाति तावद् वारिखिल्लो बृहद्भ्रातुरागमनवृत्तान्तं श्रुत्वा सन्मुखमागत्य चरणयोर्निरपतत्, स च द्राविडो बाष्पपूर्णनयनः स्नेहार्द्रहृदयस्तमुत्थाप्य इति जजल्प-हे भ्रातः! एतत् सर्वमपि राज्यं त्वं गृहाण अहं तापसीं दीक्षां ग्रहीष्यामि, तदा वारिखिल्ल इत्युवाच-अहमपि राज्यपदं न ग्रहीष्यामि, एतद्वचनपरस्परालापनां कृत्वा स्वस्वपुत्राभ्यामर्धार्धं राज्यं विभज्य दत्त्वा स्वस्वापत्यं स्वस्वस्थाने प्रेषितवन्तौ, तौ पुत्रावपि स्वं स्वं राज्यं बुभुजाते। अथ द्राविडवारिखिल्लावपि पञ्चपञ्चकोटिक्षत्रियपरिवारेण परिवृतौ तापसाश्रमे गत्वा तापसपार्श्वे तापसीं दीक्षां जगृहतुः, आतापनां च-

लक्षपूर्वाणि व्यतीतानि तदा स्वामी राज्यभोक्ता जातः क्रमेण त्रिषष्टिपूर्वलक्षवर्षं राज्यं प्रपाल्य दीक्षाऽवसरं ज्ञात्वा भरताय स्व-मूलराज्य विनीता दत्ता बाहुबलाय तक्षशिला च प्रदत्ता, एवं क्रमेण शतपुत्रेभ्यो राज्यं वासयित्वा स्वस्वनाम्ना देशाः प्रदत्ताः । तन्मध्ये एको 'द्रविड' इत्यभिधानः, तस्य द्रविडदेशं कञ्चनपुरनगरं च वासयित्वा ददौ । स्वामी दीक्षां ललौ । क्रमेण कर्मक्षये केवलज्ञानमुत्पन्नम् । अथ भगवाननेककोटाकोटीदेवपरिवारेण परिवृतः साधुसाध्वीसमुदायेन सह देशेषु विहृत्य धर्मवृद्धिं चकार । अथ द्रविडराजाऽपि पितृदत्तं राज्यं बुभुजे, स्वनार्याभिः सार्धं विषयसुखमनुभवतस्तस्य क्रमेण द्वौ पुत्रौ बभूवतुः, बृहत्पुत्रो द्राविडः अपरो वारिखिल्लो लघिष्ठः, क्रमेण भोगसमर्थौ ज्ञात्वा उभयपुत्रौ प्रति भार्याः विवाहिताः । तावपि विषयसुखं बुभुजाते, तत्तद्भार्ययाऽपि पुत्राः प्रसूताः, तेऽपि चन्द्रकलेव ववृधिरे, एवं द्रविडराजा स्वराज्यं सुखेन प्रपालयति स्म । अथ तस्मिन्नवसरे भरतेन स्वाज्ञापालनार्थमष्टनवतिभ्रातृपार्श्वे दूतो मुमुचे, तदा द्रविडराजा दूतमुखात् सर्वं भरतस्य चक्रवर्तिपदस्वरूपं ज्ञात्वा एवं सर्वेऽपि संमील्य स्वस्वपुत्रं राज्यं ददौ, तदा द्रविडराजापि द्राविडबृहत्पुत्राय राज्यं प्रददौ । कनिष्ठाय वारिखिल्लाय च एकलक्षग्रामान् पृथग् ददौ, स्वयञ्च संसारवासनां परित्यज्य दीक्षां गृहीत्वा यथेच्छं पर्यटन् श्रीऋषभदेवजिनपार्श्वे तपस्तप्त्वा कैवल्यं प्राप । अथ द्राविडः पित्रा दत्तं स्वराज्यं वारिखिल्लोऽपि पितृदत्तस्वराज्यं लक्षग्रामान् प्रपालयति स्म । कानिचिद् वर्षाणि गतानि । तस्मिन्नवसरे द्राविडराजा स्वमनसि एवं चिन्तयति स्म, मत्पित्रा दीक्षावसरे मल्लघुभ्रातरं प्रति लक्षग्रामं दत्तं तद्भव्यं न कृतम्, मद्राज्यन्यूनता कृता, परमहमेतद्रा-ज्यमुद्दाल्य ग्रहीष्यामि । एतद् विचिन्त्य स्वसैन्यं सम्मील्य युद्धार्थं चचाल । तदा वारिखिल्लोऽपि भ्रातुरागमनवृत्तान्तं श्रुत्वा स्वसै-

## अथ कार्तिकपूर्णिमायाः व्याख्यानम् ॥ २ ॥

श्रीसिद्धाचलतीर्थेशं, नत्वा श्रीऋषभं प्रभुम् । कार्तिकी पूर्णिमायाश्च, व्याख्यानं वक्ष्यते मया ॥ १ ॥
सिज्झो विज्जायरचक्की नमी विनमी मुणि पुंडरिओ मुणींदो । वाली पज्जुन्नसंबो भरहसुगमुनि सेलगो पंथगो य ।
रामो कोडी पंच दविडनरवई नारदो पण्डुपुत्ता । मुत्ता एवं अणेगे विमलगिरिमहं तित्थमेयं नमामि ॥ २ ॥

व्याख्या—भो भव्याः ! एतादृशं पापकर्ममलपरिहारकं श्रीविमलाचलतीर्थं मनोवाक्कायैर्नमामि, तद् विमलाचल तीर्थं कीदृशम् ? यद् यस्मिन् तीर्थोपरि विद्याधरः चक्री-भरतः-नमी-विनमी-शुक-शैलक-पंथक-रामचन्द्र-द्राविड—वारिखिल्ल-नवनारद-पाण्डव-पुण्डरीकाद्या अनशनं विधाय, अष्ट कर्मारीन् हत्वा मुक्तिं गताः, एतादृशं सिद्धशैलं तीर्थं मनोवाक्काययोगेन नमामि । पुनरस्मिन् कार्त्तिकपूर्णिमाऽऽगमने श्रीशत्रुञ्जयगिरिसन्मुखदिशं गत्वा चैत्यवन्दनकरणे महती धर्मवृद्धिर्भवति, पुनरस्मिन् कार्त्तिकपूर्णिमाया दिने श्रीसिद्धशैले द्राविड-वारिखिलौ आरोहणेन शिवपुरीं प्राप्तौ, तद् दृष्टान्तो यथा—

अस्मिन् जम्बूद्वीपे दक्षिणभरतार्द्धस्य मध्यखण्डे इक्ष्वाकुभूम्यामस्मिन्नवसर्पिण्यां पूर्वं सप्तमः कुलकरो नाभिनामा बभूव, तद्भार्या मरुदेवी, तस्या उदरकन्दरायां श्रीप्रथमतीर्थंकरश्रीऋषभजिनः उत्पन्नः स षट्पूर्वलक्षाणिकुमारपदे स्थितः तदनन्तरमिन्द्रेण सुनन्दा सुमङ्गला परिणायिते, स्वामिनः संसारव्यवहारो वर्तते स्म, क्रमेण भरतबाहुबल्याद्याः शतं पुत्राः द्वेपुत्र्यौ अभूवन्, यदा विंशतिल-

रूपं-वर्ण्यते—तस्यास्तपः प्रभावात् सर्वेऽपि रोगा दूरं गताः, अद्भुतं रूपं जज्ञे, सा च जिनचन्द्रेण परिणीता, करमोचनवेलायां पित्रा बहुधनं दत्तम्, चिरकालं गृहसौख्यं भुक्त्वा यावज्जीवं पञ्चमीतपः कृत्वा प्रान्ते चारित्रमग्रहीत्, तौ गुणमञ्जरी-वरदत्तौ जिनोदितं चारित्रं प्रपाल्य कालं कृत्वा वैजयन्तविमाने सुरोत्तमौ जातौ। ततश्च्युत्वा वरदत्तजीवो महाविदेहे पुण्डरीकिण्यां नगर्याममरसेन राज्ञः स्त्री गुणावती, तस्याः पुत्रत्वेन समुत्पन्नः। शुभेऽन्हि तस्य शूरसेन इति पित्रा नाम-कृतम्। क्रमेण यौवनं प्राप्तः कन्यकानां शतमुपयेमे, पित्रा स्वराज्ये स्थापितः। एकदा श्रीसीमन्धरस्वामी विहरन्तस्तत्र समागतः। अर्हदागमनं श्रुत्वा शूरसेनो वन्दनार्थमगमत्। भगवता धर्मदेशना प्रारब्धा, तत्र सौभाग्यपञ्चम्यास्तपसः फलं प्रकाशितम्, ततो राज्ञा पृष्टम्-भगवन्! केनाऽपि तपसः फलं प्राप्तम्? तदा भगवता वरदत्तनृपदृष्टान्तः कथितः, तत् श्रुत्वा जातजातिस्मृतिःसन् पूर्वभवं ददर्श, पुनः तद्व्रतं जग्राह, दशसहस्रवर्षं राज्ये स्थित्वा तीर्थंकरपार्श्वे संयममग्रहीत्, वर्षसहस्रं दीक्षां प्रपाल्य केवलज्ञानं प्राप्य मोक्षं प्राप। अथ गुणमञ्जरीजीवो सुखं भुक्त्वा रमणीयाख्ये विजये शुभायां नगर्याममरसिंहाभिधनृपपत्न्या अमरावत्याः कुक्षौ पुत्रत्वेन समुत्पन्नः, समये जाते च पित्रा सुग्रीव इति नामस्थापनं कृतं, क्रमेण यौवनं प्राप्तो बह्वीनां कन्यानां पाणिग्रहणं च चकार, विंशतितमे वर्षे पित्रा राज्यं दत्वा स्वयं दीक्षा गृहीता, सुग्रीवो राजा बहूनि वर्षाणि राज्यं प्रपाल्य अन्ते गुरुपार्श्वे दीक्षां गृहीत्वा पूर्वलक्षं चारित्रं प्रपाल्य केवलमुत्पाद्य मोक्षं जगाम।

जायन्तेऽधिकसौख्यानि, पञ्चम्याराधनान् नृणाम्। इत्यस्या अभिधा जज्ञे, लोके सौभाग्यपञ्चमी ॥ १ ॥
एवं विभाव्य भो भव्याः! पञ्चम्याराधनोद्यमः। भवभीतिविभेदाय, कार्यो युष्माभिरद्भुतः ॥ २ ॥

इति कार्तिकसौभाग्यपञ्चमीमाहात्म्यविषये वरदत्त-गुणमञ्जरी कथानकं सम्पूर्णम् ॥ १ ॥

हृदि चिंतयामास–कृतपुण्यो मम बृहद्भ्राता मूर्खत्वात् तस्मै प्रष्टुं कोऽपि न याति, स्वैरं भुङ्क्ते भाषते शेते च, अत एव मूर्खे बहवो गुणाः सन्ति, यतः—

मूर्खत्वं हि सखे ! ममापि रुचितं तस्मिन् यदष्टौ गुणाः। निश्चिन्तो बहु भोजनोऽ१ त्रपमना २ नक्तं दिवा शायकः।
कार्याऽकार्यविचारणान्धबधिरो मानापमाने समः। प्रायेणाऽऽ ३ मयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥१॥

इति। अतः परं न कस्मै पदमात्रमपि कथयिष्यामि नवं पदं च न पाठयिष्यामि इति विचार्य शरीरे रोगाऽऽक्रान्तो द्वादश दिवसान् मौनेन निनाय। तत्पातकमनालोच्य आर्तध्यानपरो मृत्वा, राजन् ! तव सुतो जातः पूर्वोपार्जितेन कर्मणा अतीव मूर्खः कुष्ठादिरोगाऽऽक्रान्ततनुश्च बभूव। एतद् गुरोर्वचनं श्रुत्वा वरदत्तो जातिस्मृत्या निजपूर्वभवं दृष्ट्वा मूर्च्छां प्राप, क्षणान्तरे स्वस्थीभूय सर्वं सत्यमिति गुरुं प्रति–उवाच। पुनरपि नृपो बभाण–भगवन् ! स देहरोगः कथं कदा व्रजिष्यति ?। गुरुणा उक्तम्–कार्त्तिकशुक्लपञ्चमी आराध्या। पूर्वोक्तः सर्वोपि विधिः कथितः, प्रतिपन्नं कुमारेण पञ्चमीतपः, गुरुं प्रणम्य सर्वेऽपि स्वस्वस्थानं जग्मुः, अनन्तरं सम्यक् तत्तपः कुर्वतो तपः प्रभावात् वरदत्तस्य सर्वेऽपि रोगाः क्षयं प्रापुः, स्वयंवरसमेतानां वरभूपोद्भवानां सहस्रकन्योत्तमानां स महोत्सवं पाणिग्रहणं च चकार। शिक्षिताशेषसत्कलाय वरदत्ताय राज्यं दत्त्वा नृपो गुरुसन्निधौ चारित्रमग्रहीत्। वरदत्तो राज्यं पालयन् वर्षे वर्षे महाभक्त्या पञ्चम्या विधिं विदधे। अखंडाऽऽज्ञो राज्यं प्रपाल्य भुक्तभोगः स्वसूनवे राज्यं दत्त्वा स्वयं दीक्षामग्रहीत्। अथ–गुणमञ्जर्यास्तपोमाहा–

१ लज्जारहितमानसः। २ रात्रौ। ३ रोग रहित।

धूपोत्क्षेपपूर्वकं पञ्चवर्णानि धान्यानि पञ्चपक्वान्नानि पञ्चफलानि च ढौकयन्ते । ततो गुरोरग्रे गत्वा भक्त्याऽभिवन्द्य यथाविधि उपवासस्य प्रत्याख्यानं क्रियते । तस्मिन् दिने 'नमो नाणस्स' इति पदमेकसहस्रसंख्या * उत्तराभिमुखेन गुण्यते । चेत् पौषधः क्रियते तदा तद्दिने अयं विधिर्न भवेत् तस्मात् पारणकदिने विधिः कार्यः, यथाशक्ति उद्यापनादि अपि विधेयम् । ततो गुणमञ्जर्या तत् तपः प्रतिपन्नम् । अस्मिन्नवसरे राजा पृच्छति—हे साधुपुरन्दर ! मत्सूनोः वरदत्तस्य कुष्ठरोगः कथमभवत् ? पठनं च किं नाऽऽयाति ? तस्य किं कारणम् ? गुरुर्जगाद—अस्यापि पूर्वभवं शृणु—जम्बूद्वीपे भरतक्षेत्रे श्रीपुरं नाम नगरम्, तत्र वसुनामा श्रेष्ठी वसति स्म, तस्य वसुसार-वसुदेवौ पुत्रौ, तौ एकदा क्रीडार्थं वने जग्मतुः, तत्र वने मुनिसुन्दरनामानः सूरयो दृष्टाः वन्दिताश्च । गुरुभिर्धर्मदेशना प्रारब्धा—

यत्प्रातः संस्कृतं धान्यं, मध्यान्हे तद् विनश्यति ॥ तदीयरसनिष्पन्ने, काये का नाम सारता ॥ १ ॥

इत्यादिदेशनां श्रुत्वा तातमापृच्छ्य वैराग्यात् तौ व्रतं जगृहतुः । लघुना वसुदेवेन चारित्रं बिभ्रता सिद्धान्तसारः सर्वेऽपि अधीतः, गुरुणा वसुदेवाय सूरिपदं दत्तम्, स च पंचशतसाधुभ्यो वाचनां ददाति । एकदा वसुदेवसूरीश्वरो रुजाऽऽक्रान्तः संस्तारके सुप्तः तं कोऽपिसाधुरागमार्थं पृच्छति, गुरुर्व्याख्यायति, तस्मिन् गते द्वितीयो मुनिः समागतः तस्मै वाचना दत्ता, एवं भूयस्तु समागत्य समागत्य गतेषु किञ्चिन्निद्रायमाणः केनाऽपि साधुना पृष्टो भगवन् ! अग्रेतनं पदं वाच्यं पदस्यार्थोऽपि वाच्यः । तदा सूरिः कुविकल्पान्

* अष्टोत्तरैकसहस्रसंख्या इत्यापि क्वापि क्वापि उपलभ्यते पाठः, तत्त्वतस्तु अयमेव श्रेयान् प्रतिभाति । क्वापि च द्विसहस्राष्टोत्तरशतमित्यपि ।

मूर्खा एव रक्षिताः, अतः कोऽपि कन्यां न ददाति, सा उवाच—तव पिता पापिष्ठः येनैवं मूढमतिना शिक्षितोऽसि यतः—

आः ! किं सुन्दरि ! सुन्दरं न कुरुषे ?, किं नो करोषि स्वयं ?, आः ! पापे ! प्रतिजल्पसि प्रतिपदं ?, पापस्त्वदीयः पिता। धिक् त्वां क्रोधमुखीमलीकमुखरीं त्वत्तोऽपि कः कोपनो, दम्पत्योरिति नित्यदंतकलहक्लेशार्तयोः किं सुखम् ? ॥१॥

एतद्वचनमाकर्ण्य रुष्टेन जिनदेवेन उपलेन सा शिरो मर्मणि जघ्ने। तदा सा मृता, सा च तव-पुत्री समजायत, अनया ज्ञानस्याऽऽशातना पूर्वभवे चक्रे, तेन रोगोत्पत्तिर्जज्ञे, यतः—

कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥ १ ॥

इति गुरोर्वचनं श्रुत्वा सा गुणमञ्जरी जातजातिस्मृत्या पूर्वभवं ददर्श। ततो गुरुं प्रति सा सत्यमिति प्रोवाच। श्रेष्ठिना गुरुः पृष्टः—भगवन् ! अस्या रोगाः कथं प्रयास्यन्ति ? । गुरुणाऽभाणि—श्रेष्ठिन् ! ज्ञानस्याऽऽराधनतः सर्वं सुखं सम्पद्यते दुःखं च विलयं याति। ज्ञानस्य चाराधनमित्थम्—विधिना शुक्लपञ्चमीदिने उपवासो विधीयते, पुस्तिकां पट्टे संस्थाप्य पुरः स्वस्तिकः क्रियते, पञ्चवर्तिमयो दीपश्च क्रियते, पञ्चफलानि पञ्चवर्णकं च धान्यं ढौक्यन्ते, पञ्चवर्षाणि पञ्चमासान् यावत् पञ्चमी अनया रीत्या मनोवाक्कायशुद्ध्या समाराधनीया। यदि मासे मासे कर्तुं न शक्यते तदा कार्तिकमासस्य शुक्लपञ्चमी यावज्जीवमाराधनीया। सा सम्यगाराधिता सर्वं सुखं दत्ते, इति गुरुवचनं श्रुत्वा जिनदेवोऽब्रवीत्—भगवन् ! मम तनयायास्तपस्या-शक्तिर्न विद्यते, अतः कार्तिकपञ्चम्या विधिरादिश्यताम् वाचंयमः प्रोचे—कार्तिकशुक्लपञ्चमीदिने पुस्तकं पट्टे संस्थाप्य सुगंधपुष्पैः संपूज्य

इत्यादिदेशना श्रुत्वा सिंहदासश्रेष्ठी मुनिं जगौ-भगवन् ! केन कर्मणा मम सुतातनौ रोगा जाताः ? । गुरुणा ऊचे-महाभाग ! कर्मणा किं न संभवेत ? । अत्र श्रेष्ठिन् ! अस्याः पूर्वभवः श्रूयताम्—धातकीखण्डमध्यस्थभरते खेटकनामनगरम्, तत्र जिनदेवनामा श्रेष्ठी, सुन्दरीनाम्नी च तस्य गेहिनी, तयोः पञ्च पुत्राः-आशपालः, तेजपालः, गुणपालः, धर्मपालः, धनसार इतिनामानोऽभूवन् । तथा-लीलावती, शीलावती, रङ्गावती, मंगावती, इतिनाम्न्यश्चतस्रश्च पुत्र्योऽभूवन् । अथैकदा जिनदेवेन पञ्चापि तनयाः पण्डितसमीपे विद्याकलाग्रहणार्थं स्थापिताः । ते च चापल्यं कुर्वन्ते परन्तु अध्ययनं न कुर्वन्ति, यदा पण्डितस्तान् कम्बया ताडयति तदा ते रुदन्तो गृहमागत्य मातुः समीपे दुःखं निवेदयन्ति, माता-उवाच-पठनेन किं प्रयोजनम् ? यतः-

पठितेनाऽपि मर्तव्यं, शठेनाऽपि तथैव च । उभयोर्मरणं दृष्ट्वा, कण्ठशोषं करोति कः ? ॥ १ ॥

पण्डितस्यापि उपालम्भं दत्ते ईर्ष्यया च पुस्तिकां प्रज्वालयामास । पुत्रान् वक्ति, पठनार्थं भवद्भिर्न गन्तव्यम् । श्रेष्ठी एतद्व्यतिकरं ज्ञात्वा प्रोवाच—हे भद्रे ! जडेभ्यः पुत्रेभ्यः कः कन्याः प्रदास्यति ? कथं चैते व्यवसायं करिष्यन्ति ? यतः-

माता वैरी पिता शत्रुर्बालो येन न पाठितः । न शोभते सभामध्ये, हंसमध्ये बको यथा ॥ १ ॥

विद्वत्त्वं च नृपत्वं च, नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते ॥ २ ॥

इति श्रेष्ठिवचनं श्रुत्वा सा प्रोवाच-यूयं किं न पाठयथ ? अत्र मम को दोषः ? इत्युक्ते श्रेष्ठी हक्कितः सन् मौनं चकार । अथ अनुक्रमेण ते पंचापि तयोः पुत्राः यौवनं प्रापुः, परं न कोऽपि तेभ्यो कन्या दत्ते मूर्खत्वात्, ततः श्रेष्ठी स्त्रीं ति जगौ-पापिष्ठे ! त्वया पुत्रा

तयोः रूपलावण्यशोभनो वरदत्तनामा पुत्रो बभूव । सोऽष्टवर्षप्रमाणः पित्रा बुधान्तिके विद्याग्रहणहेतवे स्थापितः । परमक्षरमात्रं तस्य मुखे न चटति, अध्यापकस्योद्यमो निष्फलोऽभूत् । स यौवनं प्राप्तः पूर्वकर्मोदयात् कुष्टेन विनष्टदेहत्वात् कुत्रापि रतिं न प्राप । इतश्च तत्रैव पुरे सप्तकोटिसुवर्णाधीशो जिनधर्मरतः प्रसिद्धिभाक् सिंहदासो नाम श्रेष्ठी, तस्य गृहे गुणोचिता कर्पूरतिलका-नाम्नी भार्या, तयोः पुत्री गुणमञ्जरी आजन्मतो रोगैरुपद्रुता वचनेन मूकतां प्राप्ता बभूव । विविधैरौषधैरपि तस्या रोगशान्तिर्न जायते न च यौवने तां कोऽप्युद्वहति । तस्याः षोडशवार्षिक्या दुःखेन मातापित्रादिः सकलस्वजनो दुःखितः समजायत । तत्रैव पुरे एकदा श्रीविजयसेनसूरयश्चतुर्ज्ञानधरा गुरवः समाजग्मुः । तदा सर्वेऽपि नागरिकलोकः, सपुत्रो भूपतिः, सकुटुम्बः सिंहदासश्रेष्ठी सर्वे वन्दनार्थमुपगताः, गुरुणा च धर्मदेशना प्रारब्धा—

ज्ञानस्याराधने यत्नोऽध्ययनश्रवणादिभिः । भव्यैर्विधेयः सततं, निर्वाणपदमिच्छुभिः ॥ १ ॥
विराधयन्ति ये ज्ञानं, मनसा ते भवान्तरे । नराः स्युः शून्यमनसो, विवेकपरिवर्जिताः ॥ २ ॥
विराधयन्ति ये ज्ञानं, वचसापि हि दुर्धियः । मूकत्वमुखरोगित्वदोषास्तेषामसंशयम् ॥ ३ ॥
विराधयन्ति ये ज्ञानं, कायेनायत्नवर्तिना । दुष्टकुष्टादिरोगाः स्युस्तेषां देहे विगर्हिते ॥ ४ ॥
मनोवाक्काययोगैर्ये, ज्ञानस्याऽऽशातनां सदा । कुर्वन्ते मूढमतयः, कारयन्ति परानपि ॥ ५ ॥
तेषां परभवे पुत्रकलत्रसुहृदां क्षयः । धनधान्यविनाशश्च तथाऽऽधिव्याधिसंभवः ॥ ६ ॥ युग्मम् ॥

ॐ श्रीपंचपरमेष्ठिभ्यो नमः ।

श्रीमत्क्षमाकल्याणकोपाध्यायादिविरचितः—

# श्रीसौभाग्यपंचम्यादि-पर्वकथा-संग्रहः ।

## अथ ज्ञानपञ्चमीव्याख्यानम् ॥ १ ॥

श्रीमत्पार्श्वजिनाधीशं, सुराऽसुरनमस्कृतम् । प्रणम्य परया भक्त्या, सर्वाभीष्टार्थसाधकम् ॥ १ ॥
कार्तिकशुक्लपञ्चम्या, माहात्म्यं वर्ण्यते मया । भव्यानामुपकाराय, यथोक्तं पूर्वसूरिभिः ॥ २ ॥ युग्मम् ॥
भुवने हि परं ज्ञानं, ज्ञानं सर्वार्थसाधकम् । अनिष्टवस्तुविस्तारवारकं ज्ञानमीरितम् ॥ ३ ॥
ज्ञानादासाद्यते मुक्तिर्ज्ञानात् स्वर्गोद्भवं सुखम् ॥ लभन्ते प्राणिनो यस्मात्, तज्ज्ञानं स्वर्द्रुमोपमम् ॥ ४ ॥
भव्यैरासाद्यते ज्ञानं, पञ्चम्याराधनाद् ध्रुवम् । अतः प्रमादमुत्सृज्याऽऽराध्या सा विधिना तथा ॥ ५ ॥
मञ्जरीवरदत्ताभ्यां, यथैवाराधिता किल । पञ्चमी भावतोऽथात्र दृष्टान्तः प्रोच्यते तयोः ॥ ६ ॥ युग्मम् ॥

अस्त्यत्र जम्बूद्वीपे दक्षिणार्धभरतक्षेत्रे पद्मपुराभिधं नगरम्, तत्र भुवि विश्रुतोऽजितसेनो नृपो बभूव, तस्य च यशोमती पट्टराज्ञी,

# अनुक्रमणिका

श्रीसुमति साहित्य माला—१६

पाठकावतंसश्रीमत्क्षमाकल्याणोपाध्यायादिविरचितः

# श्रीसौभाग्य-पञ्चम्यादि-पर्वकथा-संग्रहः ।

संशोधकः—मुनि-विनयसागर साहित्यरत्न

प्रकाशकः—

श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय कोटा.

वीर स० २४७५ ] मूल्यम् २॥) सार्द्धद्वौरूप्यकम् [ वि० सं० २००६

# इति श्रीसौभाग्यपञ्चम्यादि पर्वकथा संग्रहः

पुस्तकें मिलने का पताः—
श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय
जैन प्रिंटिंग प्रेस
कोटा ( राज. )

॥१२४॥

२ ईंधन के काम आने वाली सूखी हुई पतली-पतली व छोटी-छोटी काटेदार टहनिया या टहनियो का समूह ।

झुरको-स०पु०—ऊँट की चाल विशेष । उ०—वटाऊ वैठा आड पिलाण, ऊठडा मारग झुरकै जाय । सुणीजै फुरणी मूरी ढील, मोद सू मूमल-रूप सराय ।—साझ

झुरटियौ-स०पु०—नखक्षत, खरोच (अल्पा.)

झुरडणौ, झुरडवौ क्रि०स०—१ नाखूनो से खुजली मिटाने के लिये हाथ को वार-बार शरीर पर फेरना २ खरोचना, कुरेदना ३ वृक्ष की टहनी को हाथ मे पकड कर उसके पत्ते सूंत लेना, हाथ की रगड से पत्तिया दूर करना. ४ किसी को तग करना, कष्ट पहुँचाना ।

झुरडणहार, हारौ (हारी), झुरडणियौ—वि० ।

झुरडिग्रोडौ, झुरडियोडौ, झुरडयोडौ—भू०का०कृ० ।

झुरडीजणौ, झुरडीजवौ—कर्म वा० ।

झुरडियोडौ-भू०का०कृ०—१ नाखूनो से खुजली मिटाने के लिये हाथ को वार-वार शरीर पर फेरा हुआ. २ खरोचा हुआ, कुरेदा हुआ. ३ हाथ की रगड से टहनी की पत्तिया दूर किया हुआ. ४ किसी को तग किया हुआ, कष्ट पहुँचाया हुआ ।

(स्त्री० झुरडियोडी)

झुरणी—देखो 'झुरनी' (रू भे)

झुरणौ-स०पु०—वियोगजनित दुःख, विलाप, रुदन ।

उ०—इसडा तौ झुरणा ये जीण सगती झुरती, गई गई कोस दोय च्यार ।—लो गी

झुरणौ, झुरवौ-क्रि०अ०स०—१ बहुत दुखी होना, शोक करना ।

उ०—१ झुरै इम रगरेजणी, कूडा ठाकुर काय । वसन सती घणा रगता, दीधी आस छुडाय ।—वी स

उ०—२ मारू जाता चाकरी, करग्या कोल करार । सावण सुरगी तीज नै, आवाणो घर-नार । सावण सुरगौ वीतग्यौ, गयी रे नुहेली तीज, पिव विन झुर झुर मैं मरू, उभळै म्हारौ हीव ।—लो गी.

२ वेचैन होना, विकल होना । उ०—जिणि दीहे पाळउ पडइ, टापर तुरी सहाइ । तिणि रिति वूढी ही झुरइ, तरुणी केम रहाइ । —ढो मा

३ विलखना, सुबकना । उ०—इहि जोडा उणिहार, जणणी फिर जाया नही । निकमी नाजुक नार, झुरती रैंगी जेठवा ।—जेठवा

४ रुदन करना, विलाप करना, प्रलाप करना ।

उ०—१ निरखै मिळै झुरै रघुनायक, सुण सुण वायक सारा । जोवा अमर विया जड जगम, व्याकुळ हुआ विचारा ।—र रू.

उ०—२ पडी चाकरी चूक धणी जद धणौ रिसायौ । झुरती कामण छोड रामगिरि यक्ष सिधायौ । जनक सुता रै स्नान जेय रौ निरमळ पाणी । गहरी विरछा-छाह जाय न कदै वखाणी ।—मेघ

उ०—३ झुरै म्रिगनयणी झुरै, मेह तणी रुत मोरा । जोगण पूठ दिया सायजादी, घूमर ऊपर घोरा ।—अमरसिंह राठौड री वात

५ कल्पना, आंसू वहाना ।

६ रोग, अधिक परिश्रम या वहुत अ[illegible] होना, दुर्वल होना, घुलना । उ०—[illegible] रह्यौ परदेम । झुर-झुर नै पींजर हुई[illegible]

उ०—२ ईंयै गोरवधियै रै कारणै[illegible] रे, म्हारौ गोरवध लूवाळौ ।—लो.गी[illegible]

७ झूमना, लटकना । उ०—सावण[illegible] वाड । चातक झुर रह्यौ मेघ नै, पिव[illegible]

८ याद करना, स्मरण करना । उ[illegible] हजारा, रीझा दियण सिरै दोय राह[illegible] पाड लियौ दिखण्या पतसाह ।—महा[illegible]

उ०—२ वीणा जंतर तार, थे छेडच[illegible] गवार, जात न झीकू जेठवा ।—जेठव[illegible]

उ०—३ ना घर आवै पीवजी, वीर[illegible] कामणी, जाडौ जहर लखात ।—लो[illegible]

झुरणहार, हारौ (हारी), झुरणियौ[illegible]

झुरवाड़णौ, झुरवाडवौ, झुरवाणौ, [illegible]

झुराडणौ, झुराडवौ, झुराणौ, झुराव[illegible]

झुरिग्रोडौ, झुरियोडौ, झुरयोडौ—[illegible]

झुरीजणौ, झुरीजवौ—भाव वा०, [illegible]

झूरणौ, झूरवौ—रू०भे० ।

झुरनी-स०स्त्री०—१ प्रायः किशोराव[illegible] टहनियो से झूम-झूम कर पृथ्वी पर [illegible] जाने वाला एक खेल. २ इस खेल [illegible] का एक डडा ।

क्रि०प्र०—आणी, खेलणी, दैणी, [illegible]

रू०भे०—झुरणी ।

झुरमट—देखो 'झुरमुट' (रू भे.)

झुरमटियौ—देखो 'झुरमुट' (अल्पा, र[illegible]

झुरमुट-स०पु०—१ झाड, पत्ते, लता[illegible] जिससे कोई स्थान ढक जाय किन्तु [illegible] रहे २ झुड, समूह (मा म) ३ [illegible] शरीर को चारो ओर से ढक या छि[illegible]

रू०भे०—झुरमट ।

अल्पा०—झुरमटियौ, झुरमुटियौ ।

झुरमुटियौ—दे[illegible] [illegible]ुट' (अल्पा र[illegible]

झुररी-स०स्त्री०—[illegible]किसी वस्तु पर [illegible] शिकन ।

झुरगौ-स०पु०—नेत्रो के आंसू ।

# इति श्रीसौभाग्यपञ्चम्यादि पर्वकथा संग्रहः

पुस्तकें मिलने का पताः—
श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय
जैन प्रिंटिंग प्रेस
कोटा ( राज. )

॥१२४॥

# श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय

## से प्रकाशित सस्ती-सुन्दर और मनोहर पुस्तकें:—

| | |
|---|---|
| ६. बृहत्पर्युषणा निर्णय | भेंट |
| ७. षट् कल्याणक निर्णय | ,, |
| ८. आत्मभ्रमोच्छेदनभानुः | ,, |
| १०. आगमानुसार मुहपत्तिका निर्णय | ,, |
| १३. कल्पसूत्र हिन्दी भावार्थ | ३) |
| १४. दसवैकालिक सूत्र-मूल-मूलार्थ | १) |
| १६. संस्कृत पर्वकथा संग्रहः | २॥) |
| १७. अनुत्तरोववाई सूत्र मूल-मूलार्थ | भेंट |
| २२. उपासकदशांग सूत्र-मूल-मूलार्थ, टीका-टीकार्थ | २) |
| २५. गौतमपृच्छासार | भेंट |
| २८. चतुर्विंशति जिनेन्द्र स्तवनानि | ,, |
| २९. सामायिक जिनदर्शन विधिः | ,, |
| ३०. चतुर्विंशति जिनस्तुतिः | ,, |
| ३१. राईदेवसी प्रतिक्रमणमूल | ,, |
| ३३. आत्म भावना | ,, |
| ३४. भावारिवारणपादपूर्त्यादि स्तोत्र संग्रहः | ,, |
| ३५. श्रीनेमिदूतम् | १॥) |
| द्वादश पर्व व्याख्यान | २) |

॥१२३॥

पुत्रिका अभूवन्, ता महारूपवत्यो गुणवत्यश्चासन्, एकदा वनमध्ये क्रीडन्त्यस्ता गुरुभिः दृष्टा, आलापिताश्च-भो पुत्र्यः ! यूयं धर्मं कुरुध्वम्, युष्माकमायुरेकदिनप्रमाणमेव विद्यते. ताभिरुक्तम्-हे भगवन् ! एकदिनमध्ये को धर्मो भविष्यति, तदा गुरुभिरुक्तम्-यूयमद्य शुक्लज्ञानपंचमीतपः कुरुध्वम्, अद्यैव दिने पंचम्या उपवासं कृत्वा गृहे देवपूजां च कृत्वा पुण्यस्यानुमोदना कुरुध्वम्, ताभिरपि गृहे गत्वा तथैव कृतम्. अथ तस्मिन्नेव रात्रौ विद्युत्पाताच्चतस्रोऽपि मृत्वा प्रथमदेवलोके देवा जाताः, ततश्च्युत्वा तवैताः पुत्र्यः संजाता। अथ ताः सर्वा वार्ताः श्रुत्वा राजा जातिस्मरणं लब्ध्वा सपरिवारो रूप्यकुम्भ-स्वर्णकुम्भगुरूं नत्वा निजगृहे समागतः। कियत्कालानन्तरं राजा राज्ञी पुत्राः पुत्र्यश्च श्रीवासुपूज्यप्रभोः समीपे दीक्षां गृहीत्वा कर्मक्षयं च कृत्वा मोक्षं गताः। उक्तं च-

रोहिणीतप-पंचमीतप, गुरुआ ए तप जाणी। दुःखित होय करी सुखी होवे, बोले केवलनाणी ॥ १ ॥

॥ इति रोहिणी-अशोकराजकथा सम्पूर्णा ॥ १२ ॥

## इति श्रीपर्वकथा संग्रहः।

दुःखं न वेत्ति, पुनर्हे अशोकराजेन्द्र ! अस्या उपरि तवाधिकः स्नेहः कुतो वर्तते ? तस्यापि कारणं शृणु--सिंहसेननामा नृपतिः स्वयं सुगन्धाख्यं पुत्रं राज्येऽभिषिच्य सुगुरोःपार्श्वे दीक्षां ललौ, अथ सुगन्धराजोऽपि जिनशासनमाराध्य प्रान्ते समाधिना मृत्वा देवभवं गतः. ततश्च्युत्वा इहैव जम्बूद्वीपे विदेहे पुष्कलावत्यां विजये पुण्डरीकिणीनगर्यां विमलकीर्तिराज्ञः सुभद्राख्यायाः सधर्मिण्याः कुक्षौ चतुर्दशमहास्वप्नसूचितः स देवजीवोऽवातरत् । अथ क्रमेण शुभेऽह्नि सा देवी शुभलक्षणं पुत्रं प्रासूत, तस्य पित्रा अर्ककीर्तिरिति नाम निर्मिमृत, क्रमेण स चक्रवर्ती जातः, राज्यं भुंक्त्वा जितशत्रुमुनेः पार्श्वे स दीक्षामादाय दुष्करं तपस्तप्त्वा स्वायुः-क्षये च मृत्वा द्वादशे देवलोकेऽच्युतेन्द्रोऽभूत्. ततश्च्युत्वा त्वमयमशोकराजा जातः, रोहिण्याश्च वल्लभोऽभूः, युवाभ्यां रोहिणीतपःकरणाद् युवयोः परस्परमधिकः स्नेहो जातः अथ त्वं पुत्राणां कारणं शृणु—मथुरायामग्निशर्माख्यो ब्राह्मणो वसति, तस्य सप्त पुत्राः परं ते दरिद्रिणः । एकदा पाटलीनगरे ते सप्ताऽपि भ्रातरो भिक्षार्थं गच्छन्ति, तदा वाटिकामध्ये कश्चिद् राजकुमारः कन्दर्पावतारः क्रीडति. तं दृष्ट्वा शिवशर्मा ब्राह्मणः स्वबान्धवान् वक्ति-भो बान्धवाः ! विधिना कियदन्तरं कृतमस्ति, अयं राजकुमारो मनोवाञ्छितं सुखं भुनक्ति, वयं तु भिक्षार्थं गृहे गृहे भ्रमामः, तदेकेन भ्रात्रोक्तमस्मिन् विषये कस्योपालम्भो दीयते ? पूर्वभवेऽस्माभिः पुण्यं न कृतम्, अनेन राजकुमारेण च सुकृतं कृतम्, अतोऽसौ सुखं भुनक्ति. तदा तैः सर्वैरपि ब्राह्मणपुत्रैः जीवदयायुतं धर्मं पालयित्वा प्रान्ते गुरोः पार्श्वे दीक्षा गृहीता. मृत्वा च ते सप्तमे देवलोके देवा जाताः, ततश्च्युत्वा तव गुणपालादय इमे सप्त पुत्रा अभूवन् । तवाष्टमपुत्रजीवश्च वैताढ्यवासी क्षुल्लक-विद्याधरोऽभूत् । स निरन्तरं नन्दीश्वरद्वीपे शाश्वतीं जिनप्रतिमां अपूजयत्, स विद्याधरो मृत्वा सौधर्मे देवो जातः । ततश्च्युत्वा तवायमष्टमो लोकपालाख्यः पुत्रो बभूव. अथ चतसृणां पुत्रीणां सम्बन्धं शृणु–वैताढ्यपर्वते एको विद्याधर आसीत्, तस्य चत्वारः

तदा मुनिर्वदति-सिंहपुरे सिंहसेनो राजा तस्य कनकप्रभाभिधाना राज्ञी वर्तते, तयोर्दुर्गन्धाख्यः पुत्रोऽभूत् , स क्रमेण यौवनं प्राप्तः,
परं कस्यापि मनसि न रोचते, एकदा श्रीपद्मप्रभतीर्थंकरस्तत्रागतः । तं पद्मप्रभं वन्दित्वाऽसौ निजदुर्गन्धत्वकर्मणो विपाकं पृच्छति,
तदा श्रीसर्वज्ञप्रभुः कथयति—नागोरनगराद् द्वादशे क्रोशे नीलनामा पर्वतोऽस्ति, तस्योपरि एका शिला तत्रैको मुनिर्मासक्षमणादि
तपः करोति, तत्तपःप्रभावाच्च आखेटकस्याखेटकं निष्फलं याति, तदा स लुब्धकस्तस्य मुनेरुपरि ईर्षां करोति । एकदा स ऋषिः पार-
णार्थं ग्राममध्ये प्राप्तः, तस्मिन् समये तेन लुब्धकेन शिलाया अधोऽग्निं प्रज्वाल्य सा शिला अतीवोष्णा विहिता । अथ स ऋषिः पार-
णकं विधाय शिलाया उपरि स्थितः, बहुतापात् शुद्धध्यानाच्च स ऋषिः केवलज्ञानं प्राप्य मृत्वा मोक्षं गतः, अथ ऋषिघातात् स
लुब्धकः कुष्ठी जातः, यतः—

ऋषिहत्याकरो जीवो, दुःखं भुंजाति भूतले । संसारसागरे घोरे, पीड्यते च पुनः पुनः ॥ १ ॥

पश्चात् मृत्वा स सप्तमीं नरकावनिं गत्वा ततो मत्स्यो भूत्वा गोपालो जातः, परं स दरिद्री जातः, केनचिद् वणिजा च स नम-
स्कारं शिक्षितः । पश्चाद् दावानलमध्ये ज्वलितः । नमस्कारप्रभावाच्च त्वं राज्ञः पुत्रोऽयं दुर्गन्धोऽभूः । तत्श्रुत्वा जातिस्मरणं प्राप्य
स प्रभुं पृच्छति-हे भगवन् ! कथमहमथ सुगन्धो भवामि ? तस्योपायं कृपां कृत्वा कथयत, तदा श्रीतीर्थंकरेण भणितम्—त्वं सप्त-
मासाधिकानि सप्तवर्षाणि यावद् रोहिणीतपः कुरु, पश्चाच्च तस्य तपसः उद्यापनं कुरु, तत्श्रुत्वा तेन रोहिणीतपः कृतम् , यस्य प्रभा-
वात् स सुगन्धोऽभूत् । इति कथां श्रुत्वा सा दुर्गन्धा रोहिणीतपो विधिपूर्वकं कृत्वा सुगन्धा जाता. पश्चाद् मृत्वा सा देवी अभूत्. तत-
श्च्युत्वा चम्पायां श्रीवासुपूज्यस्य मघवापुत्रस्य पुत्रिकेयं रोहिणी नाम्नी तव राज्ञी जाता, पूर्वभवकृततपःप्रभावाद् इयमाजन्म यावद्

तीर्थं पुण्यपात्रमस्ति, तस्य दर्शनमपि महते पुण्याय. यत उक्तम्—

साधूनां दर्शनं पुण्यं, तीर्थभूता हि साधवः। तीर्थं फलति कालेन, सद्यः साधुसमागमः ॥ १ ॥

तदस्मै निःस्पृहाय मुनिसत्तमाय दत्तं दानं महते फलाय भवेद्, इति ध्यात्वा राजा स्वप्रियां प्राह–हे वरानने ! अस्मै मुनये वलित्वा दानं देहि, तत्श्रुत्वा क्रीडान्तरायं मत्वा बहिःप्रमोदभाग् अन्तश्च दुष्टा मा गृहं प्रति वचले, आगत्य गृहे द्वेषवशात् तथा कटुतुम्बिकाशाकं मुनये दत्तम्, मुनिना तेनाहारेण पारणकं कृतम्, तद्भक्षणाच्च मुनिः पंचत्वं प्राप्तः शुभध्यानाच्च स देवलोके देवोऽभूत्, तां वार्ता श्रुत्वा राज्ञा राज्ञी स्वदेशतो निष्कासिता, सा सप्तमे दिने वराकी कुष्ठिनी जाता, चिरं जनैर्निन्द्यमाना सा मृत्वा षष्ठं नरकं जगाम। तत उद्धृत्य तिरश्चां योनौ समुत्पन्ना, ततो दुःखप्रचुरे सप्तमे नरके. एवं सर्वेषु नरकेषु सा पापा भ्रान्ता, ततः सा सर्पिणी, उष्ट्री, शृगाली, कुक्कुटी, तथा शूकरी, ततो गृहगोधा, जलौका, मूषिका, काकी, शुनी, बिलाडी, ततो रासभी, ततो गौः जाता तेषु भवेषु प्रायशः अग्निशस्त्रघाताद्यैः मृतिरभूद्, धेनुभवे स्वान्त्यसमये गुरूदितं नमस्कारं श्रुत्वाऽनुमोदयामास, मृतिं चाप, ततो नमस्कारप्रभावेण सा दुर्गन्धा दुर्भगा च तव तनया अभूत्। ततो दुर्गन्धा निजपूर्वभवं श्रुत्वा करौ योजयित्वा पृच्छति–हे स्वामिन् ! एतस्माद् दुःखादहं कथं निःसरिष्यामि ? तत् कथ्यतां. तदा मुनिना उक्तम्–त्वं दुःखभंजकं रोहिण्या व्रतं कुरु, तयोक्तम्–हे भगवन् ! केन विधिनाहं तद्व्रतं करोमि, मुनिनोक्तम्, शृणु—रोहिणीनक्षत्रदिने श्री वासुपूज्यजिनबिम्बं पूजयित्वा सप्तमासाधिकं सप्तवर्षं यावद् उपवासं कुरु एवं शुभध्यानयुततपःप्रभावात्तव शुभं भविष्यति, पश्चाच्च त्वया तत्तपस उद्यापनं विधेयं येन तव सर्वं दुःखं यास्यति, सुगन्धराजवत्. तत्श्रुत्वा दुर्गन्धा मुनिं प्रति पृच्छति–हे भगवन् ! तस्य सुगन्धराजस्य वृतान्तं मयि कृपां विधाय कथयत,

लोकपालाख्यं राजा निजहस्तेन भूमावपातयत् । तदा तत्रस्थाः सर्वेजनास्तं तथा पतन्तं दृष्ट्वा हाहारवं कर्तुं लग्नाः परं रोहिण्या हृदि किंचिन्मात्रमपि दुःखं न जातम्, इतस्तं पतन्तं बालकं नगराधिष्ठितदेवेन धृत्वा सिंहासने स स्थापितः, तद् दृष्ट्वा सर्वे जनाश्चमत्कृताः सन्तो विचारयामासुः-नूनमियं रोहिणी धन्यैव या दुःखस्य वार्तामपि न जानाति ।

इतश्च तत्र श्रीवासुपूज्यतीर्थंकरस्य रूप्यकुम्भ-स्वर्णकुम्भनामानौ द्वौ शिष्यौ ज्ञानवन्तौ समागतौ, तदा राजा परिवारयुतस्तौ वन्दितुं गतः, गुरुभ्यां च देशना दत्ता, देशनाश्रवणानन्तरं राज्ञा पृष्टम्-भो भगवन् ! अनया रोहिण्यैवंविधं किं तपः कृतं येनेयं दुःखस्य वार्तामपि न जानाति, एतस्या अष्टौ पुत्राः चतस्रश्च पुत्र्यो जाताः सन्ति, तथा ममापि तस्या उपरि-अतीव स्नेहो वर्तते, अतः तस्याः कथां युवां कृपां विधाय कथयतम्, तत्श्रुत्वा गुरुः कथयति. अस्मिन्नेव नगरे धनमित्रनामा श्रेष्ठी वसति, तस्य धनमित्रा नाम्नी च भार्याऽस्ति, तस्या एका दुर्गन्धा नाम्नी पुत्री, सा कुरूपा दुर्भगा च जाता एवंविधां तां कुरूपां दृष्ट्वा कोऽपि द्रव्येश्वरो नो परिणयति, तदा पित्रा एकं मार्यमाणं श्रीषेणाभिधं चौरं मोचयित्वा तस्या दुर्गन्धायाः स स्वामीकृतः, सोऽपि रात्रौ दुर्गन्धां त्यक्त्वा नष्ट्वा गतः, तदा श्रेष्ठी विषादं करोति, विलपन्तीं पुत्रीं प्रति श्रेष्ठी कथयति, हे पुत्रि ! त्वं विलापं मा कुरु, गृहद्वारि स्थिता दानं देहि धर्मं च कुरु येन तव दुष्कर्मदोषः प्रलीयते, अथ सा तदंगीकृत्य प्रत्यहं दानं ददाति । अथैकदा कश्चिद् ज्ञानी गुरुस्तत्र समागतः, तदा धनमित्रेण तं गुरुं वन्दित्वा तस्याः कन्यायाः स्वरूपं पृष्टम्. गुरुर्भणति-गिरिनारनगरे पृथिवीपालाभिधो राजाऽऽसीत्, तस्य सिद्धिमत्यभिधाना राज्ञी वर्तते, अथैकदा स राजा निजराज्ञीसहितो वने क्रीडां कर्तुं याति, तस्मिन् समये कश्चिद् मासक्षमणपारणकः सागरनामा मुनिः समागच्छति, भिक्षार्थमायान्तं मुनिं सागरं ऐक्षिष्ट, दृष्ट्वा विचारयति-एष साधुर्गुणाकरो महा-

च जाता। अथ क्रमेण यौवनावस्थां प्राप्ता, ईदृशीं तां दृष्ट्वा राजा चिन्तयति-नूनमियं रोहिणी वरयोग्या जाताऽस्ति. अथ राज्ञा
स्वयंवरमण्डपं मण्डयित्वा सर्वेऽपि राजकुमारा आकारिताः तेऽपि च मण्डपे समागत्य स्थिताः। तस्मिन्नवसरे रोहिण्यपि स्नानं विलेपनं
च कृत्वा क्षीरोदकसदृशे श्वेतवस्त्रे परिधाय मुक्ताभरणैरलंकृता साक्षाद् देवीव शिबिकायां स्थित्वा सखीभिः परिवृता तत्रागता।
अथैका सखी तां रोहिणीं पुरस्कृत्य तस्या अग्रे राजकुमाराणां नाम-गोत्र-बल-वयो-यशः-प्रभृतीनां वर्णनं करोति। अथ तयाऽन्यानपि
राजकुमारान् वर्जयित्वा नागपुरराज्ञो वीतशोकस्य पुत्रोऽशोककुमाराभिधो वृतः, तस्य कण्ठे च तस्या निजवरमाला क्षिप्ता, ततोऽन्ये सर्वेऽपि
राजकुमाराः सहर्षा मिलित्वा तां च तया सह विवाह्य ततो भोजन-वस्त्र-ताम्बूलादि गृहीत्वा स्वस्वगृहे गताः। अशोककुमारोऽपि तत्र
कतिचिद् दिनानि स्थित्वा सवधूको हस्त्यश्ववस्त्राभरणादियुतः प्रस्थाय नागपुरसमीपे समागतः। तदा वीतशोकराज्ञा तस्य पुरप्रवेश-
महोत्सवः कृतः। कुमारोऽपि रोहिण्या सह विषयसुखानि भुनक्ति। अथैकदा शुभे दिनेऽशोककुमाराय राज्यं दत्त्वा वीतशोको राजा
दीक्षां गृहीतवान्। ततोऽशोकराजा सुखेन राज्यं पालयति। क्रमेण अशोकराज्ञोऽष्टौ पुत्राश्चतस्रश्च पुत्रिका जाताः। अथैकदा रोहिण्या
सहितो राजा सप्तम्यां भूम्यां गवाक्षे स्थितो लोकपालाख्यं पुत्रमुत्संगे धृत्वा क्रीडयति। तस्मिन् समये नगरे कस्याश्चित् स्त्रियः पुत्रो
मृतः। सा स्त्री रुदती विलापांश्च कुर्वती तस्मिन् मार्गे समागता। तां दृष्ट्वा रोहिण्या राज्ञे पृष्टम्-भो महाराज! किमिदं नृत्यम्?
राजा जगाद-हे प्रिये! त्वं साहंकारं वचनं मा ब्रूहि, रोहिण्योक्तम्-स्वामिन्नहमहंकारं न करोमि, एवंविधं नृत्यं मया कदापि न दृष्ट-
मतोऽहं पृच्छामि। तदा राज्ञोक्तम्-एतस्याः स्त्रियः पुत्रो मृतोऽस्ति, अतएवेयं रोदनं करोति। रोहिण्योक्तम्-स्वामिन्! अस्यै रोदनं
केन शिक्षितं भवेत्?, तत् श्रुत्वा राज्ञोक्तम्-त्वाम्प्यहं रोदनं शिक्षयामि। इत्युक्त्वा रोहिण्युत्संगस्थं तस्या लघीयांसं पुत्रं

वाचानाचार्यवर्यस्य, रामचन्द्रगणेर्मुदा । शिष्येणाऽऽजिमगंजे च चतुर्मासीस्थितेन वै ॥ ४ ॥
पाठकमेदचन्द्रेण, रायमल्लकवेर्मुदा । पठनार्थमिदं रम्यं, कृतं शुभतराशया ॥ ५ ॥ युग्मम् ।

॥ इति श्रीदीपमालिकाव्याख्यानं सम्पूर्णम् ॥ ११ ॥

## अथ रोहिणी व्याख्यानं प्रारभ्यते ॥ १२ ॥



उच्छिट्ठमसुन्दरयं, भत्तं तह पाणियं च जो देइ । साहूणं जाणमाणो, भुत्तं पि न जिज्जए तस्स ॥ १ ॥

व्याख्या—यो जीव उच्छिष्टमसुंदरं च भक्तं तथा पानीयं जानन् सन साधुभ्यो ददाति, तस्य भुक्तमप्यन्नं न जीर्यते, तस्य शरीरेऽजीर्णरोगो भवति, यथा—श्रीवासुपूज्यस्य मघवाभिधपुत्रस्य पुत्रिकाया रोहिण्या जीवः पूर्वभवे दुर्गन्धाभिधाना कुष्ठिनी जाता, साधोः कटुतुंबकाहारदानात् ॥ १ ॥ रोहिणीकथा चेत्थं—

श्रीवासुपूज्यमानम्य, तथा पुण्यप्रकाशकम् । रोहिण्याश्च कथायुक्तं, रोहिणीव्रतमुच्यते ॥ १ ॥

श्रीचंपानगर्यां श्रीवासुपूज्यस्य पुत्रो मघवाभिधो राजा राज्यं करोति, तस्य लक्ष्मी नाम्नी राज्ञी सुशीला सदाचारा च वर्त्तते, तस्या अष्टौ पुत्राः सन्ति, अष्टानां पुत्राणामुपर्येका रोहिणी नाम्नी पुत्री वर्त्तते, सा चतुःषष्टिकलावती रूपलावण्यवती सौभाग्यगुणवती

तद्रात्रौ भावोद्योतो गतः, ततो लोकैरुद्योतकरणार्थं स्वस्वगृहे रत्नमयी दीपमालिका कृता, तद्दिनाद् लोकमध्ये दीपमालिकापर्वणः प्रसिद्धिर्जाता। अथ यद्रात्रौ वीरप्रभुर्मुक्तिं गतः, तदा समस्तसंघ उद्विग्नः स्थितः, संघस्य मुखाब्जं म्लानतां गतम्, तस्मिन् समये गौतमस्वामिनः केवलज्ञानमुत्पन्नं तदा समस्तोऽपि संघो हृष्टो जातः। इन्द्रः प्रभोर्निर्वाणोत्सवं कृत्वा प्रभोर्देहसंस्कारं करोति, ततः केचिद् देवाः प्रभोर्दंष्ट्रां लात्वा गच्छन्ति, केचिद् देवा दन्तान् गृह्णन्ति, केचिद् भस्म गृह्णन्ति, शेषं क्षीरसमुद्रे प्रवाहयंति, पश्चात् प्रातःकाले गौतमस्वामिनः केवलज्ञानमहोत्सवं कृत्वा सर्वे देवाः संभूय नन्दीश्वरद्वीपेऽष्टाह्निकं महोत्सवं कृत्वा स्वस्मिन् स्वस्मिन् स्थाने गच्छन्ति। अथ द्वितीयादिने सुदर्शना भगिनी शोकदूरीकरणार्थं नन्दिवर्धनं स्वगृहे भोजनं कारयति, तस्माद् एषा द्वितीया 'भाईबीज' इति प्रसिद्धिं प्राप्ता। प्रथमं लोकै रत्नमया दीपाः कृताः पश्चाल्लोकै रूप्यमयाः कृताः। अथ पंचमकालप्रभावतो मृत्तिकामया दीपाः कुर्वन्ति। एवमार्यसुहस्तिसूरिर्वक्ति–हे संप्रते! इदं दीपमालिकापर्व सर्वेषामुत्तमं कथितम्, यथा वृक्षाणां मध्ये कल्पवृक्षः, देवानां मध्ये इन्द्रः, राज्ञां मध्ये चक्रवर्ती, नक्षत्राणां मध्ये चन्द्रमाः, तेजस्विनां मध्ये सूर्यः, सर्वधातूनां मध्ये सुवर्णम्, काष्ठमध्ये चन्दनम्, वनमध्ये नन्दनवनं तथा सर्वपर्वणां मध्ये दीपमालिकापर्व। अस्मिन् दिने श्रीवीरप्रभुर्मुक्तिं गतः, पुनः श्रीगौतमस्य केवलज्ञानमुत्पन्नम् अतो हे राजन्! इदं दीपमालिकापर्व सिद्धिदायकं भवतु।

षणन्दवसुचन्द्राब्दे (१८९६), ज्येष्ठमासे सिते दले। चन्द्रघस्रे त्रयोदश्यां, साध्ययोगे हितावहे ॥ १ ॥
दीपालिपर्वणो व्याख्या, गद्यबन्धेन निर्मिता। अपशब्दादिदोषश्चेत्, शोधनीयः सदा बुधैः ॥ २ ॥
स्वच्छे खरतरे गच्छे, श्रीसौभाग्यगणाधिपे। धर्मराज्यं कलावर्यें, प्रकुर्वति सुविस्तरे ॥ ३ ॥

अमावास्यादिने उपवाससहिताः पौषधव्रतमङ्गीकृतवन्तः तद्रात्रौ भावोद्योततीर्थंकररहितं दृष्ट्वा तै राजाभिः स्वकीयगृहाद् रत्नान्याना-
य्य द्रव्योद्योतः कृतः, पौषधः पारितः, यद्रात्रौ तीर्थंकरो मुक्तिं गतस्तद्रात्रौ देवानां गमनागमनेन महानुद्योतः संजातः, अस्मिन्नवसरे
देवानां मुखाद् वीरप्रभुमोक्षगमनं श्रुत्वा श्रीगौतमस्वामी मनसि चिन्तितवान् " अहो ! भगवता मत्तश्छलं कृतं स्वस्य मुक्तिं ज्ञात्वा
अहं दूरीकृतः, ज्ञातं भगवता मम पार्श्वे केवलज्ञानं मार्गयिष्यति, बालवत् कदाग्रहं करिष्यति, वस्त्राञ्चलं गृहीत्वा स्थास्यति, हे स्वा-
मिन् ! मया ईदृग् लोभी त्वं न ज्ञातः, केवलज्ञाने दत्ते तु भवतां किमपि न न्यूनमभविष्यत्, हे स्वामिन् ! तवाहं परमसेवकोऽभूवम्,
मां निराशं त्यक्त्वा गतः, हे भगवन् ! महतामेषा वार्ता न युक्ता, हे प्रभो ! बलाद् भवतोऽहं केवलज्ञानं नालप्स्यम् भवता दत्तमेव
केवलज्ञानमंग्यकरिष्यम्, तथापि हे स्वामिन् ! अस्मिन्नवसरे अन्तसमये स्वसमीपे रक्षणं युक्तमभूद्, अस्मिन्नवसरे मम प्रेषणं तव
न युक्तम्, पुनर्हे प्रभो ! मम केवलज्ञानस्य तृष्णा नासीत्, भवतां दर्शनस्य तृष्णा जाताऽभूत्, अधुना तव दर्शनमपि मम दूरी-
भूतम्, हे स्वामिन् ! अथाहं कस्य वीर ! इति कथयिष्यामि, मम मनःसंदेहं कस्य समीपे पृच्छाविषये करिष्यामि, को मम सन्देहं
भंक्ष्यति, हे स्वामिन् ! पुनर्मम हे गौतम ! हे गौतम ! इति कः कथयिष्यति ?" एवं विलापं कुर्वन् मनसि विचारयति-रे जीव !
वराक ! त्वं ग्रथिलो जातः, स तु नीरागी त्वं तु सरागी, वीतरागेण रागकरणं न युक्तम्, एकांगिप्रीतिकरणे दीपे पतंगवद् दुःखी
भविष्यति, यस्य नाम वीतरागः स कस्मिन् रागं करोति स भगवान् स्वस्य वीतरागं हि नाम सत्यं कृतवान्, अहमज्ञासिषं भगवान्
मम नाम पुनः पुनः ब्रूते तर्हि ममोपरि रागं रक्षति, परमाश्विनमेघाडम्बरवद् अन्तं दत्त्वा गतः स क्व अहं क्व कस्य कोऽपि नास्ति,
एवं मोहनीयं निराकृत्य क्षीणमोहं गुणस्थानकं गत्वा तत्कालमेव श्रीगौतमस्य केवलज्ञानमुत्पन्नम् । अथ यद्रात्रौ प्रभुर्मुक्तिं गतः

पक्षे, उपशमदिने, देवानन्दानाम्न्यां रात्रौ, सर्वार्थसिद्धिमुहूर्त्ते, नागे करणे, पद्मासने स्थिते तुर्यारकान्ते एतत्समये इन्द्रासनं चकम्पे, अवधिज्ञानेन हरिः प्रभोर्निर्वाणकल्याणसमयं ज्ञात्वा आगच्छति, अत्यन्तमश्रुपूर्णाक्षो विषण्णश्च सन् हस्तौ संयोज्य वक्ति—

गर्भे जन्मनि दीक्षायां, केवले च तव प्रभो ! । हस्तोत्तरं क्षणेऽधुना, तद्गन्ता भस्मको ग्रहः ॥ १ ॥

अतो हे स्वामिन् ! करुणानिधान ! एकक्षणमात्रमायुर्वृद्धिं स्वस्य कुरु, किं कारणम् ? भवतो जन्मराशेरुपरि भस्मग्रह आगतोऽस्ति स द्विसहस्रवर्षं यावत् स्थास्यति, अतो जिनशासनस्य पूजा प्रभावना मन्दा भविष्यति, तेन हेतुना आयुर्दीर्घं कुरुष्व, भवतो दृष्टिपातस्तस्य तेजो निष्फलं यास्यति, तदा भगवान् वक्ति–हे इन्द्र ! एषा वार्ता कदाऽपि नाऽभूत्, न भवति, न चापि भविष्यति, यदायुर्दीर्घतरं भवति, पुनर्भाविपदार्थस्य नाशो नास्ति, तदुत्तीर्णे तु देवा अपि दर्शनं दास्यन्ति, विद्यामन्त्राणि चाल्पेन जापेन प्रभावं दर्शयिष्यन्ति, जातिस्मरणादिभावाः किंचित् प्रकटयिष्यन्ति, तदनन्तरमेकोनविंशतिसहस्रवर्षं यावद् जिनधर्मो वर्तिष्यति, दुःषमकालपर्यन्तम्, एवं कथयित्वा स्थितः, स्वस्य निर्वाणं समीपं ज्ञात्वा पुण्यफलविपाकानि पञ्चपञ्चाशदध्ययनानि तथा पापफलविपाकानि पञ्चपंचाशदध्ययनानि च जगाद, तथा षट्त्रिंशदपृष्टव्याकरणादि [उत्तराध्ययनसूत्राऽध्ययनानि] चाभिधाय प्रधानं नामाध्ययनं[ मरुदेवाऽध्ययनं ] जगद्गुरुरकथयत्, पुनः स्वामिनो मोक्षं समीपे विज्ञाय आसनप्रकम्पतस्तत्र सुराऽसुरेन्द्राः सपरिच्छदाः सर्वेऽपि ईयुः ॥ अथ प्रभुः शैलेशीकरणं कृत्वा पञ्चह्रस्वाक्षरोच्चारमितकालेन तुर्येण ध्यानेन एरण्डफलवद् बन्धाभावाद् ऊर्ध्वगतिः सन् यथास्वभावऋजुगत्या मोक्षमुपाययौ । तस्मिन् समयेऽनुद्धरिककुन्थुराशिः समुत्पन्ना, तदा बहुसाधुभिर्विचारितम्–'अद्यदिनादारभ्य संयमो दुराराध्यो भविष्यति' इति ज्ञात्वाऽनशनं कृतम्, तस्मिन् दिने नवमल्लकि–नवलेच्छकिजातीयाः काशी–कोशलदेशपतयोऽष्टादश गणराजानः

भविष्यन्ति, एकस्तीर्थंकरः, एकश्चक्रवर्ती, एवं द्वौ चतुर्थारके भविष्यतः, द्वयोश्चतुरशीति-पूर्वलक्षवर्षायुर्भविष्यति, ततः कल्पवृक्षोत्पत्तिर्भविष्यति सर्वे युगलिका भविष्यन्ति. पाश्चात्यचतुर्विंशतितमजिनस्याग्रतनप्रथमजिनस्याष्टादशकोटाकोटिसागरोपमानामन्तरं भविष्यति. उत्सर्पिणी, अवसर्पिणीकाले एकत्रीकृते एकं कालचक्रं भवति, तानि कालचक्राणि अनन्तानि गतानि, पुनरस्मिन् भरतक्षेत्रे अग्रेऽनन्तानि कालचक्राणि भविष्यन्ति, एवं श्रीवर्धमानः प्रभुर्गौतमस्य कालस्वरूपं निरूप्य समवसरणाद् निर्ययौ, हस्तिपालनरेन्द्रस्य शुल्कशालायां च जगाम ॥ स्वामी तद्दिनयामिन्यां आत्मनो मोक्षं विदित्वा दध्यौ-अहो ! गौतमस्य मयि स्नेहोऽधिकः, य एवास्य महात्मनः केवलज्ञानान्तरायः, स छेद्य इति विज्ञाय गौतममिति जगाद-अपरस्मिन् ग्रामे देवशर्मा द्विजोऽस्ति, स त्वया प्रतिबोधं प्राप्स्यति, तस्मात् तत्र हे गौतम ? त्वं गच्छ. हे स्वामिन् ! आदेशः प्रमाणमित्युक्त्वा प्रणम्य च गौतमस्तत्र गच्छति. अथ प्रभोः परिवारं वदति-स्वहस्तदीक्षिताः साधवश्चतुर्दशसहस्र ( १४००० ) प्रमाणा अभूवन्, षट्त्रिंशत्सहस्र ( ३६००० ) प्रमाणाः साध्व्यश्च संजाताः, एकोनषष्टिसहस्राधिकलक्ष ( १५९००० प्रमाणाः श्राद्धाश्च संजाताः, द्विगुणाः ( ३१८००० ) श्राविका अभूवन् , चतुर्दशाधिकत्रिशत ( ३१४ ) प्रमाणाः चतुर्दश पूर्वधारिणो जाताः, त्रयोदशशत ( १३०० ) प्रमाणा अवधिज्ञानिनो जाताः, सप्तशत ( ७०० ) वैक्रियलब्धिधारिणो मुनयः संजाताः, सप्त शत ( ७०० ) केवलिनः संजाताः, पञ्चशत ( ५०० ) विपुलमतयो संजाताः, चतुःशत मिता ( ४०० ) वादिनः संजाताः, अष्टशत ( ८०० ) मिता अनुत्तरवासिनः । एवं समस्तसाधुसाध्वीसहितः श्रीवीरप्रभुः षष्ठतपोयुक्तः त्रिंशद्वर्षाणि गृहवासे तस्थौ, सार्द्धद्वादशवर्षाणि पक्षाधिकानि छद्मस्थावस्थायां स्थितः, त्रिंशद् वर्षाणि यावत् केवलिपर्याये स्थितः, एवं द्वासप्ततिवर्षाणि आयुः प्रपाल्य कार्त्तिकाऽमावास्यानिशायाः पश्चिमे क्षणे स्वातिनक्षत्रे, द्वितीये चन्द्रसंवत्सरे, प्रीतिवर्धन-

पोट्टिलाभिधः ९, दशमो शतकस्य जीवः शतकीर्तिनामा जिनेश्वरः १०, देवकीराज्ञीजीवः एकादशः सुव्रताभिधो जिनो भविष्यति ११, कृष्णवासुदेवस्य जीवः अममाख्योऽर्हन् द्वादशो भविष्यति १२, सत्यकी विद्याधरस्य जीवोऽर्हन् निष्कषायः त्रयोदशः १३, बलभद्रस्य जीवो निष्पुलाकश्चतुर्दशो भविष्यति १४, रोहिणीजीवो निर्ममः पंचदशो जिनः १५, सुलसाश्राविकाया जीवश्चित्रगुप्तो जिनः षोडशो भविष्यति १६, रेवतीश्राविकाया जीवः समाधिनामा सप्तदशो जिनो भविष्यति १७, शतालीश्रावकस्य जीवः अष्टादशोऽर्हन् संवराभिधः १८, द्वीपायनजीवः एकोनविंशोऽर्हन् यशोधरः १९, कपायस्य जीवो विजयो विंशतितमः २०, एकविंशो जिनो मल्लो यः पुरा नारदोऽभवत् २१, अम्बडस्य जीवो द्वाविंशो देव तीर्थंकरः २२, त्रयोविंशः श्राद्धरमस्य जीवोऽनन्तवीर्यो भविष्यति २३, स्वातिजीवश्चतुर्विंशो भद्रकृन्नाम तीर्थंकरो भविष्यति २४, एते आगामिकाले चतुर्विंशति तीर्थंकरा भविष्यन्ति, एषामायुः कल्याणकान्तर–लाञ्छन–वर्णाः पश्चानुपूर्व्या भविष्यन्ति, वर्तमानजिनवत्। अथ भाविनश्चक्रवर्तिनः कथ्यन्ते–दीर्घदन्तः १, गूढदंतः २, शुद्धदंतः ३, श्रीचन्द्र ४, श्रीभूतिः ५, श्रीसोमः ६, पद्मः ७, महापद्मः ८, कुसुमः ९, विमलः १०, विमलवाहनः ११, रिष्टः इत्यपरनामा भरतो द्वादशः १२। अथ वासुदेवानाह–नन्दी १, नन्दमित्रः २, सुन्दरबाहुः ३, महाबाहुः ४, अतिबलः ५, महाबलः ६, बलः ७, द्विपृष्ठः ८, त्रिपृष्ठः ९, इत्यात्मकाः। अथ प्रतिवासुदेवा उच्यन्ते–तिलकः १, लोहजंघः २, वज्रजंघः ३, केशरी ४, बली ५, प्रह्लादः ६, अपराजितः ७, भीमः ८, सुग्रीवः ९, इत्यात्मकाः। अथ बलदेवा उच्यन्ते–जयः १, विजयः २, भद्रः ३, सुप्रभः ४, सुदर्शनः ५, नन्दः ६, नंदनः ७, पद्मः ८, संकर्षणः ९, इत्यात्मकाः। एवमेते त्रिषष्टिशलाकाः * पुरुषा भविष्यन्ति, तेषां मध्ये एकषष्टि शलाकाः पुरुषास्तृतीयारके

*—प्रत्यंतरे त्रिषष्टिशलाकाः पुरुषा नामांतरेण अपि दृश्यते तत्त्वं तु ज्ञानिनो विदन्ति।

पंचत्रिंशतिदिनं यावद् मेघो वर्षिष्यति, तदा वृक्षौषधिलताधान्यप्रमुखाः स्वयं निष्पत्तिं यास्यन्ति. तान् दृष्ट्वा मनुष्या बिलेभ्यो बहिर्निःसरिष्यन्ति, भरतपृथिवी पुष्पफलादियुक्ताभूत् , तदा फलादीनि भक्षिष्यन्ति, अतः परं मांसं न भक्ष्यम्. यथा यथा काल एष्यति तथा तथा रूपसंहननायूंषि धान्यादीनि च भारते वर्धिष्यन्ति, सुखा वाताः ऋतवः सलिलाश्च भविष्यन्ति, तिर्यञ्चो मनुष्याश्च गतरोगाः क्रमेण भविष्यन्ति, द्वितीयारकप्रान्ते मध्यदेशे भरतावन्यां सप्त कुलकरा भविष्यन्ति—तत्र प्रथमो विमल-वाहनः, द्वितीयः सुदामः, तृतीयः संगमः, चतुर्थः सुपार्श्वः, पंचमो दत्तः, षष्ठः सुमुखः सप्तमः समुचिः एते सप्त कुलकरा भविष्यन्ति. तत्र जातिस्मृतिपूर्वं विमलवाहनो राज्यहेतवे ग्रामान् , पुरादीनि च निवेशयिष्यति, राजा विमलवाहनो गोऽ-श्वाहिसंग्रहं करिष्यति, शिल्पानि व्यवहारं लिपिर्गणितानि च व्यञ्जयिष्यति, दुग्धदध्यादौ शस्ये ज्वलने चोत्पन्ने सति हितकामी राजा प्रजानां रन्धनाद्युपदेशं दास्यति, एतत्सर्वं द्वितीयारके भविष्यति । अथ तृतीयारकस्य नवाधिकाशीतिपक्षे गते सति द्वारपुरनगरे सम्मुचिराज्ञो भद्रायां महादेव्यां चतुर्दशस्वप्नसूचितो नन्दनः श्रेणिकजीव आदितीर्थकृत् पद्मनाभाभिधो जन्मा-दिना महावीरतुल्यो भविष्यति, कथंभूतः पद्मनाभ ? सप्तहस्तशरीरोन्नतः काञ्चनवर्णकायः सिंहलांछनो द्वासप्ततिवर्षायुः प्रथम-तीर्थंकरो भविष्यति, अतः परं पूर्ववत् प्रातिलोम्येन पूर्वार्हत्समा अमी सर्वे क्रमाद् जिनेश्वरा भविष्यन्ति, तत्र श्रेणिकराज्ञो जीवः पद्मनाभो जिनेश्वरः १, श्रीमहावीरस्वामिनः पितृव्यः सुपार्श्वजीव : सूरदेवो द्वितीयः जिनेश्वरः २, तृतीयो कोणिकनृपपुत्र उदायिनो जीवः सुपार्श्वः ३, पोटिलाऽणगारस्य जीवः चतुर्थः स्वयंप्रभः ४, दृढायुश्रावकस्य जीवः पंचमः सर्वानुभूतिः ५, कार्तिकस्य षष्ठोऽर्हन् देवश्रुताभिधः ६, सप्तमो संवरश्रावकस्य जीव उदयाह्वयः ७, अष्टमः आनंदस्य जीवः पेढाल इति नामा ८, नवम सुनंदस्य जीवः

शिरोऽर्तिप्रमुखा मनुष्याणां महारोगा भविष्यन्ति, अंगारसदृशा भूमिर्भविष्यति, गिरि-नदी-गर्तादिका जलेन समीभविष्यन्ति, जल स्थलचारिणः तिर्यंचो दुःखेन स्थास्यन्ति, क्षेत्र-वनाऽऽराम-लता-तरु-तृणानि क्षयं यास्यन्ति, वैताढ्य-ऋषभकूट-गंगा-सिन्धूर्विमुच्य जलेन सर्वे समा भविष्यन्ति, भरतभूमिः कदाचिद् धूलिबहुला, कदाचिद् सार्द्रकर्दमा भाविष्यति, एकहस्तमानाः, कठोरांगाः, दुष्टवर्णाः निष्ठुरवचनाः, रोगार्ताः, क्रोधिनः, घण्टावच्चिपटनासिकाः, निर्लज्जाः, वस्त्ररहिता नराः स्त्रियश्च भविष्यन्ति, नराणां विंशतिवर्षायुः स्त्रीणां च षोडशवर्षायुर्भविष्यति, षड्वर्षा स्त्री गर्भान् धारयिष्यति दुःप्रसवा च. स्थविरा तु षोडशाब्दा बहुसुतेन मातृका भविष्यति. रथचक्रयोर्मध्ये यत्प्रमाणा धरित्री भवति तत्प्रमाणं गंगासिन्ध्वोः पानीयं वहिष्यति, पुनर्वैताढ्यगिरौ द्वासप्ततिनद्युभयतटभूमिषु बिलानि सन्ति तत्र तिर्यञ्चो मनुष्याश्च बीजमात्रतया भविष्यन्ति मांसाहारनिरताः, निर्घृणाः, निर्विवेकाः तस्मिन् काले मनुष्यादयः समस्ता भविष्यन्ति, बहुमत्स्य-कच्छपादिभिर्व्याप्ते गंगा-सिन्धू भविष्यतः, पुनर्नरायास्तत्रैत्य निशायां मत्स्यादीनि कृष्ट्वा स्थले मोक्ष्यन्ति, दिवा सूर्यत्विषा पक्वानि मत्स्यादीनि निशान्तरे खादिष्यन्ति, एवं निरन्तरं भोक्ष्यन्ति, यस्मात् तस्मिन् काले दध्याधिकं नास्ति, न च पुष्पफलादिकं, च चान्नं, न च शय्यासनादिकम्, एवं भरतैरवतेषु दशस्वपि दुःषमकालो भविष्यति। अथाग्रे उत्सर्पिण्यां षष्ठारकसदृशः प्रथमपारको भविष्यति, उत्सर्पिण्यामेकविंशतिसहस्रवर्षप्रमाणे प्रथमारके गते द्वितीयारकोऽपि एतत्प्रमाणो भविष्यति। अथ द्वितीयारकप्रान्ते पुष्करावर्तमेघः सप्ताहोरात्र यावद् वर्षिष्यति तस्मात् पृथिवीतापो यास्यति, द्वितीयः क्षीरोदनामा मेघो वर्षिष्यति तस्माद् धान्यनिष्पत्तेर्योग्या भविष्यति, तृतीयो घृतोदकमेघो वर्षिष्यति तस्मात् पृथिवी सचिक्कणा भविष्यति, चतुर्थः शुद्धोदकमेघो वर्षिष्यति, तस्मादौषधिर्निष्पत्तिं यास्यति, तदा पंचमो रसोदकमेघो वर्षिष्यति, तस्मात् पृथिव्यां रसोत्पत्तिर्भविष्यति. एवं

केचिदाचार्या एवं वदन्ति—पञ्चभरतै-रवतयोः संघस्य प्रमाणं नत्वेकस्य, केचिदाचार्याः पञ्चभरतस्य संघप्रमाणं वदन्ति, केचित् पुनः एकभरते संघप्रमाणं वदन्ति, तत्त्वं तु ज्ञानिगम्यम्. पुनः पञ्चमारकप्रान्ते द्विहस्तशरीरप्रमाणाः स्वर्गात् च्युत्वा गृहवासे द्वादश वर्षाणि श्रामण्ये चत्वारि वर्षाणि, आचार्यपदे चत्वारि वर्षाणि स्थित्वा विंशतिवर्षायुः प्रपाल्य दुप्पसहसूरयः सौधर्मस्वर्गे गमिष्यंति, कथंभूता दुप्पसहसूरयः ? दशवैकालिक-जितकल्प-आवश्यकाऽनुयोगद्वार-नन्दीसूत्रधारका इन्द्रादिभिर्नताः. षष्ठोग्रतपोधारकाः प्रान्ते कृताष्टमतपसः एकसागरोपमायुः स्वर्गे भुक्त्वा ततो भरतक्षेत्रे जन्मावाप्य मुक्तिं यास्यंति । वीसहजार नवसौ वर्ष, तीनमास, पांच दिन, पांच पहरे, एक घडी, दोपल, ४१ अक्षरोच्चार एतावत्कालप्रमाणो जिनधर्मो भविष्यति, ९० वर्ष, मास ८, दिन २३, प्रहर २, घडी ५॥, पलानि ५७, १९ अक्षरोच्चार एतावन्मध्ये जिनधर्मः स्तोकः स्थास्यति, आरकस्य प्रांते जिनधर्मो विच्छेदं यास्यति, श्रुत-सूरि-संघ-धर्मः पूर्वाह्णे विच्छेदं यास्यति, नृपो विमलवाहनः सुमुखमन्त्री च मध्याह्ने विच्छेदं यास्यतः, अग्निः सन्ध्यायां विच्छेदं यास्यति, पुनः पञ्चमारकान्ते दुप्पसहाख्यः सूरिः, फल्गुश्रीः साध्वी, नागलः श्रावकः, सत्यश्रीः श्राविका, एतदात्मकश्चतुर्विधसंघो भविष्यति, पञ्चमारकस्याग्रे धर्मो वर्त्स्यति इत्यनेन धर्मो नास्ति यः पुनर्वदिष्यति स संघतो बहिः कर्तव्यः, एवमेकविंशतिसहस्रप्रमाणः पंचमारको भविष्यति । एतत्प्रमाणो षष्ठारकोपि भविष्यति । अथ षष्ठारकस्य किंचित् स्वरूपं कथ्यते—धर्मतत्त्वं प्रणाशं यास्यति, जनो हाहाभूतो भविष्यति, पशुवद् मातृपित्रादि व्यवस्थावर्जितश्च भविष्यति, बहुधूलिसहिता अतिनिष्ठुरता अनिष्टा वायवो वास्यन्ति, दिशश्च धूम्रं मोक्ष्यन्ति, चन्द्रमा अतिशीतं स्रावयिष्यति, अर्यमा अत्युष्णं तप्स्यति, अतिशीतोष्णव्यासो लोकः क्लेशमवाप्स्यति, भस्म-दृषद्-ऽग्निकण-क्षार-विष-मल-विद्युन्मयाः सप्त मेघा वर्षिष्यन्ति, एकैकस्य मेघस्य सप्त सप्त दिनानि यावद् वर्षा भविष्यति, यैः कास-श्वास-शूल-कुष्ट-जलोदर-ज्वर

मिन्द्रः शिक्षयित्वा दत्तनामानं कल्किनः पुत्रं राज्ये स्थापयिष्यति, गुरु संघयोर्नमस्कारं कारयिष्यति, इन्द्रः स्वस्थाने यास्यति, ततो दत्तराजा पितुः पापफलं ज्ञात्वा पुण्ये तत्परो भविष्यति, निरंतरं जिनेश्वराणां चैत्यानि कारयित्वा सर्वपृथ्वीं जिनालयैः शोभायमानां करिष्यति, तदा पुनर्जिनधर्ममहिमा प्रचुरो भविष्यति, । अथाग्रे पञ्चमकाले चतुर्विधश्रावक-श्राविका-साधु-साध्वीनां संख्या कथ्यते— षोडशसहस्राधिका एकादशलक्षा (१११६०००) राजानः पंचमकाले जिनमतभक्ता भविष्यन्ति, एककोटिमिता (१००००००), जिनशासनप्रभावका मन्त्रिणो भविष्यन्ति, पुनः पञ्चमकाले श्रीसुधर्मस्वामिप्रमुखाश्चतुरधिकद्विसहस्रप्रमाणा (२००४) युगप्रधानपद-धारका महोपकारिण आचार्या भविष्यन्ति, तत्रापि सुधर्मजम्बूस्वामिनौ तद्भवे एव मुक्तिं यास्यतः, शेषाः सर्वे एकावतारिणो भविष्यन्ति। ततो युगप्रधानसदृशा आचार्याः प्राणिनां मोहान्धकारे मार्तण्डसदृशाः षोडशाधिकैकादशलक्षैकादशसहस्रमिता (११११०१६) एतावन्तो अन्येऽपि आचार्या-श्चारित्रपालका भविष्यन्ति, पुनः पञ्चमारके तेतीस लाख चालीस हजार चारसौ उन्नीस ( ३३४०४१९ ) एतावन्तो मध्यमगुणधारका आचार्या भविष्यन्ति, पुनः पंचावनकोटि पंचावनलक्ष पंचावनसहस्र पंचशत पचवीस (५५५५५५५२५.) अधर्माचार्या भविष्यन्ति, पुनः पंचावनलाखकोटि, पंचावनहजारकोटि चौवनसौ कोटि चउमालीसकोटि एतावन्त उपाध्याया वाचनाचार्या भविष्य-न्ति, पुनः सत्तरलाखकोटि नवहजारकोटि एकसौकोटि एकवीसकोटि एकलाख साठहजार एतावन्तः साधवो भविष्यन्ति, पुनः पञ्च-मारके दशकोटाकोटि द्वादशशतकोटि बाणवेकोटि बत्तीसलाख निनाणवे हजार एकसौ एतत्प्रमाणाः साध्व्यो भविष्यन्ति, पुनः पञ्चमारके सोलाकोटिलाख तीनकोटिहजार तीनसौकोडी सत्तरकोडी चौरासीलाख एतावत्प्रमाणाः श्रावकाः भविष्यन्ति, पुनः पञ्चमारके पैंतीस-कोडिलाख बाणुहजारकोडी पांचसौकोडी बत्तीसकोडी एतावत्यः श्राविका भविष्यन्ति, एतावत् पञ्चमारके संघस्य प्रमाणम्. अत्र

करिष्यति, पुनर्नवीननवीनकरं करिष्यति ततो लोकानां मस्तकेऽसद्भूतानि कलंकानि दत्त्वा धनवतां धनं ग्रहीष्यति, अनेकच्छलं
कृत्वा लोकानां धनापहारं करिष्यति, यदा सर्वे लोका निर्धना भविष्यन्ति रूप्य-सुवर्णादि सर्वं धनं नाशं यास्यति, तदा चर्ममयीं
मुद्रां प्रवर्तयिष्यति, वैश्यापाखण्डिसर्वदर्शनिनां समीपे कल्की करं लास्यति, तस्य राजमध्ये लोकानां गृहे भोजनार्थं धातुमयं भाजनं न
स्थास्यति, तदा वृक्षपत्रमध्ये भोजनं करिष्यन्ति, पुनः कल्की राजा मार्गे गच्छतः साधून् दृष्ट्वा लुब्धः सन् भिक्षायाः षष्ठांशं मार्गयिष्यति,
तदा सर्वे साधवः एकत्रीभूय कायोत्सर्गं करिष्यन्ति शासनदेवतां चाराधयिष्यन्ति, शासनदेवता प्रकटीभूय साधुभिक्षाषष्ठांशं निवारयि-
ष्यति, पुनर्वेषधारिणो वेषं त्याजयिष्यन्ति, एतादृशो महादुरात्मा भविष्यति, पुनः कियति काले गते भिक्षाषष्ठांशस्य स्मरणं करिष्यति,
यदा धनार्थमाचार्यादीन् सर्वसाधून् संमेल्य वाटके क्षेप्स्यति रोधयिष्यति, तदा संविज्ञाचार्यप्रमुखाः ससंघाः शासनदेवताराधनार्थं कायो-
त्सर्गं करिष्यन्ति, संघकायोत्सर्गात् शासन देवता आगमिष्यति युक्तितः कल्किने उपदेशान् दास्यति तथापि स न मानयिष्यति, तस्मिन्
समये इन्द्रस्यासनं कम्पयिष्यति तदा स वृद्धब्राह्मणरूपं कृत्वा यत्र कल्की सिंहासनोपरि स्थितस्तत्रागमिष्यति, ततः कल्किनं कथयि-
ष्यति-अहो राजन् ! एते निरपराधिनः साधवः किं रुद्धाः एभिस्तवापराधः कः कृतः ? तदा कल्की तं वदिष्यति-अहो ब्राह्मण ! सर्व-
दर्शनिभिर्मम करो दत्तः परमेते भिक्षवो भिक्षाषष्ठांशमपि न ददति, ततो मया एते रुद्धाः सन्ति, तत इन्द्रो वदिष्यति-एषां पार्श्वतस्तव
किमपि न मिलिष्यति एषां पार्श्वे किमपि नास्ति पुनर्भिक्षाषष्ठांशमपि तत्र न दास्यंति एषामयं व्यवहारो नास्ति, पुनस्त्वं भिक्षा भागं मार्गयन्
लज्जां न यासि, एषां साधूनां त्वं त्यागं कुरु, ईतरथा तव महत्कष्टमुत्पत्स्यति, एतादृशमिन्द्रवचनं श्रुत्वाऽपि न त्यक्ष्यति ततो भाद्रपदशुक्ला-
ष्टम्यां ज्येष्ठानक्षत्रे इन्द्रो रोषं गतः सन् चपेटाप्रहारात् कल्किनं मारयिष्यति सर्वायुः षडशीति ८६ वर्षं प्रपाल्य नरकं यास्यति, ततोऽर्हद्धर्म-

स्य राजधानी भविष्यति, अनहल्लपत्तनस्य द्वितीयं नाम विजयपुरं भविष्यति, मुंजस्योज्जयिनीदेशं दास्यति, अपराजितस्यान्यमण्डलं दास्यति, कल्किनो राज्यावसरे म्लेच्छक्षत्रिययो रुधिरेण पृथिवी स्नानं करिष्यति, तस्यैकोनकोटिसुवर्णानां कोष्ठागारा भविष्यन्ति, चतुर्दशसहस्रप्रमाणा हस्तिनो भविष्यन्ति, सार्द्धचतुर्दशसहस्राधिकमसाशीतिलक्षा ( ८७१४५९०० ) घोटका भविष्यन्ति, पञ्चकोटिप्रमाणाः पदातयो भविष्यन्ति, दासादीनां तु बह्वीः संख्या भविष्यन्ति, नभःखलनाम त्रिशूलं भविष्यति, रूपन्मयतुरंगमः आरोहणार्थं वाहनं भविष्यति, दुरात्मा अत्यन्तकषायो भविष्यति, यदा कल्की राज्यं करिष्यति, तदा मथुरामध्ये कृष्ण-बलभद्रयोरायतनं पतिष्यति, बहुडम दुर्भिक्षरोगैर्मनुष्याः पीडां प्राप्स्यन्ति, पञ्चसु स्तुम्भिकासु बहु धनमस्तीति लोकानां मुखात् श्रुत्वा आनन्दराज्ञा निष्पादिताः पञ्च सुवर्णमयीः स्तुम्भिकाः कल्की खनयिष्यति, सर्वनिधानं निष्कासयिष्यति, तत्र गोरूपा लवणदेव्या मूर्तिः रूपन्मयी प्रकटीभविष्यतिः तां गृहीत्वा राजादिप्रमुखा सर्वलोकाः संभूय नगरचतुष्पथमध्ये स्थापयिष्यंति, कदाचिदवसरे साधवो गोचर्यर्थं चतुष्पथमध्ये निःसरिष्यन्ति, मा साधून् दृष्ट्वा देवानुभावतः श्रृंगाग्रेण साधूनां मारणार्थमुद्यमवती भविष्यति, तदा गीतार्थाः सर्वे साधव एकत्रीभूय विचारं करिष्यन्ति, अत्र जलोपसर्गः प्रचुरो भविष्यति इति ज्ञात्वा सुविहितक्रियाधारका ये साधवो भविष्यन्ति ते सर्वे विहारं करिष्यन्ति, ये भक्तपानलोलुपा भविष्यन्ति गीतार्थवचनं नांगीकरिष्यन्ति अविवेकिनः सन्तः तत्र स्थास्यन्ति, ततः सप्तदशाहोरात्रं यावत् वर्षा भविष्यति, अत्यन्तवृष्ट्या कल्किनो नगरं जलाच्छादितं भविष्यति, गंगाजलं नगरेण सह एकत्री भविष्यति, कल्किनो नगरात् प्रणश्य कुत्रापि उच्चस्थले स्थास्यति, जलोपद्रवनिवर्तनाद् नवीनं नगरं स्थापयिष्यति, जलप्रवाहतो नव नन्दस्य सुवर्णमय्यः डुंगरिकाः प्रकटीभविष्यन्ति, ता दृष्ट्वा प्रचुरलोभी भविष्यति, प्रथमं ये मनुष्याः करं न दत्तवन्तस्तेषामुपरि करं स्थापयिष्यति, ये करं दत्तवन्तस्तेषां मस्तके बहुकरं

न्ति, पुनर्हे गौतम ! म्लेच्छकुले पाटलीपुरपत्तने कलंकी * राजा भविष्यति, पुनः पाटलीनगरस्य रुद्रनाम पुनश्चतुर्मुख इति नाम स्थापयिष्यति । जसनामचाण्डालस्य गृहे भार्या यशोदा तत्कुक्षौ त्रयोदश मासान् यावद् कल्किगर्भः स्थास्यति, चैत्रशुक्लाष्टम्यां जयश्री-दिवसस्य रात्रिसमये मकरलग्नस्य षष्ठांशे वहमाने भौमवासरे चन्द्रेऽर्कलग्ने स्थिते चन्द्रनामयोगे आगते अश्लेषाप्रथमपादे कलंकिनो जन्म भविष्यति, त्रिहस्तशरीरोन्नतत्वं भविष्यति, कपिलवर्णाः केशा मस्तके भविष्यन्ति, नेत्रे पीते भविष्यतः, तीक्ष्णस्वरो भविष्यति, महा-विद्यावान् दीर्घहृदयो गुणरहितश्च भविष्यति, तस्योत्पत्तेरारभ्य पञ्चमे वर्षे उदरपीडा भविष्यति, सप्तमे वर्षेऽग्निपीडा भविष्यति, एकादशे वर्षे तस्य द्रव्यप्राप्तिः भविष्यति, अष्टादशे वर्षे कार्तिकमासे शुक्लपक्षे प्रतिपदि तिथौ शनिवारे तुलाचन्द्रे स्वातिनक्षत्रे नन्दनदिने सिद्धयोगे बवकरणे रावणमुहूर्त्ते राज्याभिषेको भविष्यति, तस्य आनन्दनामा तुरंगमो भविष्यति, दुर्भासकनामा कुन्तो भविष्यति, मृगांकनामा मुकुटो भविष्यति, ‘त्यमूदनखड्ग भविष्यति, तस्य कटिप्रदेशे चन्द्रसूर्यौ भविष्यतः, पुनः कल्की विक्रमादित्य संवत्सरमुत्थाप्य अमितसुवर्णदानान् स्वसंवत्सरं स्थापयिष्यति, एकोनविंशतितमे वर्षे निजभुजबलेनार्धभरतत्रिखण्डं साधयिष्यति, सार्धविंशतिवर्षे अर्बुदराज्ञः पुत्रीं परिणेष्यति, तथा-अन्यासां बह्वीनां राज्ञीनां पतिर्भविष्यति, एवं ताभिः सह महाभोगे भुंज्यमाने तस्य महापराक्रमधारिणश्चत्वारः पुत्रा भविष्यन्ति, तन्ना-मान्याह-दत्त १ विजय २ मुंज ३ अपराजिताख्याः ४. कल्किनः पाटलीपुरे राजधानी भविष्यति, तस्य पाटलीपुरस्य कलंकिपुर-मिति द्वितीयं नाम भविष्यति, दत्तस्य प्रथमपुत्रस्य राजधानी भविष्यति, तस्य नगरस्य दत्तपुरं नाम भविष्यति, विजयस्यानहल्लपत्तन-

* पंचमारके धर्मोन्नतिकारका त्रयोविंशतिः उदयाः भविष्यंति तेषु च चतुरधिकद्विसहस्रयुगप्रधाना भविष्यन्ति तथा सम्प्रति तृतीयोदयो वर्तते 'पर' -च अष्टमोदये श्रीप्रभयुगप्रधानसमये कलकी राजा भविष्यति, इति ज्ञेयम् ।

तस्य भविष्यन्ति, अयुतप्रमाणा रथा भविष्यन्ति, एकादश लक्षाणि तुरंगाणां भविष्यन्ति, अष्टादश लक्षाः पदातयो भविष्यन्ति, स श्रीकुमारपालराजा कस्मिंश्चित् समये वज्रशाखायां मुनिचन्द्रकुलोत्पन्नं श्रीहेमचन्द्रसूरिं प्रतिवन्दिष्यति, आचार्यमुखाद् धर्मोपदेशं श्रुत्वा सम्यक्त्वसहितं श्रावकद्वादशव्रतमंगीकरिष्यति, देवगुरुप्रणतिं विना भोजनं न करिष्यति, दृढव्रतपालको भविष्यति, पृथिवीं जिनप्रासादमण्डितां करिष्यति, एकस्मिन् प्रस्तावे श्रीहेमाचार्यमुखात् व्याख्याने श्रीतीर्थानां व्याख्यां श्रोष्यति, तत्र जीवितस्वामिमूर्तेः संबंधं श्रुत्वा वीतभयपत्तनमार्गे दुर्गकारापने श्रीजिनप्रतिमां मनुष्येभ्यः प्रकटं कारयिष्यति, तां प्रतिमां पत्तने जिनालये स्थापयिष्यति शुभबुद्धया मानयिष्यति, ततः प्रतिमार्थं यदुदायिराज्ञा ग्रामादिदत्तमभूत् तत् प्रकटीभविष्यति, तावन्तं ग्रामशासनादिकं कुमारपालोऽपि दास्यति, सदैवार्चां करिष्यति, सदैव जिनं वन्दिष्यति, स्वदारसंतोषी भविष्यति, वर्षाकालमध्ये त्रिविधं शीलं पालयिष्यति, कदाचिद् मनसः शीलभंगो भविष्यति तर्हि उपवासादि करिष्यति, पुनरष्टादशदेशेऽमारिपटहं दास्यति, वर्षाकाले सेनासमूहं न करिष्यति, जीवरक्षादक्षो भविष्यति, अर्हन्मतभक्तिमान् भविष्यति, शुद्धसम्यक्त्वव्रतधारको भविष्यति, पंचमकाले श्रीकुमारपालं विना अन्यः को भविष्यति ? । पुनर्हे गौतम ! पञ्चमारके कलहकारका भववृद्धिजनका असमाधिस्थाना अनिर्वेदकारका एतादृशाः श्रमणाः पञ्चभरतैरवते च भविष्यन्ति, पुनस्ते श्रमणा मन्त्रतन्त्रयन्त्रादौ नित्यमुद्यमवन्तो भविष्यन्ति, पुनरागमार्थज्ञाता स्तोका एव स्थास्यंति, सिद्धान्तशास्त्रस्य कश्चिदेवाभ्यासं करिष्यंति, धनलोभार्थं ज्योतिष्कादिकं धारयिष्यति, उपकरणवस्त्रपात्रार्थं वर्षाकाले श्रावकैः सह युद्धं करिष्यति, यथा राजा प्रजापार्श्वे कलहं कृत्वा दण्डं लास्यति तथा तेऽपि साधवः श्रावकपार्श्वे धनादिग्रहणं करिष्यन्ति, बहवो मुण्डा अल्पाः श्रमणाश्च भविष्यन्ति, पुनर्हे गौतम ! पञ्चमकाले म्लेच्छराजानो बलवन्तो भविष्यन्ति, उत्तमराजानो हीनबला भविष्य-

गवर्णने कथिताः। पुनर्हे गौतम ! कलियुगसंबन्धिनां मानवानां मध्ये लज्जा न भविष्यति, निष्कलंककुलजाताः स्तोका भविष्यन्ति,
रम्यवस्तूनां धरित्र्यां हानिर्भविष्यति, लघवः सुताः तरुणाश्च मरणं यास्यन्ति, पुनर्मातरः पितरश्च अतिदीर्घायुषो भविष्यन्ति, ब्राह्मणाः
शस्त्रधारका भविष्यन्ति, वेदपाठ-षट्कर्मवर्जिताश्च भविष्यन्ति, सुता मातापित्रोर्विनयं न करिष्यन्ति, पुत्रा मातापितृभ्यो दुःखं दास्य-
न्ति, वध्वः श्वश्रूणां विनयं न करिष्यन्ति, वधूः सर्पिणीतुल्या भविष्यति, श्वश्रूभिः कार्ये कथिते वधू रोषं कृत्वा सर्पिणीवत् प्रत्युत्तर-
वचनरूपं डंकप्रहारं दास्यति, श्वश्रूश्च कालरात्रीतुल्या वधूं हीलयिष्यति; यथा जनानां कालरात्री दुर्लङ्घ्या भवति तथा श्वश्रूरपि वधू-
जनानां ताडनातर्जनादि कुर्वती दुर्लंघ्या ज्ञेया, अपूज्यलोकाः पूजां प्राप्स्यन्ति, अर्चायोग्या गुणवन्तो न पूजां प्राप्स्यन्ति, शिष्या गुरूणां
विनयं न करिष्यन्ति, पुनर्गुरवोऽपि शिष्याणां हितशिक्षाद्युपदेशं न दास्यंति, पुनर्मन्त्रतन्त्रौषधिज्ञानरत्नविद्याधनायुःफलपुष्परसरूपसौभाग्य-
संपत्तिसंहननबलयशःकीर्तिगुणशोभादीनि वस्तूनि पञ्चमारके हानिं यास्यन्ति, ज्ञानादिधर्मो हीनतां यास्यति, वस्तुमानादि विपरीतं जनाः
करिष्यन्ति, धर्मे मूर्खत्वं भविष्यति, देवानां मध्ये देवत्वं न भविष्यति, सतीनां मध्ये सतीत्वं न भविष्यति, निःसंगानां मध्ये वैराग्यं न भवि-
ष्यति, तपस्विनः स्पृहायै तपस्यां करिष्यन्ति, सत्यशौचतपः क्षमादिकानां हानिर्दिने दिने भविष्यति, धरित्र्यामल्पफलादीनि भविष्यन्ति।
पुनः प्रभुर्वक्ति-हे गौतम ! सौराष्ट्रगुर्जरदेशस्य समीपे अनुक्रमेण अणहिल्लपाटणपुरे मन्निर्वाणात् एकोनसप्तत्यधिकषोडशशतवर्षे
(१६६९) व्यतिक्रान्ते श्रीकुमारपालराजा भविष्यति, कीदृशः ? चौलुक्यकुलमध्ये चन्द्रसदृशो महाबलवान् अखण्डजिनाज्ञाधारको
भविष्यति, पराक्रमेण, दानेन, कीर्तिगुणेन, न्यायेन, विवेकेन, धैर्येण राज्यलीलया सत्त्वगुणेनाद्वितीयो भविष्यति. उत्तरदिशायां
यवनदेशं यावत्, पूर्वदिशि गंगापर्यन्तं, दक्षिणदिशि पश्चिमदिशि च समुद्रपर्यन्तं देशान् साधयिष्यति, एकादशशतानि हस्तिनः

करिष्यन्ति, पुनरग्रे गच्छता वने एकस्यां शकट्यां हस्तिनौ योजितौ दृष्टौ, एकस्यां शकट्यां गर्दभौ योजितौ दृष्टौ परं हस्तिनौ परस्परममिलितौ चलतः गर्दभौ परस्परं मिलितौ चलतः, एतादृशं विचारं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वदति हे राजन् ! कलियुगे हस्तिसदृशा उत्तमकुले प्रसूता जनाः परस्परं क्लेशं करिष्यन्ति अन्योऽन्यमीर्ष्यां च करिष्यन्ति, पुनर्गर्दभसदृशा नीचकुलोत्पन्ना नीतिधारका भविष्यन्ति परस्परं स्नेहवन्तो भविष्यन्ति, प्रायेण अन्त्यकुलोत्पन्ना धरित्रीपतयो भविष्यन्ति, पुनर्हंससदृशा उत्तमकुलोत्पन्नाः दासत्वं करिष्यन्ति ॥ अन्यदा पंच पाण्डवा अनुक्रमेण वनवासमध्ये स्थिताः सन्तो युधिष्ठिरराज्ञा भीमादीनां चतुर्णां भ्रातॄणां चतुर्षु प्रहरेषु रात्रौ यामिकत्वेन रक्षिता, अथ प्रथमप्रहरे भीमो जागर्ति चत्वारो भ्रातरः सुप्ताः सन्ति तस्मिन् प्रस्तावे कलिरूपपिशाचस्य वचनं श्रुत्वा भीमः क्रोधभाग् बभूव पिशाचरूपकलेर्मारणार्थं धावितः, कलिना सह भीमो युद्धमकार्षीत् , क्रोधेन रक्तनेत्रे कृत्वा लीलया प्रेतरूपकलिना बलवान् भीमो निर्जितः, द्वितीयप्रहरे युद्धं कृत्वा कलिनाऽर्जुनोऽपि जितः, तृतीयप्रहरे नकुलोऽपि जितः, चतुर्थप्रहरे सहदेवोऽपि जितः, अथ चत्वारोऽपि भ्रातरः पराजयं प्राप्ताः सन्तः सुप्ताः सन्ति, अस्मिन्नवसरे पश्चिमरात्रे युधिष्ठिरो जागृतवान् तदा कलिरूपपिशाच आगत्य युधिष्ठिरं वदति, हे राजन् ! भवतः पश्यतो भवद्भ्रातॄन् मारयिष्यामि, एतादृशं प्रेतवचनं श्रुत्वा राजा युधिष्ठिर किंचिन्मात्रमपि क्रोधं न कृतवान् , प्रतिवचनमपि न दत्तवान् , क्षमां कृत्वा स्थितः, क्षमा कीदृशी ? सर्वकल्याणकारिका सर्वसत्त्वप्रीतिजनिका सर्वधर्मप्रधाना एतादृशी क्षमा राज्ञा अंगीकृता, तदा राज्ञ उपशमं दृष्ट्वा प्रेतः शान्तिं गतवान् राज्ञो मुष्टिमध्ये चागतः, भ्रातरः सर्वेऽपि उत्थिताः, तदा रात्रिसंबन्धिनी सर्वाऽपि वार्ता युधिष्ठिरेण भ्रातॄणामग्रे कथिता, राज्ञा मुष्टिमुद्घाट्य प्रेतः स्ववशवर्त्तिभूतो दर्शितः, क्षमाप्रभावतोऽयं वशवर्ती जातः, एतादृशा अष्टोत्तरशतदृष्टान्ता लौकिकपुराणादावपि कलियु-

पुनः राजा युधिष्ठिरोऽग्रे गतः सन् कूपप्रणालिकाजलं कूपे पतत् दृष्ट्वा विस्मयं प्राप्तः सन् पृच्छति, तदा ब्राह्मणो वक्ति—हे राजन् !
कृषिवाणिज्यादिभिर्महाक्लेशात् लोका धनमुपार्जयिष्यन्ति तद्धनं सर्वं राजलोका ग्रहीष्यन्ति, सद्युगे राजानः स्वस्य धनं दत्त्वा
प्रजां पुत्रवत् ज्ञास्यन्ति कलियुगे राजानः प्रत्युत प्रजाया धनं लास्यन्ति इति वैपरीत्यं भविष्यति । राजा-अग्रे गच्छन् वनखण्डमध्ये
महाप्रधानचम्पकवृक्षावृतः पार्श्वतः एकः कण्टकवृक्षो दृष्टः, तदवसरे बहवो लोकाः कण्टकवृक्षस्य सुगन्धचोवाचन्दनविलेपनैः पूजां
कुर्वन्तो दृष्टाः, चम्पकवृक्षस्तु सुगन्धपुष्पैर्युक्तः शाखाप्रतिशाखाभ्यां शोभमानोऽस्ति, तं त्यक्त्वा कण्टकवृक्षमर्चितं दृष्ट्वा राजा विस्मयं
प्राप्तः सन् ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति-हे राजन् ! लोकाः कलियुगे गुणवन्तमुत्तमाचारवन्तं त्यक्त्वा पापीयसो दुर्जनस्य नीचस्य
पूजां करिष्यन्ति, एतादृशं श्रुत्वा राजाऽग्रे गतः पुरतः एकां महतीं शिलां बालाग्रे बद्धामाकाशे लम्बायमानां दृष्ट्वा आश्चर्यं प्राप्तः
सन् ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति—हे राजन् ! कलियुगे पापरूपां शिलामल्पधर्मरूपबालाग्रेण तरिष्यन्ति, अन्यच्च यदा बालरूपं धर्मं
त्रोटयिष्यन्ति तदा समकालं मनुष्या ब्रडिष्यन्ति । पुनः राजाऽग्रे गतः फलार्थं वृक्षस्य पीडां कुर्वन्तः केचिद् पुरुषा दृष्ट्वा राजा
ब्राह्मणं पृच्छति—एतस्य फलं वद, ब्राह्मणो वक्ति -हे राजन् ! कलियुगे पिता वृक्षतुल्यः पुत्रः फलसदृशः—अयमत्र भावार्थः पुत्रफलार्थं
वृक्षः पिता कष्ट सहिष्यति, पुनः राजऽग्रे गतः एकस्मिन् स्वर्णकटाहे उत्तमान्नपाचनयोग्ये मांसं पच्यमानं दृष्ट्वा राजा ब्राह्मणं पृच्छति,
ब्राह्मणो वदति-हे राजन् ! आत्महितकारिणं कुटुम्बं जनाः त्यक्ष्यन्ति, अन्यलोकार्थं स्वशीर्षं दास्यन्ति, बह्वीं प्रीतिं करिष्यन्ति उत्तम-
जनसंगं न करिष्यन्ति, अग्रे गत्वा सर्पस्य पूजां गरुडस्य चापूजां दृष्ट्वा ब्राह्मणं पृच्छति, विप्रोऽवादीत्-हे राजन् ! दयारहितो
धर्मिजनः सर्पतुल्यः तस्य बहवो लोका आदरं करिष्यन्ति, सत्कारं च करिष्यन्ति, गरुडसदृशा गुणवन्त उत्तममहाधर्मज्ञास्तेषां निन्दां

लोकाः सर्वे प्रेतसदृशा भविष्यन्ति, राजलोका लुब्धा भविष्यन्ति, पुनरविवेकिनो लोका मूर्खाः कलाहीनाश्च भविष्यन्ति, दातारो दारिद्र्ययुक्ता भविष्यन्ति, लक्ष्मीधराः कृपणा भविष्यन्ति, पापिनो दीर्घजीवा भविष्यन्ति, उत्तमधर्मिणामायुः स्तोकं भविष्यति, राज्ञां कुलानि हीनानि भविष्यन्ति, पुनः सेवका उत्तमकुलवन्तो भविष्यन्ति, सज्जना मनुष्या दुःखिनो भविष्यन्ति, दुर्जना मनुष्याः सुखिनो भविष्यन्ति, एवं हे गौतम ! पंचमकालस्य स्वरूपं त्वं जानीहि ।

पुनर्लोकाः कलियुगस्य स्वरूपमेवं वदन्ति–द्वापरयुगे राजा युधिष्ठिरोऽभूत् , एकस्मिन् दिने स वने गतः, तत्र वने एका बृहती गौः लघुगोस्तनपानं कुर्वती दृष्टा, स्वसमीपे ब्राह्मणमिति पप्रच्छ—इदमाश्चर्यं विपरीतं पश्य, तदा ब्राह्मणो वदति–हे राजन् ! आगामिकाले कलियुगमध्ये हीनसत्त्वा मनुष्या भविष्यन्ति, लक्ष्मीं विना दुःखिनौ सन्तौ मातापितरौ कस्मैचित् धनवते कन्यां दत्त्वा धनं लात्वा ततः पश्चात् स्वनिर्वाहं करिष्यतः, एतादृशमुपनयं श्रुत्वा पुनः राजा युधिष्ठिरोऽग्रे गतः, पुरतः समानश्रेणिबद्धजलभृतानि त्रीणि सरांसि दृष्टानि, तत्र प्रथमैकमरसो जलमुच्छलत् मध्यस्थं तटाकं त्यक्त्वा तृतीयसरसि पतति, मध्यस्थसरसि एकबिन्दुमात्रमपि न पतति; एतादृशमाश्चर्यं दृष्ट्वा राजा ब्राह्मणं पृच्छति इदं किंकारणम् ? ब्राह्मणो वक्ति–हे राजन् ! त्वं शृणु–आगामिकाले यथा प्रथमसरसो जलं द्वितीयं तटाकं त्यक्त्वा तृतीये पतितं तथा हे राजन् ! स्वस्य संबन्धिनं त्यक्त्वा अन्यलोकैः सह जनाः प्रीतिं करिष्यन्ति । पुनः राजा युधिष्ठिरोऽग्रे गच्छन्नेकमाश्चर्यं पश्यति जलेन क्लिन्नं वालुकासमूहं तस्य बहवो मनुष्याः संभूयरज्जूः कुर्वन्ति परं रज्जूः त्रुटति यत्ने कृतेऽपि न तिष्ठति, एतादृशं व्यतिकरं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति–हे राजन् ! कृषिकारकलोका बहुभिः क्लेशैः कलियुगे धनमुपार्जयिष्यन्ति, तद् धनं चौराऽग्निराजदंडप्रमुखस्य भयेन मनुष्याणामन्यत्र गमने कृतेऽपि विनाशं यास्यति,

हरिवंशकुलोत्पत्तिः ७, चमरेन्द्रोत्पातः ८, एकस्मिन् समयेऽष्टाधिकशतमुक्तिगमनं ९, असंयतिपूजा १०, एतानि दश वस्तूनि अनन्त-
काले गते सति भवन्ति। बहवो लोकाः क्रोधवन्तो भविष्यंति, पुनर्दुःषमकालप्रभावतो लोका मर्यादां त्यक्ष्यन्ति, धर्मबुद्धेर्नाशो भवि-
ष्यति, लोका वक्रा मूर्खाश्च भविष्यन्ति, यथा कालहीनता भविष्यति तथा कुतीर्थे मतिं धारयिष्यन्ति, पुनर्लोकाः परोपकार-धर्मव-
र्जिता भविष्यन्ति, महान्ति नगराणि ग्रामसदृशानि भविष्यन्ति, ग्रामाः श्मशानसदृशा भयंकरा भविष्यन्ति, राजानः प्रजापालने
यमसदृशा भविष्यन्ति, पुनर्हे गौतम! धनवन्तो व्यवहारिणो निर्धना भविष्यन्ति, पुनर्देवा दर्शनं न दास्यन्ति, मनुष्याणां जातिस्म-
रणज्ञानादीनि न भविष्यन्ति, मनुष्या लज्जामर्यादारहिता भविष्यन्ति, पृथिव्यां दुष्टजीवा बहवो भविष्यन्ति, पुनर्लोकाः परस्परं विघ्नं
दृष्ट्वा संतोषं प्राप्स्यन्ति, लोकानां पापकरणे चत्वारो हस्ता भविष्यन्ति, पुनर्धर्मकार्येऽलसाः प्रमादिनश्च भविष्यन्ति, आत्मनः कार्ये
लोकानामुदरमध्ये प्रवेशं करिष्यन्ति, पुनर्हे गौतम! परजीवानामुपद्रवकरणे तत्परा भविष्यन्ति, पुनः पंचमकालसंबन्धिनो जीवा
महानिर्दया भविष्यन्ति, महादीर्घरोषधारका भविष्यन्ति, भद्रकजीवान् विप्रतारयिष्यन्ति, धर्ममूर्तिमन्तः स्तोका भविष्यन्ति, पापा-
नामाकराः स्थाने बहवो भविष्यन्ति, अत्यन्त लोभवन्तो भविष्यन्ति, मिथ्यात्विनोऽभिमानिनोऽनाचारिणोऽन्यायिनश्च लोका बहवो
भविष्यन्ति, पुनर्हे गौतम! कुलवध्वो लज्जामर्यादारहिता भविष्यन्ति, वेश्यासमानाश्च भविष्यन्ति, राजा भृत्येभ्यो दण्डं दास्यति,
पृथिव्यां तिमिंगिलन्यायो भविष्यति, चौरकुले जाताश्चौरा भवन्ति परं राजानोऽपि चौरसदृशा भविष्यन्ति, लोकानां धनमपहरिष्यन्ति,
लोकान् दरिद्रिणः करिष्यन्ति, पुनर्हे गौतम! पंचमकालमध्ये लोकानामग्निवर्द्धी पीडां करिष्यति, गोप्रमुखाणां जीवानां बहुवधो
भविष्यन्ति, जिनालयाः पतिष्यन्ति, पुनर्दुःखदारिद्र्युपद्रवमलोत्सर्गमारीप्रमुखैः कृत्वा धरित्री शून्या भविष्यति, देशो भंगं यास्यति,

स्वर्णपौरुषादिः सिद्धिं यास्यति, धैर्यादिगुणनिख्यातस्य विक्रमादित्यस्य स्थाने स्थाने मनुष्या देवाश्च प्रशंसां करिष्यन्ति, पुनः स राजा सर्वलोकानां दानसन्मानादिकं कृत्वा सर्वाननृणीकरिष्यति, स्वनाम्ना च संवत्सरप्रवृत्तिं करिष्यति, यस्य देवा अपि स्तवनं करिष्यन्ति, महाबलवान् प्रजापालकः परदुःखनिवारकः परस्त्रीसहोदरो राजा विक्रमादित्यो भविष्यति, ततः पंचशतचतुरशीतिवर्षे (५८४) व्यतिक्रान्ते श्रीवज्रस्वामी भविष्यति, ततो दशमपूर्वार्धस्य कीलिकासंहननस्य च विच्छेदो भविष्यति, तदनन्तरं षोडशाधिकषट्शतवर्षे (६१६) पुष्पमित्रेण सार्धं नवमं पूर्वं विच्छेदं यास्यति, पुनर्मम निर्वाणाद् विंशत्यधिकषट्शतवर्षे (६२०) आचार्यादयो ग्राममध्ये स्थास्यन्ति (?), मम निर्वाणाद् नवाधिकषट्शतवर्षे (६०९) रथनूपुरनगराद् दिगम्बरमतोत्पत्तिर्भविष्यति, श्रीविक्रमादित्यात् पंचत्रिंशदधिकशतवर्षे (१३५) गते शाकी राजा शालिवाहनो भविष्यति, पंचाशीत्यधिकपंचशतवर्षे (५८५) गते हरिभद्रसूरिर्भविष्यति अनेकग्रन्थकर्ता महाप्रभावको, मन्निर्वाणात् त्रिनवत्यधिकनवशतवर्षे (९९३) कालिकाचार्यो भविष्यति, यस्येन्द्रो वन्दनां करिष्यति, यः कालकसूरिः पर्युषणापर्व पंचमीतः चतुर्थ्यां कारणादानीतवान्, मन्निर्वाणात् सप्तत्यधिकद्वादशशतवर्षे (१२७०) व्यतिक्रान्ते बप्पभट्टिसूरिर्भविष्यति सर्वविद्याविशारदः, तद्वाक्याद् गोपपर्वते आमराजा जिनालयं कारयिष्यति, तत्र सार्धत्रिकोटिस्वर्णप्रतिमां स्थापयिष्यति । मन्निर्वाणात् त्रयोदशशतवर्षे (१३००) बहवो मतभेदा भविष्यन्ति, बहुमोहस्य कारणात् दुःषमकालप्रभावतश्चानेकगच्छभेदा भविष्यन्ति, केचित् तपोऽहंकारं कारष्यन्ति, केचिच्च धर्मक्रियायां शिथिला भविष्यन्ति, क्रियावन्तोऽपि साधवः परस्परं क्लेशं करिष्यन्ति । पुनरस्यामवसर्पिण्यां दश अच्छेरका जाताः तानाह—

समवसरणे उपसर्गः १, गर्भापहारः २, स्त्रीतीर्थंकरः ३, परिषदभावः ४, कृष्णस्यामरकंकागमनं ५, चन्द्रसूर्यमूलविमानागमनं ६,

श्रेणिः ५, उपशमश्रेणिः ६, केवलज्ञानम् ७, परिहारविशुद्धि-सूक्ष्मसंपराय-यथाख्यातचारित्राणि ८, सिद्धिगतिः ९, जिनकल्पकः १०, एतानि दश वस्तूनि जम्बूस्वामितो विच्छेदं यास्यन्ति, ततो दुःषमकालप्रभावतश्चतुर्दशपूर्वधारी जम्बूस्वामि प्रतिबोधकः निजपट्टप्रभावकः श्रीप्रभवस्वामी भविष्यति. तत्पट्टे चतुर्दशपूर्वधरः दशवैकालिककर्ता मनक-पिता श्रीशय्यम्भवसूरिः भविष्यति, तत्पट्टे चतुर्दशपूर्वधारी यशोभद्रसूरिर्भविष्यति, तच्छिष्यौ सम्भूतिविजय-भद्रबाहुनामानौ चतुर्दशपूर्वधरौ भविष्यतः, ततो मम निर्वाणात् सप्तत्यधिकशतवर्षे ( १७० ) अनेकशास्त्रकर्ता भद्रबाहुः स्वर्गं यास्यति, ततो मम निर्वाणात् पंचदशाधिकद्विशतवर्षे ( २१५ ) चतुर्दशपूर्वधारी सम्भूतिविजयशिष्यः श्रीस्थूलिभद्रो देवलोकं यास्यति, ततः प्रथमं संहननं वज्रऋषभनाराचाख्यं विच्छेदं यास्यन्ति, ततोऽर्थतः चतुष्पूर्व-सूक्ष्मसंपराय-महाप्राणायामध्यानाख्यानि एतानि विच्छेदं यास्यन्ति, ततः मन्निर्वाणाद् त्रिशतवर्षे ( ३०० ) उज्जयिन्यां नगर्यां सम्प्रति राजा भविष्यति, स च आर्यसुहस्तिसूरिणामुपदेशाद् जातिस्मरणज्ञानमवाप्य जैनधर्ममंगीकरिष्यति, स्वभुजबलात् त्रिखण्डभोक्ता भविष्यति, ज्ञानवान् दानवान् न्यायी धर्मज्ञो विनयवान् पराक्रमी च भविष्यति, मुक्ताफलवद् निर्मलजिनालयैः कृत्वा धरित्रीं देदीप्यमानां करिष्यति, पुनः स राजा अनार्यदेशे लोकानामुपकारार्थं सम्यक्त्वधारिणां जीवाजीवादिनवतत्त्वविदामुपदेशदानार्थं तादृशानां श्रावकाणां धर्मसंयोगं कारयिष्यति, ततो महासंविज्ञगीतार्थानां साधूनां म्लेच्छधरित्र्यां विहारं कारयिष्यति, अनया रीत्या तीर्थंकराणां धर्मस्य सर्वदेशे प्रवृत्तिं करिष्यति, एतादृशो महादृढधर्मा अनुक्रमेण स्वर्गं यास्यति. पुनर्मन्निर्वाणात् सप्तत्यधिकचतुःशतवर्षे ( ४७० ) उज्जयिन्यां श्रीविक्रमादित्योराजा भविष्यति, श्रीसिद्धसेनदिवाकराचार्यस्योपदेशं श्रुत्वा जिनशासनस्योपरि भक्तिमान् भविष्यति, सम्यक्त्वं सम्यग्रीत्या पालयिष्यति, तस्य सत्त्वसिद्धा अग्निवेतालाद्यनेकदेवाः साहाय्यं करिष्यन्ति, विद्या

न्तु कुदर्शनस्य पूजादि भविष्यति ८, नवमे शुष्कं सरोवरं दृष्टं तेन यत्र यत्र देशे जिनानां कल्याणकानि तत्र तत्र धर्महानिर्भविष्यति ९, दशमे सुवर्णपात्रे क्षीरं भक्षयन् श्वा दृष्टस्तेन उत्तमा लक्ष्मीरधमगृहे गमिष्यति १०, एकादशे गजारूढो वानरो वनचरो दृष्टः तेन सुखारूढा दुर्जना भविष्यन्ति, इक्ष्वाकुवंशीयानां यादवप्रमुखाणां च हानिर्भविष्यति ११, द्वादशे समुद्रो मर्यादां मुंचन् दृष्टः, तेन राजानोऽन्यायकर्तारो भविष्यन्ति, क्षत्रियाश्च कुमार्गगामिनो भविष्यन्ति १२, त्रयोदशे महारथे वत्सा युक्ता दृष्टाः, तेन वृद्धावस्थायां चारित्रं जना न ग्रहीष्यन्ति, परं वत्सतुल्या लघुवयसः साधवो भविष्यन्ति, ये च वैराग्यभावेन चारित्रं ग्रहीष्यन्ति ते च प्रमादिनो भविष्यन्ति १३, चतुर्दशे महार्घ्यं रत्नं तेजोहीनं दृष्टम्. तेन भरते ऐरवते च साधवोऽसमाधिकराः कलहकरा उपद्रवकराश्च भविष्यन्ति, तथा श्रमणा अपि स्तोका भविष्यन्ति १४, पंचदशे राज्ञः कुमारो वृषभारूढो दृष्टः, तेन क्षत्रिया मिथ्यात्ववासिनो भविष्यन्ति १५, षोडशे गजकलभयुगलं युद्धं कुर्वद् दृष्टम् तेन मुनिवरा अल्पस्नेहा अकालव्यसनिनोऽहर्निशं युद्धकराश्च भविष्यन्ति, गुरुशुश्रूषाकरा न भविष्यन्ति १६, एवं श्रुत्वा चन्द्रगुप्तो नाम राजाऽनशनं गृहीत्वा धर्मध्यानेन स्वर्गं गतः। इति षोडशस्वप्नविचारः कथितः। एतादृशं प्रभोर्वाक्यं श्रुत्वा गौतमस्वामी चित्ते विस्मयं विधाय प्रभोर्वन्दनां कृत्वा भाविस्वरूपं पप्रच्छ–अहो स्वामिन् ! लोकालोकप्रकाशक ! पंचम–षष्ठारकयोः स्वरूपं कथय, प्रभुर्वक्तिस्म–हे गौतम ! त्वं सावधानीभूय शृणु–मम निर्वाणात् त्रिवर्षसार्धाष्टमासे व्यतिक्रान्ते चतुर्थारक उत्तरिष्यति, अग्रे च पंचमारक आयास्यति, ततो मम निर्वाणाद् द्वादशवर्षे व्यतिक्रान्ते तव मोक्षो भविष्यति, ततोऽस्मन्निर्वाणाद् विंशतिवर्षे गते सुधर्मस्वामिनो मोक्षो भविष्यति, ततोऽस्मन्निर्वाणाच्चतुष्षष्टिवर्षे गते जम्बूर्मुक्तिं यास्यति, ततो जम्बूस्वामितो दश वस्तूनि विच्छेदं यास्यन्ति, तान्याह–आहारकशरीरं १, मनःपर्यवज्ञानम् २, पुलाकलब्धिः ३, परमावधिज्ञानं ४, क्षपक–

न्ताए वट्टमाणस्स पच्छिमे समये सोलससुमिणा दिट्ठा—तत्थ पढमे सुमिणे कप्परुक्खस्स साहा भग्गा १, बीए अकाले सूरो अत्थमिओ २, तइए चंदो सयच्छिड्डीभूओ ३, चउत्थे भूया नच्चंति ४, पंचमे दुवालसफणो कण्हसप्पो दिट्ठो ५, छट्ठे आगयं विमाणं पडियं दिट्ठं ६, सत्तमे असुइट्ठाणे कमलं संजायं ७, अट्ठमे खज्जोओ उज्जोअं करेइ ८, नवमे महासरोवरं सुक्कं दक्खिणदिसाओ थोवजलं लभन्ति ९, दसमे सुनहो सुवण्णपत्ते पायसं भक्खेइ १०, इक्कारसमे हत्थिआरूढो वणचरो दिट्ठो ११, दुवालसमे सायरं मंजायं मुंचइ १२, तेरसमे महारहे वच्छा जुत्ता दिट्ठा १३, चउदसमे महग्घं रयणं तेअहीणं दिट्ठं १४, पनरसमे रायकुमारो वसहारूढो दिट्ठो १५, सोलसमे गयकलहजुयला जुज्झंता दिट्ठा १६, एएण सुमिणाणुसारेण सासणे किं किं भविस्सइ ? इइ चंदगुत्तस्स रायस्स वयणं सुचा भद्दबाहुगणहरो युगप्पहाणो भवोदहितारगो चंदगुत्तस्स संघसमक्खं भणइ—चंदगुत्ता ! सुमिणाणुसारेण अत्थं कहेमि तं जहा''—प्रश्नसूत्रं सुगमत उत्तरसूत्रं व्याख्यायते-षोडशस्वप्नानां मध्ये प्रथमं तावत् चन्द्रगुप्तेन राज्ञा कल्पवृक्षस्य शाखा भग्ना दृष्टा, तस्य फलम् अतः पश्चात् कोऽपि राजा संयमं न ग्रहीष्यति १, द्वितीयस्वप्ने सूर्यस्याकाले एवास्तत्वं दृष्टं तेन केवलज्ञानं विच्छेदं यास्यति २, तृतीये चन्द्रः शतच्छिद्रो दृष्टस्तेन एकस्मिन् धर्मेऽनेके मार्गा भविष्यन्ति ३, चतुर्थे भूता नृत्यन्तो दृष्टास्तेन कुमतिजना भूता इव नर्त्स्यन्ति ४, पंचमे द्वादशफणः कृष्णसर्पो दृष्टस्तेन द्वादश वर्षाणि यावद् दुर्भिक्षं भविष्यति, कालिकसूत्रप्रमुखाणि श्रुतानि विच्छेदं यास्यन्ति, चैत्यद्रव्यधारिणो भिक्षुकाश्च, तत्र ये साधुधर्मकांक्षिणः ते सर्वे दक्षिणस्यां दिशि वलभ्यां गमिष्यन्ति ५, षष्ठे विमानं पतितं दृष्टं तेन जंघाचारणा-विद्याचारणाश्च साधवो भरते ऐरावते च नाऽऽगमिष्यन्ति ६, सप्तमे कचवरधरित्र्यां कमलमुद्गतं दृष्टं तेन धर्मश्चतुर्णां वर्णानां मध्ये वैश्यवर्णमध्ये भविष्यति, सूत्ररुचिश्चाल्पजनानां भविष्यति, ७, अष्टमे खद्योत उद्योतं करोति, तेन जिनधर्मे उदयपूजासत्कारो न भविष्यति पर-

अमात्यं च तथाविधचेष्टारहितं ज्ञात्वा ते ग्रथिलाः सर्वे विचारयन्ति—राजाऽमात्यौ ग्रथिलो जातौ अतएव अस्माकं कार्यं न कुर्वन्ति, अत एतौ उत्थाप्य अन्यौ राजामात्यौ करिष्यामः, एतादृशं ग्रथिललोकानां विचारं श्रुत्वा अमात्यो राजानं वक्तिस्म, एते सर्वेऽपि लोका आवामुत्थाप्य अन्यौ राजामात्यौ स्थापयिष्यन्ति तदा कमपि उपायं कृत्वा आवयोः रक्षा कार्या, तदा राजा अमात्यं कथयतिस्म, भवता कश्चिदुपायो विधेयो येनाऽऽवयो रक्षा स्याद् , तदा विचार्य अमात्यो वदति स्म–हे राजन् ! अन्यः कश्चिदुपायो नास्ति अत आवामपि ग्रथिलौ भवाव तदा इदं राज्यं स्थास्यति, इति विचार्य राजामात्यौ जानन्तौ अपि ग्रथिलौ भूत्वा, एभिः सार्धम् आत्मराज्यरक्षार्थं मिलितौ, ततः कियति दिने गते सति पुनः सुवृष्टिर्जाता तदा नवीनोदकस्य पाने सति सर्वे लोकाः सावधाना जाताः । एवं दुःषमकाले क्रियावन्तो गीतार्था अपि हीनाचारिभिः सार्धं सदृशीभूय विचरिष्यन्ति । एतादृशं स्वप्नफलविचारं श्रुत्वा गृहस्थावासतः उद्विग्नीभूय श्रीवर्धमानस्वामिसमीपे व्रतमंगीकृत्य पुण्यपालो मोक्षसुखभाग् बभूव । अत्र केचिद् श्रीभद्रबाहुस्वामिना उक्तान् अपि स्वप्नान् व्याख्यायन्ति, तथाहि–"ते णं काले णं, ते णं समए णं पाडलिपुरे नाम नयरे होत्था, जहा णं चंपा तहा भणियव्वा, तत्थ णं पाडलिपुरे नयरे पाडलनामवणसंडे होत्था, तत्थ णं पाडलिपुरे चन्दगुत्ते नाम राया होत्था, ते णं कालेणं ते णं समए णं चन्दगुत्तनामराया समणोवासगो अभिगयजीवाजीवो जाव अट्ठिमिज्जापवयणरागरत्तो, अह अण्णया कयावि पक्खियपोसहम्मि पडिजागरमाणस्स सुहपत्तेसु ओहीरमाणे ओहीरमाणे सोलससुविणा दिट्ठा, पासिता, चिंता समुपन्ना, अह कमेण दिवायरे उट्ठिए पोसहं पारेइ। ते णं काले णं, ते णं समए णं संभूयविजयसीस्से भद्दबाहुनाम गणहरे जुगप्पहाणे गामाणुगामं विहरमाणे पंचसयसमणपरिवरिया पाडलिपुरे पाडलिवणसंडे समोसरिए, राया आगओ जहा कोणिए, पंचविहेणं अभिगमेणं वन्दणेणं सोलससुमिणाणं अत्थं पुच्छइ—भयवं ! अज्ज रयणीए मम धम्मचि-

युक्ता नाधमकुले, परन्तु धर्मोत्पत्तिः कालप्रभावतो नोत्तमकुले भविष्यति, इति षष्ठस्वप्नफलम् । यथा कश्चिद् मन्दबुद्धिः कृषिकारो धान्यबीजमूषरक्षेत्रे वपति तथा मूर्खबुद्धिमन्तः पुमांसः पात्रापात्रमनालोक्य पात्रबुद्ध्या कुपात्रे दानं दास्यन्ति, इति सप्तमस्वप्नफलम् । अष्टमस्वप्नफलम्—स्वर्णकलशसदृशा ज्ञानादिगुणयुक्ताः साधवः स्तोका भविष्यन्ति न च तेषां पूजाप्रभावनामपि कोऽपि करिष्यति, परन्तु ये बाह्याऽडम्बरवन्तो ज्ञानक्रियारहिताः साध्वाभासाः तान् लोकाः पूजयिष्यन्ति, गीतार्था अपि साधवो हीनाचारिभिः सह मिलिताः चलिष्यन्ति, यथा बहून् ग्रथिलान् लोकान् दृष्ट्वा सज्जनलोका अपि तेषां मध्ये मिलिताः सन्तः जानन्तोऽपि स्वयमात्मजीवितरक्षार्थं ग्रथिला भविष्यंति तथा । अथ तत्कथा—पृथिवीपुरे नगरे पूर्णभद्रनामा राजा आसीद् , तस्य महाबुद्धिनिधानः चतुरः सकलकार्यकुशलः सुबुद्धिनामा मन्त्रीश्वरोऽभूद् ; अथैकदा प्रस्तावे राजसभामध्ये लोकदेवनामा नैमित्तिकः समागतः, तदा अमात्येन पृष्टं, हे नैमित्तिकचूडामणे ! आगामिकालस्य शुभाशुभवार्तां कांचित् प्रकाशयतु, तदा नैमित्तिकेन निजनिमित्तशास्त्रं सम्यक् पर्यालोच्य स्वज्ञानबलात् कथितम्—हे मन्त्रीश्वर ! अतो दिनाद् एकस्मिन् मासे मेघवृष्टिर्भविष्यति, तज्जलपानं च ये करिष्यन्ति ते सर्वे मनुष्या ग्रथिलाः भविष्यन्ति, ततः पश्चात् कियति दिवसे शुभा वृष्टिर्भविष्यति, तज्जलपानाच्च पुनः सर्वे सावधाना भविष्यन्ति; एतादृशं नैमित्तिकस्य वचनं श्रुत्वा राजामात्याभ्यां नगरमध्ये घोषणा कारिता । यत् सर्वैः लोकैः पानीयस्य संग्रहः कर्तव्यः, तदनन्तरं सर्वैरपि राजवचनं श्रुत्वा पानीयस्य संग्रहः कृतः । अथ नैमित्तिककथनानुसारेण वर्षा जाता, तदा सर्वैरपि लोकैः वर्षापानीयस्य पानं न विहितम् , कियति दिवसे गते पूर्वसंगृहीतं जलं यदा सम्पूर्णं जातं तदा राजाऽमात्याभ्यां विना सर्वैः सामन्तादिभिरपि वर्षापानीयं पीतम् , तेन च सर्वग्रामो ग्रथिलः जातः-अथ सर्वे लोका एकत्रीभूय नग्नाः सन्तः नृत्यन्ति हसन्ति अन्याश्च कुचेष्टाः कुर्वन्ति, राजामात्याभ्यां विना सर्वे तादृशं कुर्वन्तः राजानम्

हे स्वामिन् ! अद्य रात्रौ मया अष्टौ स्वप्ना दृष्टाः,ताननुक्रमेण भवतामग्रे कथयामि—जीर्णशालायां स्थितो हस्ती दृष्टः १, कपिश्चपलतां कुर्वन् दृष्टः २, क्षीरवृक्षः कण्टकैर्व्याप्तो दृष्टः ३, चतुर्थे च स्वप्ने काको दृष्टः ४, पञ्चमे मृतः सिंहो भयं कुर्वन् दृष्टः ५, षष्ठे स्वप्नेऽशुचिभूमिकायामुत्पन्नमरविन्दं दृष्टम् ६, सप्तमे स्वप्ने ऊषरक्षेत्रे बीजमुप्तं दृष्टम् ७, अष्टमे स्वप्ने स्वर्णकलशो म्लानो दृष्टः ८, इति राज्ञा उक्ते एतेषां च फले पृष्टे प्रभुर्वक्ति–हे राजन् ! एषां फलमेकाग्रचित्तेन शृणु—अस्मिन् पञ्चमारके दुःख-दारिद्र्य-रोग शोक-भयैर्व्याप्तो गृहस्थाश्रमो जीर्णशालासदृशो भविष्यति; यस्मिन् गृहस्थरूपो हस्ती रक्तः सन् स्थास्यति; दुःखं च सुखं कृत्वा मानयिष्यति परमुत्तमसुखदात्रीं व्रतशालां नांगीकरिष्यति, इति प्रथमस्वप्नफलम् । पुनः पञ्चमकाले कपिवत् चपला अल्पसत्त्वा जीवा ज्ञानक्रियायामादरभाजो न भविष्यन्ति, साधवश्च शिथिलाचारा भविष्यन्ति, ये पुनः दृढव्रतधारका धर्मकार्ये शिक्षां दास्यन्ति तेषां हास्यं च करिष्यन्ति, यथा ग्रामीणलोका नगरस्थलोकानां हास्यं कुर्वन्ति; तथा करिष्यन्ति, इति द्वितीयस्वप्नफलम् । तथा ज्ञाने क्रियायां च भक्तिमन्तो जिनशासनोन्नतिकारकाः सप्तक्षेत्रीवित्तव्ययविधायकाः शुभगुणवन्तश्चारित्ररागिणः क्षीरवृक्षतुल्या ये श्रावकास्तान् वेषमात्रधारिणोऽहंकारवन्तो गुणवत्साधुपूजामसहमाना लिंगिनः कण्टकतुल्याः रोधयिष्यन्ति, इति तृतीयस्वप्नफलम् । यथा अतिस्वच्छजलभृतां वापीं दृष्ट्वा काको न तत्र रागं करोति, एवं ज्ञानक्रियायुक्तान् अपि साधून् स्वगच्छे दृष्ट्वाऽपि रागं न साधवः प्राप्स्यन्ति, यथा काकस्य रागं न वापी प्राप्नोति तथा साधवोऽपि गच्छस्य रागं न करिष्यन्ति इत्यर्थः । परन्तु यत्र गच्छे मन्दाऽऽचाराः साधवः तत्र सुन्दरं स्वगच्छं त्यक्त्वा यास्यन्ति आत्मनः पण्डितं मन्यमानाः, इति चतुर्थस्वप्नफलम् । जातिस्मृत्यादिरहितं मृतसिंहतुल्यं जिनदर्शनं न परतीर्थिकात् पराभवं प्राप्स्यति परं परदर्शनानां भयं करिष्यन्ति, इति पञ्चमस्वप्नफलम् । पद्महृदे कमलोत्पत्तिर्युक्ता, न अशुचिभूमौ, एवं धर्मोत्पत्तिरपि उत्तमकुले

आगतः, तत्र बहुलविप्रगृहे परमान्नस्य पारणं चक्रे, तत्र पञ्च दिव्यानि प्रादुर्भूतानि । तत्र च सार्धद्वादशस्वर्णकोटीनां देवैर्वर्षा कृता ।
अनन्तरं क्रमेण विहरतः श्रीवीरप्रभोः गोपालक-चण्डकौशिकसर्प-शूलपाणियक्ष-संगमदेव-कटपूतनाव्यन्तरीप्रमुखैः बहव उपसर्गाः
कृताः, तथापि प्रभुध्यानात् किंचिन्मात्रमपि न चचाल; मेरुवन्निष्प्रकंप आसीत्, श्रीवीरप्रभोः चातुर्मासी षण्मासी-द्विमास्यादि प्रचण्डतपः
क्रियायामुद्यतस्य पक्षाधिकसार्धद्वादशवर्षाणि अतिक्रान्तानि । तस्मिन् समये जृम्भिकग्रामे ऋजुवालुकानदीतीरे श्यामाककुटुम्बिनः
क्षेत्रस्य समीपे शालवृक्षस्याधोभागे गोदोहासनेन स्थितस्य षष्ठतपोयुक्तस्य वैशाखशुक्लदशम्यां तृतीयप्रहरे शुक्लध्याने वर्तमानस्य
श्रीवीरप्रभोश्चतुर्णां घातिकर्मणां क्षये सति केवलज्ञानं केवलदर्शनं च समुत्पन्नम् । तत एकादश्यां मध्यमपापायां महासेनवने तीर्थं
प्रवर्तितम् , शक्रादिदेवैरेकत्रीभूय समवसरणं रचितम् , पश्चाद् इन्द्रभूत्याद्येकादश गणधराः श्रीवीरेण स्थापिताः । अथ प्रभोः चतु-
र्दशसहस्रमिताः साधवः संजाताः, चन्दनबालादिषट्त्रिंशत्सहस्रमिताश्च साध्व्योऽभूवन् , शंख-शतकादि एकोनषष्टिसहस्राधिकलक्ष-
प्रमाणाः श्राद्धाः, सुलसा-रेवतीप्रमुखाष्टादशसहस्राधिकत्रिलक्षप्रमाणाः श्राविकाश्च संजाताः । अथ प्रभोश्चतुर्मासीनां संख्या कथ्यते—
दीक्षाऽनन्तरं प्रथमचतुर्मासी अस्थिग्रामे शूलपाणियक्षगृहे कृता, त्रिचतुर्मासी चम्पानगर्याम् , विशालायां-वाणीयग्रामे द्वादश चतु-
र्मास्यः कृता, राजगृहनगर्यां नालन्दपाटके चतुर्दश चतुर्मास्यः, षट् चतुर्मास्यः मिथिलानगर्यां भगवता कृताः, द्वे चतुर्मास्यौ भद्रिकानगर्यां
कृते, एका चतुर्मासी आलम्भिकानगर्यां कृता, एका चतुर्मासी म्लेच्छभूमिकायां कृता, एका चतुर्मासी श्रावस्तीनगर्यां कृता, एका च मध्यमपा
पायां हस्तिपालराज्ञः सभायामन्तिमा कृता, तत्र अन्तिमचातुर्मास्यां श्रीवीरप्रभुः स्वस्यायुषोऽन्तं ज्ञात्वा भव्यलोकोपकारार्थं षोडशप्रहरान् या-
वद् देशनां दत्तवान् , तस्मिन्नवसरे पुण्यपालराजा प्रभोर्वन्दनार्थमागतः, श्रीवीरप्रभोर्वन्दनां कृत्वा हस्तद्वयं सम्पुटीकृत्य इति-वक्ष्यमाणं पृष्टवान्-

शद्दिक्कुमारीणामासनानि चकम्पिरे, अवधिना प्रभोर्जन्म ज्ञात्वा अत्यन्तप्रमुदिताः सन्त आगत्य जन्मकार्यं कुर्वन्ति । तदनन्तरं- चतुष्पष्ठिसुरेन्द्राणामासनानि चकम्पिरे, ततस्तेऽपि अवधिना विज्ञाय अत्यन्तप्रमुदिताः सन्त आगत्य त्रिःप्रदक्षिणीकृत्य जिनाम्बां जिनं च नत्वा मातरमवस्वापिनीं निद्रां दत्त्वा प्रभुं गृहीत्वा मेरुपर्वतोपरि गत्वा स्नात्रमहोत्सवमहंपूर्विकया चक्रुः । पश्चात् मातुः समीपे स्थापयित्वा मातरवस्वापिनीं निद्रां संहृत्य नमस्कृत्य स्वस्थानं जग्मुः । अथ यस्माद् दिनात् प्रभुर्गर्भे आगतस्तस्माद् दिनाद् राजा धनधान्यैर्वृद्धिमाप, स्वर्णरत्नादीनां च वृद्धिः संजाता. ततो गुणनिष्पन्नं सर्वस्वजनसमक्षं माता-पितृभ्यां द्वादशे दिने वर्धमान- कुमार इति नाम प्रदत्तम् , देवैश्च अनन्तसत्त्वमनन्तधैर्यं दृष्ट्वा महावीर इति नाम विदधे । अथ भोगसमर्थं ज्ञात्वा पित्रा परं प्रमोदतो यशोमतीनाम्न्या राजकन्यया सह पाणिग्रहणं कारितम् । अथ प्रभोः सुपार्श्वनामा पितृव्यः, नन्दिवर्धननामा ज्येष्ठो भ्राता, सुदर्शना- नाम्नी भगिनी, यशोमती नाम्नी पत्नी, प्रियदर्शनानाम्नी च पुत्री आसीद् । श्रीवीरप्रभुः अष्टाविंशतिवर्षाणि यावद् गृहावासे तस्थौ । भगवता पूर्वं गर्भे एवाभिग्रहः कृतोऽभूयत् जीवतोः सतोः मातापित्रो मया दीक्षा न गृहीतव्या इति । अथ मातापितृभ्यां देवलोके प्राप्ते अभिग्रहं पूर्णं सञ्जातं ज्ञात्वा प्रभुर्दीक्षां ग्रहीतुं तत्परोऽभूत् , तदा नन्दिवर्धनराज्ञ आग्रहात् पुनरपि वर्षद्वय गृहस्थावासे तस्थौ; तत्र सांवत्सरिकं दानं दत्तम् । अथ लोकान्तिकदेवा आगत्य जानन्तमपि प्रभुं दीक्षावसरं ज्ञापयन्ति-'अहो स्वामिन् ! धर्मतीर्थ- प्रवृत्तिं कुरु' इति देववचनं श्रुत्वा प्रभुः षष्ठतपसा संयुतः चन्द्रप्रभानाम्नीं शिबिकामारुह्य देवमनुष्यपरिकरेण युतः क्षत्रियकुण्डनगरतो निःसृत्य ज्ञातवनखण्डे आगत्य शिबिकातः उत्तीर्य मार्गशीर्षकृष्णदशम्यामपराह्णे एकाकी एकदेवदूष्येण वस्त्रेण सहितः दीक्षां जग्राह । तस्मिन् समये चतुर्थं मनःपर्यवज्ञानमुत्पन्नम् । अथ दीक्षां गृहीत्वा प्रभुरन्यत्र विजहार । प्रव्रज्यादिनाद् द्वितीये दिने कोल्लाकसन्निवेशग्रामे

प्राणतनामदशमदेवलोकस्य पुष्पोत्तरविमानाच्च्युतः, आषाढशुक्लषष्ठीदिने उत्तराफाल्गुनीनक्षत्रे चन्द्रयोगे आगते सति क्षत्रियकुण्डग्रामनगराधिपतिश्रीसिद्धार्थराज्ञो भार्यायाः त्रिशलायाः कुक्षावुत्पन्नः। यस्यां रात्रौ भगवानुत्पन्नः तस्यां रात्रौ गर्भप्रभावात् त्रिशलाराज्ञ्या चतुर्दश स्वप्ना दृष्टाः, तानाह-सिंहः, गजः, वृषभः, लक्ष्मीः, पुष्पमाला, चन्द्रः, सूर्यः, ध्वजः, पूर्णकलशः, पद्मसरः, समुद्रः, देवविमानम्, रत्नराशिः, निर्धूमाग्निश्च। एवमेते स्वप्नाः क्रमेण दृष्टाः ❀ ततः चैत्रशुक्लत्रयोदश्यामर्धरात्रे श्रीवीरप्रभोः जन्म जातम्, तस्मिन् समये षट्पंचा-

❀—अत्र सामान्येन नाममात्रेण संक्षिप्तं श्रीवीरचरित्रं दर्शितम्, अतएव देवलोकात् च्युत्वा आषाढशुक्लषष्ठ्यां देवानंदागर्भागमनं तथैव द्व्यशीतिदिनव्यतीते इन्द्रेण त्रिशलागर्भे अवतारितः, ( गर्भापहारः कारितः, इत्यर्थः ) एष च विशेषार्थो न दर्शितः। जैनसिद्धांते विशेषार्थे विद्यमानेऽपि सामान्यव्याख्याऽवसरे विशेषार्थस्य व्याख्यानं न भवति, यथा—कल्प—आवश्यक—आचारांगादौ आगमपंचांगीशास्त्रेषु 'देवानंदागर्भात् द्व्यशीतिदिनव्यतीतेषु सत्सु हरिणैगमेषिदेवेन त्रिशलागर्भे स्थापितः श्रीवीरप्रभुः' एतद्विशेषव्याख्याविद्यमानेऽपि पंचाशकसूत्रवृत्तौ सामान्यव्याख्याऽवसरे तस्योल्लेखो न कृतः, तेन तस्य तत्र अभावो न भवति, तथैव अत्राऽपि देवानंदागर्भागमने विद्यमानेऽपि तस्योल्लेखो न कृतः, तथापि तस्य अभावो न भवति, अतएव अत्र सामान्यविशेषापेक्षया तद् अवगंतव्यम्। किमुक्तं भवति श्रीवर्द्धमानस्वामिनः विशेषतः षट्सु कल्याणकेषु आगमानुसारेण विद्यमानेषु अपि, अत्र सामान्यापेक्षया त्रिशलागर्भागमन—जन्म-दीक्षादिपंचकल्याणकानि उक्तानि, तथैव पंचाशकसूत्रवृत्तावपि—सर्वजिनेंद्रापेक्षया च्यवन—जन्म—दीक्षादिपंचकल्याणकानि—सामान्येन उक्तानि। परं च कल्प—स्थानांग—आचारांग—आवश्यकनिर्युक्ति-चूर्ण्यादिआगमेषु-महापुरुषचरित्र-वीरचरित्र-त्रिषष्टिशलाकापुरुषचरित्र—कल्पनिरुक्त—टिप्पणकादि प्राचीनशास्त्रेषु च विशेषेण च्यवन गर्भसंक्रमण—जन्म—दीक्षादिषट्कल्याणकानि दर्शितानि, तेनात्र विसंवादो न संभाव्यः समवायांगसूत्रवृत्ति—आवश्यकचूर्णि-लोकप्रकाश—दशाश्रुतस्कंधादिशास्त्रानुसारेण श्रीवीरस्य च्यवनद्वयस्य संसिद्धत्वात्, सामान्यविशेषापेक्षया च अस्य विशेषनिर्णयो कल्पद्रुमकलिकायाः प्रथमव्याख्यानात्, अस्मत् निर्मितबृहत्पर्युषणानिर्णयस्योत्तरार्धाच्च अवगंतव्य इति मणिसागरः।

विहरन् जीवितस्वामिश्रीमहावीरप्रतिमावन्दनार्थं गतः, एतस्मिन् प्रस्तावे संप्रति राजा राजमार्गे गच्छन् सुस्थितसूरिं दृष्ट्वा जातिस्मरणभाग् बभूव । ततः राजा समीपे आगत्य बहुभक्तिपूर्वकं श्रीगुरुं ननाम । करद्वयं संयोज्य राजा गुरुं प्रति वक्तिस्म–'हे स्वामिन् ! मां जानीथ' इति पृष्टे गुरुराह–हे राजन् ! भवन्तं को नाम न जानाति ?; ततो राजा पुनरुवाच-हे ज्ञानसमुद्र ! ज्ञानविशेषेण भवताऽहमुपलक्षितो न वा ? इति मया पृच्छयते, तदा सूरिश्चमत्कारं प्राप्य श्रुतज्ञानोपयोगं दत्त्वा उवाच–भो राजन् ! त्वं पूर्वभवे संवेगवानस्माकं शिष्यो बभूव, उत्तमदीक्षाप्रभावतो भवान् राजा जातः, एषा च सम्पत् प्राप्ता । एतादृशं गुरोर्वचनं श्रुत्वा आचार्ये प्रीतिमान् राजा वक्ति–हे स्वामिन् ! मया बुभुक्षितेन रंकेन इदं राज्यं प्राप्तं तत्सर्वं युष्माकं प्रसादफलं; इतरथा मम राज्यं कुतः ? तस्मादिदं राज्यं भवद्भिर्ग्राह्यं; यथा ऽहमनृणी स्याम्, एतादृशं राज्ञो वाक्यं श्रुत्वा गुरुरुवाच–हे निर्मलबुद्धे राजेन्द्र ! अस्माकं राज्यस्यवाञ्छा नास्ति, वयं तु शरीरेऽपि निः–स्पृहाः किं पुनः राज्ये, तस्माद् हे राजेन्द्र ! अस्माकं राज्येन सह किमपि प्रयोजनं नास्ति, इदं राज्यं भवद्भिः पुण्यात् प्राप्तं; ततो हे राजेन्द्र ! पुनः पुण्ये उद्यमः कर्त्तव्यः, निर्मलं सम्यक्त्वं च पालनीयम् । श्रीजिनेश्वरजगन्नाथस्य निरन्तरं पूजां कुरु । पुनः सुसाधूनां निर्ग्रन्थानां पंचसमितिसमितत्रिगुप्तिगुप्तानां सप्तदशभेदसंयमपालकानां द्विचत्वारिंशदाहारदूषणवर्जितानां भव्यजीवोपकारकाणां सेवां कुरु, दानादिचतुर्विधस्य धर्मस्याराधने उद्यमं कुरुष्व, एष धर्मो विशेषेण पर्वसु आराधनीयः, एतादृशं गुरुवाक्यं श्रुत्वा राजा उवाच–हे स्वामिन् ! संवत्सरादि समस्तपर्व जिनशासने प्रसिद्धं वर्तते, तस्य पर्वणो महिमा श्रावकैः बहुतरो मन्यते; परं लोकोत्तरं दीपावलिपर्व कुतः प्रवृत्तं ? अस्मिन् पर्वणि चारुवस्त्रभूषणादीनि मनुष्या धारयन्ति, पुनः वृषभादिशृंगरंजनक्रियां गृहांगणप्रमुखसंस्कारादीनि च कुर्वन्ति, तस्य किं कारणम् ? इति राज्ञा पृष्टे सति गुरुर्वक्तिस्म–हे राजन् ! एतस्य सम्बन्धं त्वमेकाग्रचित्ततया शृणु । श्रीवर्धमानस्वामी

धर्मकर्माणि विधाय तत्पर्वाराधनीयं, येनेह परत्र च सर्वेष्टसिद्धिः ॥

संवद्व्योमरसाष्टरात्रिप्रमिते ( १८६० ), मासे शुचौ शोभने । पक्षे प्रोज्ज्वलतायुते सुविहिते, सम्यग्द्वितीयातिथौ ॥
श्रीपूज्यजिनहर्षसूरिगणभृद्राज्ये मुदाष्टाह्निका—व्याख्यानं सुगमं हितं सुविहितं श्रीजेसलाद्रौ पुरे ॥ १ ॥
श्रीमंतो गुणशालिनः समभवन् , प्रीत्यादिमाः सागरा-स्तच्छिष्याऽमृतधर्मवाचकवरा आसन् स्वधर्मादराः ॥
तच्छिष्यैर्जिनराजराजिचरणांभोजप्रसक्तैः क्षमा-कल्याणाभिधपाठकैः सुमनसां श्रद्धावतां प्रीतये ॥ २ युग्मं ॥
मुनेरुदयरंगस्या-ग्रहाद्व्याख्यानमादरात् ॥ इदं व्यधायि प्राचीनं पद्यबन्धं विलोक्य तत् ॥ ३ ॥

॥ इति पर्युषणाद्यष्टाह्निकाव्याख्यानं सम्पूर्णम् ॥

## अथ दीपमालिकाव्याख्यानम् ॥ ११ ॥



श्रीनेमीशं जिनं नत्वाऽजिमगंजपुरे स्थितम् । दीपोत्सवस्य व्याख्यानं, लिख्यते देवभाषया ॥ १ ॥

अस्मिन् जंबूद्वीपे भरतक्षेत्रस्य मध्यखंडे मालवदेशे अलकातुल्या उज्जयिनी नाम नगरी बभूव । तस्यां सूर्यवत् तेजस्वी भूपगुणसम-न्वितः संप्रतिनामा राजा राज्यं करोतिस्म । अथैकदा उज्जयिन्यां सुस्थितसूरिनामा आचार्यः षट्त्रिंशद्गुणैर्विभ्राजमानो ग्रामानुग्रामं

दार्थमुद्यतो भवति, तावदेव सा तस्य खड्गधारां बबन्ध, न पुनस्तस्य सत्वस्य. ततो राजा खड्गधाराबन्धनाद्विलक्षः सन् कंठनालविडंबकं नवं नवं खड्गं गृहीतवान्, यदासौ भूपतिर्मनागपि सत्वान्न चचाल तदा ते स्त्रियौ स्वकीयं रूपं प्रादुःकृत्याऽत्यादराज्जयजयेत्युचतुः, पुनश्च—

जय ! त्वं वृषभस्वामि ! कुलसागरचन्द्रमाः । जय ! सत्ववतां धुर्यः, जय ! चक्रीशनंदनः ! ॥ १ ॥

अहो ! तव धैर्य ! अहो ते मनसो निश्चयः ! यत्स्वस्य विनाशेऽपि मनाक् स्वव्रतं न त्यक्तवान्. देवेन्द्रः स्वसभायां देवानां पुरस्तवातुलं सत्त्वं विशेषतः प्रशशंस, हे राजन् ! आवाभ्यां अश्रद्धानाभ्यां स्वर्गादागत्य स्वनिश्चयात्त्वं क्षोभयितुमारब्धः, परं त्वां क्षोभयितुं कोऽपि न समर्थः. हे जगत्प्रभुकुलावतंस ! हे वीर ! त्वयैव इयं पृथ्वी रत्नसूरिति सत्यं नाम बिभर्ति, इत्थं तयोः स्तुवत्योस्तत्र देवेंद्र उपागमत्, जयजयशब्दमुच्चरन् पुष्पवृष्टिं च कृतवान्. तदा प्रतिज्ञाभ्रष्टा उर्वशी इन्द्रेण सोपहासं निरीक्षिता सती तत्पुरतो नृपगुणान् जगौ. इन्द्रोऽपि तस्मै वरमुकुटकुंडलांगदहारान् दत्वा च ताभ्यां सह स्वर्गं ययौ. सूर्ययशा अपि सत्यप्रतिज्ञः प्रमुदितः सन् सन्नीत्या पृथ्वीं पालयतिस्म. अथ स राजा भरतेशवत् पृथ्वीं जिनगृहमंडितां कुर्वन् श्रीसंघयात्रया जन्म पवित्रयन् श्रीयुगादिजिनचरणवत् नित्यं चतुर्दश्यष्टमीपर्वं आराधयामास, तथा व्रतधारिणः श्रावकान् स्वगृहे भोजयामास. पूर्वं भारतेन कांकिणीरत्नरेखाभिः श्रावका अंकिताः, सूर्ययशसा तु सौवर्णोपवीतेन तेन तेंचिताश्चक्रिरे. तस्य राज्ञ उदारचरिता बहवः कुमारा आसन्. यथा ऋषभस्वामिन ईक्ष्वाकुवंशो ववृते, तथा सूर्ययशसः सूर्यवंशोऽभवत्; सोऽप्येकदा पितृवत्स्वरत्नदर्पणे पश्यन् संसारासारतां धारयन् केवलज्ञानं प्राप्य बहून् भव्यान् प्रतिबोध्य मुक्तिं प्राप । इति निजनियमदृढपालने सूर्ययशोनृपकथा ॥ भव्यात्मभिरष्टाह्निकापर्वणीत्थं

करणमंगीकृतमेव, अहमेकदा त्वत्परीक्षार्थं त्वत्तस्तद्याचितवती, त्वं तु हहा स्वल्पेन कार्येण क्रोधवशं गतः, हे नाथ ! अहं शीलादपि सुखादपि उभयस्माद् भ्रष्टा, तस्मान्मम चिताग्निसेवनमेव श्रेयःशरणमस्तु. इति तद्वचः श्रुत्वा तन्मग्नमानसो नृपः स्ववाक्यं स्मरन् जगाद, हे प्रिये ! तततातेन च यत्कृतं तत्पर्वणो नाशं तत्पुत्रोऽहं कथं कुर्वे ? हे हरिणाक्षि ! मम सकलां पृथ्वीं कोशं गजाश्वादीं च सर्वान् त्वं स्वयं गृहाण; परं येन न सौख्यं, न च धर्मस्तदकृत्यं मां मा कारय ? ततः सापि ईषद्विहस्य कोमलवाण्या प्रोवाच, हे राजन् ! भवादृशां सत्यवचनमेव सद्वृत्तं, यतो येन पापिना स्वांगीकृतविघातः कृतः सोऽशुचिस्तस्य भारात्पृथ्वी अतिषीदति. हे नाथ ! यदि त्वया इदमपि कार्यं न सिद्ध्यति तदा राज्यादिदातृत्वं कथं सेत्स्यति ? त्वदर्थं मया पितुर्विद्याधरैश्वर्यं त्यक्तं मयैतद्राज्यादिना किं कुर्वे ? अथ हे स्वामिन् ! यदि पर्वभंगं न कर्त्ता, तर्हि मत्पुरतो युगादीशप्रासादं पातय ? इति तद्वचनश्रवणमात्रेणैव नृपो वज्राहत इव मूर्छां प्राप्य गतचैतन्यो भुवि पपात. तदैव मंत्रिणा आदेशादाकुलैस्तत्परिकरजनैः शीतलजलादिसंसेकान्नृपो लब्धचैतन्यो विहितः; अथ सूर्ययशा नृपः स्वपुरः स्थितां तां स्त्रियं दृष्ट्वा कुपितो जगाद, रे अधमे ! अयं तवाचारो वाण्या मत्पुरः स्वकुलाधमतां विकिरति, यत उद्गारवदाहारो भवेत्, त्वं विद्याधरपुत्री न, किंतु चांडालपुत्री दृश्यसे, मया मणिभ्रमेणैव काचखंडादरश्चक्रे, यो देवस्त्रैलोक्यनाथस्त्रैलोक्यवंदितस्तत्प्रासादभंगकृत् कोऽपि कथं भवेत् ? तस्मात् हे स्त्रि ! स्वयं स्ववचसा बद्धं मामनृणं कर्तुं धर्मलोपं विनाऽन्यद्याचस्व ? पर्वलोपं चैत्यध्वंसं चाहं सर्वथा न करोमि, तत् श्रुत्वा सापि ईषद्विहस्य पुनस्तमुवाच-हे नाथ ! अन्यदन्यदिति च तद्वचो दूरतो याति, यदीदं त्वं नांगीकर्त्ता, तर्हि त्वं स्वयं स्वपुत्रस्य शिरश्छित्वा सद्यो मह्यं देहि ? अथ राजा विमृश्य वदतिस्म, हे सुलोचने ! मत्सुतो मत्तोऽभवत्, तस्मान्मम शिरस्तव करतलस्थमस्तु, इत्युक्त्वा नृपः करेण खड्गं गृहीत्वा यावत् स्वशिरश्छे-

तपश्च कर्त्तव्यं, जिनपूजाश्च विधेया, इत्थमेतानि पर्वाण्याराधयन् जनः पुण्यान्यर्जयति, ततः क्रमेण कर्माणि क्षपयित्वा मुक्तिं याति, अतो हे कान्ते ! सप्तम्यां त्रयोदश्यां च लोकप्रबोधाय अयं पटहोद्घोषो मयादेशात्प्रजायते. अथोर्वशी एतन्नृपवचः श्रुत्वा तन्निश्चयचमत्कृतापि माय.वचनप्रपंचेन जगाद, हे नाथ ! इदं मनुष्यत्वमिदं रूपमिदं राज्यं सर्वं तपःक्लेशादिभिस्त्वया कथं विडंब्यते ? यथेच्छं सुखानि भुंक्ष्व ? पुनर्मानवो भवः क ? राजसङ्गोगाश्च क ?

अथ कर्णयोस्तप्तत्रपुतुल्यं तस्यास्तद्वचनं श्रुत्वा नृप उवाच रे रे धर्मनिंदापलिनस्वभावेऽधमे ! इयं तव वाणी मनागपि विद्याधरकुलाचारोचिता न दृश्यते, तव सकलं चातुर्यं धिक्, रूपं वयः कुलं च धिक्, येन त्वं जिनपूजादिकं सद्धर्मकृत्यं निंदसि, पुनर्मनुष्यत्वसद्रूपारोग्यराज्यादीनि तपसा प्राप्यंते, तत्तपः कः कृतज्ञो नाराधयेत् ? यो नाराधयेत् स कृतघ्न एव, धर्माराधनतो हि देहस्य विडंबनं न स्यात्, धर्मं विना केवलं विषयैस्तु विडंबनमेव, तस्माद्यथेच्छं धर्मः कर्त्तव्यः, पुनः पुनर्मानवो भवः क ? व्रतधीः का ? मृगसिंहादिबाला अपि अष्टम्यां पाक्षिके चाहारं न गृह्णंति, तर्हि अहं कथं गृह्णामि ? तेषां ज्ञातृत्वं च धिगस्तु, ये सर्वधर्मकारणं पर्वाराधनं न कुर्वंति. श्रीयुगादिजिनोपदिष्टमिदमुत्तमं पर्वास्ति, तदहं तपो विना कंठगतप्राणैरपि पर्व वृथा न कुर्वे, हे स्त्रि ! मम राज्यं प्रयातु, प्राणक्षयोऽस्तु, परं पर्वतपसोऽहं भ्रष्टो न भवामि ! तत इत्थं क्रोधाकुलं नृपवचः श्रुत्वा उर्वशी मोहमायां कुर्वती पुनरुवाच—स्वामिन् ! भवतः कायक्लेशो माभूदिति प्रेमरसत एव मयैतद्वचः प्रोक्तं, तस्मात्क्रोधावसरोऽत्र नास्ति. पूर्वं तु आवाभ्यां पितृवाक्यविमुखीभ्यां स्वच्छंदचारी नृपतिर्न वृतः, सांप्रतं पूर्वकर्मपरिपाकात् त्वं वशो वृतस्तेनावयोः संसारसौख्यं शीलं च सर्वमकस्माद्गतं, यदि स्वाधीनपुंस्त्रियोर्योगो भवेत्तदा सांसारिकं सुखं स्यात्, अन्यथा रात्रिदिवसयोगवद्विडंबनमेव, हे स्वामिन् ! पुरा नाभेयजिनाग्रे त्वया तु मद्वाक्य-

उवाच. आवां मणिचूड विद्याधरराजस्य पुत्र्यौ, आबाल्यात्कलास्वेवादरवत्यौ अभूतां, क्रमेण यौवनं प्राप्ते वीक्ष्य अस्मत्पिता चर्चितां कर्तुं लग्नः, आवां स्वमदृशं पतिमलभमाने स्थाने स्थाने अर्हच्चैत्यानां नमस्यामिर्निज जन्म सफलं कुर्वहे । पुनर्माभवो भवः क्व ? इयमयोध्यापि तीर्थभूतास्ति, अतोऽत्र भरतकारिते चैत्ये आदिजिनं नमस्कर्त्तुमावयोरागमनमभूत्. एवं कथयंत्योस्तयोर्मंत्री उवाच-अमुना सूर्ययशसा नृपेण सह युवयोः संगमः श्रेष्ठो; यतोऽसो ऋषभस्वामिनः पौत्रो भरतचक्रिणः पुत्र सर्वकलासंपूर्णः सौम्यः सद्गुणवान् बलवांश्च अस्ति तस्मान्निश्चितं ऋषभस्वामी युवयोस्तुष्टो यदुत अकस्मात्सूर्ययशा वरः प्राप्तः । मंत्रिणि एवं वदति सति ते तमूचतुः आवां हि स्वाधीनं पतिं मुक्त्वान्यं पतिं नैवाश्रयावहे. ततोऽमात्यो नृपाज्ञया ते इत्यवोचत्, युवयोर्वाचमन्यथा कुर्वन्नृपतिर्मया निषेध्यः, मंत्रिणा एवमुक्ते सति तदैव श्रीयुगादीशसमक्षं तेषां पाणिग्रहोत्सवः संजातस्ततस्तयोः प्रीतिरसाकृष्टो भूपतिः संसारे तद्भोगमेव सारं मन्यमानोऽहर्निशं ताभ्या सह विविधान् भोगान् भुंजानो विस्मृतान्यकृत्यः सुखेन कालं निनाय । अथ एकदा संध्यासमये ताभ्यां पत्नीभ्यां युतः सूर्ययशा नृपो गवाक्षं ययौ, तदा भो लोकाः! श्वोऽष्टमीपर्व भावि, ततस्तदाराधने सादरैर्भाव्यमिति पटहोद्घोषणां ताभ्यां कपटस्त्रीभ्यां श्रुत्वा ततोऽवसरं विज्ञाय रंभाऽजानतीव नृपतिं प्रति सादरा सती भंभावादनकारणमपृच्छत् । नृपतिरुवाच हे रंभे! शृणु, ? अस्माकं तातेनोक्तं चतुर्दश्यष्टमीरूपं पर्वास्ति, यथामावास्या पौर्णमासी अष्टाह्निकाद्वयं चातुर्मासत्रियं वार्षिकं पर्युषणाख्यं च पर्व एतानि अन्यान्यपि पर्वाण्युक्तानि संति; ज्ञानाराधनार्थं पंचमी च प्रोक्तास्ति । एतेषु पर्वदिनेषु विहितं पुण्यं स्वर्गमोक्षसुखप्रदं भवेत्. तस्माच्चतुःपर्व्यामखिलं गृहव्यापारं परित्यज्य शुभं कर्म विधेयं; पुनश्चतुःपर्व्यां स्नान-स्त्रीसंग-कलह-द्यूतक्रीडा-परद्रव्य-मात्सर्य-क्रोधादिकपापसंगप्रमादादि न किमपि कर्त्तव्यं, प्रियेष्वपि ममता न विधेया, परमेष्ठिस्मरणादिशुभध्यानवता भाव्यं, सामायिकं पौषधं च षष्ठाष्टमप्रमुखं

कंपते, समुद्रो वा मर्यादां त्यजेत्, कल्पवृक्षो वा निष्फलो भवेत् तथाप्येषा कंठगतैः प्राणैरपि जिनाज्ञावत् स्वकृतं निश्चयं न मुंचति, अथोर्वशींद्रवचः श्रुत्वा किंचिन्मनसि विचार्य प्रत्युत्तरमुवाच–हे स्वामिन् ! युक्तायुक्तज्ञस्त्वं मनुष्येषु निश्चय किं श्लाघसे? यः सप्तधातुनिष्पन्नशरीरोऽन्नजीवकः स देवैरप्यचाल्य इति कः श्रद्धाति ? मद्गानरसपूरेण केषां विवेकप्रमुखा गुणा न विलयं यांति ? तत्र गत्वा तमप्यहं सद्यो व्रताद् भ्रंशयिष्ये, इति प्रतिज्ञां विधाय रंभया सहिता उर्वशी हस्तेन वीणां दधाना स्वर्गात् भूमिमवतरतिस्म; अयोध्यानिकटोद्याने च श्रीऋषभस्वामिनश्चैत्ये मोहोत्पादकमत्यद्भुतं रूपं कृत्वा गायतिस्म; तद्गानमोहिताः पक्षिमृगसर्पाद्या अपि आलेख्यलिखिता इव पाषाणघटिता इव वा निश्चलनेत्रास्तस्थुः ।

इतश्च श्रीसूर्ययशा अश्वं वाहयित्वा पश्चाद्वलमानः पथि तयोरतिमधुरगानध्वनीन् शुश्राव, तदा वाजि-गज-पत्तयः पदमपि यानेऽसमर्था अभूवन्. एतत्स्वरूपं दृष्ट्वा नृपोऽमात्यं प्रति सादरमुवाच–भो मंत्रिन् ! संसारे नादसमः सुखदः कोऽपि न दृश्यते. यद्वशात्पशवोऽप्यमी ईदृग्मोहिताः संति । नादेन देव-दानव नृप-कामिन्यादयः सर्वेऽपि प्रायो वशी भवन्ति. ततो वयमपि ऋषभस्वामिनं नमस्कर्तुं तत्र चैत्ये यामस्तत्र गत्वा एतद्गेयस्वादमपि लप्स्यामहे । इत्थमामंत्र्य तद्गानमोहितो भूपालो मंत्रिणा सह जिनचैत्यान्तर्जगाम । तत्र हस्तयोर्वीणां बिभ्रत्यौ, गीतध्वनिं कुर्वत्यौ कामभार्येव दिव्यसौंदर्ये द्वे कुमारिके विलोक्य स्नेहचक्षुर्विमुक्तैः कामबाणैर्हृदि विद्धो नृपश्चिंतयामास. एतयोरिदमत्यद्भुतं रूपं कस्य पुण्यवतो भोगाय भविष्यति ? ततो राजा मुहुर्मुहुस्तयोश्चक्षुषी क्षिपन् युगादीशितुः पादौ प्रणम्य चैत्यान्निःसृत्य बहिर्प्रदेशे उपविष्टस्तयोः कुलादिकं ज्ञातुं मंत्रिणे आदिष्टवान् . मंत्र्यपि नृपादेशात्तयोः समीपं गत्वा सुधामधुरया वाचा संभाष्य इत्थमालपत्. हे कन्यके ! युवां के? युवयोः पति कः ? किमर्थमिहागमनं चैत्येतत्सर्वं वदत. अथ मंत्रिवचः श्रुत्वा तयोरेका

स्मरणं प्राप्य जिनधर्मानुरक्तोऽभूवं, ईदृशोपायं विना मम जैनधर्मप्राप्तिः कुतः ? अनार्यत्वमहापंके निमग्नोऽहं त्वयोद्धृतस्त्वत्प्रसादादेव च मे चारित्रावाप्तिर्जाता, ततः श्रेणिकाभयकुमारादयः सर्वेऽपि लोकास्तमृषिं वंदित्वा तुष्टमनसः स्वस्थानं ययुः; ततो मुनि राजगृहपुराभ्यर्णे समवसृतं श्रीवीरस्वामिनमभिवंद्य तच्चरणकमलसेवया स्वकीयं जन्म सफलीकृत्य क्रमेणायुः क्षये शिवं प्राप ॥ इति श्रीजिनदर्शनमाहात्म्ये आर्द्रकुमारदृष्टांतः ॥

पुनरत्र पर्वणि यत्कर्त्तव्यं तदाह–तपोविधानादि, यथाशक्ति तपसि यत्नो विधेयः, च ुर्थ-षष्ठा-ष्टमादितपः कार्यमित्यर्थः, तत्र यदि कश्चित् स्नेहवशात्तन्निषेधं करोति तथापि तल्लोपबुद्धिर्न धार्या श्रीभरतपुत्रसूर्ययशोनृपवत् , तत्कथा चेयं—

अयोध्यायां नगर्यां सूर्ययशा नृप आसीत् , स च त्रिखंडभूमिस्वामी नीतिवत् अखंडशासनो दुष्टान् वैरिणः स्ववशे नीतवान् , इंद्रेणोपढौकितं मुकुटं शिरसि धृतवान ; तस्य मुकुटस्यैव माहात्म्याच्च स नृपः सुरसेव्योऽप्यभूत् , तस्य राज्ञो राधावेधपणात् प्राप्ता कनकविद्याधरपुत्री जयश्रीर्नामपट्टराज्ञी बभूव, अन्यान्यपि तस्य बहूनि कलत्राणि आसन् . स राजा चतुःपर्वी विशेषेणाष्टमीं चतुर्दशीं च प्रत्याख्यानपौषधादितपसा आराधयति स्म, जीविताद्दरवत्पर्वादरोऽस्य चेतसि अतिवल्लभोऽस्ति, तेनासौ जीवितादपि पर्वाणि रक्षति। अथैकदा सौधर्मेन्द्रः सुधर्मासभामाश्रितो ज्ञानात्तन्निश्चयं ज्ञात्वा चमत्कृतिं प्राप, तदोर्वशी देवी विश्ववशीकरणसामर्थ्यं बिभ्राणाऽकस्मात्सुरेंद्रशिरःकंपं दृष्ट्वा प्रोवाच. स्वामिन् सांप्रतं शिरः कंपनकारणं तु न किमपि दृश्यते तत किं निमित्तं तुष्टेन नाथेन शिरःकंपः कृतस्तदा सुरेंद्र उवाच-मयाधुना ज्ञानदृष्ट्या भरतक्षेत्रे ऋषभस्वामिनः पौत्रो भरतचक्रिणः पुत्रोऽयोध्याधिपः सूर्ययशा नाम राजा सात्त्विकानां शिरोमणिर्दृष्टः, स चाष्टमीचतुर्दशीपर्वणस्तपसः कृतबहुयत्नैः सुरैरपि चालयितुं न शक्यते, यदि सूर्यः पूर्वदिशमतिक्रम्य पश्चिमायामभ्युदेति तथा मेरुर्वातैः

यः, एवं स मुनिर्गोशालं निरुत्तरीचक्रे तदा जय जय शब्दं कुर्वद्भिः खेचराद्यैश्च तस्य महामुनेर्बह्वी प्रशंसा कृता ॥

तत आर्द्रकर्षिर्हस्तितापसाश्रमसमीपे आययौ, तत्रस्थास्तापसाश्च एकं महान्तं हस्तिनं हत्वा तन्मांसं भुंजाना बहून् दिवसान् व्यतीयंति, ते चैवमूचुः, एकस्यैव हस्तिनो हननं वरं, यत एकजीवघातेन भूयान् कालोऽतिगम्यते, मृगतित्तिरमत्स्याद्यैर्धान्यैश्च बहुभिरपि न तथा, तस्माच्चद्भक्षणं न युक्तं बहुपापसद्भावात् तदा च ते मिथ्याधर्मनिष्ठास्तपस्विनो मारणार्थं एकं महान्तं गजं बबंधुः यत्र शृंखलाबद्धः स गज आसीत्तेनैव मार्गेण करुणानिधिः स महर्षिर्जगाम, तदा स हस्ती मुनिपंचशतीयुतं बहुभिर्जनैर्वंद्यमानं तं महर्षिं दृष्ट्वा लघुकर्मत्वादित्यचिंतयत्, अहमप्येनं मुनिं वंदेयं यदि बद्धो न भवेयं, बद्धस्तु किं करवाणि ? एवं चिंतयतस्तस्य महर्षेर्दर्शनात्सद्योऽश्वः शृंखला व्यशीर्यत, अथ स हस्ती निरर्गलः सन् तं मुनिं वंदितुमभ्यागात्, तदा लोका एष मुनिर्हतो हत इति ब्रुवाणाः पलायनं चक्रिरे, मुनिस्तु तथैव तस्थौ, गजोऽपि नम्रीकृतकुंभस्थलः सन् तं मुनिं नमतिस्म, शुंडादण्डं प्रसार्य मुनिपादौ स्पृष्ट्वा स्पृष्ट्वा परमं सुखं प्राप, ततः स गजः समुत्थाय भक्त्या मुनिं पश्यन् अव्याकुलः सन् अरण्यानीं प्रविवेश, तदात्यद्भुतं तत्प्रभावं दृष्ट्वाऽतिकोपं प्राप्तास्ते तापसा अपि आर्द्रकुमारसाधुना प्रत्यबोध्यत, ततस्तत्प्रेषिताश्चैते श्रीवीरसमवसरणे गत्वा दीक्षां जगृहुः ॥

अथ श्रेणिकराजापि तथा गजमोक्षणं तापसप्रतिबोधं च श्रुत्वाऽभयकुमारयुक्तस्तत्रागात्, मुनिर्भक्त्या वंदमानं राजानं धर्मलाभाशिषं ददौ, अथ शुद्धभूतले आसीनं मुनिं राजा पप्रच्छ हे भगवन् ! हस्तिमोक्षणान्मम महदाश्चर्यं ममजनि । मुनिरूचे–हे राजन् ! हस्तिमोक्षणं न दुष्करं, किन्तु आमतंतुपाशमोक्षणं मां दुष्करं प्रतिभासते । राज्ञा पृष्टं स्वामिन् तत्कथं ? तदा स मुनिः सकलामपि स्वां कथां कथयामास । तत आर्द्रकुमारोऽभयं प्रत्यभाषत त्वं मम निष्कारणोपकारी धर्मबांधवोऽभूत्, हे मित्र ! त्वत्प्रेषितार्हत्प्रतिमादर्शनादहं जाति-

अथ प्रतिज्ञापूर्णीभवनानंतरं स वैराग्यपूर्णमानसो रात्रेः पश्चिमे प्रहरे इत्यचिंतयत् , मया प्राग्भवे मनसैवव्रतं भग्नं तेनाहमनार्यत्वं प्राप्तोऽस्मि, अत्र भवे पुनर्व्रतं गृहीत्वा मुक्तपतः का गतिर्मे भविष्यति ? इदानीमपि प्रव्रज्यां गृहीत्वा तपसा आत्मानं शोषयामि, इति विचिंत्य प्रातःकाले श्रीमतीं पत्नीं स्वसुतं च संभाष्य तदनुमतिं च लात्वा साधुलिंगं समादाय निर्ममत्वो गृहान्निर्ययौ । अथ राजगृहं व्रजन् अंतराले चौर्यवृत्तिं कुर्वाणां स्वसामंतपंचशतीं ददर्श, तैरप्युपलक्ष्य भक्त्या वंदितः, स साधुस्तानवादीत् युष्माभिर्महापापहेतुरेषाजीविका किमादृता ? तैरुक्तं हे प्रभो ! अस्मान् वंचयित्वा यदा त्वं पलायिष्टस्तदोदितो लज्जया भूपतेर्मुखं न दर्शयामः, तवैवान्वेषणे लग्नाः पृथ्वीं भ्रमंतश्चौर्यवृत्त्यैव जीवामः, मुनिरुवाच अयुक्ता वृत्तिर्भवद्भिरादृता, केनापि पुण्ययोगेनेदं मानुष्यकं प्राप्य स्वर्गापवर्गप्रदो धर्म एव सेव्यो हिंसाऽसत्यचौर्याब्रह्मपरिग्रहपरित्यागः कर्त्तव्यः, हे भद्रा ! यूयं स्वामिभक्ताः स्थ, प्राग्वदहं युष्माकं स्वामी-अतो ममैव मार्गं प्रपद्यध्वं, ततस्ते प्रोचुः पूर्वं त्वमस्माकं स्वाम्येवाभूः, सांप्रतं तु गुरुरप्यसि यतस्त्वयाऽस्मभ्यं धर्मो ज्ञापितोऽथास्मान् दीक्षयानुगृहाण; तत आर्द्रकुमारस्तान् प्रव्राज्य तैः सहितः श्रीमहावीरं वंदितुं राजगृहाभिमुखं ययौ, मार्गे गच्छतस्तस्य गोशालोऽभिमुखो मिलितो विवादं कर्तुं प्रवृत्तः, भूचराः खेचराश्चापि सहस्रश आयाताः कौतुकार्थिनस्तस्थुः ॥

अथ गोशालोऽवदत् भवतां तपःकष्टं वृथैव, यतः शुभाशुभफलानां कारणं नियतिरेवास्ति, ततो मुनिरवादीत् पौरुषमपि कारणं मन्यस्व, यदि सर्वत्र नियतिमेव कारणं मन्यसे तर्हि अभीष्टसिध्यर्थं सर्वाः क्रिया वृथा प्रसज्येरन् , तथाहि-हे नियतिवादिन् ! सर्वदा स्वस्थाने एव किं न तिष्ठसि ? भोजनाद्यर्थं च कथमुद्यमं करोषि ? एवं स्वार्थसिद्धये नियतिवत्पौरुषमपि साध्यमस्ति, अर्थसिद्धौ नियतेरपि पौरुषमाधिक्यं भजते, तथाहि आकाशात्पानीयं पतति, परं भूखननादपि तद्भवेत्, यतो नियतिर्बलीयसी, परं नियतेरपि पौरुषं बली-

यथा प्रतिदिनं यातानायातांश्च सर्वानपि साधून् पश्यामि, श्रेष्ठयुवाच इह पत्तने ये केऽपि महर्षयः समायांति तेभ्यस्त्वं प्रत्यहं स्वयं भिक्षां देहि, येन सर्वेषां दर्शनं स्यात् , ततः सापि प्रत्यहं तथैव चक्रे, तल्लक्षणं दिदृक्षमाणा च मुनीनां चरणानवंदत, अथ द्वादशे वर्षे स महामुनिर्दिग्मूढः सन् तत्रागतस्तल्लक्षणदर्शनात्तयोपलक्षितश्च, तदा श्रीमती तमृषिमुवाच हे नाथ ! तत्र देवकुले तदा यो मया वृतः स मम वरस्त्वमेवासि, मद्भाग्यैरेवाधुनागतोऽसि, अथ मां मुग्धां त्यक्त्वा क यास्यसि, यदा त्वं दृष्टनष्टोऽभूः; तद्दिनादारभ्य मम महादुःखेन कालोऽगमत् , तस्मात्प्रसादं विधाय मामंगीकुरु, एवं स्थितेऽपि यदि मामवमन्यसे तर्हि अग्निप्रवेशं कृत्वा तुभ्यं स्त्रीहत्यापातकं दास्ये, तदान्यैरपि तत्पित्रादिभिर्महाजनैर्विवाहाय अभ्यर्थितः स साधुव्रतारंभनिषेधकं तद्देवीवचनं सस्मार, ततस्तद्भोग्यकर्मोदयाद्दणमोक्षमिव कर्तुं तां श्रीमतीं पर्यणैषीत् । अथ श्रीमत्या सह चिरं भोगान् भुंजानस्य तस्य क्रमेण पुत्रः संजातः, स च क्रमेण वर्द्धमानो राजशुक इव वक्तुमुल्लसज्जिह्वोऽभवत् , तावति पुत्रे संजाते सति स आर्द्रकुमारो हर्षितः सन् श्रीमतीं प्रोवाच, अतः परं ते पुत्रः सहायोऽस्तु, अहं प्रव्रजामि, तदा बुद्धिनिधिः श्रीमती सुतं प्रत्यवसरं ज्ञापयितुं रूलपूणिकासहितं तर्कुमादाय समुपाविशत् , तदा तूलकर्त्तनक्रियां कुर्वाणां तां विलोक्य स बालकः पप्रच्छ हे अंब ! एतत्पामरलोकोचितं कर्म किं प्रारब्धं ? सा प्रोचे-हे पुत्र ! तव पिता त्वां मां च त्यक्त्वा प्रव्रज्यार्थं गंतुमनो वर्त्तते, गते चास्मिन् पतिहीनाया मे तर्कुरेव शरणं, तदा बालको बाल्यान्मनाक्षरैरुवाच–अहं बद्ध्वा धारयिष्यामि कथं मे पिता यास्यति ? इत्युक्त्वा तन्तुभिः पादौ बबन्ध. आर्द्रकुमारोऽपि तन्मधुरं बालवचोवृंदं श्रुत्वा सुतस्नेहादेवमुवाच, हे पुत्र ! यावद्भिस्तंतुभिर्मे पादौ बद्धौ तावंति वर्षाणि पुनर्गृहे स्थास्यामि, गणयित्वा बंधनानि अच्छोटय ? ततो गणिता द्वादशबंधा अभवन्, तेन स द्वादश वर्षाणि पुनर्गृहे स्थास्ये इत्युक्त्वाऽवाहयत् ॥

मुनिस्तीक्ष्णं व्रतं पालयन् भूमंडले विचरन् अन्यदा वसंतपुरपत्तनं प्राप्य कस्मिंश्चिद्देवकुले कायोत्सर्गेण च तस्थौ ॥

इतश्च तस्मिन्नगरे देवदत्तो नाम महाश्रेष्ठ्यभूत्, तस्य धनवती नामा पत्न्यासीत्, अथ बन्धुमतीजीवो देवलोकाच्च्युत्वा श्रीमतीनामा अद्भुतरूपा तयोः पुत्री समजनि, सा च धात्रीभिर्लाल्यमाना क्रमेण रजःक्रीडोचितं वयः प्राप, एकदा तत्र देवकुले पौरकन्याभिर्युक्ता श्रीमतीकन्या पतिवरणक्रीडया रंतुमाययौ, तदा सर्वाः कन्या भर्त्तारं वृणुतेत्यूचुस्तत कयापि कोऽपीत्येवं सर्वाभिः स्वरुचिवरा वृताः, श्रीमत्योक्तं हे सख्यो ! मया तु अयं पूज्यो वृतस्तदा साधुवृतमिति देवता प्रोवाच, पुनर्गर्जितं तन्वाना सा एव देवी तत्र रत्नान्यवर्षत्, श्रीमती गार्जिताद्भीता तस्य मुनेः पादेऽलगत् , स मुनिः क्षणमात्रं स्थित्वाऽचिंतयत् , इह तस्थुषो ममानुकूलं उपसर्गोऽभूत् , अतोऽत्र न स्थेयमिति विचिंत्य सोऽन्यत्रागात् . तदा अस्वामिकं धनं राज्ञ एवेति निश्चयं कृत्वा तानि रत्नान्यादातुं राजा तत्राजगाम, राजपुरुषास्तद्द्रव्यस्थानं नागसंकुलं ददृशुः, देवतया चोक्तं एतद् द्रव्यमस्यै कन्यायै मया वरके प्रदत्तमस्ति, इति श्रुत्वा नृपो विलक्षः सन् स्वस्थानं ययौ, ततस्तत्सर्वं धनं श्रीमतीपिता श्रेष्ठी जग्राह । अथ कियता कालेन श्रीमतीं परिणेतुं बहवो वरा अढौकंत, तत्स्वरूपं पित्रा पुत्र्यै उक्तं तदा श्रीमती जगाद–हे तात ! यो महर्षिर्मया वृतः स एव मम वरः, तद्वरणे देवता य द्रव्यमदात् तद् द्रव्यं गृह्णता त्वयापि तदनुमतमेव, ततस्तस्मै मां कल्पयित्वान्यस्मै दातुं नार्हसि, उक्तं च—

सकृज्जल्पंति राजानः, सकृज्जल्पंति साधवः ॥ सकृत्कन्याः प्रदायत, त्रीण्येतानि सकृत् सकृत् ॥ १ ॥

एतत् श्रुत्वा श्रेष्ठ्यूचे, स तु भ्रमर इव एकत्र नावतिष्ठतेऽतः कथं प्राप्यते पुनरत्रायास्यति न वा, आयातोऽपि कथं ज्ञायते ? किं तस्याभिज्ञानं ? तदा श्रीमत्या उक्तं-हे तात ! मया तद्दिने गर्जितभीतया तच्चरणे विलग्नयाभिज्ञानं दृष्टमस्ति, तस्मादतः परं तथा कुरु

प्रतिमां पूजयन्नार्द्रकुमारो दिवसानतिवाहयतिस्म, एकदा कुमारो नृपमेवं व्यजिज्ञपत् हे तात ! स्वमित्रमभयकुमारं द्रष्टुमिच्छामि, आर्द्रकनृपोऽवादीत् , हे वत्स त्वया तत्र गमनेच्छा न कर्त्तव्या, अस्माकमपि स्थानस्थितानामेव श्रेणिकेन सह मैत्र्यमस्ति; तदा पित्राज्ञया निबद्धोऽभयसंसर्गं प्रति उत्कंठितश्चार्द्रकुमारोऽपि न तस्थौ न च जगाम, तथा स आसने शयने याने भोजनेऽन्यक्रियासु च अभयकुमारेणाश्रितां दिशं नेत्रयोरग्रे चकार. पुनः कीदृशो मगधदेशो, राजगृहपुरं च कीदृक्; तत्र गमने कस्को मार्ग इत्थं पार्श्ववर्त्तिनो जनान् पप्रच्छ; तस्मिन्नवसरे आर्द्रकनृपो दध्यौ, कदापि कुमारो मामकथयित्वैव निश्चितमभयसमीपे यास्यत्यतो यत्नः कर्त्तव्यस्ततो नृपः पंचसामंतशतानि इत्यादिशत् , अहो ! अयं कुमारो देशांतरं गच्छन् भवद्भिरक्षणीयस्तदा ते सामंता देहच्छायेव तत्पार्श्वं न त्यजन्ति स्म, कुमारोऽप्यात्मानं देहधृतमिवामंस्त, ततोऽभयसमीपगमनं मनसि अवधार्य प्रत्यहमश्ववाहनभूमौ अश्ववाहनं कर्त्तुमारेभे, ते सामंताश्च अश्वारूढा अंगरक्षकाः संतः पार्श्वे तस्थुः, कुमारोऽश्वं वाहयन् तेभ्यः किंचिदग्रे गत्वा न्यवर्त्तत, एवं चाश्वं वाहयन् सोऽधिकाधिकं ययौ, पुनः पुनर्व्याघुत्य ययौ च, इत्थ तेषां विश्वासमुत्पाद्यान्यदार्द्रकुमारो निजैः प्रतीतिमत्पुरुषैः समुद्रे यानपात्रं प्रगुणं कारयित्वा तच्च रत्नादिभिः प्रपूर्य जिनप्रतिमां च तत्रारोप्य तथैवाश्वं वाहयन् दूरगमनाददृश्यीभूय तद्यानपात्रमारुह्य आर्यदेशं ययौ, ततो यानपात्रादुत्तीर्य तां प्रतिमामभयकुमाराय संप्रेष्य सप्तक्षेत्र्यां धनान्युप्त्वा यतिर्लिंगं गृहीतवान् , स च यावत्सामायिकमुच्चारयितुमारेभे तावदाकाशस्थितया देवतया उच्चैः स्वरेणोचे-यद्यपि त्व महासत्त्वस्तथापि सांप्रतं दीक्षां मा ग्रहीः, अद्यापि ते भोगफलं कर्मास्ति तद्भुक्त्वावसरे व्रतं गृह्णीथाः, यतो भोग्यं कर्म तीर्थकृतामप्यवश्यं भोक्तव्यं, तस्मात् हे महात्मन् ! तेन व्रतेनालं यद् गृहीतमपि त्यक्ष्यते; यथा तेन भोजनेन किं यद्भुक्तमपि वम्यते; इत्थं बहुधा निषिद्धोऽप्यार्द्रकुमारः स्वपौरुषमंगीकृत्य देवी वाचमनादृत्य स्वयं दीक्षामाददे, स प्रत्येकबुद्धो

शमाचख्यौ. ततः कुमार एकांते स्थित्वा तां पेटामुद्घाट्य तन्मध्यस्थां तमस्युद्योतकारिणीं तां श्रीऋषभस्वामिप्रतिमां दृष्ट्वा स्वचित्ते चिंतयामास, किमिदं किंचिदुत्तमं देहाभरणमस्ति, तत् किं मूर्ध्नि आरोप्यं, कंठे वा हृदये वान्यत्र कुत्रचिदारोप्यं, क्कापीदं दृष्टपूर्वमिव मां प्रतिभासते, परं स्मृतिपथं नायाति, इत्थमत्यर्थं चिंतयत आर्द्रकुमारस्य जातिस्मरणजनिकी मूर्च्छा समजनिष्ट, तत उत्पन्नजातिस्म-रणः स कुमारः संप्राप्तचेतनः सन् स्वयमेव एवं निजपूर्वभवकथां चिंतयामास, तथाहि—

इतो भवात्तृतीये भवे मगधदेशे वसंतपुरेऽहं सामयिको नाम कुटुम्बी अभूवं; मम बंधुमती भार्याभूत्, एकदा सुस्थिताचार्यसमीपे तया सह अहमर्हद्धर्ममश्रौषं, ततः सभार्योऽपि अहं प्रतिबुद्धो गृहवासविरक्तः सन् तत्पार्श्वे प्रव्रज्यां गृहीतवान्, क्रमेण गुरुणा सह वि-हरन् एकस्मिन् पत्तनेऽगां, बंधुमती साध्व्यपि अपरसाध्वीसंगता तत्रागात्, एकस्मिन्नह्नि तां पश्यन् पूर्वभोगान् स्मरन् अहं तस्याम-नुरक्तोऽभूवं, तच्चान्यसाधवे आख्यां, सोऽपि प्रवर्त्तिन्यै आचख्यौ, सा पुनर्बंधुमत्यै आचख्यौ, तदा बंधुमती विषण्णा सती प्रवर्त्तिनीं प्रोवाच, एष गीतार्थोऽपि यदि मर्यादां लंघेत तदा का गतिः, असौ मां देशांतरं गतामपि यावच्छ्रोष्यति तावन्मोहप्रभावान्मयि रागं न त्यक्षति, तस्मात् हे भगवति ! अहं निश्चित्तं मरणं प्रपत्स्ये, येन नास्य नापि मे शीलखंडनं जायते, इत्युक्त्वा सा साध्वी अनशनं कृत्वा शुद्धभावनया प्राणांस्तत्याज, देवत्वं च प्राप, ततस्तां मृतां श्रुत्वा मया विचिंतितं सा महानुभावा निश्चितं व्रतभंगभयान्मृता, अहं पुन-र्भग्नव्रतस्ततो मामपि जीवितेन अलं, तदाहमप्यनशनं कृत्वा विपद्य देवोऽभूवं, ततश्च्युत्वाहमत्रानार्यदेशे धर्महीनः समुत्पन्नोऽस्मि, सांप्रतं यो मम प्रतिबोधकः स मे बंधुः स एव च गुरुरस्ति, केनापि भाग्योदयेनाभयकुमारमंत्रिणाहं बोधितः, परमद्यापि मन्दभाग्यो-ऽस्मि यतस्तं द्रष्टुमसमर्थः, तस्मात् पितरमनुज्ञाप्यार्यदेशं गमिष्यामि, यत्र मे गुरुरभयकुमारोऽस्ति, इत्थं मनोरथं कुर्वन् आदिमार्हतः

मंत्रिणा सार्द्धं राजगृहपुरं गत्वा श्रेणिकाय अभयाय च प्राभृतान्यर्पयामास, तथा नृपपुत्र आर्द्रकुमारस्त्वया सह मैत्र्यं कर्त्तुमिच्छतीत्य-भयाय मंत्री संदेशमुवाच । तदा जिनशासने कुशलोऽभयः स्वचेतसि इत्यचिंतयत्; निश्चितं स कुमारो विराधितश्रामण्यत्वादनार्येषु जातोऽस्ति, परं स राजपुत्रो महात्मा नियमादासन्नभव्योऽस्ति, यतोऽभव्यदूरभव्यानां तु कदापि मया सह मैत्र्यमिलापो न भवेत्, तस्मात्केनाप्युपायेन तं जिनधर्मानुरक्तं विधाय धर्ममार्गे प्रवर्त्तयामि, तत्र चायमुपायोऽस्ति, प्राभृतच्छलेन यदि तत्राऽर्हत्प्रतिमां प्रेषयामि, तद्दर्शनाच्च यदि तस्य जातिस्मरणज्ञानमुत्पद्यते तदेष्टसिद्धिः स्यादित्युपायं विचिंत्य छत्रसिंहासनादिप्रातिहार्यविराजितां रत्नमयीं प्रथमजिनेन्द्रप्रतिमां * पेटीमध्ये धृत्वा तदग्रे सकलानि धूपघटिकादिदेवपूजोपकरणानि मुमोच, ततस्तद्द्वारे तालकं दत्वाऽभयो निजमुद्रया तां मंजूषां मुद्रयामास. अथ कियद्भिर्वासरैः श्रेणिको नृपस्तमार्द्रकेशपुरुषं प्रियालापपूर्वकं प्रभूतैः प्राभृतैः सह विससर्ज, अभयोऽपि तां पेटां तस्य हस्ते समर्प्य तं सत्कृत्य अमृततुल्यवाण्या इत्युवाच, एषा पेटा आर्द्रकुमारस्य पुरस्तादुपढौकयतां, तथा तस्य मद्वचोरिदं वक्तव्यं, त्वया एकांतप्रदेशे एकाकिना स्थित्वा इयं पेटा स्वयमुद्घाटय तदंतर्गतं वस्तु स्वयं द्रष्टव्यं, अन्यस्य कस्यचिन्न दर्शनीयं, ततोऽभयोक्तं वचोंगीकृत्य स पुमान् स्वपुरं ययौ, तानि च प्राभृतानि स्वस्वामिने स्वामिपुत्राय चार्पयामास, तथार्द्रकुमारायाभयोक्तसंदे-

*अत्रकेऽपि जिनेन्द्रप्रतिमास्थाने रजोहरणमुखवस्त्रिका प्रेषणं वदन्ति तथा प्राचीनजैनशास्त्रे जिनेन्द्रप्रतिमोल्लेखस्याभावं दर्शयन्ति तदसत्यं, यतः—जीवाभिगम-भगवती—ज्ञाताधर्मकथा-राजप्रश्नेयावश्यकनिर्युक्त्यागमपंचांगीप्राचीनशास्त्रे स्थाने स्थाने जिनप्रतिमोल्लेखो विस्तरेण दर्शितः, तथा रायप्पसेणयादिषु आगमेषु (धुवं दाऊण जिणवराण) इति वचनात् जिनेन्द्र प्रतिमा जिनेन्द्र सदृशत्वेन उक्ता, किंच सूत्रकृदङ्गव्याख्याप्रभृतिषु अभयकुमारेण आर्द्रकुमाराय प्रथम जिनेन्द्र प्रतिमा प्रेषिता इत्येवलिखितमस्ति, अतो रजोहरणमुखवस्त्रिकाप्रेषणस्य कथनं तु अयुक्तमेव, अस्य विशेषनिर्णयः प्रतिमाशतक, सम्यक्त्वशल्योद्धारादिग्रन्थादवगन्तव्यः ॥ इति ॥

जिनदर्शनादेव बहूनां भव्यानां बोधिबीजावाप्तिर्भवत्यार्द्रकुमारवत् , तद्वृत्तांतस्त्वित्थं— तत्रार्द्रकनामा राजा बभूव, तस्य चार्द्रका नाम्नी
अस्मिन् भरतक्षेत्रे समुद्रतीरे आर्द्रको नाम यवनदेशोऽस्ति, तत्रार्द्रकपुरं नाम नगरं,
पट्टराज्ञी, तयोरार्द्रकुमारो नाम पुत्रोऽभूत् , स च क्रमेण संप्राप्तयौवनः स्वेच्छया मनोज्ञान् भोगान् भुंजानः सुखेन तिष्ठतिस्म, तस्या
चार्द्रकराजस्य श्रेणिकराजेन सह परंपरागता परमप्रीतिरभूत् . एकदा श्रेणिको नृपः प्रचुरं प्राभृतं प्रगुणीकृत्य आर्द्रकराजसमीपे निजा-
मात्यं प्रैषीत् , सोऽमात्योऽपि कियद्भिर्दिनैस्तत्र गतः, आर्द्रकनृपेण बहुमादरेण संभाष्य तेन मंत्रिणा उपनीतानि प्राभृतानि गृहीतानि,
पृष्टं च तस्मै मद्बंधोः श्रेणिकस्य कुशलं वर्त्तते ? ततस्तेनापि तत्रत्यसकलकुशलोदंतनिवेदनेन राज्ञो मनसि परमानंदः संपादितः, तस्मिन्न-
वसरे आर्द्रकुमारो नृपं पप्रच्छ भो तात ! कः श्रेणिको येन सः तवेदृशी प्रीतिर्वर्त्तते, ? राजा प्रोवाच, मगधदेशस्वामी श्रेणिकनृपो विद्यते, तत्कुले
मत्कुले च परंपरागता प्रीतिरस्ति, एतत्पितृवचः श्रुत्वार्द्रकुमारोऽपि मंत्रिणमुवाचः भो मंत्रिन् ! त्वत्स्वामिनः कश्चित्संपूर्णगुणोपेतः पुत्रोऽस्ति ?
तेन सहाहमपि मैत्र्यं कर्त्तुमिच्छामि, मंत्र्युवाच श्रेणिकभूपस्य अभयकुमारो नाम पुत्रोऽस्ति, स च सकलकलानिधिः सर्वबुद्धिसमुद्रो मंत्रि-
पंचशत्या-अधिपो महादयावान् महादाताऽतिदक्षो निर्भयो धर्मज्ञः कृतज्ञश्च विद्यते, किं बहुना ? ते केऽपि जगति गुणा न सन्ति ये
ऽभयकुमारे निवासं न कृतवंतः, इत्थं मंत्रिवचनादभयकुमारगुणान् श्रुत्वार्द्रकुमारः पितुराज्ञां समादाय मंत्रिणं प्रत्युवाच, मामनापृच्छय
त्वं स्वदेशं मा यासीः, तत्र गच्छता त्वयाऽभयं प्रति स्नेहद्रुमबीजतुल्यं मद्वचः श्रोतव्यमिति, ततो मंत्र्यपि, तद्वचनमंगीकृत्य राज्ञा-
ऽनुसृष्टः सन् वेत्रिणा दर्शितं निवासस्थानं ययौ, अथान्यदार्द्रकनृप प्रवरमौक्तिकादीनि प्राभृतान्यर्पयित्वा स्वपुरुषं तं मंत्रिणं च श्रेणि-
कपार्श्वे प्रैषीत् , तदार्द्रकुमारोऽपि तस्यैव मंत्रिणा हस्तेऽभयकुमारनिमित्तं विद्रुममौक्तिकादीन्यनुपमवस्तूनि प्रेषितवान् . अथ स पुमान्

मनोवाक्कायशुद्ध्याऽत्र पर्वणि पूजास्नात्रादिकं विधेयं, तदवसरे च भगवतः छद्मस्थत्व–केवलित्व–सिद्धत्वरूपमवस्थात्रयं भावनीयं, यदुक्तं—ण्हवणच्चणेहिं छउमत्थ–वत्थपडिहारगेहिं केवलियं ॥ पलियं कुस्सगोहिय । जिणस्स भाविज्ज सिद्धत्तं ॥ १ ॥ द्रव्यपूजासामग्र्यभावे तु भावपूजैव कर्त्तव्या, सा चेत्थं–प्रातः श्रीजिनगृहं गत्वा शुद्धभावेन भगवद्दर्शनं कार्यं, भगवन्मुद्रां विलोक्य च तद्गुणगणस्मरणं विधेयं, तत्फलं यथा–दर्शनाद् दुरितध्वंसी, वंदनाद्वांछितप्रदः । पूजनात्पूरकः श्रीणां, जिनः साक्षात्सुरद्रुमः ॥ १ ॥ पुनः श्री-

---

शालागृहं पौषधशाला तत्र वा तत् सामायिक कार्यं श्राद्धैः सदा नोभयसन्ध्यमेवेत्यर्थ । कथं विधिना—खमासमणं दाउं इच्छाकारेण संदिसह भगवन् सामाइय मुहपत्तिं पडिलेहेमित्ति भणिय, बीय खमासमणपुव्व मुहपत्तिं पडिलेहिय, खमासमणेणं सामाइय सदिसाविय, तय खमासमणपुव्व सामाइय ठामित्ति वुत्तं खमासमणादाणपुव्वं अद्धाविणय गत्तो पचमगल कड्ढित्ता "करेमि भन्ते ! सामाइय सावज्ज जोगं पच्चक्खामि जाव नियमं पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भन्ते ! पडिक्कमामि निन्दामि गरिहामि अप्पाणं वोसिरामि त्ति " सामाइयसुत्तं भणति, तउ पच्छा इरिय पडिक्कमति इत्यादि पूर्वसूरिनिर्दिष्टविधानेन । अत्र च ईर्या प्रतिक्रम्यैव सामायिकोच्चारण यत्केचिदाचक्षते तत्सिद्धान्तानुत्तीर्णम्, यत उक्तमावश्यकचूर्णौ, बृहद् वृत्त्यादौ—" करेमि भन्ते ! सामाइय सावज्जं जोगं पच्चक्खामि जाव साहू पज्जुवासामि दुविह तिविहेणामिति, काउण पच्छा इरिअ पडिक्कमइ त्ति " इत्यादि- सर्वमान्यप्राचीनशास्त्रे प्रकटतया प्रथम करेमिभंते उच्चारणानतरं पश्चाद् इर्याप्रतिक्रमणं दर्शित. यथा—उत्तराध्ययन—आवश्यकनिर्युक्त्यादिप्राचीनशास्त्रे षडावश्यकविधि सक्षिप्तःसामान्येन दर्शितः पर तस्य विशेषार्थः भावपरंपरानुसारेण गुरुपरंपराया पूर्वाचार्यविरचितविधिवादशास्त्रतो वा ज्ञायते, ततः तस्यानुसारेणैव विशेषतः संप्रति षडावश्यकविधिः क्रियते । तथैव अत्रापि सक्षिप्तमात्रसामान्येन सामायिकविधिः दर्शितः, पर तस्य विशेषविधि· पूर्वाचार्यविरचितविधिवादशास्त्रतोऽवगतव्यः । तथा उत्तराध्ययनादिगताऽऽवश्यकविधि सक्षिप्त ज्ञात्वा तस्यानादरकरणे सूत्रार्थोत्थापनदोषप्रसग. स्यात्, तथैव अत्राऽपि एतद्विधेरनादरकरणे शास्त्रपाठोत्थापनदोषप्रसग: स्यात्, अतएव तदनुसारेण भव्यात्मभिः समाचरणीय, परं जिनाज्ञाविरुद्धाचरणं न युक्त " पयमपि असदहंतो सुत्तत्थं मिच्छादिट्ठीओ " इति वचनात् । इति । श्रीमत सुमतिसागरमहोपाध्यायाना लघुशिष्य प० मुनि–मणिसागरः ।

तस्मात् शुभ आचारो येषां ते शुभाचारास्तैः श्रावकैराश्रव–कषायरोधः कर्त्तव्य इत्युक्तं। अथ पुनरत्र पर्वणि यत्कर्त्तव्यं तदेव श्रावकविशेषणद्वारेणाह–कीदृशैः श्रावकैः, सामायिकजिनपूजातपांसि तेषां विधानं करणं, तदादीनी तत्प्रभृतीनि कृत्यानि-कार्याणि तेषु तत्परैरित्यर्थः, एतावतात्र पर्वणि सुश्रावकैः सामायिकं कार्यं, ❀ सामायिकस्वरूपं चेदं—

समता सर्वभूतेषु, संयमः शुभभावना ॥ आर्त्तरौद्रपरित्याग--स्तद्धि सामायिकं व्रतम् ॥ १ ॥

दिवसे दिवसे लक्खं, देइ सुवण्णस्स खंडि एगो ॥ एगो पुण सामाइयं, करेइ न पहुप्पए तस्स ॥ २ ॥

आदिपदात्पौषधं कार्यं , पौषधफलमिदं—

पोसहि य सुह भावे। असुहाइं खवेइ नत्थि संदेहो ॥ छिंदइ नरयतिरियगइं, पोसहं विहि अप्पमत्तणं ॥ १ ॥

तत्करणसामर्थ्याभावेऽस्मिन् पर्वणि सुश्रावकैर्यथाशक्ति जिनानां द्रव्यपूजा भावपूजा च कर्त्तव्या, पूजाफलमिदं—

सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे। सयसाहस्सिया माला, अणंतं गीयवाइए ॥ १ ॥

---

❀ —सामायिकविधिविषय आवश्यकचूर्णि–बृहद्वृत्ति–लघुवृत्ति–पचाशकचूर्णि–वृत्ति–योगशास्त्रवृत्ति–श्राद्धदिनकृत्यसूत्र-वृत्ति–श्रावकप्रतिक्रमणचूर्णि–वृत्ति – श्रावकप्रज्ञप्ति–शतपदी–विचारामृतसग्रहादिगतशास्त्रीयपाठाः विस्तरभयात् नात्र लिख्यन्ते–तथापि सक्षेपतः श्रावकधर्मप्रकरणवृत्तिपाठोऽत्र दर्श्यते तथाहि–अथ यत्र क्रियमाणं श्राद्धाना सामायिक निष्प्रत्यूह निर्वहति तत्स्थानमुपदिशति—

चैत्यालये स्वनिशान्ते, साधूनामन्तिकेऽपि वा। कार्यं पौषधशालाया, श्राद्धस्तद्विधिना सदा ॥ १ ॥

चैत्यालये विधिचैत्ये, स्वे निशान्ते स्वगृहेऽपि विजनस्थान इत्यर्थः। पौषो ज्ञानादीना धीयतेऽनेनेति पौषध पर्वानुष्ठानम् उपलक्षणात् सर्वधर्मानुष्ठानार्थं,

स एव चौरः समाहूय पृष्टोऽहो कथा तव बहूपकारः कृत ? इति, तेनाप्यभाणि भो महाराज ! 'चतुरोदिनान् यावन्मरणभयभीतेन मया न किंचित्स्नानभोजनादिसुखमज्ञायि, अद्य पंचमेऽहनि अस्याः पंचम्या राज्ञ्याः मुखादभयदानाकर्णनेन परमसुखमनुभूयते, अतएव तस्या उपकारः सर्वतो महान्' एतच्चौरवचः श्रुत्वा सर्वैरपि सा प्रशंसिता, पट्टराज्ञी च कृता, अतः सर्वदानानामभयदानं श्रेष्ठमिति ज्ञापितं। ततः सुश्रावकेणात्र पर्वणि खंडन–पेषण–वस्त्रक्षालनाद्यारंभो विवर्जनीयः, तैलिक–लोहकार–भाड्भूकर्मकारकादिषु वाचा धनव्ययेन चारंभो निवारणीयः, स्वशक्त्या बंदिमोक्षश्च कार्यः, ग्रामनगरमध्येऽमारीघोषणा कारयितव्या, येन केनापि प्रकारेण जीवरक्षा कार्या ॥

द्वितीयाश्रवपरित्यागे मृषावचनमत्र पर्वणि न वक्तव्यं, गालिप्रदानादिकठिनवाणी न वाच्या, सर्वथा वाक्शुद्धिः कार्या। तृतीयाश्रवपरित्यागे परधनग्रहणं विवर्जनीयं, द्रव्यस्य हि जंतूनां बाह्यप्राणरूपत्वात्, तदपहारस्य च मरणरूपकष्टहेतुत्वात्। चतुर्थाश्रवपरित्यागेऽत्र पर्वणि ब्रह्मचर्य पालनीयं, स्त्रीसंगो विवर्ज्य इत्यर्थः, परस्त्रीसेवनं तु लोकद्वयविरुद्धत्वात् सुश्रावकेणावश्यमेव वर्ज्यं। पञ्चमाश्रवपरित्यागे धनधान्यादिनवविधपरिग्रहे परिमाणं कार्यं, परिग्रहतृष्णाऽपरिमिता न धार्या, इच्छापरिमाणं विधेयमित्यर्थः। तथा पुनरस्मिन् पर्वणि कषायरोधः कर्त्तव्यः, कषायाश्चत्वारः क्रोध–मान–माया–लोभाख्यास्तेषां परित्यागो विधेयः, क्रोधोदये हि कलहोत्पत्तिश्चिरंतनप्रीतिनाशश्च, मानोदये विनयनाशस्तथा च सद्ध्यानवतामपि मुनीनां केवलावाप्तौ अंतरायः स्यात्, राजर्षिबाहुबलिवत्, एवं मायोदये लोभोदयेऽपि च बहवो दोषा उत्पद्यन्ते, अतश्चत्वारोऽपि कषायास्त्याज्याः, उक्तंच—

कोहो पिइं पणासेइ। माणो विणयनासणो ॥ माया मित्ताणि नासेइ। लोहो सव्वविणासणो ॥ १ ॥

दीयते म्रियमाणस्य, कोटिजीवितमेव च ॥ धनकोटिं न गृह्णीयात्, सर्वो जीवितामिच्छति ॥ १ ॥
अपि च—या दद्यात्कांचनं मेरुं, कृत्स्नां चापि वसुंधराम् ॥ एकस्य जीवितं दद्यान्नहि तुल्यमहिंसया ॥ २ ॥

अतोऽभयदानख्यापनार्थं कथानकमुच्यते--तथाहि--वसंतपुरेऽरिदमनो राजा, तस्य पंच राज्यः, तासु चैका दुर्भगा, चतस्रोऽत्यंतवल्लभाः, एकदा चतुर्वधूसमेतो राजा निजप्रासादगवाक्षस्थो नानाविधक्रीडाविलासं कुर्वंस्तिष्ठति, तस्मिन्नवसरे एकश्चौरो राजमार्गेण नीयमानो राज्ञा सपत्नीकेन दृष्टः, स च कीदृशः ? कंठन्यस्तरक्तकणवीरमालो, रक्तवस्त्रपरिधानो, रक्तचन्दनानुलिप्तगात्रः पुरस्ताद्वाद्यमानवध्यडिंडिमः, इत्थं विविधविडंबनाभिर्विडंब्यमानं तं चौरं दृष्ट्वा राज्ञीभिः पृष्टं, किमकार्यमनेनाकारीति, तदा एकेन राजपुरुषेण तासां पुरः कथितं, परद्रव्यापहारेण राजविरुद्धमनेन कृतमिति, ततः संजातकृपया एकया राज्या विज्ञप्तो राजा, स्वामिन् ! यो भवता मह्यं प्राग्वरः प्रतिपन्नः सोऽधुना दीयतां, येनाहमेकदिनमुपकरोमि चौरं, तदा कथंचिद्राज्ञा प्रतिपन्नं तद्वचः, ततस्तया स्नानादिपुरस्सरं दीनारसहस्रव्ययेन विविधवस्त्रालंकारैरलंकृतः स चौरः, ततो द्वितीयया द्वितीयदिने राजानं विज्ञप्य दीनारदशसहस्रव्ययेन स सत्कृतः, ततस्तृतीयया तृतीयदिने स दीनारलक्षव्ययेन स उपचरितः, ततश्चतुर्थ्या दीनारकोटिव्ययेन चतुर्थो दिवसोऽतिवाहितः, ततः पंचम्या दुर्भगया राज्या पंचमदिने राज्ञः समीपमागत्य विनयेन नम्रया दीनवचसा नृपो विज्ञप्तः, स्वामिन् ! मम दुर्भगाया उपरि भवदीया तादृशी कृपा नास्ति, तेन मया कदापि भवंतो न याचिताः, अधुनाऽस्य चौरस्य जीवितदानं मया त्वां याच्यते, तदा राज्ञापि जीवितप्रदानपूर्वकं चौरः प्रदत्तोऽनया च तं चौरं स्वगृहे नीत्वा सामान्यभोजनेन भोजयित्वा कथितं मया तुभ्यं जीवितं प्रदत्तं, पुनश्चौर्यं मा कार्षीस्ततोऽसौ हृष्टस्तदा सपत्नीभिर्हसितं नास्य त्वया किंचित् सुखकारि कृतं, तासां च परस्परं बहूपकारविषये विवादे संजाते राज्ञा

तोरणादिभिरलंकृतानि अतिसुन्दराणि संति, तत्र देवेंद्रा बहुदेवदेवीपरिवृताः प्रवर्द्धमानभावेनाष्टाह्निकमहोत्सवं कुर्वन्ति, जल-चंदन-पुष्प-धूपाद्यष्टद्रव्यैर्जिनबिंबानि पूजयंति, जिनगुणान् गायंति, नाटकं च विदधति, इत्थमष्टदिवसावधि महोत्सवं समाप्य पुनः स्वस्थानं गच्छति. एवं श्रावकैरपि श्रीमत्तीर्थंकरप्रकाशितेऽस्मिन् ❀ पर्वणि समागते धर्मणि यत्नो विधेयः, तथा चास्मिन् पर्वणि श्रावकाणां कृत्यान्याह-

आश्रवकषायरोधः कर्त्तव्यः श्रावकैः शुभाचारैः । सामायिकजिनपूजा-तपोविधानादिकृत्यपरैः ॥ १ ॥

तत्राश्रवाः पंच ते चामी-प्राणातिपात-मृषावादाऽ-दत्तादान-मैथुन-परिग्रहस्तेषां रोधो निरोधः, अर्थात्तत्त्यागः कर्त्तव्यः, एतावता प्रथमं द्वींद्रियादयो ये त्रसजीवास्तेषां विराधनाः श्रावकैर्वर्ज्याः, सर्वदानेषु अभयदानमेव श्रेष्ठं, यदुक्तं सूत्रकृदंगे—' अभयप्पहाणमिति ' अन्यत्राप्युक्तं च—

*निशीथभाष्य-चूर्णि-बृहत्कल्पभाष्य चूर्णि-वृत्ति-स्थानांगसूत्रवृत्ति-समवायांगसूत्रवृत्ति-कल्पसिद्धान्त-व्याख्यादिशास्त्रानुसारेण जैनटिप्पणकसद्भावे अधिकमास आगते आषाढ-चातुर्मासात् विंशत्या दिनैः पर्युषणाकरण प्रोक्तं, तथा अधिकमासाऽभावे पंचाशतैव दिनैः प्रोक्तं, परं च जैनटिप्पणकाऽभावे संप्रति लौकिकटिप्पणके मासवृद्धिर्भवतु वा मा भवतु तथापि पंचाशतैव दिनैः पर्युषणाकरणमर्यादा सर्वगच्छीयपूर्वाचार्यैः प्रमाणीकृता आसीत्, अतएव पंचाशतैव दिनैः द्वितीयश्रावणे प्रथमभाद्रपदे वा पर्युषणाया आराधनं युक्तियुक्तं शास्त्रसम्मतं जिनाज्ञानुसारं च ज्ञेयं, परं नअशीतिदिनै. । अस्य विशेषनिर्णयः कल्पसूत्रस्य कल्पद्रुमकलिकाया नवमव्याख्यानाद् अस्मत् कृतबृहत्पर्युषणानिर्णयग्रंथाच्च अवगंतव्यः, इति हस्ताक्षराणि श्रीमत् सुमतिसागरमहोपाध्यायानां लघुशिष्य पं० मुनि-मणिसागरस्य ।

## ॥ श्रीपर्युषणाद्यष्टाह्निकाव्याख्यानम् ॥ १० ॥



शांतीशं शांतिकर्त्तारं, नत्वा स्मृत्वा च मानसे । अष्टाह्निकाया व्याख्यानं, लिख्यते गद्यबंधतः ॥ १ ॥

इह च सकलदुष्कर्मवारिणि विमलधर्मकर्मकारिणि इह परत्र च कृतप्रभूतशर्मणि श्रीपर्युषणादिपर्वणि समागते सति, सकलसुरासुरेंद्राः संभूय श्रीनंदीश्वरनामनि * अष्टमद्वीपे धर्ममहिमानं कर्तुं गच्छंति; तत्र तावन्नंदीश्वरद्वीपस्य मध्यभागे चतुर्दिक्षु चत्वारोंजनगिरयः संति, अंजनवर्णाः पर्वता इत्यर्थः । तेषां प्रत्येकं चतुर्दिक्षु चतस्रो वाप्यः संति, तासां वापिनां मध्यभागेषु दधिमुखाः पर्वताः संति, दधिवर्णाः श्वेतवर्णा इत्यर्थः । पुनर्द्वयोर्वाप्योरंतरे द्वौ द्वौ रतिकरपर्वतौ वर्त्तेते, रक्तवर्णा इत्यर्थः । एवं चैकैकांजनगिरिः, समंताच्चत्वारो दधिमुखाः, अष्टौ च रतिकराः संति, संमिलने द्वादश, त्रयोदशश्च स्वयमंजनगिरिः, इत्थं चतुर्दिक्षु चतुर्णामंजनगिरीणां सपरिकराणां मीलने जाता द्विपंचाशद्गिरयः, ते च पृथग्नामसंख्यया—चत्वारोंजनगिरयः ( ४ ), षोडश दधिमुखाः ( १६ ), द्वात्रिंशद्रतिकरपर्वताः ( ३२ ), तेषामुपर्येकैकं जिनभवनमस्तीति द्विपंचाशज्जिनभवनानि संति, तेषु च जिनचैत्येषु प्रत्येकं चतुर्विंशत्यधिकशतं जिनबिंबानि संति, सर्वेषां मिलनेऽष्टचत्वारिंशदधिकचतुःषष्टिशतानि ( ६४४८ ) जिनबिंबानि भवंति, तानि च सर्वाण्यपि चैत्यानि चतुर्द्वाराणि शाश्वतानि प्रवर-

*एकलक्षयोजनप्रमाणो जम्बूद्वीपः, द्विलक्षयोजनप्रमाणो लवणसमुद्रः, एवं द्वीप समुद्राणां द्विगुणद्विगुणकरणेन—धातकी पुष्कर-वारुणी-क्षीर घृत-इक्षु-यावत् षोडशाब्ज-अष्टत्रिंशत् कोटि-चत्वारिंशत् लक्षाः-( १६३८४०००००० ) एतावत् योजनप्रमाणोष्टमनंदीश्वरनामको द्वीपोऽस्ति ॥

स्थानांतरे मोचनं प्रेष्यप्रयोगः २, कंचित् कार्येणाकारयंतं दृष्ट्वा स्वकार्यसाधनार्थं शब्दकरणं शब्दानुपातः, ३, तथैव परं प्रति स्वस्य रूपदर्शनं रूपानुपातः ४, अभिगृहीतदेशाद् बहिः कार्यज्ञापनाय पाषाणादिक्षेपणं पुद्गलक्षेपः ५ ॥ एकादशे पौषधव्रते पंचातिचाराः, यथा-अप्रतिलेखितदुःप्रतिलेखितशय्यासंस्तारकासेवनं १. अप्रमार्जितशय्यासंस्तारकासेवनं २, अप्रतिलेखितादिभूमिकासु उच्चारप्रस्रवणपरिष्ठापनं ३, अप्रमार्जितादिभूमिकासु उच्चारादिपरिष्ठापनं ४, प्रभातसमये अमुकमाहारं पाचयिष्यामीत्यादिप्रकारचिंतनं ५ ॥ द्वादशे अतिथिसंविभागव्रते पंचातिचाराः, यथा–साधुसमागच्छंतं दृष्ट्वाऽदानबुद्ध्या देयद्रव्यस्य सचित्तोपरिस्थापनं १, सचित्तेन फलादिना देयवस्तुन आच्छादनं २, स्वकीयमपि मोदकादिद्रव्यमन्यदीयमेतदिति कथनं ३, यदि एतेन निःस्वेनापि दानं दत्तं तत्किमहमतोऽपि हीन इति मात्सर्याद्दानं ४, आहारमानीय भुंजानानां भुक्तवतां साधुनां निमंत्रणं, यथा मदीयोऽभिग्रहोऽपि न भज्यते, वस्तवपि एते न गृह्णंतीत्यभिप्रायेणेति ५ ॥ इत्थं द्वादशव्रतानां षष्ठ्यतिचाराः, सर्वेऽपि मिलिताः ( १२४ ) इति. एषां मध्ये ये केऽप्यतिचारा लग्ना भवेयुस्तेषां मे मिथ्यादुष्कृतमस्तीति संघादिसमक्षं वाच्यं, ततः सर्वेष्टार्थसिद्धिः ॥

इति चातुर्मासिकत्रयव्याख्यानं समाप्तं ॥ ९ ॥



भ्यो दानं ३, कुप्यस्य स्थालादीनां दशकादेः संयोज्य पंचकादिकरणं ४, पूर्वं सामान्यतो नियमं विधाय पश्चात् सगर्भयोर्द्विपदचतुष्पदयोर्ग्रहणं ५ ॥

अथ षष्ठे दिक्परिमाणाख्ये गुणव्रते पंचातिचाराः, यथा–ऊर्ध्वाधस्तिर्यक् ३ प्रमाणातिक्रमेण वस्त्वानयनप्रेषणाभ्यां त्रयोतिचाराः ३, अन्यदिग्योजनानामन्यस्यां दिशि क्षेपणं क्षेत्रवृद्धिः ४, किंचित् स्वयमेव कृतदिक्प्रमाणविस्मरणं स्मृत्यंतर्धानं ५ ॥ सप्तमे भोगोपभोगव्रते पंचातिचाराः, यथा–सचित्तभक्षणकृतनियमस्य कृततत्परिमाणस्य वा पुंसो दाडिमादि यत्सचित्तं वस्तु तस्य भक्षणं १, पक्वाम्रफलादिसचित्तप्रतिबद्धं तस्य भक्षणं २, अचालितकणिक्कादि 'अप्पोल' मित्युच्यते, तस्य भक्षण ३, पृथुकादि 'दुप्पोल' मित्युच्यते, तस्य भक्षणं ४, अतृप्तिजनका लघुबीजा औषधयस्तुच्छौषधयस्तासां भक्षणं ५ ॥ अष्टमे अनर्थदण्डविरमणे पंचातिचाराः, यथा–कामोद्दीपकशास्त्राभ्यासः कदर्पं १, मुखाक्षिभ्रूविकारपूर्विका भंडचेष्टा कौकुच्यं २, गाल्याद्यसंबद्धप्रलापित्वं मौखर्यं ३, संयुक्तस्य उदूखलमुशलघरट्टादेर्धारणं संयुक्ताधिकरण ४, स्नानादिसमये अधिकतैलमृत्तिकादिसामग्रीमेलनं,सरोवरादौ स्नानादिकरणेन पृथिव्यप्कायादिविराधनं च भोगोपभोगातिरेकः ५ ॥

अथ नवमे सामायिकव्रते पंचातिचाराः, यथा–मनसि पापव्यापारचिंतनं मनोदुःप्रणिधानं १, विकथाकरणं वाग्दुःप्रणिधानं २, अप्रतिलेखिते स्थाने हस्तादिक्षेपणं कायदुःप्रणिधानं ३, सामायिकं कृत्वा मुहूर्त्तमात्रमपि तदासेवनया अकरणं अनवस्थानं ४, सामायिकं मया कृतं न वेति स्मृतिविहीनता ५ ॥ दशमे देशावकाशिकव्रते पंचातिचाराः, यथा—मां प्रति त्वया इदमानेतव्यमित्युक्त्वाभिग्रहविषयकदेशात्परतो वस्त्वानयनं आनयनप्रयोगः १ त्वयेदं मम वस्तु गृहादौ नेतव्यमित्युक्त्वा स्वपार्श्वस्थाधिकवस्तुनोऽभिगृहीतदेशा

अथ द्वादशव्रतानां षष्ठ्यतिचारा उच्यंते. तत्र प्रथमं स्थूलप्राणातिपातविरमणव्रते पंचातिचाराः यथा—निर्दयतया पश्वादीनां कशादिभिस्ताडनं वधः १, रज्ज्वादिभिर्गाढबंधनं बन्धः २, शस्त्रेण कर्णादिकर्त्तनं वृषणच्छेदनं च छविच्छेदः, छविः शरीरं तस्य छेद इति व्युत्पत्तेः ३, वृषभादीनां स्कंधे पृष्ठे च सामर्थ्यातिरिक्तभारारोपणमिति भारः ४, वृषभादीनां वेलाप्राप्तावपि अन्नजलघासनिवारणा भक्तपानव्यवच्छेदः ५ ॥ स्थूलमृषावादविरमणव्रते पंचातिचाराः, यथा—त्वं चौरस्त्वं जार इत्यादि परं प्रति अविचार्यभाषणं सहसाभ्याख्यानं १, एकांते स्थितान् कानपि विलोक्य एते राजविरुद्धं चिंतयंतीति प्रकाशनं रहोभ्याख्यानं २, विश्वासिभिः स्वदारैः स्वमित्रैर्वा यत्प्रच्छन्नं कथितं तस्यान्येषामग्रे प्रकाशनं स्वदारमन्त्रभेदः ३, कष्टे पतितस्य कस्यचित् पृच्छतोऽलीकमीदृशं वदेरित्यादिशिक्षणं मृषोपदेशः ४, कूटलेखश्च प्रतीतः ५ ॥ स्थूलादत्तादानविरमणव्रते पंचातिचाराः, यथा—चौराहृतवस्तुग्रहणं स्तेनाहृतं १, चौराणां शंबलादिदानेन साहाय्यकरणं स्तेनप्रयोगः २, घृतादौ तादृशवस्तुनो वशादेर्मीलनं तत्प्रतिरूपक्षेपः ३, विरोधिराज्ये लाभार्थं वस्तुविक्रयणार्थं गमनं विरुद्धगमनं ४, लोकप्रसिद्धतुलामानयोर्न्यूनाधिककरणं कूटतुलाकूटमानं ५ ॥ स्थूलमैथुनविरमणव्रते पंचातिचाराः यथा—वेश्यायां १, विधवायां २, कन्यायां ३ वा गमनं अपरिगृहीतागमनं १, भाटकप्रदानेन स्तोककालं यात्मीया कृता तस्यां गमनं ईत्वरीगमनं २, अंगं स्त्रीपुरुचिह्नं, तदन्यानि अंगानि कुचकक्षोरुवदनादीनि तेषु रमणं अनंगक्रीडा ३, स्वापत्यानामिव अन्यापत्यानां परिणायनं परविवाहकरणं ४, कामभोगेषु गाढाभिलापस्तीव्रानुरागः ५ ॥ स्थूलपरिग्रहपरिमाणव्रते पंचातिचाराः, यथा—गणिम १ धरिम २ मेय ३ परिच्छेद्य ४ भेदाच्चतुर्विधस्य धनस्य शालिगोधूमादेर्धान्यस्य च समर्धस्य सत्यंकारादिना स्वीकृत्य नियमावधिं यावत्तत्रैव व्यवस्थापनं १, क्षेत्रवास्तुनोर्मध्यवर्तिवृत्त्यादिदूरीकरणेन एकीकरणं २, पूर्णेऽवधौ ग्रहीष्यामीति बुद्ध्या रूप्यस्वर्णादेर्भार्यादि-

पंचदश कर्मादानातिचाराः ॥

ज्ञानस्याष्टौ अतिचाराः यथा–अकालवेलायां प्रतिषिद्धदिने वा श्रुताध्ययनं १, गुरोर्ज्ञानोपकरणानां पुस्तकादीनां वा पादादिसंघट्टनेनाऽविनयकरणं २, तथा एषामेव बहुमानस्याऽकरणं ३, उपधानयोगादि विना श्रुताध्ययनं ४, यस्य पार्श्वे श्रुतमधीतं तस्य गुरोर्नाम्नोऽपलपनं ५, देववंदनप्रतिक्रमणादौ शुद्धाक्षराणामपठनं ६, तत्रैव शुद्धार्थस्यापठनं ७, तत्रैवाऽशुद्धयोः सूत्रार्थयोः पठनं ८, इति ज्ञानस्याष्टौ अतिचाराः ॥

दर्शनस्याप्यष्टौ अतिचारास्तथाहि–देवगुरुधर्मविषये शंकाकरणं १, सर्वाण्यपि दर्शनानि शोभनानीति श्रद्धाकरणं २, धर्मस्य फले संदेहकरणं ३, मिथ्यादृष्टीनां महत्त्वं दृष्ट्वा तदुपरि तीव्ररागकरणं ४, साध्वादीनां गुणश्लाघाया अकरणं ५, नवप्रतिबुद्धश्राद्धादेः स्थिरताया अकरणं ६, साधर्मिकाणां वात्सल्याऽकरणं ७, सति सामर्थ्ये जिनशासनस्य प्रभावनाया अकरणं ८, इति दर्शनस्याष्टौ अतिचाराः ॥

तथा पंचानां समितिनामीर्यादीनां ५, तिसृणां च गुप्तीनां मनोगुप्त्यादीनां ३, तथाविधाऽपालने चारित्रस्याष्टौ अतिचाराः । तथा 'अणसणमूणोयरिया' इत्यादि द्वादशतपोभेदानां सम्यगकरणे तपसो द्वादशातिचाराः । तथा मनोवीर्य १ वचनवीर्य २ कायवीर्याणां ३ देववंदन-प्रतिक्रमण-स्वाध्याय-दान-शीलादौ अस्फोरणे वीर्यस्य त्रयोऽतिचाराः । सम्यक्त्वस्य पंचातिचाराः, यथा–श्रीजिनेंद्रोक्तपदार्थेषु सन्देहः शंका १, अन्यान्यदर्शनाभिलाषः कांक्षा २, धर्मफलं प्रति सन्देहो विचिकित्सा, अथवा मलमलिनवपुषः साधून् दृष्ट्वा जुगुप्साकरणं विचिकित्सा ३, मिथ्यादृष्टीनां प्रशंसनं कुलिंगप्रशंसा ४, मिथ्यादृष्टिभिः सह परिचयः कुलिंगसंस्तवः ५ ॥

पत्तेयं २४ ॥ बारस तव १२ विरयतिग ३ । पण सम्म ५, वयाणं पत्तेयं ६९ ॥ १ ॥ व्याख्या–संलेखनायाः पंचातिचारास्तथाहि— अत्र इतस्तपः प्रभावादहं मनुष्यो राजादिर्भूयासमिति इहलोकाशंसा १, इतोऽनुष्ठानात्परलोके देवो भूयासमिति परलोकाशंसा २, कृता नशनोऽहं लोकैः पूज्योऽस्मि, अतश्चिरं जीयासमिति जीविताशंसा ३, अपूज्यत्वाद्व्याधिपीडितत्वाद्वा शीघ्रं म्रियते चेद्वरमिति यत्प्रार्थनं तन्मरणाशंसा ४, रूपं शब्दश्च कामौ, गंधरसस्पर्शा भोगास्ते मम प्रशस्ता भूयासुरिति या इच्छा सा कामभोगाशंसा ५, संलेखनां कृत्वा यद्येवं चिंतयति तदातिचाराः, एषु च यदि कोऽपि कालयत्रसंबंधी अतिचारो लग्नो भवेत्तदा तस्य मे मिथ्यादुष्कृतमिति संघादिसमक्ष वाच्यं, एवमग्रेऽपि बोध्यम् ।

अथ पंचादश कर्मादानातिचाराः यथा—

आजीविकादिनिमित्तं काष्ठदहनेन अंगाराणां करणं, तद्विक्रयणं, इष्टिकापाचनमित्यादि अंगारकर्म १, वृक्षादेः पत्रपुष्पादेर्वा छेदनविक्रयणादि वनकर्म २, शकटानां तदंगानां च निष्पादनवाहनादि शकटकर्म ३, शकटवृषभादीनां भाटकेनार्पणं भाटककर्म ४, हल कुद्दालादिभिर्भूमिविदारणं पाषाणादिघटनं यवादिधान्यानां भुंजनादिकरणं च स्फोटककर्म ५, प्रथमत एव म्लेच्छादिभ्यो मूल्यदानेन गजदंताद्यानाय्य विक्रयणं, आकाराद्वा स्वयमानीय विक्रयणं दंतवाणिज्यं ६, लाक्षा–नीली–मनःशिलादेः सुलितधान्यादेश्च विक्रयो लाक्षावाणिज्यं ७, घृत–तैलादि रसविक्रयो रसवाणिज्यं ८, यस्मिन् भक्षिते प्राणी म्रियते तद्विषं, तस्य वाणिज्यं ९, द्विपद–चतुष्पदादि विक्रयः केशवाणिज्यं १०, तिलेक्ष्वादीनां यंत्रैः पीडनं यंत्रपीलनं ११, वृषभादेर्वृषणकर्णादिच्छेदनं निर्लांछनकर्म १२, क्षेत्रादौ वह्नेर्ज्वालनं दवदानं १३, गोधूमादेः पोक्षः ( पार्थः ) सरोहृदादिशोषश्च प्रसिद्धः १४, असत्यो दुःशीला दास्यादयस्तासां पोषणमसतीपोषः १५ ॥ इति

तथा तपो हि दुष्टाष्टकर्मविनाशकं सकललब्धिजनकं बाह्याभ्यंतरभेदतो द्वादशविधं दृढप्रहारिवद्धृ॰शात्मभिः समाचरणीयं । तपोमुखा-
नीत्यत्र मुखशब्द आद्यर्थस्तेन भावनादिपरिग्रहः, इति व्याख्यातं ब्रह्मक्रियादिपदं यत्र । किंचात्रधर्मार्थिनात्मनिंदा कर्त्तव्या, न पर-
निंदा, तत्र चित्रकृत्पुत्रीदृष्टांतः, स चेवं-कांचनपुराधीशेन जितशत्रुराजेन स्वस्य नवीनसभायां कनकमंजरी नामचित्रकरसुतानिर्मितं
चित्रमयूरं साक्षान्मयूरमिव दृष्ट्वा तच्चातुर्यगुणरंजितेन सा परिणीता, तया च स्वबुद्ध्या प्रत्यहं नवनवकथाकथनेन नृपः षण्मासान्
यावत् स्ववासे आनीतः, तदा राज्ञा बहु मन्यमानापि सा प्रतिदिनं स्वगृहे एकांतदेशे उपविश्य पितृगृहसंबंधिसामान्यवेषं परिधाय
हे आत्मन् ! राजमान्यत्वमस्थिरमस्ति, अतोऽहंकृतिर्न विधेया, तत्र पितृगृहसंबंधिनी त्वियं ऋद्धिरस्तीत्यादिवचनैरात्मानं निंदति
स्म. अथ छलं पश्यंतीभिः सपत्नीभिस्तथाकुर्वाणां तां विलोक्य नृपायोक्तं, एषा तु भवतां कार्मणं करोति, ततो राज्ञा परीक्षार्थमेकदा-
कस्मादागत्य तामात्मनिंदां कुर्वाणां दृष्ट्वा तुष्टेन पट्टराज्ञी कृता, अपराश्चापमानिताः, एवं धर्मार्थिभिरात्मनिंदा कार्येति ॥
अन्यच्च चातुर्मासिकपर्वाराधयितुकामैर्भव्यात्मभिरस्मिन् दिने स्वे स्वेऽतिचारा आलोचनीयाः, गुर्वादिसमक्षं च तेषां मिथ्यादुष्कृतं च वाच्यं,
तत्र साधूनां चरणसप्तति (७० , करणसप्तति (७०) मिलनाच्चत्वारिंशदधिकशत (१४०)मतिचारा भवंति, ते च ग्रन्थगौरवभयान्न लिख्यंते.
❀ । श्रावकाणां तु चतुर्विंशदधिकशतमतिचाराः ( १२४ ) स्युस्ते संक्षेपतो दर्श्यते—पण संलेहण ५ पन्नरस-कम्म १५, नाणाइ अट्ठ

* संक्षेपतो गाथाद्वयं यथा–वय ( ५ ) समणधम्मं ( १० ) संजमं ( १७ ) वेयावच्चं च ( १० ) बंभगुत्तीओ ( ६ ) ॥ नाणाइ तिअं ( ३ )
तव ( १२ ), कोह निग्गओ ( ४ ) होइ चरणमेयं ॥ १ ॥ पिंड विसोही ( ४ ) समिई ( ५ ) भावणा ( १२ ), पडिमा य ( १२ ) इंदिय निरोहो (५)॥
पडिलेहण ( २५ ) गुत्तीओ ( ३ ), अभिग्गहो ( ४ ) चेव करणं तु ॥ २ ॥

अथ देवार्चनस्नात्रविलेपनानि व्याख्यायन्ते—देवस्य श्रीजिनेंद्रस्य तत्प्रतिमायाश्च अर्चनं वासादिना, स्नात्रं जलादिना, विलेपनं च चन्दनादिना कर्त्तव्यमेतत्पदत्रयेण सर्वोऽपि पूजाप्रकारः सूचितः । पूजाफलं चेदं—सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे॥ सयसाहस्सिया माला, अणंतं गीयवाइयं ॥ १ ॥ इत्यादि, अत्र दृष्टांताः स्वयं वाच्याः । अथ ब्रह्मक्रिया १ दान २ तपोमुखानि ३ व्याख्यायंते, तत्र ब्रह्मक्रिया-ब्रह्मचर्यं सुदर्शनश्रेष्ठ्यादिवत् शीलव्रतपालनमित्यर्थः, तत्फलं यथा—जो देइ कणयकोडिं, अहवा करेइ कणयजिणभवणं ॥ तस्स न तत्तिय पुन्नं, जत्तिय बंभव्वए धरिए ॥ १ ॥ ॥ इति । तथा दानं हि अभयं १ सुपात्रा-२ नुकंपो ३ चित ४ कीर्त्ति ५ भेदात्पंचविधं, तत्र द्वाभ्यां मोक्षः, त्रिभिश्च भोगप्राप्तिः, इहाभयदाने दृष्टांतो यथा—

राजगृहे सभास्थितेन श्रेणिकनृपेण प्रोक्तं, संप्रति नगरे किं वस्तु सुलभं स्वादु चास्ति ? क्षत्रियाः प्रोचुर्मांसं समर्घं स्वादु चास्ति, तदा अभयकुमारेण चिंतितं, एते निर्दयाः, अथ यथा पुनरप्येवं न जल्पेयुस्तथा कुर्यां, ततो रात्रौ सर्वक्षत्रियगृहेषु पृथक्पृथग्गत्वाऽभय एवमवादीत्—भो क्षत्रियाः ! राजपुत्रशरीरे महाव्याधिरुत्पन्नोऽस्ति, यदि मनुष्यसत्कं कालेयमांसं टंकद्वयमितं दीयते तदा स जीवति नान्यथेति वैद्यैरुक्तमस्ति. ततो यूयं राज्ञो प्रासजीविनो भवद्भिरेवैतत्कार्यं कर्त्तव्यं. तदा एकेनोक्तं दीनारसहस्रं गृहाण ? परं मां मुंच ? अन्यत्र गच्छ ? अभयेन तद् गृहीतं, एवं रात्रौ प्रतिगृहं परिभ्रम्य तैर्दत्तानि बहूनि दीनारलक्षणाण्यादाय प्रभाते नृपसभायां तद्धनं क्षत्रियेभ्यो दर्शितं, प्रोक्तं च अहो गतदिने यूयमेव वदथ यन्मांसं सुभलमिति. अद्य तु एतावता द्रव्येणापि तन्मांसं न प्राप्तं, ततो लज्जितास्तेऽभयेन हक्किताः, ततो मांसभक्षणनियमं प्रापिताश्च, अत्रार्थे श्लोकः—स्वमांसं दुर्लभं लोके, लक्षेणापि न लभ्यते ॥ अल्पमूल्येन लभ्यते । पलं परशरीरजं ॥ १ ॥ एवमन्यैरप्यभयदानबुद्धिर्धार्येति ॥

अथावश्यकपदं व्याख्यायते, तत्रोभयकालं यदवश्यं कर्त्तव्यं तदावश्यकं प्रतिक्रमणमित्यर्थः, तत्फलं चेदं—आवस्सएण एएण । सात्रओ जइवि बहुरओ होइ ॥ दुक्खाणमंतकिरियं । काही अचिरेण कालेण ॥ १ ॥ व्याख्या—श्रावको यद्यपि बहुरजस्को बहुपापयुक्तो भवति तथाप्येतेनावश्यकेन कृत्वा स्तोकेन कालेन दुःखानामंतक्रियां विनाशं करिष्यतीति, किंच— आवस्सअं उभयकालं, ओसहमिवं जे करंति उज्जुत्ता ॥ जिणविज्जकहियविहाणा, अकम्मरोगा य ते हुंति ॥ २ ॥ व्याख्या—श्रावका उपयोगयुक्ताः संतः प्रभातसंध्याकालयोर्जिनवैद्यकथितविधिना सम्यक्प्रकारेण औषधमिवावश्यकं कुर्वंति ते कर्मरोगरहिता भवंतीति. प्रतिक्रमणनियमे साजणसिंहदृष्टांतः । स चैवं—साजणसिंहनामा श्रेष्ठी द्विसंध्यं कालवेलायां प्रतिक्रमणं विना भोजनं न कार्यमिति नियमवान् बभूव. एकदा पीरोजपातसाहेन केनचिदपराधेन स कारागारे क्षिप्तस्तदा तत्र स्थितेनापि तेनारक्षकपुरुषेभ्यः पंचाशत्पंचाशन्मितान् सुवर्णनिष्कान् दत्त्वा प्रत्यहं प्रतिक्रमणं कृतं, अन्यदा रत्नद्वयपरीक्षणव्यतिकरे तृतीयं रत्नं जगन्मध्ये त्वमिति वचनात्प्रसन्नेन सुत्राणेन स मुक्तः सन्मानितश्च. तदा तैर्भीतैरारक्षकैर्निष्कास्तस्य पश्चात्प्रदत्तास्ततः श्रेष्ठिना ते निष्कास्तेभ्य एव दत्ताः, प्रोक्तं च अहो एतद्धनं कियत् ! यतोऽमूल्यं प्रतिक्रमणं मया कृतं भवत्साहाय्यादिति दृष्टांतः ॥

अथ पौषधं व्याख्यायते— धर्मस्य पोषं पुष्टिं दत्ते तत्पौषधं, तच्चाहार १ शरीरसत्कार २ गृहव्यापार ३ अब्रह्म ४ निवृत्तिरूपं बोध्यं, तत्फलं चेदं—पोसहि य सुहे भावे । असुहाइ खवेइ नत्थि संदेहो ॥ छिंदेइ निरयतिरिगइं । पोसह विहिअप्पमत्तेणं ॥ १ ॥ पौषधव्रतस्थिरत्वे कामदेवदृष्टांतः—यथा कामदेवश्रावकः पौषधे स्थितः सन् निशायां मिथ्यात्विदेवेन—दुष्टगज १ नाग २ पिचाश ३ रूपैर्बहुधा क्षोभितोऽपि मनोवाक्कायैर्मनागपि न क्षुभित इति.

नर्त्तकीनिमग्नचित्तोऽपि तयोर्निर्विकारभावदर्शनात् सद्यः संप्राप्तवैराग्योऽनित्यादिभावनां भावयन् केवलज्ञानं प्राप, देवैर्महोत्सवो विहितो, वंश एव च सिंहासनं बभूव, तत्स्वरूपदर्शनान्नृपादयोऽपि प्रतिबुद्धाः ॥ इति ॥ परिज्ञायामिलापुत्रदृष्टांतः ॥७॥ अथ परिहरणीयवस्तुत्यागे तेतलिपुत्रदृष्टांतो यथा—तेतलिपुरे कनककेतुर्नामराजा, स च राज्यलोभाज्जातमात्रान् स्वपुत्रान् विनाशयति. तस्य राज्ञस्तेतलिपुत्रनामामात्यस्तस्य पोट्टिलानाम भार्या, सा च प्रथमं मंत्रिणोऽतिवल्लभासीत्, पश्चात्कथंचिदनिष्टा जाता. एकदा तस्या गृहे आहारार्थमेका साध्वी समुपागता, मंत्रिपत्न्या तां प्रति प्रणम्य भर्तृवशीकरणोपायः पृष्टः, साध्व्या प्रोक्तं धर्मः सेव्यो येन सर्वेष्टार्थाः सिद्ध्यंति, ततः सा संसाराद्विरक्ता सती दीक्षाग्रहणार्थं पतिं पप्रच्छ, मंत्रिणोक्तं दीक्षां गृहाण, परं यदि त्वं देवपदं प्राप्नुयास्तर्हि मां प्रतिबोधयः, तयापि तद्वचोंगीकृत्य दीक्षामादाय आयुःक्षये समाधिना मृत्वा देवपदं प्राप्तं, अथ मंत्रिणा राज्ञ एकः पुत्रो जातमात्र एव प्रच्छन्नं गृहीत्वा स्वगृहे वार्द्धित आसीत्. एकदा कनककेतुनृपे परलोकं गते सति मंत्रिणा स कनकध्वजकुमारो राज्ये स्थापितः, राजकार्यममात्याधीनं कृतं, ततो मंत्री अहर्निशं राजकार्ये मग्नः सन् कदापि धर्मकृत्यं न कृतवान्. तस्मिन्नवसरे देवपदं प्राप्तया पोट्टिलया मंत्रिणस्तत्स्वरूपं दृष्ट्वा तत्प्रतिबोधाय नृपादयः सर्वेऽपि लोकास्तत्पराङ्मुखा विहिताः, ततो नृपस्थानं गतेन मंत्रिणा क्वाप्यादरमलभमानेन सद्यो गृहमागत्यात्मनः कुमरणाशंकया स्वहस्तेनैवानेके मरणप्रयोगाः कृताः, परं देवेन सर्वेऽपि वैयर्थ्यं नीताः, ततो विलक्षीभूय स्थितं मंत्रिणं प्रति देवः प्रादुर्भूय उवाच, भो मंत्रिन्! ईदृक्संसारस्वरूपं विद्यते, तत्त्वतो न कोऽपि कस्यापि स्वजनोऽस्ति. इत्यादिवचनैर्मंत्रिणं प्रतिबोध्य देवः स्वस्थानं ययौ, मंत्र्यपि सर्वं विभवं परित्यज्य सद्यो दीक्षां जग्राह। इति प्रत्याख्याने तेतलिपुत्रदृष्टांतः ॥ इति सामायिकपदं व्याख्यातम् ॥

सर्वजीवैः सह क्षामणां कृत्वा तत्र स्थितः सन् स्वयमेव तत्कटुकतुंबिकाशाकं भुक्तवान्, न पुनः परप्राणि वधभिया परिष्ठापितवान्. ततः सद्यो मृत्वा स सद्गतिं प्राप्तः ॥ इति ॥ निष्पापाचरणे धर्मरुचिर्दृष्टांतः ॥ ६ ॥ अथ पापत्यागेन यद्वस्तुतत्त्वज्ञानं, तत्र इलापुत्रदृष्टांतो यथा--इलानगरे धनदत्तश्रेष्ठी, तस्य इलादेवीसेवनात् इलापुत्रोनाम पुत्रो जातः, स चैकदा तत्रागतानां विदेशिनटानां नृत्यं पश्यन् अतिसुन्दररूपां नर्त्तकपुत्रीं विलोक्य प्राग्भवस्नेहात्तस्यामत्यन्तानुरक्तो बभूव, ततः सद्यो गृहमागत्य पितरं प्रति उवाच-भो तात ! मां प्रति नर्त्तकपुत्रीं परिणायस्व, नोचेद् मरणमेव शरणीकरिष्ये, परमपरकन्यापाणिग्रहणं सर्वथा न विधास्ये, तदा पित्रा तस्यात्याग्रहं विज्ञाय कथमपि निषेद्धुमशक्नुवता वृद्धनटसमीपं गत्वा तस्य पुत्री मार्गिता. नटेनोक्तं यद्ययमस्मत्कलां शिक्षयित्वा बहुधनं चोपार्ज्य अस्मज्ज्ञातिं पोषयेत् तर्हि-अस्मत्पुत्र्याः पाणिग्रहणं कुर्यात्. श्रेष्ठिना तद्वचः श्रुत्वा इलापुत्रं प्रति सर्वोऽपि वृत्तांतः प्रोक्तः, इलापुत्रस्तु तदप्यंगीकृत्य हठेन गृहान्निर्गत्य नटेषु संमिलितः, ततः कियता कालेन तेषां सर्वकलासु निपुणो भूत्वा वेन्नातटनगरं प्राप्तः, तत्र राज्ञे स्वकलादर्शनाय स्वयं वंशमारुह्य रमतेस्म. सा नटपुत्री च वंशपार्श्वे स्थिता गानं करोतिस्म, तदा तां नटपुत्रीं विलोक्य राजा चलचित्तः सन् चिंतयतिस्म, यद्येष इलापुत्रो वंशान्निपत्य म्रियते तर्हि एनां कन्यामहं गृह्णामि. अथ इलापुत्रः सर्वा एव कलाः कृत्वा वंशादुत्तीर्य दानग्रहणेच्छया नृपपुर स्थितः, राज्ञोक्तं व्यग्रतया मया नृत्यं न दृष्टं, ततः पुनः कुरु ? तदा तेन धनलिप्सया पुनर्नृत्यं कृतं, परं राज्ञा तन्मरणमिच्छता पुनस्तथैवोक्तं. ततः सतृतीयवारं पुनः- वंशमारुह्य रमतेस्म. तस्मिन्नवसरे एकभाग्यवतः श्रेष्ठिनो गृहे एकः सा धुराहारार्थं गतस्तदा सर्वालंकारविभूषिताऽतिसुन्दरांगी श्रेष्ठिपत्नी सद्यः समुत्थाय सानंदं वंदनां विधाय मोदकैः स्थालं भृत्वा साधुं प्रतिलाभयति, साधुरप्यधोदृष्टिः सन् 'इत्थं इत्थमिति' शब्दमुच्चरन्नाहारं गृह्णाति. एतत्स्वरूपं वंशारूढेन इलापुत्रेण दृष्टं, तदासौ स्वयं

तत्प्राप्त्यर्थं समपरिणामं दधानः, करस्थं खड्गादि तत्रैव परित्यज्य तन्मुनिस्थाने एव कायोत्सर्गेण तस्थौ. तदानीं हि रुधिरगन्धादुपागतेन कीटिकागणेन तच्छरीरं सच्छिद्रं कृतं, परं स मनागपि न चचाल, तृतीयदिने तत्रैव कालं कृत्वा स्वर्गं प्राप्तः ॥ इति ॥ समाप्ते चिलातीपुत्रदृष्टांतः ॥४॥ अथ स्तोकाक्षरैर्महार्थकथने लौकिकः पंडितचतुष्टयदृष्टान्तो यथा—वसन्तपुरे जितशत्रुराजा, तस्यैकदा शास्त्रश्रवणेच्छासीत्, तदा चतुर्भिः पंडितैः श्लोकलक्षप्रमितमेकैकं ग्रंथं विधाय नृपाय निवेदितं, नृपेणोक्तं—एते ग्रंथा अतिमहांतो मया स्तोककालेन श्रोतुं न शक्यंते, तस्मात्स्वल्पाक्षरैरेवैतेषां सारं वदत, तदा चतुर्भिः पंडितैः सारभूतमेकं श्लोकं निष्पाद्य नृपाग्रे प्रोक्तं, तथाहि—जीर्णे भोजनमात्रेयः, कपिलः प्राणिनां दया ॥ बृहस्पतिरविश्वासः, पंचालः स्त्रीषु मार्दवं ॥१॥ व्याख्या—आत्रेयनामा विद्वान् वक्ति—प्रथमं भुक्ते आहारे जीर्णे सति पुनः भोजनं कार्यमिति वैद्यग्रंथपरमार्थः १, कपिलपंडितः प्राह—सर्वेषां प्राणिनां दया कार्येति धर्मशास्त्रपरमार्थः २, बृहस्पतिनामा विद्वान् वदति—कस्यापि विश्वासो न कार्य इति नीतिशास्त्रसारः ३, पंचालो विद्वान् ब्रुते—स्त्रीषु मृदुता धार्या परं तासामंतो न ग्राह्य इति कामशास्त्ररहस्यं ४, एवं स्तोकाक्षरैर्बह्वर्थकथनं द्वादशांगीरूपं संक्षेपसामायिकं बोध्यं ॥५॥ अथ निष्पापाचरणे धर्मरुचिसाधुदृष्टांतो यथा—धर्मघोषाचार्यस्य शिष्यो धर्मरुचिनामा साधुर्नगरे आहारार्थं भ्रमन् रोहिणीनामब्राह्मण्या गृहे भिक्षार्थं प्रविष्टः, तया कुटुम्बनिमित्तं मिष्टभ्रान्त्या निष्पादितं कटुकतुंबिका शाकं विषप्रायं विज्ञाय दुष्टबुद्धया साधवे दत्तं, साधुना तु सरलस्वभावेन तद् गृहीत्वा स्वस्थाने आगत्य गुरुभ्यस्तद्दर्शितं. गुरुभिस्तद् दृष्ट्वा प्रोक्तं भो महानुभाव ! इदं शाकं विषप्रायमस्ति. तस्मान्निरवद्यस्थंडिले गत्वा परिष्ठापय । तदा धर्मरुचिसाधुर्गुर्वाज्ञया निर्वद्यभूमौ गत्वा यावत्तच्छाकं परिष्ठापयितुं लग्नस्तावत्तन्मध्यात्पतितबिंदुमात्रे एव तद्गन्धाकृष्टा बह्व्यः कीटिकाः संमिलितास्तद्गन्धग्रहणेनैव च मृताः, अथैवं बहुकीटिकामरणं दृष्ट्वा पापभीरुः साधुर्जीवदयां चिंतयन्

ततः स दत्तो मतिमोहात्सप्तममपि दिनमष्टमं मन्वानोऽद्याचार्यप्रणैः शांतिकं कुर्वे इति
भटैर्निरुद्ध्य निजगृहं चागत्य प्रच्छन्नं स्थितः, ततः स दत्तो मतिमोहात्सप्तममपि दिनमष्टमं राजमार्गे एव मलोत्सर्गं कृत्वा तत्पुष्पैराच्छादयामास,
विचिंत्य गृहान्निर्गतः, तदा एको मालिकः पुर्यां प्रविशन् कार्याकुलत्वात् राजमार्गे एव मलोत्सर्गं कृत्वा तत्पुष्पैराच्छादयामास,
तावत्तत्रैव मार्गे गच्छतो दत्तस्याश्वखुरोत्क्षिप्ता सा विष्टा मुखे पतिता. तदा स विष्टास्वादाच्चमत्कृतः सन् पश्चान्नि-
वृत्तस्तदैतस्य बहुविधदुराचारेण खिन्नैर्मूलमंत्रिभिर्जितशत्रुनृपः पंजरान्निष्कास्य राज्ये स्थापितः, दत्तस्तु छलाद् बद्ध्वा राज्ञे समर्पितः;
राज्ञा च स कुंभ्यां प्रक्षिप्य अधश्चाग्निं प्रज्वाल्य श्वानान् ( शुनो ) विमुच्य स कदर्थितः सन् मृत्वा नरकं गतः आचार्यास्तु बहुधा
सन्मानिताः, इति सत्योक्तौ कालिकाचार्यदृष्टांतः ॥३॥ अथ स्तोकाक्षरैर्महातत्त्वज्ञाने चिलातीपुत्रदृष्टांतो यथा—राजगृहनगर्यां धनदत्त-
नामा व्यवहारी, तस्य चत्वारः पुत्राः, सुसमानामपुत्री, चिलातीपुत्रनामैको दासश्चासन्. एकदा श्रेष्ठी तं दासं दुराचारिणं विज्ञाय
गृहाद् बहिर्निष्कासितवान्. सोऽपि ततो निःसृत्य चौरपल्ल्यां गत्वा स्थितः । अथान्यदा स चिलातीपुत्रो बहुचौरान् संमेलयित्वा राज-
गृहनगर्यामागतः, तत्र स्वयं च तस्य श्रेष्ठिनो गृहे प्रविश्य सुसमानामकन्यां चादाय सद्यो गृहान्निर्गतः, तावत् श्रेष्ठ्यपि कन्यानयनार्थं
चतुष्पुत्रसहितस्तत्पृष्ठे चलितः एवं च कियति मार्गेऽतिक्रान्ते श्रेष्ठिनमत्यासन्नमागतं वीक्ष्य भीतश्चिलातीपुत्रः सुसमाया मस्तकं छित्त्वा
करे च तद् गृहीत्वा, द्वितीयकरे च रुधिरलिप्तं खड्गमुत्पाट्य पर्वतोपर्यारुरोह, श्रेष्ठी तु तत्स्वरूपं दृष्ट्वा विषण्णः सन् पश्चाद्वलितः, अथ
चिलातीपुत्र एतादृशभयंकररूपेणाग्रे चलन् मार्गे कायोत्सर्गस्थं साधुं च विलोक्य इत्थमुवाच, भो मुंड ! धर्मं कथय ? नोचेदनेन खड्-
गेन तवापि शिरश्छेत्स्यामि, साधुना तत्स्वरूपं वीक्ष्य झटिति ' णमो अरिहंताणं ' इति पदमुच्चार्य आकाशे चोड्डिय उपशम १ विवेक
२, संवरेति ३ पदत्रयात्मकं धर्मं तदग्रे उक्त्वाऽन्यत्र जग्मे. अथ चिलातीपुत्रस्तमर्थं विचारयन् आत्मनि तन्मध्यगमेकमपि गुणमपश्यन्

मेतार्यमुनिः प्राग्भवाचरितदुरितवशाद्राजगृहनगर्यां चांडालकुले समुत्पन्नः, चांडाल्या च जन्मसमय एव मृतवत्सायै धनदत्तश्रेष्ठिपत्न्यै स प्रच्छन्नमर्पितस्तद्गृहे स वृद्धिं प्राप्तः, क्रमेण यौवने प्राग्भवमित्रदेवसाहाय्याद्दष्टौ श्रेष्ठिकन्या एकां च श्रेणिकनृपपुत्रीं स परिणीतवान् . ततो द्वादशवर्षांते देववचनात् श्रीवीरप्रभुसमीपे प्रव्रज्यामादाय बहुदेशेषु विहरन् एकदा राजगृहनगर्यां स्वर्णकारगृहे भिक्षार्थं प्रविष्टः, तत्र स्वर्णकारे भिक्षानयनार्थं गृहांतः प्रविष्टे सति पश्चात् श्रेणिकनृपस्य देवपूजानिमित्तं तत्कृता अष्टोत्तरशतप्रमिताः स्वर्णयवाः क्रौंचपक्षिणा भक्षितास्ततश्चोड्डीय स भित्त्युपरि स्थितः, तावत् स सुवर्णकारः शुद्धाहारमानीय बहिः समागतः, स्वर्णकारस्तत्र स्वर्णयवानपश्यन् तं साधुमेव तच्चौरं विचिन्तयन् जगाद–भो साधो ! इहस्था यवाः केन गृहीताः ? तदा साधुना चिंतितं यदि पक्षिणा भक्षिता इति वक्ष्ये तर्हि मद्वचनादसौ एनं क्रौंचं हनिश्यति एवं विचिंत्य तेन मौनमाश्रितं, ततोऽतिरुष्टेन स्वर्णकारेण साधोर्मस्तकमार्द्रवार्ध्रेण बद्धं, तदा साधोश्चक्षूषी निःसृत्य पतिते, महती वेदना समुत्पन्ना, ततः स साधुरन्तकृत्केवली भूत्वा मुक्तिं प्राप्तः । इत्थं प्राणांतोपसर्गेपि तेन मेतार्यमुनिना जीवदयैव मनसि धृता, न किमप्यन्यच्चिंतितं, एवमन्यैरप्याचरणीयम् । इति । समयिके मेतार्यदृष्टांतः ॥ २ ॥ अथ सत्यवादे कालिकाचार्यदृष्टांतो यथा–तुरीमिणीनगर्यां कालिकाचार्याणां भागिनेयेन दत्तनाम्ना पुरोहितेन छलात्स्वामिनृपं कारागारे निक्षिप्य स्वयं च राज्यभारं बिभ्रता अन्यदा च मातुः प्रेरणयाऽऽचार्यसमीपं गतेन तेन उन्मत्ततया धर्मेर्ष्यया च सक्रोधं श्रीगुरुभ्यो यज्ञफले पृष्टे सति गुरुभिर्धैर्यमवलम्ब्य तस्याग्रे यज्ञो हिंसारूपो हिंसायाः फलं च नरक इति सत्यमेव वचः प्रोक्तं, न पुनरन्यथा. ततः कोऽत्र प्रत्यय इति तेन पृष्टे सति गुरुणोक्तं, तस्मिन्नेव दिने तव मुखेऽकस्माद्विष्टा पतिष्यति. ततोऽतिक्रुद्धेन दत्तेनोक्तं त्वं कथं मरिष्यसि ? गुरुणोक्तमहं समाधिना मर्त्तास्मि, मृतोऽपि च स्वर्गं गतास्मि । तदा दत्तः साहंकृतिः सन् तत उत्थाय सूरिं च रक्ष-

रागद्वेषभयादिपरिहारेण यथास्थितकथनं ३, समासः-स्तोकाक्षरैः कर्मनाशकस्तत्त्वबोधः ४, संक्षेपः-स्तोकाक्षरा महार्था द्वादशांगी ५, अनवद्यं-निःपापाचरणं ६, परिज्ञा-पापत्यागेन समंताद्वस्तुतत्त्वज्ञानं ७, प्रत्याख्यानं-परिहरणीयवस्तुत्यागः ८ इत्यष्टौ नामानि. अथैषां क्रमेणाष्टौ दृष्टांता दर्श्यन्ते, तत्रादौ दमदन्तदृष्टांतो यथा—

हस्तिशीर्षनगरे दमदंतो राजा, तस्य चैकदा हस्तिनागपुरस्वामिभिः पांडवैः कौरवैश्च सह सीमानिमित्तं महान् विवादः संजातः, तदनंतरं कियद्भिर्दिनैर्दमदंते जरासंधनृपसेवार्थं गते सति पांडवकौरवैश्च तद्देशो भग्नस्तां वार्त्तां श्रुत्वा क्रुद्धो दमदंतः सद्यो बहुसैन्यमादाय हस्तिनागपुरोपरि समागतस्तत्र चोभयेषां परस्परं महद्युद्धं संजातं, परं दैववशात्पांडवाः कौरवाश्च भग्नाः; दमदंतस्तु विजयं प्राप्य स्वस्थानमायातः, तत एकदा स नृपः संध्यायां पंचवर्णवार्दलस्वरूपं दृष्ट्वा संप्राप्तवैराग्यः संसारमपि तादृशमेवासारं विभावयन् प्रत्येकबुद्धतया प्रव्रजितः, ततः प्रतिग्रामं विहरन् अन्यदा हस्तिनागपुरे प्रतोल्या बहिर्देशे कायोत्सर्गेण स तस्थौ, तदा राजवाटिकां गच्छद्भिः पांडवैर्मार्गे तं मुनिं विलोक्य लोकमुखाच्च तं दमदंतराजर्षिं विज्ञाय सद्योऽश्वेभ्य उत्तीर्य विधिनाभिवन्द्य तस्य द्विविधमपि बलं प्रशंस्य अग्रे प्रक्षिलितं, ततः कौरवाः समेतास्तेषु वृद्धेन दुर्योधनेन तथैव तं दमदंतं विज्ञाय बहुभिर्दुर्वाक्यैस्तिरस्कृत्य साधुसमीपं च बीजपूरफलं प्रक्षिप्य अग्रे चलितं, ततो 'यथा राजा तथा प्रजेति' न्यायात्तदनुगच्छद्भिः सर्वैरपि सैनिकैः काष्ठपाषाणादेर्निःक्षेपात् समन्तादुच्चैस्तरं चत्वरमिव विदधे. अथ पश्चाद्वलमानाः पांडवा मुनिस्थाने तन्महच्चत्वरं दृष्ट्वा लोकेभ्यः प्रश्नपूर्वकं तत्सर्वं कौरवकृतं दुश्चेष्टितं ज्ञात्वा सद्यस्तत्रागत्य पाषाणादिदूरीकरणपूर्वकं तं दमदंतं प्रणम्य स्वस्थानं गताः, एवं पांडवैः सन्मानितः कौरवैश्चापमानितोऽपि स मुनिः उभयत्र समभावं बभार, मनागपि रागद्वेषौ न कृतवान्। इति समभावे दमदंतदृष्टांतः ॥ १ ॥ अथ दयापूर्वकवृत्तौ मेतार्यदृष्टांतो यथा—

माराध्यं, एतावता सम्यग्दृष्टिभिर्मिथ्यात्वपरिहारेण देवपूजन-गुरुसेवन-जैनागमश्रवण-धर्मक्रियानुमोदन-तीर्थयात्राकरण-जिनकल्याणकभूमिस्पर्शनादिभिः सततं सम्यक्त्वं निर्मलं कार्यमिति, उक्तं च—

जम्मं दिक्खा नाणं, तित्थयराणं महाणुभावाणं ॥ जत्थ य कयनिव्वाणं अगाढं दंसणं होइ ॥१॥इति॥ प्रसंगत उक्तं,

अथ प्रथमं सामायिकस्वरूपमुच्यते, समस्य-रागद्वेषरहितस्य सतो-जीवस्य आयो-ज्ञानादीनां लाभ प्रशमसुखरूपः समायः, स एव-सामायिकं, मनोवाक्कायचेष्टापरिहारेण मुहुर्त्तं यावत् सर्ववस्तुषु समपरिणाम इत्यर्थः, उक्तं च, निंदपसंसासु समो, समो य माणावमाणकारीसु । समसयणपरियणमणो । सामाइयं संगओ जीवो ॥ १ ॥ जो समो सव्वभूएसु, तसेसु थावरेसु य ॥ तस्स सामाइयं होइ, इमं केवलिभासियं ॥ २ ॥ तथा सामायिकस्थितः श्रावको गृहस्थोऽपि यतितुल्यो भवति, यतः—सामाइयंमि उ कए, समणो इव सावओ हवइ जम्हा ॥ एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥ १ ॥ अत एव सामायिकस्थस्य देवस्नात्रपूजनादावप्यधिकारो नास्ति; सामायिकरूपे भावस्तवे प्राप्ते सति द्रव्यस्तवकरणानौचित्यात् । सामायिकस्य दुर्लभता कथितास्ति, यथा—सामाइयसामग्गिं, देवावि चिंतंति हिययमज्झंमि ॥ जइ हुइ मुहुत्तमेगं, ता अह्म देवत्तणं सहलं ॥ १ ॥ इति ॥ इह सामायिककर्त्ता श्रद्धालुर्द्विविधः ऋद्धिमान् अनृद्धिकश्च; तत्र य ऋद्धिरहितः स साधुसमीपे जिनगृहे पौषधशालायां स्वगृहे वा निर्विघ्ने स्थाने सामायिकं कुरुते, यस्तु राजादिर्महर्द्धिकस्तस्य सामायिकविधानं महताडंबरेणोपाश्रयमागत्योचितं भवति, यत ईदृशा अपि सामायिकं कुर्वंतीति लोके जिनशासनस्य महाप्रभावना संजायते इति.

अथ सामायिकस्याष्टौ नामानि उच्यंते—सामाइयं १ समइयं २ सम्मवाओ ३ समास ४ संखेवो ५ । अणवज्जं च ६ परिण्णा ७, पच्चक्खाणे य ८ ते अट्ठ ॥ १ ॥ व्याख्या—सामायिक-समभावः १. समयिकं-सम्यग्दयापूर्वकं सर्वजीवेषु प्रवर्त्तनं २, सम्यग् वा

तरसं चिर्भटिकादिफलं जीवाश्रयत्वाद्वर्जनीयं, पुनः सच्छिद्रमपरिपक्वं फलमपि अंतर्जीवसद्भावात्त्याज्यं, एवमन्यदपि अज्ञातफलादियद्-भक्ष्यवस्तु तत्सर्वं परिवर्ज्यं, उक्तं च—

अज्ञातकं फलमशोधितपत्रशाकं, पूगीफलानि सकलानि च हट्टचूर्णं ॥
मालिन्यसर्पिरपरीक्षकमानुषाणा-मेते भवंति नितरां किल मांसदोषाः ॥ १ ॥

पुनर्यद् द्रव्यं ग्रीष्मादिकाले शीघ्रविनाशि भवति तत्तत्सोपयोगेन सता निरवद्यमेव सेव्यमिति ॥

अथ विशेषतोऽस्मिन्पर्वणि कृत्यं दर्शयति—

**सामायिकावश्यक-पौषधानि, देवार्चन-स्नात्र-विलेपनानि। ब्रह्मक्रिया-दान-तपोमुखानि, भव्याश्चतुर्मासिकमंडनानि॥१॥**

व्याख्या--भो भव्या ! एतानि सामायिकादिधर्मकृत्यानि चातुर्मासिकस्य मंडनानि—अलंकारभूतानि विद्यंते, ततो भवद्भिस्तानि सेव्यानीति ज्ञेयं, यद्यपि चातुर्मासिकत्रयमस्ति तथापि यदुद्दिश्य व्याख्यानं विधीयते तन्नाम ग्राह्यं, तत्र न कोऽपि दोषः, अत्र हि कश्चित्पुमान् सामायिकं करोति, कश्चित्प्रतिक्रमणं, कश्चित्पौषधमित्यादि योज्यं, यथाशक्ति एतानि कर्त्तव्यानीति न कश्चिद्विरोध इति, इह प्रथमं तिथयो विलोक्याः, ते च त्रिधा तथाहि—"चाउद्दसट्ठ-मुद्दिट्ठपुण्णमासिणीत्ति" सिद्धांते उक्तत्वात् , मासमध्ये द्वे चतुर्दश्यौ, द्वे अष्टम्यौ, आमावास्या, पूर्णिमा च, षट् चारित्रतिथयः, आसु चारित्रमाराध्यं. शीलांगाचार्यादि-गीतार्थैरादृत्वात् , उद्दिष्टशब्देन जिनकल्याणकतिथयः पर्युषणातिथिरपि च ग्राह्या, द्वितीयापंचम्येकादश्यो ज्ञानतिथयः, एषु ज्ञानमाराध्यं, अन्ये दर्शनतिथयस्तेषु दर्शन-

## अथ श्रीचातुर्मासिकव्याख्यानं प्रारभ्यते ॥ १ ॥

स्मारं स्मारं स्फुरज्ज्ञानं, धाम जैनं जगन्मतम् ॥ कारं कारं क्रमांभोजे, गौरवे प्रणतिं पुनः ॥ १ ॥
निबद्धां प्राक्तनप्राज्ञैर्वीक्ष्य व्याख्यानपद्धतिम् ॥ लिख्यते लेशतो व्याख्या, चातुर्मासिकपर्वणः ॥ २ ॥ युग्मम् ॥

इहाषाढ २ कार्तिक २ फाल्गुन ३ चातुर्मासिकानामन्यतमे चातुर्मासिकपर्वणि समागते सति अन्योऽन्यसापेक्षव्यवहारनिश्चयाभ्यां युक्तं श्रीजिनशासनं विज्ञायैकांतवादनिराकरणेन आवश्यकग्रंथोक्त-समाहिताक्षर- शुद्धटंकरूप्यलक्षण चतुर्थ-भंगतुल्यं द्रव्यभावलिंगं संयुक्तमिच्छद्भिः स्याद्वादरुचिभिर्धर्मार्थिभिः प्राणिभिः सम्यग्धर्मकृत्यं कर्त्तव्यम् । अत्र हि चत्वारो भंगाः प्रोक्ताः संति, तथाहि—अशुद्धं रूप्यमशुद्धमुद्रं १, अशुद्धं रूप्यं शुद्धमुद्रं २, शुद्धं रूप्यमशुद्धं मुद्रं ३, शुद्धं रूप्यं शुद्धं मुद्रं ४. तत्र प्रथमे भंगे चरकपरिव्राजकादयः १, द्वितीये पार्श्वस्थादयः २, तृतीये प्रत्येकबुद्धा अंतर्मुहूर्त्तकालमगृहीतद्रव्यलिंगाः ३, चतुर्थे साधवो द्रव्यतो भावतश्च शुद्धिभाजः ४. एतेषु चतुर्थभंग एव शुद्धत्वादुपादेय इति । अथ श्राद्धानां प्रथमतः सामान्येन किंचिन्नित्यकर्त्तव्यमुच्यते । एतद्दुरंतानंतभवभ्रमण भीरुभिर्जैनमार्गानुसारिभिः श्रद्धालुभिः सर्वदा बहुमावद्यव्यापाराः वर्जनीयाः, विशेषतः फाल्गुनादिमासेषु तिलादिधान्यं न रक्षणीयं बहुत्रसजीवोत्पत्तिविनाशसंभवात् , तथा संधानमाम्रफलादीनां यदि संसक्तं भवेत्तदा त्याज्यं, जंतुभिर्मिश्रं फलं मधुकबिल्वादि, पुष्पमरणिशिग्रूमधुकादि त्याज्यं, वर्षाकाले तंदुलीयादिपत्रशाकं न भक्षणीयं, बहुसूक्ष्मत्रसजीवमिश्रत्वादिति, योगशास्त्रे हेमाचार्यैर्गुर्जरादौ महाजनप्रसिद्धैरुक्तमस्ति, फाल्गुनपूर्णिमात आरभ्य कार्तिकपूर्णिमां यावत् प्रायेण पत्रशाकं न भक्ष्यमिति । तथातिपक्वं श्लथीभूतं चलि-

रिसहेस समं पत्तं, निरवज्जं इक्खुरससमं दाणं ॥ सेयांससमो भावो, हविज्ज जई मग्गिय हुज्जा ॥४॥ इयं गाथा स्पष्टार्था।

ननु त्रैलोक्यपूज्यस्यापि भगवतः कथमेतावान्—अन्तरायोऽजनिष्ट ? तत्रोच्यते-प्राक्कृतकर्मोदयाद्, तथाहि—कस्मिंश्चित् प्राग्भवे ऋषभस्वामिजीवेन पथि व्रजता धान्यखले धान्यं भक्षयतो बलीवर्दान् तोदनेन कर्षुकैस्ताडयमानान् विलोक्य चिन्तितमेते मूढाः वृषभ-मुखेषु शिक्यबन्धनं न जानते, तस्मिन् क्षणे स्वयं तत्र स्थित्वा स्वहस्तेन वृषभमुखेषु तद्बन्धनोपदेशश्चक्रे, तदानीं च बलीवर्दैः निःश्वा-सानां षष्ट्यधिकत्रिशती मुमुचे, तस्मिन् कर्मणि उदिते सति भगवानत्र भवे वर्षमेकं यावद् आहारविघ्नं लेभे, तस्मिन् कर्मणि क्षयोप-शमं च प्रापिते श्रेयांसदत्तमाहारं लब्धवान्, श्रेयांसश्च तद्दानफलेन मुक्तिसुखभाग् बभूव, तद्दिनादेव साधुभ्यः प्रासुकाहारदानविधिः सर्वैरपि लोकैरज्ञायि। ततश्च भगवान् ऋषभदेवो वर्षाणामेकसहस्रं यावत् छाद्मस्थ्येन विहृत्य तपस्तप्त्वा घातिकर्मचतुष्टयं क्षपयित्वा केवलज्ञानं प्राप्य वर्षसहस्रोनपूर्वलक्षं यावदार्यक्षेत्रेषु विहृत्य बहुभव्यान प्रतिबोध्य अष्टापदपर्वतोपरिदशसहस्रमुनिमहितेन मोक्षं जगाम. इति श्रुत्वा भो भव्याः ! रत्नत्रयात्मके मोक्षमार्गे बह्वादरेण यतध्वम् इति श्रेयः ॥

अक्षयादितृतीयाया, व्याख्यानं वीक्ष्य प्राक्तनम्। अलेखि सुगमं कृत्वा, क्षमाकल्याणपाठकैः ॥ १ ॥

॥ इति श्री अक्षयतृतीयाव्याख्यानं सम्पूर्णम् ॥ ८ ॥



एतच्च भगवतः पारणकं श्रेयांसगृहे वैशाखशुक्लतृतीयायामभूद्, तद्दानस्य अक्षयसुखजनकत्वेन तद्दिनस्याक्षयतृतीया, इति प्रसिद्धिर्बभूव, शेषाणामजितादित्रयोविंशतितीर्थंकराणाममृतरससदृशोपममृतरसतुल्यं परमान्नं घृतखण्डमिश्रितक्षैरेयीरूपं भोजनकं पारणके आसीद् इति प्रथमगाथार्थः । अथ पंचदिव्यानि एव आह—

घुट्ठं च अहो दाणं, दिव्वाणि य आहयाणि तूराणि । देवा वि सन्निवइया, वसुहारा चेव वुट्ठा य ॥ २ ॥

गाथार्थः—यदा श्रेयांसगृहे भगवता पारणकं कृतं तदा देवैः, 'अहोदानमहोदानमिति' घुष्टम्—उद्घोषणा कृता, तथा देववृन्देन दिव्यानि तूर्याणि वादित्राणि आहतानि—वादितानि, आकाशे बधिरितदिक्चक्रा देवदुन्दुभयो नेदुरित्यर्थः, तथा देवाः—तिर्यग्जृम्भकादयोऽपि सन्निपतिताः—आगताः, तथा वसुधारा च वृष्टा—सार्धद्वादशकोटिमितसौवर्णिकादिवृष्टिरभूदित्यर्थः । उपलक्षणात् सुगन्धिजलवृष्टिः सुगन्धपुष्पवृष्टिश्चाभूदिति ज्ञेयम्, एतदेव स्पष्टयति—

भवणं धणेण भुवणं, जसेण भयवं रसेण पडिहत्थो । अप्पा निरुवमसुखं, सुपत्तदाणं महग्घवियम् ॥३॥ इति ।

गाथार्थः—दानावसरे भवनं—श्रेयांसगृहं धनेन—स्वर्णरत्नादिमयेन भृतमिति शेषः, भुवनं—स्वर्ग-मृत्यु-पाताल-लोकरूपं यशसा भृतम्—अहो ! श्रेयांसकुमारेण त्रिजगत्पतये केनाऽप्यदत्तपूर्वं दानं दत्तमिति त्रिलोकिव्यापिनी तस्य कीर्तिरभूदिति भावः, भगवान् ऋषभस्वामी इक्षुरसेन प्रतिहस्तः—लाभभागभूद् संयमलाभस्य इक्षुरसाहारपूर्वकत्वाद्; आत्मा—श्रेयांसजीवो निरुपमं सुखं प्राप्तवान्, अतः सुपात्रदानं महाप्रशस्यम् ।

कानर्थमूलकारणं परमाणुमात्रमपि परिग्रहं न वाञ्छति; किं पुनः मणिस्वर्णकन्याश्वगजमौक्तिकादिकमिति सम्यग् विचार्य गवाक्षादुत्तीर्य यत्र श्रीऋषभदेवस्तत्र समागत्य हर्षभरेण पुलकितशरीरो भगवन्तं त्रिःप्रदक्षिणीकृत्य वन्दयित्वा उवाच-हे भगवन् ! प्रसन्नो भव, अष्टादशकोटाकोटिसागरोपमानि यावद् विच्छिन्नस्य प्रासुकाहारदानविधेः सम्यक् प्रदर्शनेन भव्यजन्तून् निस्तारय, गृहाण च मद्गृहे प्राभृतार्थं समागतान् शतसंख्यान् इक्षुघटान् इति । अथ स्वामिनाऽपि चतुर्ज्ञानयुक्तेन द्रव्यक्षेत्रादिसामग्रीं सम्यग् ज्ञात्वा इक्षुरसग्रहणाय करद्वयं प्रसारितम्, तदा श्रेयांसो रत्नपात्रतुल्याय श्रीमद्भगवते त्रिकरणशुद्ध्या इक्षुरसरूपं निर्दुष्टमाहारं ददानो हर्षभरेण स्वचित्ते शरीरे च न ममौ*, आत्मानं धन्यं मन्यमानः त्रिजगत्पूज्येन भगवता आहारग्रहणेनानुगृहीतोऽहमिति चिन्तयन् यावत् स्वहस्तेन इक्षुरसभृतैर्घटैर्भगवन्तं प्रीणयन् तिष्ठति, तावद् देवैर्हर्षभरेणाकाशे पंच दिव्यानि प्रकटीकृतानि, एतदेवाह श्रुतकेवली भगवान् भद्रबाहुः-'उसभस्स उ पारणए' इत्यादि, गाथा पूर्वं दर्शिता । अथ गाथार्थः—ऋषभस्य लोकनाथस्य प्रथमतीर्थंकरस्य प्रथमपारणके इक्षुरस आसीद्,

*आनंदाश्रूणि रोमांचो, बहुमानं प्रियंवचः । किंचानुमोदना पात्र-दानभूषणपंचकम् ॥ १ ॥
अनादरो विलंबश्च वैमुख्यमप्रियंवचः । पश्चात्तापश्च सद्दाने, स्मृतं दूषणपंचकम् ॥ २ ॥
दानं ख्यातिकरं सदा हितकरं, संसारसौख्यंकरं । नृणां प्रीतिकरं गुणाकरकरं, लक्ष्मीकरं किंकरं ।
स्वर्गावासकरं गतिक्षयकरं, निर्वाणसंपत्करं । वर्णायुर्बलबुद्धिवर्धनकरं, दानं प्रदेयं बुधैः ॥ ३ ॥

इहादौ श्रीऋषभस्वामिसम्बन्ध उच्यते, श्रीऋषभस्वामी सर्वार्थसिद्धविमानात् च्युत्वा आषाढकृष्णचतुर्थ्यां श्रीमरुदेवाकुक्षावुत्पन्नः, नवमासान् चतुर्दिनाधिकान् गर्भे स्थित्वा चैत्रकृष्णाष्टम्यामर्धरात्रे जन्म संप्राप्तः, विंशतिपूर्वलक्षाणि कुमारपदं भुक्त्वा त्रिषष्टिपूर्ववर्षं राज्यं प्रपाल्य चैत्रकृष्णाष्टम्यां दीक्षां जग्राह. तदा हस्तिनागपुरे श्रीबाहुबलिपुत्रस्य श्रीसोमयशोनृपस्य पुत्रः श्रेयांस आसीद् । अथ भगवान् प्राक्तनकर्मोदयाद् वर्षं यावद् आहारालाभाद् निराहारो विहरन् हस्तिनागपुरे समाययौ, तस्यां रात्रौ श्रेयांसादिभिः त्रिभिस्त्रयः स्वप्ना लब्धाः, तथाहि—श्यामीभूतं मेरुममृतघटैः प्रक्षाल्याहमुज्ज्वलमकार्षमिति श्रेयांसो लब्धवान् १, तथा सूर्यबिम्बात् च्युतं किरण-सहस्रं श्रेयांसेन सूर्यबिम्बे स्थापितमिति स्वप्नं सुबुद्धिनामा श्रेष्ठी लब्धवान् २, तथा एकः शूरो बहुभिर्वैरिभिः रुद्धः, श्रेयांससाहाय्याद् जयं प्राप्तवान्, इति स्वप्नं च सोमयशाः राजा लब्धवान् ३, प्रातः सभायां सर्वेऽपि मिलिताः स्वं स्वं स्वप्नमुक्तवन्तश्च, ततः स्वप्नविचारं कृत्वा नृपादिभिः सर्वैरपि उक्तम्—अद्य श्रेयांसस्य कश्चिदपूर्वो महान् लाभो भविष्यतीति । तदा भगवान् भिक्षार्थं इतस्ततो भ्रमन् श्रेयांसगृहसमीपमाययौ, श्रेयांसः स्वामिनं दृष्ट्वा हर्षं प्राप्तः, लोकास्तु पूर्वं साधुमुद्राया अदर्शनेन अन्नदानविधेरज्ञानाद् भगवन्तं मणि-स्वर्णगजाश्वादिभिर्निमन्त्रयामासुः, भगवांस्तु तैर्दीयमानं वस्तु किमपि न गृह्णातिस्म, तदा भगवानस्माकमुपरि अतीव रुष्टोऽस्ति, येनास्माकं किमपि वस्तु न गृह्णाति इति ते लोकाः कोलाहलं चक्रुः । एवमेकः संवत्सरो व्यतिक्रान्तः, तस्मिन्नवसरे श्रेयांसो भगवन्मुद्रां विलोक्य 'अहो दृष्टं मया ईदृक्रूपं कदाचिद्' इति ऊहापोहं कुर्वाणो जातिस्मरणं ज्ञानं प्राप्य भगवता सह स्वस्याष्टभवसंबन्धं च ज्ञात्वा प्राक् स्वयमनुभूतं साधुभावं स्मृत्वा चिन्तयतिस्म—अहो ! अज्ञानविजृम्भितमेतद् संसारिजीवानां, येनैते एव कुर्वन्ति—यतः त्रैलोक्यराज्यं तृणाय मन्यमानो भगवान् विषयतृष्णां त्यक्त्वा सांसारिकसुखं च किंपाकफलतुल्यं गणयन् साधुत्वमंगीकृत्य मोक्षसुखार्थं यतमानोऽने-

चले बालिनामा महामुनिर्मोक्षं प्राप्तः । श्रीकृष्णपुत्रौ शाम्ब–प्रद्युम्ननामानौ मुनी सिद्धिं गतौ । दशरथपुत्रो भरतोऽपि तत्रैव शिवं प्राप्तः ।
शुकनामा मुनिः, शैलकाचार्य–पन्थको च मुक्तिं प्राप्तौ । राम–भरत–द्राविडनरपतिनारदाद्या मुनयोऽप्यत्रैव मुक्तिं प्राप्ताः, पाण्डवप्रमुखाः
सत्पुरुषा अपि श्रीसिद्धाचले मुक्तिं प्रापुः । चैत्रीपूर्णिमादिने उपवासं कृत्वा श्रीसिद्धाचलतीर्थे गत्वा पूजाध्यानदानादीन् ये प्राणिनः कुर्वन्ति
ते नरकतिर्यग्गतिविच्छेदं कुर्वन्ति, इत्यादि पर्वाराधनस्वरूपं प्रोक्तम् । तद्दिने श्रीगुरुपार्श्वाद् मन्त्राक्षरपूतं स्नात्रजलं गृहीत्वा गृहादौ सेच-
नीयम्, तेन मरकोपद्रवादि भयं याति, सदाऽऽनन्दश्च भवति, ऋद्धिं वृद्धिं सुखं च जनः प्राप्नोति । अस्मिन् पर्वणि समागते केचिद्
दानं ददति, केऽपि शीलं पालयन्ति, केचिद् भावं भावयन्ति, वक्तॄणां श्रोतॄणां च सदाश्रेयो भवतु ।

नन्दे-रसे-सिद्धिचन्द्रे ( १८६९, ) प्रमिते वत्सरे वरे । इयं व्याख्या गुणग्राह्या, चैत्रशुक्लाष्टमीतिथौ ॥ १ ॥
दुर्गे जेसलमेरौ च, कृतावासेन धीमता । गणिनाऽमरचन्द्रेण, वाचकेन सुसाधुना ॥ २ ॥
तच्छिष्यजीवराजेन, कृता व्याख्या मनोरमा । चैत्रशुक्लपूर्णिमायाः, कीर्तिरत्नसहायतः ॥ ३ ॥

इति चैत्रशुक्लपूर्णिमाव्याख्यानं समाप्तम् ॥ ७ ॥

## अथ अक्षयतृतीयाव्याख्यानम् ॥ ८ ॥

प्रणिपत्य प्रभुं पार्श्वं, श्रीचिन्तामणिसंज्ञकम् । अक्षयादितृतीयाया, व्याख्यानं लिख्यते मया ॥ १ ॥
उसभस्सयपारणए, इक्खुरसो आसि लोगनाहस्स । सेसाणं परमन्नं, अमियरससरिसोवमं आसी ॥ २ ॥

शुद्धभावेनोपवासं कृत्वा श्रीजिनालये स्नात्रपूजामहोत्सवादि करणीयम्, सर्वजिनानां पूजा विधेया, सद्गुरुमुखाच्च तस्मिन् दिने चैत्री व्याख्यानश्रवणं कार्यं, दीनहीनजनेभ्यो दानं देयं; शीलं च पालनीयं; जीवरक्षा विधेया, विधिपूर्वकं विमलगिरिपट्टं उच्चैः स्थापयित्वा मुक्ताफलैस्तन्दुलादिभिश्च महतीं पूजां विधाय गुरुसमक्षं पंचशक्रस्तवादिभिर्देवान् वन्दित्वा शुभध्यानेन दिनरात्रीकृत्यं विधाय पारणवेलायां मुनिभ्यो दानं दत्त्वा पारणकं विधेयम्, पंचदशवर्षाणि यावदेवं प्रतिवर्षं व्रतमाराधनीयम्, पश्चादुद्यापनं यथाशक्ति समाचरणीयम्, तेन निर्धनो धनी भवेद्, पुत्र-कलत्र-सौभाग्य-कीर्त्ति-देवसुखं शिवपदप्राप्तिश्च भवेत्, तथा स्त्रीणां पतिवियोगो न भवति, रोग-शोक-वैधव्य-दौर्भाग्य-मृतवत्सात्व पारवश्यादि सर्वं कर्मफलं नश्यति। अस्या आराधने स्त्री पतिवल्लभा भवति, विषकन्या भूत-प्रेत-शाकिन्यादिग्रहादिकष्टं विलयं याति, बहुना किं भावेनाऽऽराधिता चैत्रीपूर्णिमा मुक्तिं ददाति, इति गणधरमुखात् श्रुत्वा सा बाला हर्षं प्राप, उक्तवती चाहं एतद् व्रतं करिष्यामि। तदा जनन्या सह सा बाला गुरुं नत्वा गृहे गत्वाऽवसरे चैत्रीपूर्णिमाऽऽराधनं कृतवती, तदा सा सुखिता जाता, विषयविकारस्यापि शान्तिः संजाता, परमपदे मनोऽभूद्, प्रति वर्षं व्रतं कुर्वत्या पूर्णे व्रते शुभभावेनोद्यापनं कृतम्, पुण्डरीकगणधरध्यानेन श्रीसिद्धाचलयात्राकरणेन श्रीऋषभदेवस्य जापेन प्रान्तेऽनशनं विधाय कालं कृत्वा सौधर्मदेवलोके देवत्वेनोत्पन्नाः, तत्र देवसंबन्धिनो भोगान् भुक्त्वा महाविदेहे क्षेत्रे सुकच्छविजये वसन्तपुरे नरचन्द्रस्य राज्ञो राज्ये ताराचन्द्रश्रेष्ठिनो गृहे तारानाम्न्या भार्यायाः कुक्षौ पुत्रत्वेन स जीव उत्पन्नः, नाम्ना पूर्णचन्द्रो, द्वासप्ततिकलाकुशलो जातः, पंचदशकोटिद्रव्यं, पंचदश भार्याः, पंचदश पुत्रा, इत्यादि सर्वं सुखं प्राप्तवान्, तद्भवे पुनः स चैत्रशुक्लपूर्णिमाऽऽराधनं कृत्वा, प्रान्ते श्रीजयसमुद्रगुरुपार्श्वे दीक्षां गृहीत्वा, तत्र च शुभध्यानेन केवलज्ञानं प्राप्य मुक्तिं गतः। एवं चैत्र्याराधने बहवो जनाः परमानन्दं प्राप्ताः, पुनरपि विमला-

भर्तुः समीपे समागता, तदा भर्त्रा प्रोक्तम्-अद्य वारकं तव नास्ति कथं त्वया मर्यादा लंघिता ?, सा कामविह्वला भर्तारं प्रत्युवाच-केयं मर्यादा ?, तदा भर्त्रा प्रोक्तम्-कुलोद्भवानां मर्यादोल्लंघनं न युक्तं; समुद्रोऽपि मर्यादां न मुंचति; सत्पुरुषः स्वमर्यादया न चलति । ततः सा संतोषरहिता कलुषवदना मित्रश्रियं प्रति द्वेषमुद्वहन्ती स्वगृहे समागता, सपत्न्या सह पतिसंबन्धवियोगमिच्छन्ती कनकश्रीः (चन्द्रश्रीः) विषयप्रमादव्याकुला सती मन्त्रतन्त्रयन्त्रोपायकार्मणादिसामग्रीं विधाय तस्याः शरीरे भूत-प्रेत-शाकिनी-डाकिनीप्रवेशं कारितवती, साऽपि कर्मयोगात् पारवश्यं प्राप्ता । अथ कनकश्रीः सपत्नीशरीरं कुचेष्टितं ज्ञात्वा जहर्ष, पुनः स्ववशीकरणबलेन भर्तारं स्ववशी चक्रे, भर्ताऽपि लघुपत्नीं दृष्ट्वा पूर्वकर्मफलं विचिन्त्य तत्याज । कनकश्रीर्हर्षिता, धनावहश्रेष्ठी कनकश्रिया सह विषयसुखं भुंजानः सन् कालं निनाय । कियति काले गते सति सा कनकश्रीर्मृता त्वत्पुत्री जाता, सपत्नीपतिवियोगकरणेन विषकन्या कर्मविपाकं पतिविरह-पीडापीडितं भोगसुखरहितं कर्मोपार्जितं, तेन कारणेन तव पुत्री महादुःखेन दुःखिताऽस्ति, कर्मणां विचित्रा गतिरस्ति । तदा तज्जननी प्राह-हे गुरो ! इयं पतिविरहेण पीडिता वृक्षशाखायां पाशं बद्ध्वा मरणाय समुद्यता, तावन् मया एतत्स्वरूपं दृष्ट्वा पाशं छित्त्वा भवत्समीपे समानीता भवद्भिर्दीक्षा प्रदीयताम्, तदा गणधरः प्राह-हे भद्रे ! एषा तव पुत्री दीक्षायोग्या नास्ति, नितरां चंचलस्वभावा बाला वर्तते, इति गुरुवचनं श्रुत्वा तन्माता प्राह-अस्या योग्यं धर्मकृत्यं कथ्यतां येन दुष्टकर्मविपाको दूरीभवेद् । गुरुरपि ज्ञानबलेन तस्या योग्यं व्रतं कथयतिस्म-हे भद्रे ! चैत्रशुक्लपूर्णिमाऽऽराधनं कुरु, तस्या आराधनेऽस्याः पूर्वकर्मविनाशो भविष्यति, इति श्रुत्वा तस्याः कन्याया अपि गुरुज्ञानयोगाद् रुचिः समुत्पन्ना, तदा सा सावधानीभूय गुरुवाणीमशृणोद्, तदा गणधरेणोक्तम्-श्रीसिद्धाचलतीर्थं शाश्वतमस्ति, तत्रानन्तानन्तकालेनानन्ता जीवाः सिद्धाः, सकलतीर्थेषु मुख्यम्, तस्य चैकविंशतिर्नामानि सन्ति, तैर्ध्यानं विधेयम्, चैत्रीपूर्णिमादिने

उत्तरश्रेण्यां च गगनवल्लभप्रमुखाणि पष्ठिर्नगराणि वासयित्वा प्रदत्तानि; तत्र विद्याबलेन लोकान् वासयित्वा यावन्ति नगराणि तावंतो देशान् संस्थाप्य तौ पृथक् पृथग् नमिविनमी तत्र राज्यं पालयामासतुः। तौ चिरकालं राज्यसुखमनुभूय प्रान्ते सर्वसंगं परित्यज्य दीक्षां गृहीत्वा श्रीविमलाचले समागत्य श्रीदेवाधिदेवं युगादिदेवं भावेनाऽभिनम्य तत्रैव तीर्थे मुक्तिं प्रापतुः, इति नमिविनमिसम्बन्धः।

अथ श्रीऋषभदेवस्य प्रथमगणधरः पुण्डरीकनामाऽत्रैव मुक्तिं प्राप्तस्तत्सम्बन्धश्चायम्।

श्रीआदिनाथपुत्रो भरतः, तस्य पुत्रः पुण्डरीकः, श्रीप्रभोः पार्श्वे धर्मं श्रुत्वा प्रतिबुद्धः सन् दीक्षां गृहीत्वा प्रथमगणधरो जातः, पञ्चकोटिसाधुपरिवृतः गणधरो ग्रामानुग्रामं विहरन् सौराष्ट्रदेशे समागतः तदागमनं श्रुत्वाऽनेकभूपमण्डलीकसामन्तश्रेष्ठि-नरनारीगणा वन्दनार्थमाययुः, गुरुरपि यथायोग्यं धर्मदेशनां ददाति स्म। तस्मिन्नवसरे एका सबाष्पजला सशोका चिन्तासागरसंप्रविष्टा दीना महिला समागता, तया सार्धं विधवा दौर्भाग्ययुक्ता एका कन्याऽपि समागता। श्रीपुण्डरीकगणधरं नमस्कृत्यावसरं प्राप्य कन्यया सह सा स्त्री इति पप्रच्छ-हे भगवन्! अनया कन्यया पूर्वभवे किं पापं कृतं, येन विवाहसमये करमोचनवेलायामेवास्याः पतिर्मरणं प्राप्तः? इति प्रश्ने कृते सति गणधरः प्राह-हे भद्रे! अशुभकर्मणोऽशुभमेव फलम्, तथाहि-जम्बूद्वीपे पूर्वमहाविदेहे मनोरमं विश्वविख्यातं कैलासपर्वताकारतुंगप्राकारवेष्टितं नानादेशोद्भवजनाकुलं विशालशालगृहैर्मण्डितं चन्द्रकान्तनामकं नगरं बभूव। तत्र श्रियो धाम सकलकलागुणगणग्रामो जगति प्रसिद्धः समरसिंहो नाम महीपतिरभूत्। तस्य शीलालंकारधारिणी धारिणीनाम्नी वल्लभा बभूव। तत्र नगरे महाधनाढ्यः परमश्राद्धो जिनभक्तिरतोऽनेकगुणसागरो धनावहनामा श्रेष्ठी बभूव। तस्य कर्मयोगाद् द्वे भार्ये बभूवतुः, एका कनकश्रीः द्वितीया मित्रश्रीस्ताभ्यां भार्याभ्यां सह स श्रेष्ठी सुखेन कालं गमयतिस्म। अथैकदा मदनपरवशात् कनकश्रीर्मित्रश्रियो वारकं समुल्लंघ्य

# अथ चैत्रीपूर्णिमाव्याख्यानम् ॥ ७ ॥

तीर्थराजं नमस्कृत्य, श्रीसिद्धाचलसंज्ञकम् । चैत्रशुक्लपूर्णिमाया, व्याख्यानं क्रियते मया ॥ १ ॥

सिज्झो विज्झायर चक्की, नमिविनमिमुणी, पुण्डरीओ मुणिन्दो । वालीपज्जुम्नसंबो, भरहसुगमुणी, सेलगो पंथगो य ॥ रामो कोडीपंच, दविडनरवई, नारओ पण्डुपुत्ता ॥ मुत्ता एवं अणेगे, विमलगिरिमहं, तित्थमेयं नमामि ॥ १ ॥

व्याख्या—अहमेतत् तीर्थं नमामि यत्रानेक प्राणिनः सिद्धा बभूवुः, ते के ? तानाह—यत्र विमलाचले विद्याधरादिचक्रवर्तिनः सिद्धाः—मुक्तिं प्राप्ताः, पुनर्युगादिदेवस्य पौषकपुत्रौ नमिविनमिनामानौ मुक्तिं गतौ, तत्सम्बन्धोऽयम्-अयोध्यायां नगर्यां भगवान् ऋषभदेवः स्वज्येष्ठपुत्राय भरताय राज्यं दत्त्वाऽन्येषामपि यथायोग्यं देशं विभज्य स्वयं दीक्षां गृहीतवान् , तदा नमिविनमिनामानौ कस्मैचित् कार्याय कुत्रचित् प्रदेशे गतावभूताम् , भगवता तु राज्यविभागावसरे तौ विस्मृतौ, दीक्षाग्रहणानन्तरमयोध्यायां समागतौ भरतं पप्रच्छतुः—ऋषभदेवोऽस्माकं पिता क्वास्ति ?, भरतेनोक्तं—स्वामिना दीक्षा गृहीता, युवाभ्यां मम सेवा कर्तव्या, अहं युवाभ्यां देशग्रामं दास्यामि, तदा तौ भरतमपमान्य राज्यार्थं स्वामिसमीपे आगत्य विहारं कुर्वतो भगवतोऽग्रे कण्टकादिकं मार्गाद् निवारयन्तौ कायोत्सर्गे स्थितस्य भगवतो दंशमशकादीन् उड्डापयन्तौ प्रातर्वन्दनापूर्वकं ' स्वामिन् ! राज्यप्रदो भव ' इत्युक्तवन्तौ नित्यं तिष्ठतः स्म । एकदा वन्दनार्थमागतेन धरणेन्द्रेण तयोरुपरि महतीं कृपां विधाय भगवद्रूपं कृत्वा ताभ्यामष्टचत्वारिंशत्सहस्रपठितसिद्धविद्याः प्रदत्ताः, षोडशविद्यादेव्याः समाराधनं च दत्तम् , वैताढ्यपर्वते दक्षिणश्रेण्यां रथनूपुरचक्रवालप्रमुखाणि पञ्चाशन्नगराणि,

तस्य दश उपवासाः प्रायश्चित्तम् , एककलशप्रमाणजलप्रक्षेपणे शतमुपवासानां प्रायश्चित्तम् , मूत्रप्रक्षेपणे पंचाशदुपवासाः, छगणप्रक्षेपणे पंचविंशतिरुपवासाः, एकगालिप्रदाने पंचदशोपवासाः, गीतगानेऽसभ्यगाने सार्धशतमुपवासाः, तत्संबन्धिवादित्रताडने सप्ततिरुपवासाः, एककरीषप्रक्षेपणे विंशतिरुपवासाः, छगणहारप्रक्षेपणे जन्मान्तरे शतं वाराः स्वस्य भस्मीभवनं भवति, श्रीफलप्रक्षेपणे सहस्रशो भस्मीभवनं भवति, एकपूगीफलप्रक्षेपे पंचाशद् वाराः, धूलिप्रक्षेपे पंचविंशतिर्वाराः, होलिकागर्तखनने शतं वाराः, होलिकायां काष्ठप्रक्षेपे सहस्रशो भस्मीभवनं भवति । होलिकादाहकरणे सहस्रशश्चाण्डालकुलोत्पत्तिः, होलिकाव्रतकारकस्य सहस्रशो म्लेच्छकुले उत्पत्तिर्भवति, एवं पापं विज्ञाय श्रेयोऽर्थिभिरात्महितेच्छुभिः द्रव्यहोलिकां त्यक्त्वा भावहोलिकां एवं आराध्यते, तेनैवात्र जगति दृष्टार्थः प्राप्यते, इति ।

संवद्बाणकृशानुसिद्धिवसुधा, (१८३५) संख्ये नभस्येऽसिते ॥ पक्षे पावनपञ्चमीसुदिवसे पाटोधिसंज्ञे पुरे ।
श्रीमच्छ्रीजिनलाभसूरिगणभृत्तुल्यप्रतापोद्धुरे ॥ कान्ते श्रीजिनचन्द्रसूरिमुनिपे धर्मेशतां बिभ्रति ॥ १ ॥
श्रीमन्तो गुणशालिनः समभवन्, प्रीत्यादिमाः सागरा–स्तच्छिष्याऽमृतधर्मवाचकवराः, सन्ति स्वधर्मादराः ॥
तत्पादाम्बुजरेणुराप्तवचनस्मर्ता विपश्चित्क्षमा–कल्याणः कृतवानिदं सुविशदं व्याख्यानमाख्यानभृद् ॥ २ ॥

इति होलिकाव्याख्यानं समाप्तम् ॥ ६ ॥

सह पौषधप्रतिक्रमणसामायिकादिधर्मकृत्यं करोतिस्म, यथाशक्ति व्रतनियमपालनमपि करोति । अथ तस्या गृहसमीपे मिथ्यात्वि-
लोका वसन्ति, तेषां मिथ्यात्विनां पुत्रीभिः सह सा तिष्ठति, उत्तिष्ठति, भ्रमति, ब्राह्मणाः कथां यत्र वाचयन्ति तत्र गत्वा कदापि कथां
अपि श्रृणोतिस्म । यद्यपि सा जैनं धर्मं पालयति, तथापि संगतिवशाद् मिथ्यात्वस्याप्यादरं कृतवती, यथा—ज्येष्ठ–श्रावणमासयोः
गणगोरपूजनात् सुन्दरवरप्राप्तिः धनधान्यप्राप्तिः एतादृश्यो वार्तास्तस्यै रोचन्ते ।अथैकदा कुमारी मनसि व्यचिन्तयत्–यद् जैनधर्मे
वीतरागो देवोऽस्ति, स च न कमपि सुन्दरमसुन्दरं करोति; सांख्यादिदर्शने तु ब्रह्मा जगतः कर्ताऽस्ति, विष्णुः रक्षणं करोति, शिवः
संहारं करोति, ततो यदि ईश्वर—पार्वत्योः पूजा विधीयते तौ च तुष्टौ स्यातां तदा मनोवाञ्छितसांसारिकसुखस्य लाभो भवेत् । एवं
विचार्य गणगोरप्रभृतिमिथ्यात्विपर्वसु आदरवती अभूत् । अथ तस्या मातापितरौ बहुनिषेधं कृतवन्तौ–यत् त्वं हे पुत्रि ! मिथ्यात्वि-
पर्वण आराधनां मा कुरु, चिन्तामणिसमानं जैनं धर्मं प्रक्षीय काचशकलतुल्यमन्यं धर्मं मा गृहाण, अमृतस्वादं त्यक्त्वा विषस्वादं मा
स्वीकुरु, विषपानेन दुःखिता भविष्यसि; इत्यादि बहु कथितं परन्तु मिथ्यात्विपरिचयवशाद् तया किंचिदपि न मेने, मिथ्यात्विप-
र्वाराधनां कर्तुं लग्ना, यथा यथा मिथ्यात्विजनाः प्रशंसन्ति तथा तथा साऽऽनन्दं दधार । अथ मातापितृभ्यां सा परिणायिता, अल्प-
कालेनैव मृत्वा मनोरथश्रेष्ठिनः पुत्री संजाता, कथावाचकव्यासस्य पुत्री यया सह बाल्यावस्थात एव होलिकादिमिथ्यात्विनां व्रत-
मकरोद्; सा मृत्वा ढुण्ढा संजाता, कथावाचकश्च कामपालः संजातः, पूर्वत्र संबन्धाद् ढुण्ढा कामपालस्य होलिकया सह समागमं कृत-
वती । इत्थं मृषैव संभूतं होलिका पर्व विज्ञाय सुधीभिः भव्यात्मभिः शुभार्थं तत्र कर्तव्यम्, किन्तु तस्मिन् दिने प्रतिक्रमण–व्रत-
जिनपूजादिधर्मकार्यं विधेयम्, होलिकासंबन्धि किमपि कार्यं न विधेयम् । यो हि होलिकाज्वालायां गुलालस्यैकां मुष्टिं प्रक्षिपति

गृहात्तु, ततः कुमारेण सा तत्राऽऽनीता, तां दृष्ट्वाऽसौ मम पुत्रीति श्रेष्ठिनोक्तम्, तदा कामपाल उवाच—हे सरलश्रेष्ठिन्! त्वं निजपुत्रीं वह्निदग्धां किं न जानासि ?, पूर्वं सूर्यदेवगृहे त्वत्पुत्र्यां मम भार्याभ्रमोऽभूद्; अधुना मद्भार्यायां तव निजपुत्रीभ्रमो जातः, द्वयोः रूपस्य परस्परसादृश्याद् अपरं कारणं नास्ति. तत एवं श्रुत्वा हर्षितः श्रेष्ठी तं जजल्प—इतः प्रभृति त्वद्भार्या मम पुत्रीस्थाने भवतु, इयमेव हि मत्पुत्रीति तद्दिनादारभ्य श्रेष्ठी प्रीत्या तस्यै वस्त्रालंकारभोजनादिकं सर्वमपि पूरयामास। अथ सा ढुण्ढा परिव्राजिका मृता पिशाची बभूव, पूर्वभवं स्मृत्वा तया ज्ञातम्-दुष्टा एतन्नगरवासिनो लोकाः, ये मह्यं भिक्षामपि न ददुः, ततः सा कोपचित्ता लोकचूरणाय तन्नगरोपरि महतीं शिलां चक्रे, पुनः प्रबलभाग्ययुक्तां होलिकां प्रतिहन्तुं न समर्था बभूव, ततो भीताः पौरलोकाः बलिं चक्रुः, तदा पिशाची कस्यचिच्छरीरेऽवतीर्य उवाच-भो लोकाः! पूर्वं कुलद्वयवत्सलाहं भण्डान् भरडांश्च त्यक्त्वाऽन्यान् सर्वलोकान् हनिष्यामि, ततो लोका मरणाद् भीताः सन्तोऽन्यं जीवितोपायमलभमानाः स्वयमपि भण्डभावमाश्रित्य स्वजीवितकृते मुक्तसज्जनमर्यादा असत्यवचनभाषिणो दुष्टवादित्रवादिनः, एवं भण्डा जाताः, पुनर्भस्मधूलिकर्दमादिभिर्मलिनदेहा भरडाप्राया बभूवुः। ततः प्रतिवर्षं होलिकादिनाद् द्वितीयदिने धूलिहरिकापर्वं प्रवृत्तं, ततः सा प्रसन्नीभूय स्वस्थानं गता।

## अथ होलिकापूर्वभवः कथ्यते।

पाटलीपुरनगरे ऋषभदत्तनामा श्रेष्ठी निवासमकरोद्, तस्य चन्द्राननानाम्नी पत्नी। अथ तयोर्द्वयोः पुत्रयोरुपरि देवीनाम्नी पुत्री जाता, सा च रूपलावण्यादिगुणैरतीव शोभिताऽऽसीद्। सा च अष्टवर्षीया जाता ततः पितृभ्यां पाठिता, ततः सा कन्या स्वमात्रा

ततः परिव्राजिकया प्रोक्तम्-
जिकया सा होलिका पृष्टा-हे पुत्रि ! कथय ते मनोगत चिन्ताम् ? तदा कथितस्तया तदग्रे स्वाभिप्रायः, ततः परिव्राजिकया प्रोक्तम्-
हे पुत्रि ! रविदिने पूजामिषात् सूर्यदेवगृहे त्वमागच्छेः, तत्राहं तव कुमारसंगं कारयिष्यामि, यतो जन्ययात्राजागरिकोत्सवेषु दुर्लभस्या-
पि जनस्य संगमः स्यात्, यथेप्सितव्यभिचारसिद्धिर्भवेद्, इति लोकोक्तिरस्ति । ततो रविदिने होलिका तत्र गता, कुमारोऽपि तपस्वि-
न्याः संकेतितस्तत्रायातः ततः सा विधिना सूर्यमूर्तिं प्रपूज्य यावत् प्रतिचचाल तावत् कुमारस्तामालिलिंग, तदा तया कुमारपृष्टे हस्त-
प्रहारं दत्त्वा पूत्कारः कृतः, अहं परपुरुषस्पर्शसंजातपातकस्य शुध्यर्थमग्निप्रवेशं करोमि, तदा तां मरणाभिमुखीं गूढदम्भां पुत्रीं वीक्ष्य बला-
ज्जनको गृहमानीतवान्, ततः फाल्गुनपूर्णिमारात्रौ तपस्विनी पुनः तयोः संगमं कारयामास; स्वयं च तत्समीपे गृहे सुप्ता, सिद्धकार्य-
त्वाद् गाढनिद्रां प्राप्ता ।

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णो न भिद्यते । द्विकर्णस्य च मन्त्रस्य ब्रह्माऽप्यन्तं न गच्छति ॥ १ ॥

इति वाक्यं विचार्य होलिका निजगृहे सुप्तां तापसीं गृहं च दग्ध्वा शीघ्रं कुमारसहिता तत्स्थानान्नष्टाऽन्यत्र स्थिता । प्रभाते पुत्रीं
दग्धां ज्ञात्वा श्रेष्ठी बहु विललाप, तदा लोकास्तां सतीं ज्ञात्वा तदीयभस्म प्रणमंतिस्म, तत्प्रभृति सर्वत्र प्रतिवर्षं तद्दिने होलिकापर्व
प्रवृत्तं, तदद्युनाऽपि परमार्थशून्या लोकाः कुर्वन्ति । अथ कतिषु दिनेषु गतेषु स कुमारो होलिकां प्रोचे-अधुना धनं नास्ति तेन धनार्ज-
नाय विदेशं व्रजामि, ततस्तयोक्तम्-स्वामिन् ! मदुक्तमुपायं कुरु यतो धनप्राप्तिः स्याद्, त्वं हि मत्पितृहट्टे याहि, तस्मान्मूल्येन
शाटिकामानय, ततस्तेन तत्र गत्वा तथैव सानीता, भार्यया प्रोक्त न एषा मम योग्या, अन्यामानय, ततः पुनस्तेन तत्र गत्वा सा पश्चाद्
दत्ता अपराऽऽनीता, साप्ययोग्या उक्ता पश्चाद् दत्ता, तदा श्रेष्ठिना उक्तम्—तव पत्नी स्वयमागत्य सम्यक् परीक्ष्य विशिष्टशाटिकां

## अथ होलिकाव्याख्यानम् ॥ ६ ॥

होलिका फाल्गुने मासे, द्विविधा द्रव्य–भावतः । तत्राद्या धर्महीनानां द्वितीया धर्मिणां मता ॥ १ ॥

लोके हि इदं पर्व होलिकेति वदन्ति, होलिका तु द्विविधा द्रव्यतो भावतश्च, तत्र येऽज्ञानिनः सदसद्विवेकविकलाः प्राकृतलोकप्रवाहरक्ताः श्रीजिनधर्मविमुखा गतानुगतिकाः लोकास्ते काष्ठच्छगणादिना वह्निमयीं द्रव्यहोलिकां कुर्वन्ति, धर्मपर्व विराधयन्ति, अपरदिने च धूलिक्रीडनाऽवाच्यजल्पन–मलमूत्रजलाच्छोटन–स्त्र्यादिवस्त्राकर्षण–रासभारोपितनरपीडनादिकं कुर्वन्ति । सर्वमपीदमनर्थदण्डं विज्ञाय धार्मिकैः परिहर्तव्यम् । ये पुनः धर्मिणस्ते तपोरूपजाग्रद्वह्निना कर्मदलच्छगणभस्मीकरणरूपां भावहोलिकां कुर्वन्ति सद्ध्यानरूपिजलखेलनादिकं च कुर्वन्ति । ननु कुत इदं लौकिकं रजः पर्व प्रवृत्तमिति ? प्रश्नमाशंक्य सम्प्रदायगम्यं तत्कथानकमुच्यते–पूर्वदेशे जेतपुरं नाम नगरमस्ति, तत्र च जयवर्मा राजा, मदनसेना च तत्पट्टराज्ञी, अमात्यो मतिचन्द्रनामा । तत्रैव मनोरथनामा श्रेष्ठी, तस्य चत्वारः पुत्राः, तेषामुपरि अतीव रूपवती होलिकानाम्नी पुत्री, सा च पित्रा महोत्सवेन विवाहिता, परं कर्मवशाद् विधवा जाता, सा सदा पितृगृहे तिष्ठति, अन्यदा गवाक्षस्थिता सा वंगदेशस्वामिभुवनपालभूपस्य पुत्रं कामपालनामानं विलोक्य कामाकुला जाता, सोऽपि तां दृष्ट्वाऽत्यर्थं कामव्याप्तः संजातः, तदा श्रेष्ठी तां पुत्रीं गुप्तपीडापीडितां दृष्ट्वा विषादं प्राप्तः, इतश्च तत्र पुरे एका परिव्राजिका वसतिस्म, सा च द्विजकुलोत्पन्ना–चंडरुद्रभाण्डस्य पुत्री, अचलभूतिनाम भरडकस्य पत्नी 'ढुंढा' इति नाम्ना विख्याता, कूटकपटकारिणी लोकानां भूतकर्मादिकं करोतिस्म, तथा सा क्षुधातुरा कृशांगी भिक्षार्थं दिने दिने गृहं गृहं प्रतिभ्रमतिस्म, परं लाभान्तरायवशात् क्वापि भिक्षां न लभते, ततः सा लोकेभ्यः कोपं चकार । अथ मनोरथश्रेष्ठिना सा सत्कृत्य याचिता, हे मातर्मम सुतां पटूवीं कुरु, ततो रहसि परिव्रा–

बभूव । ततः क्रमेण कर्माणि क्षपयन् द्वादशगुणस्थानान्त्यसमये घातिकर्मचतुष्टयं शुक्लध्यानेन क्षपयित्वा त्रयोदशगुणस्थानप्रथमसमये केवलज्ञानं प्राप्य बहून् भव्यान् प्रतिबोधयन् पृथिव्यां विजहार । ततः द्विसप्ततिपूर्वलक्षाणि सर्वायुः प्रपाल्य चतुर्दशे गुणस्थाने पंचह्स्वाक्षरोच्चारणकालमाने योगनिरोधं कृत्वा शेषकर्मचतुष्टयं क्षपयित्वा मुक्तिं प्राप्तः । इह शरीरं त्यक्त्वा पूर्वप्रयोगबन्धनच्छेदादिना सिद्धशिलोपरि योजनान्ते सिद्धक्षेत्रे एकस्मिन् समये गत्वा साद्यनन्तस्थित्या स्थितवान् । इत्थं पिंगलरायतो मेरुत्रयोदश्या महिमा प्रवृत्तः ॥ पूर्वं रत्नमया मेरवो ढौकिताः, पश्चात् कियत्कालं यावत् स्वर्णमयाः, ततः पश्चाद् रूप्यमयाः, अस्मिन् काले घृतमया मेरवः प्रवृत्ताः सन्ति, इत्थं मेरुत्रयोदश्याः महिमानं श्रुत्वा भो भव्याः ! शुद्धभावेन विधिना एतद् व्रतं कर्तव्यम्, येन इह परत्र च सर्वप्रकारसुखसंपत्तिः प्रादुर्भवेदिति ॥

सम्वद्व्योमरसाष्टेन्दु ( १८६० ) मिते फाल्गुनमासके ॥ असितैकादशीतिथ्यां बीकानेराख्यसत्पुरे ॥ १ ॥
व्याख्यानं प्राक्तन वीक्ष्य निबद्धं लोकभाषया ॥ अलेखि संस्कृतीकृत्य क्षमाकल्याणपाठकैः ॥ २ ॥
संविग्नवाचनाचार्यपदस्थानं सुधीमताम् । श्रीयुक्तामृतधर्माणां शिष्यैरामोदतस्त्वदः ॥ ३ ॥ त्रिभिर्विशेषकम्,

॥ इति मेरुत्रयोदशीव्याख्यानं सम्पूर्णम् ॥ ९ ॥

रत्नमयं मेरुपञ्चकं श्रीजिनाग्रे ढौकनीयम्–मध्ये एको महान् मेरुः, चतुर्दिक्षु चत्वारो लघवः, तदग्रे चतुर्दिक्षु चत्वारो नन्द्यावर्ताः कर्तव्याः। दीपधूपादिपूर्वकं बहुविधाः पूजाः कर्तव्याः। एवं मासत्रयोदशकं यावत्, अथवा वर्षत्रयोदशकं यावत् कर्तव्यम्। तथा 'ॐ ह्रीँ श्रीऋषभदेवपारंगताय नमः' एतत् पदं द्विसहस्रवारान् जपनीयम्, एवं प्रतिमासं कुर्वतः सकलरोगक्षयो भवति, इह परत्र च सुखं संपद्यते। यदि त्रयोदश्यां पौषधं कुर्यात् तर्हि प्रागुक्तं कर्तव्यं सर्वं पारणकदिने कृत्वा गुरुं प्रति अतिथिसंविभागं विधाय पारणकं कुर्यात्। इत्थं गुरुवचः श्रुत्वाऽनन्तवीर्यो राजा व्रतं अंगीकृत्य गुरून् नत्वा स्वस्थानं ययौ। अथ पिंगलरायकुमारः प्रथम–माघकृष्णत्रयोदश्यां प्रथमं व्रतं कृतवान् तावता चरणांकुरौ प्रादुर्भूतौ, एवं त्रयोदशमासान् यावत् कुर्वतः सुन्दररूपौ–पादौ प्रकटीभूतौ। राजाऽतीव हर्षं प्राप्तः, धर्मस्य महिमानं विलोक्य उल्लसितः सन् विशेषतो धर्मं कर्तुं प्रवृत्तः। ततः षोडशमासे कुमारेण गुणसुन्दरी परिणीता, अन्यासामपि बहूनां राजकन्यानां पाणिग्रहणं चक्रे। ततोऽनन्तवीर्येण राज्ञा कुमाराय राज्यं दत्त्वा गांगिलमुनिपार्श्वे चारित्रं गृहीत्वा निरतिचारं तत् प्रतिपाल्य श्रीशत्रुंजयेऽनशनं कृत्वा शिवपदं प्राप्तम्। ततः पिंगलरायनृपः मन्नीत्या प्रजां पालयन् पुनः—त्रयोदशवर्षाणि यावद् मेरुत्रयोदशीमाराध्य प्रान्ते उद्यापनं चकार। तत्र त्रयोदशजिनगृहाणि कारयामास, त्रयोदश स्वर्णमयीः प्रतिमाः, त्रयोदश रूप्यमयीः त्रयोदश रत्नमयीश्च निर्मापयामास। त्रयोदशविधै रत्नैर्मेरुपञ्चकं निर्माप्य ढौकयामास। त्रयोदशवारान् श्रीसंघेन सह तीर्थयात्रां चकार। त्रयोदशसाधर्मिकवात्सल्यान् कृतवान्, एवं बहुधा ज्ञानभक्तिमपि चकार। ततः कियन्ति पूर्वाणि व्रतसहितं राज्यं प्रपाल्य स्वकीय-महसेनकुमाराय राज्यं दत्त्वा श्रीसुव्रताचार्यसमीपे बहुभिरन्यपुरुषैः सह दीक्षां जग्राह। द्वादशांगीमधीत्य चतुर्दशपूर्वधरः संजातः, क्रमेण आचार्यपदं च संप्राप्तः, ततः क्षपकश्रेण्यारोहार्थमष्टमगुणस्थाने शुक्लध्यानं ध्यातुमुद्यतो

पुत्रमादाय उपरि गत्वा सूर्यकुंडजलेन पुत्रं स्नपयामास । परं तज्जलं देवताऽधिष्ठितमस्ति स्वयंप्रभस्य च न तत्कर्माद्यापि क्षीणं तेन
तज्जलं पादौ न स्पृशति । तद् दृष्ट्वा सर्वेऽपि संघलोकाः विस्मिता जाताः, तदा सर्वैरपि मुनीश्वरः पृष्टः-स्वामिन् ! किमत्र कारणम् ?
मुनिरुचे--अनेन बहुभवेभ्यः प्राग देवद्रव्यं भक्षितमस्ति, तथा एकस्या मृग्याश्चत्वारोऽपि पादाच्छिन्नाः तत्कर्म बहु क्षीणं किंचिदद्यापि
अवशिष्टं वर्तते, तेन तीर्थजलं न स्पृशति तीव्रकर्मणां भुक्तिं विना क्षयाभावात् । एतद् मुनिवचनं श्रुत्वा माता, पिता, पुत्रश्च त्रयोऽपि
वैराग्य प्राप्ताः, ततः श्रीऋषभदेवचरणान् अभिवन्द्य गृहमागत्य धर्मकरणोद्यता बभूवुः । इत्थं षोडशसहस्रवर्षाणि कुष्ठरोगादिपीडा-
मनुभूय तत्कर्मालोच्य कालं कृत्वा प्रथमदेवलोके देवत्वेनोत्पन्नः, ततश्च्युत्वा हे राजन् ! अनन्तवीर्योऽयं तव पुत्रः पिंगलरायनामा
संजातः । इत्थं गांगिलमुनिः कुमारस्य प्राग्भवमुक्त्वा पुनरुवाच—

मद्यपानाद् यथा जीवो, न जानाति हिताऽहिते ॥ धर्माधर्मौ न जानाति, तथा मिथ्यात्वमोहितः ॥१॥
मिथ्यात्वेनालीढचित्ता नितान्तं, तत्त्वातत्त्वं जानते नैव जीवाः ।
किं जात्यन्धाः कुत्र चिद्वस्तुजाते, रम्यारम्यव्यक्तिमासादयेयुः ? ॥२॥
अभव्याश्रितमिथ्यात्वेऽनाद्यनन्ता स्थितिर्भवेत् ॥ सा भव्याश्रितमिथ्यात्वेऽनादिसान्ता पुनर्मता ॥३॥

ईदृक्-मिथ्यात्वोदयाद् जीवाः कर्माणि बध्नन्ति, तत्पुत्रेणापीत्थमेव दुष्कर्मोपार्जितं तेन पङ्गुर्जातः । एतद् मुनिवचः श्रुत्वा राजा
उवाच-हे स्वामिन् ! एतत् कर्म केन पुण्येन नश्यति ? मुनिना उक्तम्-हे राजन् ! तृतीयारकप्रान्ते सार्धाष्टमासयुक्तवर्षत्रये शेषे सति
माघकृष्णत्रयोदश्यां श्रीऋषभदेवस्वामिनो निर्वाणकल्याणकमभूत्, तेन तद्दिनं श्रेष्ठमास्त । तद्दिने चतुर्विधाहारत्यागेन उपवासं कृत्वा

एकदा प्रभोश्छत्राद्याभरणानि गृहीत्वा क्वचिद् अनाचारं सेवितवान्, तदा श्रेष्ठिना तत्स्वरूपं ज्ञात्वा गृहाद् बहिर्निष्कासितः। ततो वनमध्ये भ्रमन् आखेटकर्मणैव बहून् मृग-शशकादीन् जन्तून् विनाशयन्नुदरपूर्तिं चकार। अथ तत्रैव वने तापसाश्रमो विद्यते तत्र बहवस्तापसास्तपस्यां कुर्वन्ति, मृगा अपि तत्राऽऽगत्य उपविशन्ति। एकदा एका सगर्भा मृगी तत्राऽऽगच्छन्ती तेन सामन्तसिंहेन तीक्ष्णशस्त्रेण पादेषु प्रहृता तस्याश्चत्वारोऽपि पादाः छिन्नाः, सा अधः पतिता तापसैर्दृष्टा, ततस्तैः सद्यस्तत्राऽऽगत्य धर्मः श्रावितः सा मृत्वा सद्गतिं प्राप्ता। ततस्तापसाः सामन्तसिंहं प्रत्येवमुक्तवन्तः—रे दुष्ट ! यथा त्वयाऽस्माकं मृग्याः पादाश्छिन्नास्तथा त्वमपि परत्र पंगुत्वं प्राप्नुयाः। इत्थं शापं दत्त्वा ते स्वाश्रमं जग्मुः। सामन्तसिंहोऽपि तापसान् क्रुद्धान् दृष्ट्वा भीतः सन् नष्ट्वा वनं गतः, दुष्कर्मयोगात् संमुखं सिंहो मिलितः, सद्यस्तेन सिंहेन हतः, स मृत्वा नरकं गतः। ततश्च्युत्वाऽसंख्येयान् तिर्यङ्नरकादिभवान् कृत्वाऽकामनिर्जरया बहूनि कर्माणि क्षपयित्वा महाविदेहे कुसुमपुरनगरे विशालकीर्त्तिनृपस्य गृहे शिवानामदास्याः पुत्रत्वेनोत्पन्नः। तया वज्र इति स्थापितं नाम, क्रमेण तरुणो जातः। नृपसेवां करोतिस्म, परं प्राक्कृतकर्मोदयात् तच्छरीरे गलत्कुष्ठरोग उत्पन्नः। हस्तौ, पादौ च गलित्वा पतितौ पङ्गुर्जातः। अथ मरणसमये शिवादास्या नमस्कारमन्त्रः श्रावितः, ततः समाधिना मृत्वा व्यन्तरो जातः, ततश्च्युत्वा जम्बूद्वीपे भरतक्षेत्रे सौहार्दपुरनगरे सूरदासश्रेष्ठिगृहे वसन्ततिलकाभार्यायाः स्वयंप्रभो नाम पुत्रो जातः,। स च गुणवान्, विवेकवान्, परं चरणे व्रणरोगयुक्त एवोत्पन्नस्तेन चलितुं न शशाक। क्रमेण अष्टवर्षवया अभूत्, एकपुत्रत्वात् पितरौ तद्दुःखदुःखितावभूताम्। तस्मिन् समये श्रीशत्रुंजयतीर्थयात्रार्थं संघोऽगमद्, तदा तत् श्रुत्वा श्रेष्ठी अपि सरोगपुत्रसहितः संघमध्ये चचाल। क्रमेण सिद्धक्षेत्रे संघः समागतः, ततो विधिना गिरिमारुह्य श्रीऋषभदेवभक्तिं चकार, तदा सूरदासश्रेष्ठी अपि सभार्यः

तथा धर्मस्य मूलं दया, पापस्य मूलं हिंसा, एको हिंसां करोति, अन्यः कारयति, अपरोऽनुमन्यते एते त्रयोऽपि सदृशपापभाजः, पुनर्यो हिंसां कुर्वन् मनसि त्रासं न प्राप्नोति तस्य हृदये दया नास्ति, यो जीवो निर्दयः सन् बहून् एकेन्द्रियान् विनाशयति स परभवे वातपित्तादिरोगभाग् भवति। यः पुनर्द्वीन्द्रियान् विनाशयति स परत्र मूकः, मुखरोगी दुर्गन्धनिःश्वासश्च भवति, यश्च त्रीन्द्रियाणां विनाशकः स नासिकारोगी भवेत्। चतुरिन्द्रियविनाशकस्तु अक्ष्णा काणः अन्धो वा, क्लिन्ननेत्रो वा भवेत्। यस्तु पचेन्द्रियविनाशकः स परत्र बधिरो भवति, यः पुनः पंचप्रकारानपि जीवान् विनाशयति स भवान्तरे पंचापीन्द्रियाणि पटूनि न प्राप्नोति, तस्माद् भो भव्याः! हिंसाऽनृतादिकं सर्वथा त्याज्यमित्यादिधर्मोपदेशं श्रुत्वा राजा पप्रच्छ—स्वामिन्! मत्पुत्रः केन कर्मणा पंगुर्जातः? तदा गांगिलमुनिरुवाच—अस्य प्राग्भवं शृणु, अस्मिन् जम्बूद्वीपे ऐरवतक्षेत्रे अचलपुरनाम्नि नगरे महेन्द्रध्वजो नाम राजा, उमया पट्टराज्ञी तयोः सामन्तसिंहो नाम पुत्रोऽभूत्। स च लेखनशालायां पठनार्थं गच्छन् द्यूतकृत्संगाद् द्यूतं शिक्षितवान्, क्रमेण सप्तव्यसनसेवनतत्परोऽभूत्। राज्ञा बहुधा निषिद्धोऽपि यदा व्यसनसम्पर्कं न तत्याज, तदा अयोग्यं ज्ञात्वा स्वदेशाद् बहिर्निष्कासितवान्। ततोऽपि व्यसनमत्यजन् देशाटनं कुर्वन् सुरपुरनगरे समागतः, तत्र चम्पक श्रेष्ठिना सुन्दराकारं विलोक्य उत्तमपुरुषोऽयमिति ज्ञात्वा सुकुमारोयम्, अस्मात् कार्यान्तरं न भविष्यतीति च विचिन्त्य स्वगृहपार्श्ववर्तिजिनगृहरक्षार्थं स सामन्तसिंहः स्वगृहे स्थापितः। अथ स दुष्टात्मा जिनाग्रे ढौकितानि तन्दुलपूगीफलादीनि प्रच्छन्नं गृहीत्वा द्यूतक्रीडार्थं ययौ। कियद्भिर्दिनैः श्रेष्ठिना तद् ज्ञात्वा तस्मै उक्तम्—हे भद्र! यः पुमान् देवद्रव्यादिकं भुंक्ते सोऽनन्तकालं संसारपरिभ्रमणं करोति, तस्मात् त्वया अतः परमेतत् कार्यं न कर्तव्यम्। इत्थं बहुधोपदेशो दत्तस्तथापि स दुष्टो मिथ्यात्वाज्ञानतीव्रकर्मोदयाद् न ततोऽपि विरमतिस्म।

कुमारः सत्वरं प्रेषणीयः, इति श्रुत्वा राजा उद्विग्नचित्तः संजातः, ततः सद्य उत्थाय स्वमन्दिरे एकान्तदेशे गत्वा राज्याः, प्रधानस्य चाग्रे इत्थमुवाच—अथ किं कर्तव्यम् ? पुत्रस्तु पंगुर्वर्तते एतस्य कथं भविष्यति ? पंगवे कः स्वकन्यां प्रदास्यति ? तदा प्रधानमंत्री किंचिद् विचार्य तान् सेवकान् आहूय इत्युवाच—साम्प्रतमिह कुमारो नास्ति तन्मातुलगृहे वर्तते । मातुलगृहं तु इतो द्विशतयोजनेषु मुहनीपत्तने ममस्ति तेन सांप्रतं लग्नं न भवेत्, पश्चाद् ज्ञास्यते । एतत् श्रुत्वा सेवकाः प्रोचुः—हे स्वामिन् ! पन्था दूरे वर्तते, अतो लग्नं निर्धार्य देयं, स्वयमपि लग्नोपरि शीघ्रं समागन्तव्यम् । एतत् सेवकवचनं श्रुत्वा मासषोडशकानन्तरं लग्नं भविष्यति, इति निर्धारितम् । ततो लग्नं गृहीत्वा सेवका मलयदेशं गताः । अथ राजा अनन्तवीर्यश्चिन्तातुरः सन्नुवाच—अथाऽत्र क उपायः कर्तव्यः ? षोडशमासास्तु सत्वरमेव यास्यन्ति । तदा नृप-राज्ञी-प्रधानैर्बह्वी चिन्ता कृता परं कोऽप्युपायो न लब्धः । अस्मिन्नवसरे नगर्युद्याने साधुपंचशतीपरिवृतश्चतुर्ज्ञानधरो गांगिलनामा साधुः समवसृतः, वनपालकेन प्रतिपत्तिं कृत्वा नगरमध्ये गत्वाऽनन्तवीर्यराजाय वर्धापनिका दत्ता । राजा तन्मुखात् साध्वागमनं श्रुत्वा तं संतोष्य हस्त्यश्वादिबहुऋद्धिसमेतो वन्दनार्थं निस्सृतः । क्रमेण तत्र गत्वा विधिना मुनीन् अभिवन्द्याग्रे उपविष्टः, पर्षद् मीलिता, मुनिरुपदेशं ददौ । स च इत्थम्—

जीवदयाइ रमिज्जइ, इन्दियवग्गो दमिज्जइ सयावि ॥ सच्चं चेव वदिज्जइ, धम्मस्स रहस्सं इणमेव ॥१॥
जयणा उ धम्मजणणी, जयणा धम्मस्स पालिणी चेव ॥ तह वुड्ढिकरी जयणा, एगंतसुहावहा जयणा ॥२॥
आरंभे नत्थि दया, महिलासंगेण नासए बंभं ॥ संकाए सम्मत्तं, पवज्जा अत्थगहणेणं ॥३॥
जे बम्भचेरभट्ठा, पाए पाडंति बम्भयारीणं ॥ ते हुंति टुंटमुंठा, बोहिवि पुण दुल्लहा तेसिं ॥४॥

कृतवान्। ततस्तमन्तःपुरे एव ररक्षतुः बहिर्न प्रकटी चक्रतुः। यदा पुनः लोकाः पप्रच्छुस्तदा एवमूचतुः–कुमारस्य रूपमत्यद्भुतं वर्तते, मा कदाचिद् दृष्टिदोषो भवेद् इति न प्रादुष्क्रियते। तदा सर्वस्मिन्नपि नगरे एषा प्रवृत्तिः प्रादुर्भूता। यदुत पिंगलरायकुमारतुल्यः पृथिव्यामपरः कोऽपि रूपसौन्दर्यवान् नास्तीति। अथैवं क्रमेण कुमारो वृद्धिं प्राप्तः। अस्मिन्नवसरे अयोध्यानगरीतः सपादशत (१२५) योजनेषु मलयनामा देशोऽस्ति, तत्र ब्रह्मपुरं नाम नगरम्, तत्र च इक्ष्वाकुवंश्यः काश्यपगोत्रीयः शतरथो नाम राजा तस्य च इन्दुमती नाम्नी पट्टराज्ञी। तत्कुक्षिसंभवा गुणसुन्दरी नाम पुत्री, सा चातिशयरूपलावण्यसौभाग्यादिगुणयुक्ताऽभूत्। तस्य राज्ञः पुत्रो नास्ति सैवैका पुत्री आसीद्, अतस्तेन मातापित्रोरतिवल्लभा आसीद्। अथ पुत्रीं वरयोग्यां ज्ञात्वा तद्योग्यवरालाभाच्च राजा तद्विवाहचिन्तातुरो बभूव। तस्मिन्नवसरे तन्नगरवासिव्यापारिणः शकटेषु विविधानि क्रयाणकानि भृत्वा देशान्तरं चलितास्तदा राज्ञा तेभ्य उक्तम्–देशान्तरे भवद्भिर्भवद्भिर्गुणसुन्दरीयोग्यवरप्राप्तौ सत्यां विवाहसम्बन्धः कार्यः, इति नृपवचनं श्रुत्वा तथेति प्रतिपद्य ते चलिताः। क्रमेण बहूनि नगराणि विलोकयन्तोऽयोध्यां नगरीं प्राप्ताः, तत्र च क्रयाणकानि सर्वाण्यपि विक्रीतानि भूयान् लाभः संजातः, अपराणि तत्रत्यानि क्रयाणकानि संगृहीतानि। यदा ते चलनार्थमुद्यता जातास्तदा स्वनृपवचनं संस्मृत्य तन्नगरवासिलोकानां मुखात् कुमारस्याद्भुतं रूपं श्रुत्वा नृपसमीपे गत्वा कुमारेण सह गुणसुन्दर्या विवाहसम्बन्धं चक्रुः, राज्ञाऽपि शुल्क (कर) मोचनादिना तेषां बह्वादरश्चक्रे, ततस्ते हर्षिताः सन्तः स्वदेशं प्रति चेलुः, क्रमेण स्वनगरं गत्वा राज्ञोऽग्रे सर्वं वृत्तान्तं कथयामासुः, राजापि कुमारस्याद्भुतरूपसौभाग्यादिगुणान् श्रुत्वा संतोषं प्राप्तः। अथ यदा कन्या वरयोग्या जाता तदा कुमारस्य आकारणार्थं राज्ञा स्वसेवकाः प्रेषिताः, तेऽपि अयोध्यां गत्वा अनन्तवीर्यं नृपं प्रोचुः—हे महाराज! विवाहार्थं

## अथ मेरुत्रयोदशी व्याख्यानम् ॥ ५ ॥

मारुदेवं जिनं नत्वा, स्मृत्वा सद्गुरुभारतीम् । मेरुत्रयोदशीपर्व-व्याख्यानं लिख्यते मया ॥ १ ॥

इहाष्टमहाप्रातिहार्यविराजितेन जगद्गुरुणा श्रीवर्धमानस्वामिना श्रीगौतमादीनामग्रे यथा माघकृष्णत्रयोदश्यां माहात्म्यमुक्तं, तथा-परंपरयाऽऽयातमस्माभिरुच्यते, श्रीऋषभदेवाऽजितनाथयोरन्तरे पञ्चाशल्लक्षकोटिसागरोपमानि व्यतिक्रान्तानि, तन्मध्ये अयोध्यायां नगर्यां इक्ष्वाकुवंशयः काश्यपगोत्रीयोऽनन्तवीर्यो नाम राजा बभूव, स च बहुलहस्त्यश्वरथपदात्यादिसेनानायकः । तस्य च-राज्ञः पञ्चशतानि राज्ञ्य आसन् , तन्मध्ये प्रियमती नाम पट्टराज्ञी बभूव, धनंजयो नाम चतुर्बुद्धिनिधिर्महामात्यश्च आसीत् । सुखेन राज्यं पालयतो राज्ञ एकदा मनसि महाचिन्ता समुत्पन्ना-यदुत्तमो ममैकोऽपि पुत्रो नास्ति, क एतद्राज्यस्य भोक्ता भविष्यति ? पुत्रं विना गृहं शून्यप्रायमिति । ततो राज्ञा अनेके उपायाः कृताः परं पुत्रोत्पत्तिर्न जाता । तस्मिन्नवसरे एकदा एकः कोणकनामा साधुराहारार्थं राज्ञो गृहे समागतः, तदा नृपराज्ञ्यौ उत्थाय विधिना वन्दित्वा शुद्धाहारेण प्रतिलाभ्य करद्वयं संयोज्य मुनिं पप्रच्छतुः-स्वामिन् ! अस्माकं पुत्रो नास्ति स कदापि भविष्यति न वा ? मुनिरुवाच-ज्योतिष्कनिमित्तादिकं मुनिर्न भाषते, तदा नृपराज्ञीभ्यां पुनः पुनः प्रार्थनायां कृतायां मनसि दयां धृत्वा मुनिना उक्तम्-हे राजन् ! तव पुत्रस्तु भावी परं पङ्गुर्भविष्यति, एतदुक्त्वा मुनिर्गतः, तदा भूपराज्ञीभ्यां चिन्तितम्-अस्माकं पङ्गुरपि पुत्रस्तु भावी । क्रमेण राज्ञी सगर्भा जाता, पूर्णे काले पंगुं पुत्रं प्रासूत । राजा पुत्रजन्म श्रुत्वा हर्षितः सन् महोत्सवं चकार, द्वादशे दिवसे सर्वमपि कुटुम्बं भोजयित्वा कुमारस्य पिंगलराय इति नाम

बिम्बानि कारितानि पश्चात् कतिपयदिने वैराग्यवासितः श्रेष्ठी गृहभारं सुन्दरनाम्नि ज्येष्ठे पुत्रे नियोज्य सर्वानाहूय कथयति-
स्म-हे पुत्राः ! यूयं दशमीदिने सप्तदशप्रकारेण वामेयमर्चित्वा व्याख्यानं श्रुत्वा गृहे समागत्य साधून् प्रतिलाभ्य एकासनेन भोजनं
कृत्वा चतुर्विधाहारनियमो ग्राह्यः, पारणकदिने स्वामिवात्सल्यं कर्तव्यम्, एवं विधिना वयं सुखिनो जाताः, भवद्भिरपि एवं कर्त-
व्यम्, येन सुखिनो भविष्यन्ति । एवं पुत्राणां शिक्षां दत्वा गुरुपार्श्वे गत्वा एवं वदति-स्वामिन् ! ममोपरि कृपां विधाय चारित्रं
देहि येन स्वर्गाऽपवर्गौ प्राप्नोमि, तदा गुरुणा कथितं-यथा रुचिस्तथा कुरु । एवं श्रुत्वा गुरुणां पार्श्वे चारित्रं गृहीतम् । विविधानि
षष्ठाष्टमादीनि तपांसि कुर्वाणो द्वादशवर्षप्रान्ते पञ्चदशदिनानि अनशनं विधाय अष्टादशदोषरहितः समाधिना मृत्वा दशमे देवलोके
विंशतिसागरोपमायुर्देवत्वेनोत्पन्नः, अनुक्रमेण देवसुखं भुक्त्वा प्राणतकल्पात् च्युत्वा इहैव जम्बूद्वीपे महाविदेहे पुष्कलावतीविजये
मंगलावत्यां नगर्यां सिंहसेनराजस्य गुणसुन्दरीभार्यायाः कुक्षिसरोवरे मरालवत् पुत्रो जयसेननाम्ना प्रकटिष्यति । तत्र संसारसुखं
भुक्त्वा पश्चात् चारित्रं ग्रहीष्यति, एकादश अंगानि द्वादशोपांगानि पठिष्यति । एकाकी विहारं कुर्वन्नेकदा कायोत्सर्गे स्थास्यति,
तत्रोपवनाधिष्ठायको देवो मिथ्यात्ववासितः तस्य श्रमणस्यैकविंशत्युपसर्गान् नकुल-वृश्चिक-पन्नग-गज-सिंह-व्याघ्र-पिशाच-राक्षस
खेचर-वेताल-प्रमुखान् करिष्यति । मुनिस्तु शमदमगुणेन, शुभध्यानेन चतस्रघातिकर्मणां क्षयं कृत्वा केवलं प्राप्स्यति । शीलभ-
त्यपि चारित्रं गृहीत्वा प्रतिपाल्य देवलोकं गता महाविदेहे सेत्स्यति, एवं श्रीवर्धमानस्वामिना गौतमाग्रे निरूपितम्, तद् हे भव्याः !
इदं व्रतमवश्यं कर्तव्यं येन सुखं स्याद् । अस्य चारित्रस्य श्रवणमात्रेण इह भवे धनधान्यादिकं परभवे स्वर्गापवर्गसुखं जनः प्राप्नोति ॥

इति श्रीपूर्वाचार्यहेमचन्द्रसूरिकृतसपादलक्षग्रन्थमध्याद्दिमं पौष-दशम्या-व्याख्यानं समाप्तम् ॥ ४ ॥

श्रीणिदिनेषु एकभक्तकरणम्, भूमिशयनम्, ब्रह्मव्रतपालनम्, द्वयोः टंकयोरावश्यकम्, देववन्दनम्, जिनालये स्नात्रादिमहोत्सवविधानम्,

'ॐ ह्रीँ श्रीपार्श्वनाथाय अर्हते नमः' इति द्विसहस्रवारं गुणनीयं। पारणान्ते च स्वामिवात्सल्यं, एवं दिग्वर्षं (१०) यावद् विधिना कर्तव्यम्। एवमाराधनेनेहलोके धनधान्यसौभाग्यादिकम्, परलोके च स्वर्गसुखं क्रमेण च मोक्षसुखं भविष्यति। एवं श्रुत्वा हर्षोत्कर्षप्रफुल्ललोचनः श्रेष्ठी जैनं धर्मं गृहीत्वा गुरुं वन्दित्वा स्वगृहं गतः, आचार्यश्चान्यत्र विहृतवान्। श्रेष्ठिना दशमी आराधितुमारब्धा, दशमासेषु गतेषु कालकूटद्वीपाद् पोताः समागताः तदनुचरमुखात् श्रुत्वा श्रेष्ठी न श्रद्दधौ, तदा तत्प्रियया शीलवत्योक्तम्—स्वामिन्! तत् सत्यमेव जानातु, माऽसत्यं मन्यताम्। यतोऽद्य निजगृहे निधानं प्रकटं भविष्यति तदा तु सत्यमित्युक्त्वा निधानस्थाने निधिदर्शनार्थं गतवन्तौ, तदा ताभ्यां निधानानि विलोकितानि। श्रेष्ठी स्वप्रियामुवाच—हे प्रिये! जैनशासन-प्रभावात् प्रवहणवर्धापिका समागता, एकादशस्वर्णकोटिमानो निधिरपि प्रादुर्भूतः। वामेयजिनप्रसादात्, श्रीगुरुणामुपदेशादहं श्रीमान् जातः। अथ जैनधर्मवासनया सुखेन कालो गच्छति, श्रेष्ठिपदमपि पुनः प्राप्तम्, श्रेष्ठिनो दशपुत्राः संजाताः राज्ञा संमान्य निजसमीपे स्थापितः। पुनरेकदा श्रीदेवेन्द्रसूरिर्विहरन् तत्रैवोपवने समवसृतः, तत् श्रुत्वा श्रेष्ठी वन्दनार्थं गतः वन्दित्वा यथास्थानं स्थितः, गुरुणा देशना दत्ता, देशनान्ते श्रेष्ठी पप्रच्छ—हे स्वामिन्! दशम्या उद्यापनं किं कर्तव्यम्? गुरुणा प्रोक्तम्—हे श्रेष्ठिन्! प्रष्टकानि दशपुस्तक-दशलेखनानि, दशपुस्तकबन्धनानि, दशस्थापनाचार्यासनानि (ठवणी), दश जपमालाः, दश चन्द्रोदयाः दशजिनालयानि दश जिनबिम्बानि, दीवि, आरति, एवं सर्वं दश-दशसंख्याकं कर्तव्यम्। एवं श्रुत्वा श्रेष्ठिनोद्यापनिकां कृत्वा मणिमयानि जिन–

चेतना लक्षणश्चात्मा, सामान्येन बुधैः स्मृतः ॥ संसारात्मा तथा जीवः, परमात्मा द्विधा मतः ॥ २ ॥
संसारात्मा सदा दुःखी, जन्म-मरण-शोकभाक् ॥ चतुरशीतिलक्षासु, योनिषु भ्राम्यते सदा ॥ ३ ॥
न सा जातिर्न सा योनिर्न तत् क्षेत्रं न तत् कुलम् ॥ यत्र कर्मवशादात्मा नोत्पन्नोऽयमनेकशः ॥ ४ ॥
एगया देवलोएसु, नरएसु वि एगया ॥ एगया असुरं कायं, जहा कम्मेहिं गच्छइ ॥ ५ ॥
एगया खत्तिओ होइ, तओ चण्डाल-वुक्सो ॥ तओ कीड-पयंगो य, तओ कुन्थु-पीपिलिया ॥ ६ ॥
सुभगो दुर्भगः श्रीमान, रूपवान् रूपवर्जितः ॥ स एव सेवकः स्वामी, नरो नारी नपुंसकः ॥ ७ ॥
संसारी कर्मसम्बन्धाद्, नटवत् परिभ्राम्यति । अनन्तकालपर्यन्तं, जीवः संसारवर्त्मनि ॥ ८ ॥
भव्यजीवे दयादानं, धर्मकल्पतरूपमम् । दानशीलतपोभावं, शाखा मुक्तिसुखं फलम् ॥ ९ ॥
धर्मादेव कुले जन्म, धर्माद्धि विपुलं यशः ॥ धर्माद् धनं सुखं रूपं, धर्मः स्वर्गाऽपवर्गदः ॥ १० ॥

दोहा-धर्म करत संसारसुख, धर्म करत निर्वाण । धर्म पंथ साधन विना, नर तिर्यंच समान ॥ १ ॥
सुपुरुष तीन पदार्थ साधे, धर्म वीशेष जानी आराधे । धर्म प्रधान कहे सब कोई, अर्थ काम धर्म हित होई ॥ २ ॥

इत्यादिधर्मकथां श्रुत्वा श्रेष्ठी जीवाऽजीवादि नवपदार्थयुक्तं सम्यक्त्वरत्नं प्राप्तः, पुनः पप्रच्छ-हे भगवन् ! एवं किमपि तपस्याफलमुपदिश्यतां येन मम गृहे निधानं प्रकटयाति । तदा मुनिना प्रोक्तम्-भोः श्रेष्ठिन् ! पौषकृष्णदशम्यां व्रतं गृहाण, तद्दिने श्रीपार्श्वनाथस्य जन्मकल्याणकमासीत्, नवमीदिने, दशमीदिने, एकादशीदिने एवं

धनमर्जय काकुत्स्थ !, धनमूलमिदं जगत् । अन्तरं नैव पश्यामि, निर्धनस्य शवस्य च ॥ १ ॥

दुहा—बाप कहे मेरे पूत सपूता, बेन कहे मेरा भइया ॥ घर जोरू भी लेत बलैयां, सोई बडो जांकी गांठ रुपैया ॥ १ ॥

अथ श्रेष्ठी निर्धनत्वेन दुःखेन कालं गमयतिस्म । कतिपयदिने तस्य नगरे श्रीदेवेन्द्रसूरिः समवसृतः, तद्वर्धापनिका वनपालेन राज्ञे निवेदिता । राज्ञा वनपालो बहुद्रव्यदानेन तोषितो विसृष्टः, पश्चाद् राजा, श्रेष्ठिवर्गः, सूरेन्द्रश्रेष्ठी, सर्वनगरलोकश्च वन्दनार्थं निर्ययौ । मुनिसमीपे आगत्य मुनिं वन्दित्वा सर्वे यथास्थानं निषण्णाः, मुनिभिर्देशना प्रारब्धा—भो भव्याः ! संसारे सारं धर्मपदार्थः श्रेयान् । यतः—

धर्मतः सकलमंगलावलि-र्धर्मतः सकलसौख्यसंपदः ॥ धर्मतः स्फुरति निर्मलं यशो, धर्म एव तदहो ! विधीयताम् ॥१॥

विवेकः परमो धर्मो, विवेकः परमं तपः ॥ विवेकः परमं ज्ञानं, विवेको मुक्तिसाधनम् ॥ २ ॥

भक्ष्याऽभक्ष्यविचारः स्याद्, गम्यागम्यविभेदकृत् ॥ मार्गाऽमार्गपरिज्ञानं, गुणाऽगुणविचारणा ॥ ३ ॥

निद्राऽऽहारो रतिर्भीतिः, पशूनां च नृणां समम् । विवेकोऽन्तरमत्रास्ति, तं विना पशवः स्मृताः ॥ ४ ॥

एक उत्पद्यते जन्तुर्यात्येकश्च भवान्तरम् । एको दुःखी सुखी चैकस्तथैकः सिद्धिसौख्यभाक् ॥ ५ ॥

इत्यादिदेशनां श्रुत्वा पर्षद्याः स्वं स्वं स्थानं जग्मुः, तदा सूरश्रेष्ठी पप्रच्छ—हे भगवन् ! जीवस्य किं लक्षणम् ?

तदा मुनिनोक्तम्-हे श्रेष्ठिन् ! ज्ञान-दर्शन—चारित्रयुक्त-तपो—वीर्योपयोगवान् स जीवः यतः—

नाणं च दंसणं चेव, चरित्तं च तवो तहा ॥ वीरियं उवयोगो य, एयं जीवस्स लक्खणम् ॥ १ ॥

परलोके देवादिऋद्धिमनुभूय परम्परया निर्वाणं प्राप्नोति, एवं भगवता उक्ते श्रीगौतमस्वामी प्राह–हे भगवन् ! पुरा केनेयं समाराधिता ? तत् कथ्यताम्। भगवानुवाच–हे गौतम ! श्रीवामेयं मां चान्तरा सूरदत्तश्रेष्ठिना सम्यगाराधिता, तथाहि—जम्बूद्वीपे भरतक्षेत्रे सुरेन्द्रपुरनाम नगरमस्ति, तत्र नरसिंहो नाम राजा राज्यं करोतिस्म, तस्य चतुरा गुणवती शीलालंकारयुता गुणसुन्दर्यभिधाना पट्टराज्ञी विराजतेस्म। तस्य नगरे सूरदत्तश्रेष्ठी परिवसतिस्म। तस्य शीलालंकारधारिणी पतिव्रता शीलवतीनाम्नी पत्नी आसीद्। यद्यपि धनदवद् महाधनाढ्यो यशस्वी च स श्रेष्ठी, परं मिथ्यात्ववासितः सांख्यमतावलम्बी त्रिदण्डिभक्तः शैवधर्माराधनतत्परः जैनधर्मं न जानाति, यतः—

न देवं नाऽदेवं न शुभगुरुमेवं न कुगुरुं ॥ न धर्मं नाऽधर्मं न गुणपरिणद्धं न विगुणम् ॥
न कृत्यं नाकृत्यं न हितमहितं नापि निपुणं ॥ विलोकन्ते लोका जिनवचनचक्षुर्विरहिताः ॥ १ ॥

स कदापि जिनवचनं न शृणोति मिथ्यात्वेन ग्रसितो राहुणा विधुवत् जीवशरीरमेकं मन्यते। परं राजमान्यो नगरे बहुमान्यः श्रेष्ठिपदे आसीद्, एवं काले याते एकदा सार्धं द्वयशतप्रमितानां प्रवहणानां चतुर्विधं क्रयाणकं भृत्वा भृत्यान् रत्नद्वीपे प्राहिणोद्। तत्र गत्वा क्रयविक्रयं कृत्वा पुनः नवीनं क्रयाणकं भृत्वा मध्यसमुद्रे आगतास्तावद् पूर्वकृतकर्मोदयेन उल्कापातप्रचण्डपवनवेगेन ते प्रवहणाः कालकूटद्वीपे गताः गृहे नागताः। पुनश्च श्रेष्ठिगृहे एकादशस्वर्णकोटिद्रव्यं भूमिगृहे स्थापितमासीद्, तत् पन्नगवृश्चिकाऽङ्गारकरूपेण जातम् यानि च ग्रामान्तरात् पंचशतानि आगच्छन्ति शकटानि तेषामुपरि भिल्लधाटिः पतिता तान्यपि गतानि। ततश्च श्रेष्ठी निर्द्रव्यो जातः श्रेष्ठिपदं च गतं महादरिद्रश्च संजातः, ततो लोके सन्मानमपि गतम्। यतः—

॥ इति श्रीमौनैकादश्या माहात्म्यं [ व्याख्यानं ] सम्पूर्णम् ॥ ३ ॥

अथ श्रीपौषदशमी व्याख्यानं प्रारभ्यते ॥ ४ ॥

प्रणम्य पार्श्वनाथांघ्रिपंकजं सर्वसौख्यदम् । समस्तमंगलश्रेणिलतापल्लवताऽम्बुदम् ॥ १ ॥

भव्यजीवप्रबोधार्थं, जन्तूनां च सुखाप्तये । पौषकृष्णदशम्याश्च, माहात्म्यं कथ्यतेऽधुना ॥ २ ॥

इह जम्बूद्वीपे भरतक्षेत्रे मगधजनपदे चम्पानाम्नी सुमनोहरा नगरी चाऽस्ति, तस्याः समीपे पूर्णभद्राख्ययक्षाश्रिते उपवने श्रीचरमतीर्थाधिपतिमहावीरस्वामी एकदा समवसृतः । तदुपदेशश्रवणार्थं वन्दनार्थं च श्रीमगधाधिपतिः समागतः । स च भगवन्तं त्रिःप्रदक्षिणीकृत्य यथास्थाने समुपविष्टः । तदा स्वामी संसारसागरनिमज्जतामुद्धारकारिणीं देशनां प्रारेभे—

जीवदया रमिज्जइ, इन्दियवग्गो दमिज्जइ सयावि । सच्चं चेव वदिज्जइ, धम्मस्स रहस्समिणमेव ॥ १ ॥

इत्यादिदेशनां श्रुत्वा केचिद् भद्रकतां प्राप्ताः केचिद् श्राद्धधर्मं केचिच्च साधुधर्ममंगीकृतवन्तः, तदानीं श्रीगौतमस्वामी श्रीवीरं वन्दित्वा पप्रच्छ—हे स्वामिन् ! पौषदशमीमाहात्म्यं कथ्यताम्, ? एवं श्रुत्वा, वर्धमानस्वामी कथयति—हे इन्द्रभूते ! पौषदशम्यां श्रीवामेयजिनजन्मकल्याणकं वर्तते, तद्दिने द्विसन्ध्यमावश्यकं कर्तव्यम् । देववन्दनां भूशयनं ब्रह्मचर्यपालन जिनालयेऽष्टविध-सप्तदशविधस्नात्रमहोत्सवादिकं विविधाऽऽडम्बरेण जिनापूजां च विधाय गुरुसमीपे गत्वा उपदेशः श्रोतव्यः । पश्चाद् गृहं गत्वा एकासनेन भोजनं कृत्वा चतुर्विधाऽऽहारनियमो ग्राह्यः, नवम्यामेकादश्यां चापि एकवारमेव भोक्तव्यं, एतद्विधिना दश वर्षाणि यावत् क्रियमाणे साऽराधिता भवति । मनोवाक्कायेन त्रिकरणशुद्ध्या अस्या आराधक इह भवे धनधान्य-पुत्रकलत्रादिसौख्यं प्राप्य

जानिते द्वे शते षष्ठे, अष्टमानां शतं तथा । चतुष्टयं चतुर्मास्या, एकं षाण्मासिकं तपः ॥ १ ॥
स मौनैकादशीतिथ्यास्तपस्तपन् विशेषतः । पाठको द्वादशांगीनां शुद्धां दीक्षामपालयत् ॥ २ ॥ इति

अथैकदा एकादश्यां मौनमास्थाय तपः कुर्वति सुव्रते तत्परीक्षार्थं कश्चिद् मिथ्यादृष्टि देवः कस्यचित् साधोः कर्णयोः महतीं वेदनामकारयत्, तस्य वेदना महति उपचारे कृतेऽपि न शाम्यति, तदा तेन देवेन साधुना पुरत उक्तम्—अस्य वेदना सुव्रतमुनेः भैषज्यात् क्षयं यास्यति, यदि स एव स्वस्थानाद् बहिरागत्य उपचारं करिष्यति इति, तत् श्रुत्वा ते साधवः तत्रागत्य उपचारार्थं सुव्रतमभ्यर्थयन्, सुव्रतोऽपि मौनी रात्रौ न स्वस्थानाद् बहिर्याति, ततः देवानुभावतः स वेदनार्तो मुनिः सुव्रतं मस्तके मारयति ततः सुव्रतस्यातीववेदना संभुता परन्तु स मुनिश्चिन्तयति—

अर्हन्तो भगवन्तो ये, साधवो गणधारिणः । इन्द्राश्चन्द्रा दिनेन्द्राश्च, नागेन्द्रा व्यन्तरेन्द्रकाः ॥ १ ॥
सचक्रवर्तिनो वासुदेवाः प्रतिनारायणाः । बलदेवा नराधीशा, मानवा अपरेऽपि च ॥ २ ॥
कर्मणा पापिनाऽनेन, ते सर्वेऽपि विडम्बिताः । कियन्मात्रो वराकोऽहं, पुरस्तात् तस्य कर्मणः ॥ ३ ॥
अरे जीव ! क्षमस्व त्वमुदितं कर्म तेऽस्ति यत् । तद् भोगेन विना नैव, प्रक्षीयेत कदाचन ॥ ४ ॥
लद्धं अलद्धं पुव्वं–जिणवयण सुभासिअं अमियभूयं । गहिउं सग्गइमग्गो–नाहं मरणाउ बीहेमि ॥ ५ ॥
तपस्तीव्रं घरट्टोऽयं, क्षमामर्करिकान्वितः । धृतिहस्तो मनःकीलः, कर्मधान्यानि चूर्णयेत् ॥६॥ इति

अथ विभंगज्ञानेन मुनिमक्षुभितं मत्वा देवः विशेषेणोपसर्गान् अकरोद्, मुनिस्तु क्षपकश्रेणिमारूढः केवलज्ञानं प्राप्तवान् भव्यान्

स्यान्च: इति इदानीं दीक्षां चेत् सुगुरुयोगतो गृह्णामि तदा वरम्, इति चिन्तयतस्तस्य प्रातःकालः सञ्जातः, उद्याने च तरणतारणसमर्थाः चतुर्ज्ञानधरा गुणसुन्दरसूरयः समागताः, तान् वन्दनार्थं सर्वोऽपि लोको गतः, निजतनुज-स्त्रीपरिवारेण संयुतः श्रेष्ठी अपि गतवान् यावद् वन्दित्वा सर्वे स्थिता तावद् गुरुभिः देशना प्रारब्धा-यो यतीनां केवलिप्रज्ञप्तः अहिंसालक्षणः सप्तदशविधः विनयमूलः क्षान्तिप्रधानः महाव्रतपुरस्सरो धर्मः तेन पवनवद् द्रुतं मोक्षं व्रजेत्, यस्तु द्वादशव्रतात्मकः श्रावकधर्मस्तेन तुरंगवेगवद् व्रजेत, इति अल्पकालेनैव सर्वदुःखान्तकरः साधुधर्मः द्रुतं मोक्षगमनाय सेव्यः । यदुक्तम्—

चारित्ररत्नान्न परं हि रत्नं, चारित्रवित्तान्न परं हि वित्तम् । चारित्रलाभान्न परो हि लाभश्चारित्रयोगान्न परो हि योगः ॥ १ ॥
दीक्षा गृहीता दिनमेकमेव, येनोग्रचित्तेन शिवं स याति । न तत् कदाचित्तदवश्यमेव, वैमानिकः स्यात् त्रिदशप्रधानः ॥ २ ॥

इत्यादि देशनां श्रुत्वा सुव्रतोऽब्रवीत्-हे तारक ! अहं संसारकान्तारादुद्विग्नोऽस्मि इति, गृहभारं पुत्रे समारोप्य श्रीमतां समीपे दीक्षां ग्रहीष्यामि, इति श्रुत्वा गुरुः उवाच-यथासुखं प्रवर्तस्व प्रतिबन्धं मा विधेहि । ततः श्रेष्ठी गृहं गत्वा कुटुम्बं भोजयित्वा स्वजनपुत्राणामग्रे दीक्षाऽऽदेशममार्गयत् । तैरनुमतः सुव्रतः एकादशभिः स्त्रीभिः सह प्रवव्राज । शीघ्रमेव तपोविशेषात् कायबलं क्षयीकृत्य मासिकेनाऽनशनेन तस्य एकादशपत्न्योऽपि केवलं प्राप्य शिवं गताः । अथ सुव्रतः मुनिर्ग्रहणासेवनाशिक्षां पठित्वा साधुधर्मे चरति । यदुक्तम्—

जयं चरे जयं चिट्ठे, जयमासे जयं सुए । जयं भुंजंतो भासंतो, पावकम्मं न बंधई ॥ १ ॥

एवं पवित्रं चारित्रं पालयामास तथा विशेषतः षष्ठाष्टमादितपः कृतवान् तस्य संख्या लिख्यते—

बहुप्राभृतपूर्वं सुव्रतः पादयोर्लग्नः, राज्ञाऽपि व्यतिकरः पृष्टः, सुव्रतेन कथितः वृत्तान्तः पुनः धर्मोपदेशं दत्वा राजा तोषितः, राज्ञा उक्तम्-वरं वृणु, तदा सुव्रतेन उक्तं-अवध्याश्चौरा इति । राज्ञा तथा स्वीकृते शासनदेव्या तलारक्षकाः चौराश्च मुक्ताः । श्रेष्ठिनाऽपि पारणकं कृतम् । पुनरपि एकदा दावानल इव समग्रं पुरं ज्वालनाय अग्निरुत्थितः, तदा नगरस्थः सर्वलोक इतस्ततः नष्टः किन्तु गृहीतपौषधः श्रेष्ठी स्वव्रतरक्षार्थं न कुत्रापि गतः, सर्वनगरमरण्यमिव ज्वलित परन्तु सुव्रत श्रेष्ठिनो हट्ट-गृहादि किमपि न अज्वलत् । प्रातः काले समुद्रे द्वीप इव तस्य हट्टगृहादि वीक्ष्य सर्वेऽपि पौराः सुव्रतं प्रशंसयामासुः, यथा—

सत्त्वेन धार्यते पृथ्वी, सत्त्वेन तपते रविः । सत्त्वेन वायवो वान्ति, सर्वं सत्त्वे प्रतिष्ठितम् ॥१॥

अहो धर्मस्य माहात्म्यमस्याहो दृढता व्रते । पालयेद् व्रतमेवं यो, द्विधाऽप्यस्य शिवं भवेत् ॥२॥

यतः-धर्म्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं ॥ धर्म्मेणैव भवंति निर्मलयशो विद्यार्थसंपत्तयः ॥

कांताराच्च महाभयाच्च सततं धर्मः परित्रायते ॥ धर्मः सम्यगुपासितो हि भवति स्वर्गाऽपवर्गप्रदः ॥३॥

अथ एकादशीव्रते पूर्णे जाते श्रेष्ठी उद्यापनाय मुक्ताफलानि रत्नानि शंखः प्रवालकानि स्वर्णानि कलधौतानि ताम्राणि पित्तलानि त्रपूणि कांस्यानि पट्टकुलानि, बहुविधानि धान्यानि पक्वान्नानि, नालिकेर-द्राक्षासहकारादीनां फलानि, स्वर्ण-रूप्यकानां पुष्पाणि अशोकादीनां पुष्पाणि, इत्यादीनि अनेकानि वस्तूनि एकादशसंख्यया जिनेन्द्राग्रे ढौकयामास । एवं विस्तारेण उद्यापनं कृत्वा संघ-पूजनं साधर्मिकवात्सल्यादीनि सप्तक्षेत्र्यां धनवपनं च विधाय मानुषं जन्म कृतार्थं कृतवान् । अथैकदा वृद्धावस्थायां रात्रौ मनसि श्रेष्ठी चिन्तयति-मया जन्मपर्यन्तं श्रावकव्रतं पालितं मौनैकादशीतपोऽपि तदुद्यापनादिना पूर्णं कृतम्, अथ असारः संसारः पूर्वं पश्चाद् वा

विज्ञाय पुनरपि गुरुसमीपे आजन्म यावद् मौनैकादशीतपः उच्चचार । गुरुणा उक्तम्–एकादशांगानामाराधना कर्तव्या, सम्यक् तपः कार्यम्, पूर्वभवे एकादशीव्रतं कृत्वा निर्मलज्ञानमाप्तवान्, तदुद्यापनवशाच्च अत्र एकादशस्वर्णकोटयः प्राप्ताः, निर्मलं यशः, लोके प्रभुत्वम्, अधिकारित्वम्, नगरश्रेष्ठित्वम् च प्राप्तम्, अतएव तपसि उद्यमो विधेयः । एवमुक्त्वा धर्मलाभाशिषं दत्त्वा गुरवोऽन्यत्र विहृताः । अथ सुतेन सह कुटुम्बेन श्रेष्ठी एकादशीदिवसे प्रहराष्टक आहारादित्यागरूपं पौषधं विदधाति । लोकेऽपि मौनैकादशीपर्वणः प्रसिद्धिर्मान्यता च जाता, यतः वृद्धमान्यं सर्वे मानयन्ति यथा महादेवेन भाले स्थापितत्वात् तत्कलामात्रमपि चन्द्रं द्वितीयादिने लोकाः पूजयंति एवं च अनेके लोका मौनैकादशीमाराधयन्ति । अथ एकदा सकुटुंबेन तेन श्रेष्ठिना मौनैकादशीतिथ्याम् अहोरात्रपौषधः कृतः पौषधग्राहिभिः सर्वैरपि रात्रौ कायोत्सर्गः कृतः । अथैकदा चौरैर्ज्ञातम् मौनैकादश्यां सुव्रतःश्रेष्ठी न ब्रूते अपह्रियमाणमपि वस्तु न पश्यति इति विचार्य चौरघाटी तद्गृहे प्रविष्टा उद्योतं (दीपकं) विधाय चौरा यावत् पश्यन्ति तावत् सर्वत्र पदे पदे स्वर्णराशिमेव पश्यन्ति, यावता गृण्हन्ति तावता शासनदेव्या सर्वे चौराः स्तम्भिताः, अतएव शासनदेवी पूज्यते कायोत्सर्गेणाऽऽराध्यते* । अथ प्रातःकाले स्तम्भितान् सायुधान् परद्रव्यहरणोत्तान् चौरान् दृष्ट्वा लोकाः मीलिताः । तलारक्षकाश्च तान् वेष्टयित्वा स्थिताः । अथ सकुटुम्बः सुव्रतः स्थापनाचार्यसमीपे पौषधं प्रपाल्य उपाश्रयं गत्वा गुरून् नत्वा धर्मं श्रुत्वा गृहे समागतः, तत्र चौरान् दृष्ट्वा मा राजा चौरान् मारयतु इति बुद्ध्या श्रेष्ठिना मौनं कृतम्, ततः तलारक्षका अपि शासनदेव्या स्तंभिताः, अथ मध्यान्हे समागतो राजा,

* तान् स्तम्भितान् प्रातः तलारक्षको दृष्ट्वा भूपालसमीपे निनाय, राज्ञा वधाय आदिष्टाः, प्रातः श्रेष्ठी पौषधं पारयित्वा प्राभृतं लात्वा राज्ञः पार्श्वे गत्वा सर्वान् अमोचयत् इत्यत्रापि समुपलभ्यते पाठ. ।

रूपलावण्यसंयुक्ता, नरा जात्यादिसंभवः । विद्याहीना न राजन्ते, ततोऽमुं पाठयाम्यहम् ॥१॥

इति चिन्तयित्वा महामहैः पितरौ उपाध्यायसमीपे द्वासप्ततिकलाभ्यासं कर्तुं मुमुचतुः । अनायासेन सकला अपि कला अल्पकाले एव पपाठ । षड्विधावश्यकसूत्रादिकं श्रावकाचारमपि पपाठ, प्राप्तयौवनस्य तस्य पिता–श्रीकान्ता, पद्मा, लक्ष्मीः पद्मलता, तारा, रम्भा, पद्मिनी, गौरी, गांगेया, रतिः, इतिनाम्न्यो: महर्द्धिकव्यवहारिणां एकादशकन्याः पारिणायिताः, ताभिः रूपलावण्यशालिनीभिः सह भोगान् भुञ्जानः दोगुन्दकसुर इवाभवत् । तदनंतरं तस्मिन् गृहभारं समारोप्य स श्रेष्ठी प्रव्रज्यां गृहीत्वा सम्यक्प्रपाल्य प्रान्तेऽनशनं विधाय मृतः स्वर्गं च प्राप्तः । अथ गृहस्वामी सुव्रतः श्रेष्ठी पूर्वजन्मनि एकादशीमाराधितवान् तत एकादशस्वर्णकोटिनां नायको जातः । तथा एकादशस्वर्णकोटीश्वरो दाता भोक्ता नगरश्रेष्ठिसुवर्णपट्टालंकृतभालो राजमान्यः सत्यवादी सर्वत्र विश्रुतो अतिप्रतापी सज्जनश्रेष्ठः व्यापारिकशिरोरत्नं सुखेन कालं निनाय । अथ कालान्तरेण एकादशस्त्रीणामेकैकः पुत्रो जातः, एवमेकादश पुत्राः, तत्परिवारोऽपि विपुलो जातः, अथान्येद्युः उद्याने धर्मघोषो मुनीश्वरः सपरिवारः समवसृतः, राजादयः सुव्रतश्च वन्दितुं गताः गुरुणाऽपि तदानीं तपो महिमा व्याख्यातः—

यद् दूरं यद् दुराराध्यं, यच्च दूरे व्यवस्थितम् । तत् सर्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥ १ ॥

तत्रापि पञ्चमीतपसा ज्ञानपञ्चकस्यावाप्तिः, अष्टमीतपसाऽष्टकर्मनिषूदनम्, एकादशीतपसा एकादशांगानां सुखागमनम्, चतुर्दशीतपसा चतुर्दशानां पूर्वाणामागमनम्, पौर्णमासीतपसा संपूर्णागमनं एवं श्रुत्वा सुव्रतो मूर्च्छामापन्नो जातिस्मृत्या पूर्वभवं मौनैकादशीतपोविधानं

धातकीखण्डे इषुकारभूधरात् पश्चिमे दिग्विभागे विजयं नाम पत्तनमस्ति, तत्र पृथ्वीपालो नाम राजाऽभूत्, तस्य च औदार्यचातुर्य-शीलादिगुणशालिनी चन्द्रवती नाम प्रिया, तत्र च व्यवहारिशिरोमणिः प्रबलव्यापारोपार्जितबहुधनः षड्विधावश्यकरतः सत्पुत्रयुतो जिनभक्तिकारकः सूरनामा श्रेष्ठी। स च वृद्धावस्थायामेकदा गुरुसमीपमागत्य भक्त्या प्रणम्य उवाच—भगवान्! ईदृग्विधं धर्मं कथय येन स्वल्पेनाऽपि कर्मक्षयः स्यात्, गुरुणा एकादशीव्रतमादिष्टम्, अथ स गुर्वाज्ञया गृहमागत्य एकादशवर्षैकादशमासपर्यंतं* यावत् तपश्चकार, समाप्ते च व्रते तेन विधिपूर्वमस्या उद्यापनमपि कृतम्, अथ उद्यापनदिवसात् पञ्चदशे दिवसे आकस्मिकेन उदरशूलेन मृत्वा एकादशे आरण्ये देवलोके एकविंशतिसागरपरिमितायुः देवो जातः। देवलोकसुखमनुभूय ततश्च्युत्वा सौर्यपुरे समृद्धिदत्तव्यवहारिक-गृहे प्रीतिमतीप्रियाकुक्षौ पुत्रत्वेनोत्पन्नः, तस्य नालस्थापनार्थं यदा गर्तं खनितुमारब्धं तदा गर्तखननस्थाने निधिर्निर्गतः, तद्वर्धापनिका सर्वत्र जाता, जाताऽऽह्लादः श्रेष्ठी महीयांसं जन्मोत्सवं दशदिवसपर्यन्तं कृतवान्। निवृत्तेऽशुचिकर्मणि प्राप्ते च द्वादशे दिवसे ज्ञातिबांधवान् भोजयित्वा गर्भस्थेऽस्मिन् मातुर्व्रतेच्छाऽभूदिति गुणनिष्पन्नं सुव्रत इति नाम कृतवान् पिता। न पुनर्मंगला-दिवन्निरर्थकम्। उक्तं च—

भौमं मंगल घृष्टिनाम करणे, भद्रा कणानां क्षये॥ वृद्धिः शीतलकाचदुष्टापिटके, राजारजः पर्वणि॥
मिष्टत्वं लवणे विषे मधुरता, दग्धे गृहे शीतलं॥ पात्रत्वं च पणाङ्गनासु गदितं नाम्ना परं नार्थकम् ॥१॥

अथ पञ्चभिः धात्रीभिः लाल्यमानोऽसौ अवर्धत, अनुक्रमेणायम् अष्टवार्षिकः संजातः, तं पुत्रं वीक्ष्य तत्पित्रा चिंतितम्—

* लघिष्ठं मौनैकादशीव्रतमेकादशमासपर्यन्तं मौनेन कृतवान् इत्यपि पाठः।

दिवसयोरेकभक्तं (एकवारं भोजनम्) कर्त्तव्यम्, पारणकदिवसे जिनगृहे गन्तव्यम्, जिनस्याग्रे फलानि उपढौक्य भावतः जिनार्चा कर्तव्या, ततो गुरुसमीपे गत्वा नत्वा ज्ञानपूजां विधाय साधूनां संविभागं कृत्वा पारणा कर्त्तव्या, एकादशवर्षैकादशमासपर्यन्तं यावत् व्रतं कर्त्तव्यम्, द्वादशे वर्षे व्रते पूर्णे पौषधं पारयित्वा गुरूनभिवन्द्य जिनदेवस्याग्रे एकादश पक्वान्नानि एकादश फलानि एकादशविधानि धान्यानि एवं सुन्दरं वस्तु एकादशसंख्यया उपढौकनीयम्, जघन्यतोऽपि एकादशश्रावकवात्सल्यम्, संघपूजा, एकादशांगपुस्तकलेखनम्, इत्यादि उद्यापनं कर्त्तव्यम्—अत्र कथानकम्—

एकदा ग्रामानुग्रामं विहरन् सर्वज्ञो भगवान् नेमिनाथो द्वारिकायां समवासरत् तं वन्दनार्थं श्रीकृष्णः समागतवान्, वन्दित्वा कृष्णोऽवोचत्--स्वामिन्! षष्ठ्यधिकशतत्रयदिनमध्ये एकं सारं वासरं कृपां कृत्वा मम निवेदय यमाराध्य दानशीलतपोव्रतशक्तिहीनोऽप्यहम् निस्तीर्णो भवामि. भगवान् उवाच—यद्येवं तर्हि त्वं मार्गशीर्षशुक्लैकादशीमाराधय यतः—

अपि मिथ्यादृशां मान्या, सा मौनैकादशी तिथिः। मार्गशीर्षाह्वयमासस्य, शुक्लपक्षे प्रकीर्तिता ॥१॥
तत्र पुण्यं कृतं स्वल्पमपि प्रौढफलं भवेत्। तस्मादाराधनीया सा, विशेषेण विशारदैः ॥२॥
सर्वेभ्योऽपि च पर्वेभ्यः, पर्व पर्युषणाह्वयम्। दिनेभ्योऽप्यखिलेभ्योऽयं, तथा मुख्योऽस्ति वासरः ॥३॥
श्रमणैः श्रमणीभिश्च, श्रावकैः श्राविकादिभिः। धर्मकर्म विधातव्यमस्मिन् दिने विशेषतः ॥४॥

इति श्रुत्वा श्री कृष्ण उवाच–विभो! पूर्वं केनाऽपि एकादशीव्रतमाचीर्णम्? तस्य च कीदृशी फलप्राप्तिर्जाता? स्वामी प्राह—

सन्मुखं गत्वा महताऽऽडम्बरेण श्रीयुगादिजिनबिम्बं रथे संस्थाप्य पूजास्नात्रमहोत्सवादिकरणेन महाकर्मराशिः दूरीक्रियते, महती पुण्यवृद्धिश्च भवति, तेनाद्य पर्वदिने पूजापौषधादिकरणेन दिवसः सफलः क्रियते ।

त्रिमुनिश्चाष्टभूवर्षे, [१८७३] दुर्गे च जेसलाभिधे ॥ गणिना जयसारेण, व्यलेखि शिष्यहेतवे ॥१॥

इति श्रीकार्त्तिकपूर्णिमायाः व्याख्यानं सम्पूर्णम् ॥२॥

## अथ मौनैकादशी व्याख्यानम् ॥ ३ ॥

अरस्य प्रव्रज्या नमिजिनपतेर्ज्ञानमतुलं, तथा मल्लेर्जन्म व्रतमपमलं केवलमलम् ।
वलक्षैकादश्यां सहसि लसदुद्दाममहसि, क्षितौ कल्याणानां क्षिपतु विपदः पञ्चकमिदम् ॥१॥

अर्थः—अरस्य-अरजिनस्य प्रव्रज्या-दीक्षा, नमिजिनपतेः-नमिनाथस्य अलतुम्-अनुपमं ज्ञानम्, तथा मल्लेः-मल्लिजिनस्य जन्म, अपमलम्-मलरहितं व्रतम्--दीक्षा, अलम्-सर्वद्रव्यगुणपर्यायप्रेक्षणे समर्थम्, केवलम्-केवलज्ञानं च; लसदुद्दाममहसि तेजोवति, सहसि-मार्गशीर्षमासे वलक्ष्यैकादश्यां-शुक्लैकादश्यां सञ्जातं कल्याणानां इमं पञ्चकं क्षितौ विपदः क्षिपतु ।

यथाऽस्मिन् भरते कल्याणानां पञ्चकं सञ्जातमेवं पञ्चसु भरतेषु पञ्चसु च ऐरवतेषु--क्षेत्रेषु मीलित्वा जातं पञ्चाशत् (५०) कल्याणानाम् । एवं भूतभाविवर्त्तमानकालाऽपेक्षया जातं सार्धशतं (१५०)। एकोपवासेऽपि सार्धशतोपवासफलं भवति । अस्मिन् दिने उपवासं कृत्वा मौनमाधाय अहोरात्रं पौषधं विधाय स्थेयम्, भणनं गुणनं विना नाऽन्यत् किमपि वक्तव्यम् । पारणकोत्तर-

द्विद्विकोटिपरिवारेण परिवृतौ फाल्गुनशुक्लदशम्यां नमिविनमी विद्याधरराजर्षी श्रीसिद्धशैले शिवपुरं गतौ, पुनः नमिविनमिराज्ञोः पुत्र्यश्चतुष्षष्टिः त्रिमलगिरौ चैत्रशुक्लचतुर्दश्यामनशनं कृत्वा शिवपुरीं प्राप्ताः, तेन शिवमन्दिरारोहणे सोपानसदृशो वाच्यः, पुनः पापमलपरिहरणे नीरवद् ज्ञेयः, तेन विमलगिरिरिति कथ्यते, पुनः पापारिगञ्जनेऽतीव शूरवद् ज्ञेयः। पुनर्येन नरभवं प्राप्य शत्रुञ्जये गत्वाऽऽदिजिनभक्तिपूर्वकं द्रव्यभावाऽर्चनं न कृतं तेन नरत्वं पशुरिव हारितम्, यस्तीर्थबुद्ध्या स्वहृदये संप्रधार्य श्रीशत्रुञ्जये गत्वा आदिजिनं नमति तस्य जीवितं सफलं स्यात्, स्तोककालमध्ये शिवसुखं प्राप्नोति। एवं गुरुमुखात् सिद्धगिरेर्महान्तं महिमानं श्रुत्वा सिद्धशैलपर्वतवन्दनार्थं पञ्चपञ्चकोटिमुनिपरिवारपरिवृतौ द्राविडवारिखिल्लौ वल्कलचीवरधारिणौ तापसौ स्वगुरोराज्ञां गृहीत्वा श्रीशत्रुञ्जयं प्रति चेलतुः, गुरुरपि अन्यत्र स्थाने विजहार। अथ द्राविडवारिखिल्लौ क्रमेण सपरिवारौ श्रीशत्रुञ्जयगिरौ आरोहणसमये एतादृशमवग्रहं जग्राह–यदाऽऽवयोः कर्मक्षयो भविष्यति तदाऽऽहारं ग्रहीष्यावः, एवं द्राविडवारिखिल्लौ चातुर्मासकालावग्रहमभिगृह्य श्रीशत्रुंजये चातुर्मास्यां तस्थतुः, भावतः साधुधर्ममंगीचक्रतुः, आत्मानं भावानुसारिणं प्रवर्तयन्तौ तपः तप्तवन्तौ, शुभध्यानयोगेन कर्मराशिदूरीकरणेन चातुर्मासीप्रान्तदिवसे प्रवर्तमाने कार्तिकशुक्लपौर्णमासीदिने क्षीणमोहेन त्रयोदशगुणस्थानकारोहणेन शुक्लध्यानेन ध्यायमानेन घनघातिचतुष्कर्मराशिक्षपणेन केवलज्ञानं केवलदर्शनं च तयोरुत्पन्नम्। चतुर्दशरज्जुलोकं ददृशतुः। बहुभव्यजीवान् प्रतिबोध्याऽऽयुष्कादिचतुष्कर्मराशिं क्षपयित्वा द्राविड–वारिखिल्लराजर्षी दशकोटिमुनिभिः सह मुक्तिपुरीं प्रापतुः, अचलाक्षयगतिं शिवं निरुपद्रवं पदं लब्धम्। तेन कार्तिकशुक्लपूर्णिमाऽतीवोत्तमा वर्तते, तस्माद् अद्य दिवसे श्रीशत्रुञ्जय–

कृतुः, कन्दमूलाद्याहारं कुर्वन्तौ वल्कलचीवरं धारयतः, तपः करणेन कृशतनू जातौ। एवं बहुकालो गतः। अथास्मिन्नवसरे केचित् साधवस्तीर्थयात्राकरणार्थं मार्गे तत्रैव वने आगताः, द्राविडवारिखिल्लावपि तान् साधूनवलोक्य बह्वादरं दत्तवन्तौ, साधवोऽपि गमनागमनमालोच्य भूमिं प्रमार्ज्य तरोस्तले स्थिताः, द्राविडवारिखिल्लावपि मुखाग्रे उपविष्टौ, तस्मिन्नवसरे तरुशाखात एकश्चटको मुखाग्रे पतितः, तं चटकं स्तोकायुषं ज्ञात्वा मुनिना करुणां विचार्य नमस्कारः सुश्रावितः, विमलगिरेर्महिमा कथितः, तेन चटकेन मनसि धर्मोपदेशो दधे, तद्धर्मप्रभावात् प्रथमकल्पे देवो जातः, स देवः साधिकमुहूर्त्तान्तरे मुनीनां पार्श्वे आगत्य मुनीनां चरणानानम्य मुनीनामग्रे उपविष्टः, तस्मिन्नवसरे देवस्य महर्द्धिं रूपं चावलोक्य द्राविडवारिखिल्लौ मुनिं प्रति पप्रच्छतुः, हे स्वामिन्! अयमत्यन्तरूपकान्तिधारकः कः सुरोऽस्ति? तदा मुनिराह अयं चटको मृत्वा एतत्स्थानात् सुर उत्पन्नोऽस्ति, नमस्कारश्रवणेन तीर्थराजशत्रुञ्जयोज्ज्वलभावधारणेन चास्मिन् समये तीर्थराजमानम्य अत्रागतोऽस्ति। एतद्गुरुमुखान्निशम्य तौ पुनः पप्रच्छतुः–हे स्वामिन्! स विमलगिरिः कीदृशोऽस्ति, किञ्च तन्माहात्म्यमित्यावयोरुपरि कृपां कृत्वा सुश्रावय, तदा मुनिराह–अस्मिन् जम्बूद्वीपे दक्षिणार्धभरते श्रीशत्रुञ्जयगिरिरष्टोत्तरशतनाम्नाऽलंकृतं महातीर्थमस्ति, पुनः शत्रुञ्जयः १ पुण्डरीकः २ सिद्धगिरिः ३ विमलगिरिः ४ सुरगिरिः ५ इत्यादिभिः एकविंशतिनामभिः लोके प्रसिद्धोऽस्ति, एष गिरिर्नामनिक्षेपेण निश्चलोऽस्ति, अनन्तकालापेक्षया सिद्धशैलोपरि अनन्ता मुनयो मुक्तिं गताः, पूर्वमपि सम्प्रतिनाम्नश्चतुर्विंशतितमजिनस्य प्रथमगणधरः कादम्बगिरिनामा मुक्तिं गतः, इहैव वर्तमानकाले प्रथमजिनस्य प्रथमगणधरः पुण्डरीकनामा चैत्रशुक्लपूर्णिमायां पञ्चकोटिमुनिभिः सह श्रीशत्रुञ्जये शिवपुरीं गतः। तेन पुण्डरीकगिरिरिति कथ्यते, पुनः

न्यमादाय सन्मुखं चचाल स्वस्वदेशसीमां च रुरोध। क्रमेणोभयभ्रातृबहुसेनासमुदायेन द्वादशवर्षं यावत् महायुद्धकरणे बहवो गजा अश्वा-मनुजा भूमौ पतिताः, रुधिरसरितः प्रचलिताः, एतादृशः संग्रामो जायते, तस्मिन् समये द्राविडराजा वनक्रीडाकरणार्थं वने जगाम, तद्वनमनेकाम्रनिम्बकदम्बादिगुल्मलतापत्रपुष्पफलवनद्धर्या विभ्राजमानं सरोनिर्झरणैः शोभितमेतादृशं वनं द्राविडराजा पश्यति, तस्मिन्नेव वनमध्यभागे तापसगणास्तपः कुर्वन्ति, ते परिव्राजका राज्ञा ददृशिरे। अश्वादुत्तीर्य तत्र पार्श्वे गत्वाऽभिवन्द्य स्वोचितस्थाने तस्थौ। तस्मिन्नवसरे एकेन तापसेन धर्मोपदेशो दत्तः, तन्मध्ये संसारासारताऽपि दर्शिता तदुक्तम्—

गयकन्नचंचलाए अपरिचित्ताए रायलच्छीए। जीवा सकम्मकलमलभरिय भारतो पडन्ति अहे ॥ १ ॥

इत्यादिधर्मोपदेशं श्रुत्वा संसारमसारं ज्ञात्वा क्रोधं त्यक्त्वा एवं मनसि चिन्तयति—अहो! मम जीवितं धिक्, एक एव मद्भ्राता तेन सहाहं युयुधे द्वादश वर्षाणि संजातानि, एतदनिष्टं कार्यं कृतं, स्तोकजीवनोपरि एतद् वैरं किं क्रियते? राज्यलोभाद् एतदनिष्टं कृतम्, एवं विचार्य द्राविडस्तापसाश्रमादुत्थाय स्वसहोदरापराधक्षामणार्थं वारिखिल्लसेनामध्ये आयाति तावद् वारिखिल्लो बृहद्भ्रातुरागमनवृत्तान्तं श्रुत्वा सन्मुखमागत्य चरणयोर्निरपतत्, स च द्राविडो बाष्पपूर्णनयनः स्नेहार्द्रहृदयस्तमुत्थाप्य इति जजल्प—हे भ्रातः! एतत् सर्वमपि राज्यं त्वं गृहाण अहं तापसीं दीक्षां ग्रहीष्यामि, तदा वारिखिल्ल इत्युवाच—अहमपि राज्यपदं न ग्रहीष्यामि, एतद्वचनपरस्परालापनां कृत्वा स्वस्वपुत्राभ्यामर्धार्धं राज्यं विभज्य दत्त्वा स्वस्वापत्यं स्वस्वस्थाने प्रेषितवन्तौ, तौ पुत्रावपि स्वं स्वं राज्यं बुभुजाते। अथ द्राविडवारिखिल्लावपि पञ्चपञ्चकोटिक्षत्रियपरिवारेण परिवृतौ तापसाश्रमे गत्वा तापसपार्श्वे तापसीं दीक्षां जगृहतुः, आतापनां च-

लक्षपूर्वाणि व्यतीतानि तदा स्वामी राज्यभोक्ता जातः क्रमेण त्रिषष्टिपूर्वलक्षवर्षं राज्यं प्रपाल्य दीक्षाऽवसरं ज्ञात्वा भरताय स्वमूलराज्य विनीता दत्ता बाहुबलाय तक्षशिला च प्रदत्ता, एवं क्रमेण शतपुत्रेभ्यो राज्यं वासयित्वा स्वस्वनाम्ना देशाः प्रदत्ताः । तन्मध्ये एको 'द्रविड' इत्यभिधानः, तस्य द्रविडदेशं कञ्चनपुरनगरं च वासयित्वा ददौ । स्वामी दीक्षां ललौ । क्रमेण कर्मक्षये केवलज्ञानमुत्पन्नम् । अथ भगवाननेककोटाकोटीदेवपरिवारेण परिवृतः साधुसाध्वीसमुदायेन सह देशेषु विहृत्य धर्मवृद्धिं चकार । अथ द्रविडराजाऽपि पितृदत्तं राज्यं बुभुजे, स्वनारीभिः सार्धं विषयसुखमनुभवतस्तस्य क्रमेण द्वौ पुत्रौ बभूवतुः, बृहत्पुत्रो द्राविडः अपरो वारिखिल्लो लघिष्ठः, क्रमेण भोगसमर्थौ ज्ञात्वा उभयपुत्रौ प्रति भार्याः विवाहिताः । तावपि विषयसुखं बुभुजाते, तत्तद्भार्ययाऽपि पुत्राः प्रसूताः, तेऽपि चन्द्रकलेव ववृधिरे, एवं द्रविडराजा स्वराज्यं सुखेन प्रपालयति स्म । अथ तस्मिन्नवसरे भरतेन स्वाज्ञापालनार्थमष्टनवतिभ्रातृपार्श्वे दूतो मुमुचे, तदा द्रविडराजा दूतमुखात् सर्वं भरतस्य चक्रवर्तिपदस्वरूपं ज्ञात्वा एवं सर्वेऽपि संमील्य स्वस्वपुत्रं राज्यं ददौ, तदा द्रविडराजापि द्राविडबृहत्पुत्राय राज्यं प्रददौ । कनिष्ठाय वारिखिल्लाय च एकलक्षग्रामान् पृथग् ददौ, स्वयञ्च संसारवासनां परित्यज्य दीक्षां गृहीत्वा यथेच्छं पर्यटन् श्रीऋषभदेवजिनपार्श्वे तपस्तप्त्वा कैवल्यं प्राप । अथ द्राविडः पित्रा दत्तं स्वराज्यं वारिखिल्लोऽपि पितृदत्तस्वराज्यं लक्षग्रामान् प्रपालयति स्म । कानिचिद् वर्षाणि गतानि । तस्मिन्नवसरे द्राविडराजा स्वमनसि एवं चिन्तयति स्म, मत्पित्रा दीक्षावसरे मल्लघुभ्रातरं प्रति लक्षग्रामं दत्तं तद्धव्यं न कृतम्, मद्राज्यन्यूनता कृता, परमहमेतद्राज्यमुद्दाल्य ग्रहीष्यामि । एतद् विचिन्त्य स्वसैन्यं सम्मील्य युद्धार्थं चचाल । तदा वारिखिल्लोऽपि भ्रातुरागमनवृत्तान्तं श्रुत्वा स्वसै-

## अथ कार्तिकपूर्णिमायाः व्याख्यानम् ॥ २ ॥

श्रीसिद्धाचलतीर्थेशं, नत्वा श्रीऋषभं प्रभुम् । कार्तिकी पूर्णिमायाश्च, व्याख्यानं वक्ष्यते मया ॥ १ ॥
सिज्झो विज्जायरचक्की नमी विनमी मुणि पुंडरिओ मुणींदो । वाली पज्जुन्नसंबो भरहसुगमुनि सेलगो पंथगो य।
रामो कोडी पंच दविडनरवई नारदो पण्डुपुत्ता । मुत्ता एवं अणेगे विमलगिरिमहं तित्थमेयं नमामि ॥ २ ॥

व्याख्या—भो भव्याः ! एतादृशं पापकर्ममलपरिहारकं श्रीविमलाचलतीर्थं मनोवाक्कायैर्नमामि, तद् विमलाचल तीर्थं कीदृशम् ? यद् यस्मिन् तीर्थोपरि विद्याधरः चक्री-भरतः-नमी-विनमी-शुक-शैलक-पंथक-रामचन्द्र-द्राविड—वारिखिल्ल-नवनारद-पाण्डव-पुण्डरीकाद्या अनशनं विधाय, अष्ट कर्मारीन् हत्वा मुक्तिं गताः, एतादृशं सिद्धशैलं तीर्थं मनोवाक्काययोगेन नमामि । पुनरस्मिन् कार्त्तिकपूर्णिमाऽऽगमने श्रीशत्रुञ्जयगिरिसन्मुखदिशं गत्वा चैत्यवन्दनकरणे महती धर्मवृद्धिर्भवति, पुनरस्मिन् कार्त्तिकपूर्णिमाया दिने श्रीसिद्धशैले द्राविड-वारिखिलौ आरोहणेन शिवपुरीं प्राप्तौ, तद् दृष्टान्तो यथा—

अस्मिन् जम्बूद्वीपे दक्षिणभरतार्द्धस्य मध्यखण्डे इक्ष्वाकुभूम्यामस्मिन्नवसर्पिण्यां पूर्वं सप्तमः कुलकरो नाभिनामा बभूव, तद्भार्या मरुदेवी, तस्या उदरकन्दरायां श्रीप्रथमतीर्थंकरश्रीऋषभजिनः उत्पन्नः स षट्पूर्वलक्षाणिकुमारपदे स्थितः तदनन्तरमिन्द्रेण सुनन्दा सुमङ्गला परिणायिते, स्वामिनः संसारव्यवहारो वर्तते स्म, क्रमेण भरतबाहुबल्याद्याः शतं पुत्राः द्वेपुत्र्यौ अभूवन्, यदा विंशतिल-

त्म्यं-वर्ण्यते-तस्यास्तपः प्रभावात् सर्वेऽपि रोगा दूरं गताः, अद्भुतं रूपं जज्ञे, सा च जिनचन्द्रेण परिणीता, करमोचनवेलायां पित्रा बहुधनं दत्तम्, चिरकालं गृहसौख्यं भुक्त्वा यावज्जीवं पञ्चमीतपः कृत्वा प्रान्ते चारित्रमग्रहीत्, तौ गुणमञ्जरी-वरदत्तौ जिनोदितं चारित्रं प्रपाल्य कालं कृत्वा वैजयन्तविमाने सुरोत्तमौ जातौ। ततश्च्युत्वा वरदत्तजीवो महाविदेहे पुण्डरीकिण्यां नगर्याममरसेन राज्ञः स्त्री गुणावती, तस्याः पुत्रत्वेन समुत्पन्नः। शुभेऽन्हि तस्य शूरसेन इति पित्रा नाम कृतम्। क्रमेण यौवनं प्राप्तः कन्यकानां शतमुपयेमे, पित्रा स्वराज्ये स्थापितः। एकदा श्रीसीमन्धरस्वामी विहरन्तस्तत्र समागतः। अर्हदागमनं श्रुत्वा शूरसेनो वन्दनार्थमगमत्। भगवता धर्मदेशना प्रारब्धा, तत्र सौभाग्यपञ्चम्यास्तपसः फलं प्रकाशितम्. ततो राज्ञा पृष्टम्-भगवन्! केनाऽपि तपसः फलं प्राप्तम्? तदा भगवता वरदत्तनृपदृष्टान्तः कथितः, तत् श्रुत्वा जातजातिस्मृतिःसन् पूर्वभवं ददर्श, पुनः तद्व्रतं जग्राह, दशसहस्रवर्षं राज्ये स्थित्वा तीर्थंकरपार्श्वे संयममग्रहीत्, वर्षसहस्त्रं दीक्षां प्रपाल्य केवलज्ञानं प्राप्य मोक्षं प्राप। अथ गुणमञ्जरीजीवो सुखं भुक्त्वा रमणीयाख्ये विजये शुभायां नगर्याममरसिंहाभिधनृपपत्न्या अमरावत्याः कुक्षौ पुत्रत्वेन समुत्पन्नः, समये जाते च पित्रा सुग्रीव इति नामस्थापनं कृतं, क्रमेण यौवनं प्राप्तो बह्वीनां कन्यानां पाणिग्रहणं च चकार, विंशतितमे वर्षे पित्रा राज्यं दत्त्वा स्वयं दीक्षा गृहीता, सुग्रीवो राजा बहूनि वर्षाणि राज्यं प्रपाल्य अन्ते गुरुपार्श्वे दीक्षां गृहीत्वा पूर्वलक्षं चारित्रं प्रपाल्य केवलमुत्पाद्य मोक्षं जगाम।

जायन्तेऽधिकसौख्यानि, पञ्चम्याराधनान् नृणाम्। इत्यस्या अभिधा जज्ञे, लोके सौभाग्यपञ्चमी ॥ १ ॥
एवं विभाव्य भो भव्याः! पञ्चम्याराधनोद्यमः। भवभीतिविभेदाय, कार्यो युष्माभिरद्भुतः ॥ २ ॥

इति कार्तिकसौभाग्यपञ्चमीमाहात्म्यविषये वरदत्त-गुणमञ्जरी कथानकं सम्पूर्णम् ॥ १ ॥

हृदि चिंतयामास–कृतपुण्यो मम बृहद्भ्राता मूर्खत्वात् तस्मै प्रष्टुं कोऽपि न याति, स्वैरं भुङ्क्ते भाषते शेते च, अत एव मूर्खे बहवो गुणाः सन्ति, यतः—

मूर्खत्वं हि सखे! ममापि रुचितं तस्मिन् यदष्टौ गुणाः। निश्चिन्तो बहु भोजनोऽ१ त्रपमना २ नक्तं दिवा शायकः।
कार्याऽकार्यविचारणान्धबधिरो मानापमाने समः। प्रायेणाऽऽ ३ मयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥१॥

इति। अतः परं न कस्मै पदमात्रमपि कथयिष्यामि नवं पदं च न पाठयिष्यामि इति विचार्य शरीरे रोगाऽऽक्रान्तो द्वादश दिवसान् मौनेन निनाय। तत्पातकमनालोच्य आर्तध्यानपरो मृत्वा, राजन्! तव सुतो जातः पूर्वोपार्जितेन कर्मणा अतीव मूर्खः कुष्ठादिरोगाऽऽक्रान्ततनुश्च बभूव। एतद् गुरोर्वचनं श्रुत्वा वरदत्तो जातिस्मृत्या निजपूर्वभवं दृष्ट्वा मूर्च्छां प्राप, क्षणान्तरे स्वस्थीभूय सर्वं सत्यमिति गुरुं प्रति–उवाच। पुनरपि नृपो बभाण–भगवन्! स देहरोगः कथं कदा व्रजिष्यति?। गुरुणा उक्तम्–कार्त्तिकशुक्लपञ्चमी आराध्या। पूर्वोक्तः सर्वोपि विधिः कथितः, प्रतिपन्नं कुमारेण पञ्चमीतपः, गुरुं प्रणम्य सर्वेऽपि स्वस्वस्थानं जग्मुः, अनन्तरं सम्यक् तत्तपः कुर्वतो तपः प्रभावात् वरदत्तस्य सर्वेऽपि रोगाः क्षयं प्रापुः, स्वयंवरसमेतानां वरभूपोद्भवानां सहस्रकन्योत्तमानां स महोत्सवं पाणिग्रहणं च चकार। शिक्षिताशेषसत्कलाय वरदत्ताय राज्यं दत्वा नृपो गुरुसन्निधौ चारित्रमग्रहीत्। वरदत्तो राज्यं पालयन् वर्षे वर्षे महाशक्त्या पञ्चम्या विधिं विदधे। अखंडाऽऽज्ञो राज्यं प्रपाल्य भुक्तभोगः स्वसूनवे राज्यं दत्वा स्वयं दीक्षामग्रहीत्। अथ–गुणमञ्जर्यास्तपोमाहा–

१ लज्जारहितमानसः। २ रात्रौ। ३ रोग रहित।

धूपोत्क्षेपपूर्वकं पञ्चवर्णानि धान्यानि पञ्चपक्वान्नानि पञ्चफलानि च ढौकयन्ते । ततो गुरोरग्रे गत्वा भक्त्याऽभिवन्द्य यथाविधि उपवासस्य प्रत्याख्यानं क्रियते । तस्मिन् दिने 'नमो नाणस्स' इति पदमेकसहस्रसंख्या * उत्तराभिमुखेन गुण्यते । चेत् पौषधः क्रियते तदा तद्दिने अयं विधिर्न भवेत् तस्मात् पारणकादिने विधिः कार्यः, यथाशक्ति उद्यापनादि अपि विधेयम् । ततो गुणमञ्जर्या तत् तपः प्रतिपन्नम् । अस्मिन्नवसरे राजा पृच्छति-हे साधुपुरन्दर ! मत्सूनोः वरदत्तस्य कुष्ठरोगः कथमभवत् ? पठनं च किं नाऽऽयाति ? तस्य किं कारणम् ? गुरुर्जगाद-अस्यापि पूर्वभवं शृणु—जम्बूद्वीपे भरतक्षेत्रे श्रीपुरं नाम नगरम्, तत्र वसुनामा श्रेष्ठी वसति स्म, तस्य वसुसार-वसुदेवौ पुत्रौ, तौ एकदा क्रीडार्थं वने जग्मतुः, तत्र वने मुनिसुन्दरनामानः सूरयो दृष्टाः वन्दिताश्च । गुरुभिर्धर्मदेशना प्रारब्धा—

यत्प्रातः संस्कृतं धान्यं, मध्यान्हे तद् विनश्यति ॥ तदीयरसनिष्पन्ने, काये का नाम सारता ॥ १ ॥

इत्यादिदेशनां श्रुत्वा तातमापृच्छय वैराग्यात् तौ व्रतं जगृहतुः । लघुना वसुदेवेन चारित्रं बिभ्रता सिद्धान्तसारः सर्वेऽपि अधीतः, गुरुणा वसुदेवाय सूरिपदं दत्तम्, स च पंचशतसाधुभ्यो वाचनां ददाति । एकदा वसुदेवसूरीश्वरो रुजाऽऽक्रान्तः संस्तारके सुप्तः तं कोऽपिसाधुरागमार्थं पृच्छति, गुरुर्व्याख्यायति, तस्मिन् गते द्वितीयो मुनिः समागतः तस्मै वाचना दत्ता, एवं भूयस्तु समागत्य समागत्य गतेषु किञ्चिन्निद्रायमाणः केनाऽपि साधुना पृष्टो भगवन् ! अग्रेतनं पदं वाच्यं पदस्यार्थोऽपि वाच्यः । तदा सूरिः कुविकल्पान्

* अष्टोत्तरैकसहस्रसंख्या इत्यापि क्वापि क्वापि उपलभ्यते पाठः, तत्त्वतस्तु अयमेव श्रेयान् प्रतिभाति । क्वापि च द्विसहस्राष्टोत्तरशतमित्यपि ।

मूर्खा एव रक्षिताः, अतः कोऽपि कन्यां न ददाति, सा उवाच–तव पिता पापिष्ठः येनैवं मूढमतिना शिक्षितोऽसि यतः—

आः ! किं सुन्दरि ! सुन्दरं न कुरुषे ?, किं नो करोषि स्वयं ?, आः ! पापे ! प्रतिजल्पसि प्रतिपदं ?, पापस्त्वदीयः पिता।
धिक् त्वां क्रोधमुखीमलीकमुखरीं त्वत्तोऽपि कः कोपनो, दम्पत्योरिति नित्यदंतकलहक्लेशार्तयोः किं सुखम् ? ॥१॥

एतद्वचनमाकर्ण्य रुष्टेन जिनदेवेन उपलेन सा शिरो मर्मणि जघ्ने। तदा सा मृता, सा च तव पुत्री समजायत, अनया ज्ञानस्याऽऽशातना पूर्वभवे चक्रे, तेन रोगोत्पत्तिर्जज्ञे, यतः—

कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥ १ ॥

इति गुरोर्वचनं श्रुत्वा सा गुणमञ्जरी जातजातिस्मृत्या पूर्वभवं ददर्श। ततो गुरुं प्रति सा सत्यमिति प्रोवाच। श्रेष्ठिना गुरुः पृष्टः–भगवन् ! अस्या रोगाः कथं प्रयास्यन्ति ?। गुरुणाऽभाणि—श्रेष्ठिन् ! ज्ञानस्याऽऽराधनतः सर्वं सुखं सम्पद्यते दुःखं च विलयं याति। ज्ञानस्य चाराधनमित्थम्—विधिना शुक्लपञ्चमीदिने उपवासो विधीयते, पुस्तिकां पट्टे संस्थाप्य पुरः स्वस्तिकः क्रियते, पञ्चवर्तिमयो दीपश्च क्रियते, पञ्चफलानि पञ्चवर्णकं च धान्यं ढौकयन्ते, पञ्चवर्षाणि पञ्चमासान् यावत् पञ्चमी अनया रीत्या मनोवाक्कायशुद्ध्या समाराधनीया। यदि मासे मासे कर्तुं न शक्यते तदा कार्तिकमासस्य शुक्लपञ्चमी यावज्जीवमाराधनीया। सा सम्यगाराधिता सर्वं सुखं दत्ते, इति गुरुवचनं श्रुत्वा जिनदेवोऽब्रवीत्—भगवन् ! मम तनयायास्तपस्या-शक्तिर्न विद्यते, अतः कार्तिकपञ्चम्या विधिरादिश्यताम् वाचंयमः प्रोचे—कार्तिकशुक्लपञ्चमीदिने पुस्तकं पट्टे संस्थाप्य सुगंधपुष्पैःसंपूज्य

इत्यादिदेशना श्रुत्वा सिंहदासश्रेष्ठी मुनिं जगौ-भगवन् ! केन कर्मणा मम सुतातनौ रोगा जाताः ? । गुरुणा ऊचे-महाभाग ! कर्मणा किं न संभवेत ? । अत्र श्रेष्ठिन् ! अस्याः पूर्वभवः श्रूयताम्—धातकीखण्डमध्यस्थभरते खेटकनामनगरम्, तत्र जिनदेवनामा श्रेष्ठी, सुन्दरीनाम्नी च तस्य गेहिनी, तयोः पञ्च पुत्राः-आशपालः, तेजपालः, गुणपालः, धर्मपालः, धनसार इतिनामानोऽभूवन् । तथा-लीलावती, शीलावती, रङ्गावती, मंगावती, इतिनाम्न्यश्चतस्रश्च पुत्र्योऽभूवन् । अथैकदा जिनदेवेन पञ्चापि तनयाः पण्डितसमीपे विद्याकलाग्रहणार्थं स्थापिताः । ते च चापल्यं कुर्वन्ते परन्तु अध्ययनं न कुर्वन्ति, यदा पण्डितस्तान् कम्बया ताडयति तदा ते रुदन्तो गृहमागत्य मातुः समीपे दुःखं निवेदयन्ति, माता-उवाच-पठनेन किं प्रयोजनम् ? यतः-

पठितेनाऽपि मर्तव्यं, शठेनाऽपि तथैव च । उभयोर्मरणं दृष्ट्वा, कण्ठशोषं करोति कः ? ॥ १ ॥

पण्डितस्यापि उपालम्भं दत्ते ईर्ष्यया च पुस्तिकां प्रज्वालयामास । पुत्रान् वक्ति, पठनार्थं भवद्भिर्न गन्तव्यम् । श्रेष्ठी एतद्व्यतिकरं ज्ञात्वा प्रोवाच—हे भद्रे ! जडेभ्यः पुत्रेभ्यः कः कन्याः प्रदास्यति ? कथं चैते व्यवसायं करिष्यन्ति ? यतः-

माता वैरी पिता शत्रुर्बालो येन न पाठितः । न शोभते सभामध्ये, हंसमध्ये बको यथा ॥ १ ॥

विद्वत्त्वं च नृपत्वं च, नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते ॥ २ ॥

इति श्रेष्ठिवचनं श्रुत्वा सा प्रोवाच-यूयं किं न पाठयथ ? अत्र मम को दोषः ? इत्युक्ते श्रेष्ठी हक्कितः सन् मौन चकार । अथ अनुक्रमेण ते पंचापि तयोः पुत्राः यौवनं प्रापुः, परं न कोऽपि तेभ्यो कन्या दत्ते मूर्खत्वात्, ततः श्रेष्ठी स्त्रीं ति जगौ-पापिष्ठे ! त्वया पुत्रा

तयोः रूपलावण्यशोभनो वरदत्तनामा पुत्रो बभूव । सोऽष्टवर्षप्रमाणः पित्रा सुधान्तिके विद्याग्रहणहेतवे स्थापितः । परमक्षरमात्रं तस्य मुखे न चटति, अध्यापकस्योद्यमो निष्फलोऽभूत् । स यौवनं प्राप्तः पूर्वकर्मोदयात् कुष्टेन विनष्टदेहत्वात् कुत्रापि रतिं न प्राप । इतश्च तत्रैव पुरे सप्तकोटिसुवर्णाधीशो जिनधर्मरतः प्रसिद्धिभाक् सिंहदासो नाम श्रेष्ठी, तस्य गृहे गुणोचिता कर्पूरतिलका-नाम्नी भार्या, तयोः पुत्री गुणमञ्जरी आजन्मतो रोगैरुपद्रुता वचनेन मूकतां प्राप्ता बभूव । विविधैरौषधैरपि तस्या रोगशान्तिर्न जायते न च यौवने तां कोऽप्युद्वहति । तस्याः षोडशवार्षिक्या दुःखेन मातापित्रादिः सकलस्वजनो दुःखितः समजायत । तत्रैव पुरे एकदा श्रीविजयसेनसूरयश्चतुर्ज्ञानधरा गुरवः समाजग्मुः । तदा सर्वेऽपि नागरिकलोकः, सपुत्रो भूपतिः, सकुटुम्बः सिंहदासश्रेष्ठी सर्वे वन्दनार्थमुपगताः, गुरुणा च धर्मदेशना प्रारब्धा—

ज्ञानस्याराधने यत्नोऽध्ययनश्रवणादिभिः । भव्यैर्विधेयः सततं, निर्वाणपदमिच्छुभिः ॥ १ ॥
विराधयन्ति ये ज्ञानं, मनसा ते भवान्तरे । नराः स्युः शून्यमनसो, विवेकपरिवर्जिताः ॥ २ ॥
विराधयन्ति ये ज्ञानं, वचसापि हि दुर्धियः । मूकत्वमुखरोगित्वदोषास्तेषामसंशयम् ॥ ३ ॥
विराधयन्ति ये ज्ञानं, कायेनायत्नवर्तिना । कुष्ठकुष्टादिरोगाः स्युस्तेषां देहे विगर्हिते ॥ ४ ॥
मनोवाक्काययोगैर्ये, ज्ञानस्याऽऽशातनां सदा । कुर्वन्ते मूढमतयः, कारयन्ति परानपि ॥ ५ ॥
तेषां परभवे पुत्रकलत्रसुहृदां क्षयः । धनधान्यविनाशश्च तथाऽऽधिव्याधिसंभवः ॥ ६ ॥ युग्मम् ॥

ॐ श्रीपंचपरमेष्ठिभ्यो नमः ।

श्रीमत्क्षमाकल्याणकोपाध्यायादिविरचितः—

# श्रीसौभाग्यपंचम्यादि-पर्वकथा-संग्रहः ।

## अथ ज्ञानपञ्चमीव्याख्यानम् ॥ १ ॥

श्रीमत्पार्श्वजिनाधीशं,सुराऽसुरनमस्कृतम् । प्रणम्य परया भक्त्या, सर्वाभीष्टार्थसाधकम् ॥ १ ॥
कार्तिकशुक्लपञ्चम्या, माहात्म्यं वर्ण्यते मया । भव्यानामुपकाराय, यथोक्तं पूर्वसूरिभिः ॥ २ ॥ युग्मम् ॥
भुवने हि परं ज्ञानं, ज्ञानं सर्वार्थसाधकम् । अनिष्टवस्तुविस्तारवारकं ज्ञानमीरितम् ॥ ३ ॥
ज्ञानादासाद्यते मुक्तिर्ज्ञानात् स्वर्गोद्भवं सुखम् ॥ लभन्ते प्राणिनो यस्मात्, तज्ज्ञानं स्वर्द्रुमोपमम् ॥ ४ ॥
भव्यैरासाद्यते ज्ञानं, पञ्चम्याराधनाद् ध्रुवम् । अतः प्रमादमुत्सृज्याऽऽराध्या सा विधिना तथा ॥ ५ ॥
मञ्जरीवरदत्ताभ्यां, यथैवाराधिता किल । पञ्चमी भावतोऽथात्र दृष्टान्तः प्रोच्यते तयोः ॥ ६ ॥ युग्मम् ॥

अस्त्यत्र जम्बूद्वीपे दक्षिणार्धभरतक्षेत्रे पद्मपुराभिधं नगरम्, तत्र भुवि विश्रुतोऽजितसेनो नृपो बभूव, तस्य च यशोमती पट्टराज्ञी,



श्रीसुमति साहित्य माला—१६

पाठकावतंसश्रीमत्क्षमाकल्याणोपाध्यायादिविरचितः

# श्रीसौभाग्य-पञ्चम्यादि-पर्वकथा-संग्रहः ।

संशोधकः—मुनि-विनयसागर साहित्यरत्न



प्रकाशकः—

श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय कोटा.



वीर सं० २४७५ ] मूल्यम् २॥) सार्द्धद्वौरूप्यकम् [ वि० सं० २००६



# इति श्रीसौभाग्यपञ्चम्यादि पर्वकथा संग्रहः

पुस्तकें मिलने का पताः—
श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय
जैन प्रिंटिंग प्रेस
कोटा ( राज. )

# श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय

## से प्रकाशित सस्ती–सुन्दर और मनोहर पुस्तकें:—


| | |
|---|---|
| ६. बृहत्पर्युषणा निर्णय | भेंट |
| ७. षट् कल्याणक निर्णय | ,, |
| ८. आत्मभ्रमोच्छेदनभानुः | ,, |
| १०. आगमानुसार मुहपात्तिका निर्णय | ,, |
| १३. कल्पसूत्र हिन्दी भावार्थ | ३) |
| १४. दसवैकालिक सूत्र-मूल-मूलार्थ | १) |
| १६. संस्कृत पर्वकथा संग्रहः | २॥) |
| १७. अनुत्तरोववाई सूत्र मूल-मूलार्थ | भेंट |
| २२. उपासकदशांग सूत्र-मूल-मूलार्थ, टीका-टीकार्थ | २) |
| २५. गौतमपृच्छासार | भेंट |
| २८. चतुर्विंशति जिनेन्द्र स्तवनानि | ,, |
| २९. सामायिक जिनदर्शन विधिः | ,, |
| ३०. चतुर्विंशति जिनस्तुतिः | ,, |
| ३१. राईदेवसी प्रतिक्रमणमूल | ,, |
| ३३. आत्म भावना | ,, |
| ३४. भावारिवारणपादपूर्त्यादि स्तोत्र संग्रहः | ,, |
| ३५. श्रीनेमिदूतम् | १॥) |
| द्वादश पर्व व्याख्यान | २) |

आलापिताश्च–भो पुत्र्यः ! यूयं धर्मं
पुत्रिका अभूवन्, ता महारूपवत्यो गुणवत्यश्चासन्, एकदा वनमध्ये क्रीडन्त्यस्ता गुरुभिः दृष्टा, आलापिताश्च–भो पुत्र्यः ! यूयं धर्मं कुरुध्वम्, युष्माकमायुरेकदिनप्रमाणमेव विद्यते. ताभिरुक्तम्–हे भगवन् ! एकदिनमध्ये को धर्मो भविष्यति, तदा गुरुभिरुक्तम्–यूय-
मद्य शुक्लज्ञानपञ्चमीतपः कुरुध्वम्, अद्यैव दिने पंचम्या उपवासं कृत्वा गृहे देवपूजां च कृत्वा पुण्यस्यानुमोदना कुरुध्वम्, ताभिरपि गृहे गत्वा तथैव कृतम्. अथ तस्मिन्नेव रात्रौ विद्युत्पाताच्चतस्रोऽपि मृत्वा प्रथमदेवलोके देवा जाताः, ततश्च्युत्वा तवैताः पुत्र्यः संजाता।
अथ ताः सर्वा वार्ताः श्रुत्वा राजा जातिस्मरणं लब्ध्वा सपरिवारो रूप्यकुम्भ–स्वर्णकुम्भगुरूं नत्वा निजगृहे समागतः । कियत्काला-
नन्तरं राजा राज्ञी पुत्राः पुत्र्यश्च श्रीवासुपूज्यप्रभोः समीपे दीक्षां गृहीत्वा कर्मक्षयं च कृत्वा मोक्षं गताः । उक्तं च–

रोहिणीतप-पंचमीतप, गुरुआ ए तप जाणी । दुःखित होय करी सुखी होवे, बोले केवलनाणी ॥ १ ॥

॥ इति रोहिणी–अशोकराजकथा सम्पूर्णा ॥ १२ ॥

## इति श्रीपर्वकथा संग्रहः ।

दुःखं न वेत्ति, पुनर्हे अशोकराजेन्द्र ! अस्या उपरि तवाधिकः स्नेहः कुतो वर्तते ? तस्यापि कारणं शृणु—सिंहसेननामा नृपतिः स्वयं सुगन्धाख्यं पुत्रं राज्येऽभिषिच्य सुगुरोःपार्श्वे दीक्षां ललौ, अथ सुगन्धराजोऽपि जिनशासनमाराध्य प्रान्ते समाधिना मृत्वा देवभवं गतः. ततश्च्युत्वा इहैव जम्बूद्वीपे विदेहे पुष्कलावत्यां विजये पुण्डरीकिणीनगर्यां विमलकीर्तिराज्ञः सुभद्राख्यायाः सधर्मिण्याः कुक्षौ चतुर्दशमहास्वप्नसूचितः स देवजीवोऽवातरत् । अथ क्रमेण शुभेऽह्नि सा देवी शुभलक्षणं पुत्रं प्रासूत, तस्य पित्रा अर्ककीर्तिरिति नाम निर्मिमृत, क्रमेण स चक्रवर्ती जातः, राज्यं भुक्त्वा जितशत्रुमुनेः पार्श्वे स दीक्षामादाय दुष्करं तपस्तप्त्वा स्वायुः-क्षये च मृत्वा द्वादशे देवलोकेऽच्युतेन्द्रोऽभूत्. ततश्च्युत्वा त्वमयमशोकराजा जातः, रोहिण्याश्च वल्लभोऽभूः, युवाभ्यां रोहिणीतपःकरणाद् युवयोः परस्परमधिकः स्नेहो जातः अथ त्वं पुत्राणां कारणं शृणु—मथुरायामग्निशर्माख्यो ब्राह्मणो वसति, तस्य सप्त पुत्राः परं ते दरिद्रिणः । एकदा पाटलीनगरे ते सप्ताऽपि भ्रातरो भिक्षार्थं गच्छन्ति, तदा वाटिकामध्ये कश्चिद् राजकुमारः कन्दर्पावतारः क्रीडति. तं दृष्ट्वा शिवशर्मा ब्राह्मणः स्वबान्धवान् वक्ति-भो बान्धवाः ! विधिना कियदन्तरं कृतमस्ति, अयं राजकुमारो मनोवाञ्छितं सुखं भुनक्ति, वयं तु भिक्षार्थं गृहे गृहे भ्रमामः, तदेकेन भ्रात्रोक्तमस्मिन् विषये कस्योपालम्भो दीयते ? पूर्वभवेऽस्माभिः पुण्यं न कृतम्, अनेन राजकुमारेण च सुकृतं कृतम्, अतोऽसौ सुखं भुनक्ति. तदा तैः सर्वैरपि ब्राह्मणपुत्रैः जीवदयायुतं धर्मं पालयित्वा प्रान्ते गुरोः पार्श्वे दीक्षा गृहीता. मृत्वा च ते सप्तमे देवलोके देवा जाताः, ततश्च्युत्वा तव गुणपालादय इमे सप्त पुत्रा अभूवन् । तवाष्टमपुत्रजीवश्च वैताढ्यवासी क्षुल्लक-विद्याधरोऽभूत् । स निरन्तरं नन्दीश्वरद्वीपे शाश्वतीं जिनप्रतिमां अपूजयत्, स विद्याधरो मृत्वा सौधर्मे देवो जातः । ततश्च्युत्वा तवायमष्टमो लोकपालाख्यः पुत्रो बभूव. अथ चतसृणां पुत्रीणां सम्बन्धं शृणु-वैताढ्यपर्वते एको विद्याधर आसीत्, तस्य चत्वारः

तदा मुनिर्वदति-सिंहपुरे सिंहसेनो राजा तस्य कनकप्रभाभिधाना राज्ञी वर्तते, तयोर्दुर्गन्धाख्यः पुत्रोऽभूत्, स क्रमेण यौवनं प्राप्तः, परं कस्यापि मनसि न रोचते, एकदा श्रीपद्मप्रभतीर्थंकरस्तत्रागतः । तं पद्मप्रभं वन्दित्वाऽसौ निजदुर्गन्धत्वकर्मणो विपाकं पृच्छति, तदा श्रीसर्वज्ञप्रभुः कथयति—नागोरनगराद् द्वादशे क्रोशे नीलनामा पर्वतोऽस्ति, तस्योपरि एका शिला तत्रैको मुनिर्मासक्षपणादि तपः करोति, तत्तपःप्रभावाच्च आखेटकस्याखेटकं निष्फलं याति, तदा स लुब्धकस्तस्य मुनेरुपरि ईर्षां करोति । एकदा स ऋषिः पारणार्थं ग्राममध्ये प्राप्तः, तस्मिन् समये तेन लुब्धकेन शिलाया अधोऽग्निं प्रज्वाल्य सा शिला अतीवोष्णा विहिता । अथ स ऋषिः पारणकं विधाय शिलाया उपरि स्थितः, बहुतापात् शुद्धध्यानाच्च स ऋषिः केवलज्ञानं प्राप्य मृत्वा मोक्षं गतः, अथ ऋषिघातात् स लुब्धकः कुष्ठी जातः, यतः—

ऋषिहत्याकरो जीवो, दुःखं भुंजाति भूतले । संसारसागरे घोरे, पीड्यते च पुनः पुनः ॥ १ ॥

पश्चात् मृत्वा स सप्तमीं नरकावनिं गत्वा ततो मत्स्यो भूत्वा गोपालो जातः, परं स दरिद्री जातः, केनचिद् वणिजा च स नमस्कारं शिक्षितः । पश्चाद् दावानलमध्ये ज्वलितः । नमस्कारप्रभावाच्च त्वं राज्ञः पुत्रोऽयं दुर्गन्धोऽभूः । तत्श्रुत्वा जातिस्मरणं प्राप्य स प्रश्नं पृच्छति-हे भगवन् ! कथमहमथ सुगन्धो भवामि ? तस्योपायं कृपां कृत्वा कथयत, तदा श्रीतीर्थंकरेण भणितम्-त्वं सप्तमासाधिकानि सप्तवर्षाणि यावद् रोहिणीतपः कुरु, पश्चाच्च तस्य तपसः उद्यापनं कुरु, तत्श्रुत्वा तेन रोहिणीतपः कृतम्, यस्य प्रभावात् स सुगन्धोऽभूत् । इति कथां श्रुत्वा सा दुर्गन्धा रोहिणीतपो विधिपूर्वकं कृत्वा सुगन्धा जाता. पश्चाद् मृत्वा सा देवी अभूत्. ततश्च्युत्वा चम्पायां श्रीवासुपूज्यस्य मघवापुत्रस्य पुत्रिकेयं रोहिणी नाम्नी तव राज्ञी जाता, पूर्वभवकृततपःप्रभावाद् इयमाजन्म यावद्

तीर्थं पुण्यपात्रमस्ति, तस्य दर्शनमपि महते पुण्याय. यत उक्तम्—

साधूनां दर्शनं पुण्यं, तीर्थभूता हि साधवः। तीर्थं फलति कालेन, सद्यः साधुसमागमः ॥ १ ॥

तदस्मै निःस्पृहाय मुनिसत्तमाय दत्तं दानं महते फलाय भवेद्, इति ध्यात्वा राजा स्वप्रियां प्राह–हे वरानने ! अस्मै मुनये वलित्वा दानं देहि, तत्श्रुत्वा क्रीडान्तरायं मत्वा बहिःप्रमोदभाग् अन्तश्च दुष्टा सा गृहं प्रति ववले, आगत्य गृहे द्वेषवशात् तया कटुतुम्बिकाशाकं मुनये दत्तम्, मुनिना तेनाहारेण पारणकं कृतम्, तद्भक्षणाच्च मुनिः पंचत्वं प्राप्तः शुभध्यानाच्च स देवलोके देवोऽभूत्, तां वार्तां श्रुत्वा राज्ञा राज्ञी स्वदेशतो निष्कासिता, सा सप्तमे दिने वराकी कुष्ठिनी जाता, चिरं जनैर्निन्द्यमाना सा मृत्वा षष्ठं नरकं जगाम। तत उद्धृत्य तिरश्चां योनौ समुत्पन्ना, ततो दुःखप्रचुरे सप्तमे नरके. एवं सर्वेषु नरकेषु सा पापा भ्रान्ता, ततः सा सर्पिणी, उष्ट्री, शृगाली, कुक्कुटी, तथा शूकरी, ततो गृहगोधा, जलौका, मूषिका, काकी, शुनी, बिलाडी, ततो रासभी, ततो गौः जाता तेषु भवेषु प्रायशः अग्निशस्त्रघाताद्यैः मृतिरभूद्, धेनुभवे स्वान्त्यसमये गुरूदितं नमस्कारं श्रुत्वाऽनुमोदयामास, मृतिं चाप, ततो नमस्कारप्रभावेण सा दुर्गन्धा दुर्भगा च तव तनया अभूत्। ततो दुर्गन्धा निजपूर्वभवं श्रुत्वा करौ योजयित्वा पृच्छति–हे स्वामिन् ! एतस्माद् दुःखादहं कथं निःसरिष्यामि ? तत् कथ्यतां. तदा मुनिना उक्तम्–त्वं दुःखभंजकं रोहिण्या व्रतं कुरु, तयोक्तम्–हे भगवन् ! केन विधिनाहं तद्व्रतं करोमि, मुनिनोक्तम्, शृणु—रोहिणीनक्षत्रदिने श्री वासुपूज्यजिनबिम्बं पूजयित्वा सप्तमासाधिकं सप्तवर्षं यावद् उपवासं कुरु एवं शुभध्यानयुततपःप्रभावाच्च शुभं भविष्यति, पश्चाच्च त्वया तत्तपस उद्यापनं विधेयं येन तव सर्वं दुःखं यास्यति, सुगन्धराजवत्. तत्श्रुत्वा दुर्गन्धा मुनिं प्रति पृच्छति–हे भगवन् ! तस्य सुगन्धराजस्य वृतान्तं मयि कृपां विधाय कथयत,

लोकपालाख्यं राजा निजहस्तेन भूपावपातयत् । तदा तत्रस्थाः सर्वेजनास्तं तथा पतन्तं दृष्ट्वा हाहारवं कर्तुं लग्नाः परं रोहिण्या हृदि किंचिन्मात्रमपि दुःखं न जातम्, इतस्तं पतन्तं बालकं नगराधिष्ठितदेवेन धृत्वा सिंहासने स स्थापितः, तद् दृष्ट्वा सर्वे जनाश्चमत्कृताः सन्तो विचारयामासुः-नूनमियं रोहिणी धन्यैव या दुःखस्य वार्तामपि न जानाति ।

इतश्च तत्र श्रीवासुपूज्यतीर्थंकरस्य रूप्यकुम्भ-स्वर्णकुम्भनामानौ द्वौ शिष्यौ ज्ञानवन्तौ समागतौ, तदा राजा परिवारयुतस्तौ वन्दितुं गतः, गुरुभ्यां च देशना दत्ता, देशनाश्रवणानन्तरं राज्ञा पृष्टम्-भो भगवन् ! अनया रोहिण्यैवंविधं किं तपः कृतं येनेयं दुःखस्य वार्तामपि न जानाति, एतस्या अष्टौ पुत्राः चतस्रश्च पुत्र्यो जाताः सन्ति, तथा ममापि तस्या उपरि-अतीव स्नेहो वर्तते, अतः तस्याः कथां युवां कृपां विधाय कथयतम्, तत्श्रुत्वा गुरुः कथयति. अस्मिन्नेव नगरे धनमित्रनामा श्रेष्ठी वसति, तस्य धनमित्रा नाम्नी च भार्याऽस्ति, तस्या एका दुर्गन्धा नाम्नी पुत्री, सा कुरूपा दुर्भगा च जाता एवंविधां तां कुरूपां दृष्ट्वा कोऽपि द्रव्येश्वरो नो परिणयति, तदा पित्रा एकं मार्यमाणं श्रीषेणाभिधं चौरं मोचयित्वा तस्या दुर्गन्धायाः स स्वामीकृतः, सोऽपि रात्रौ दुर्गन्धां त्यक्त्वा नष्ट्वा गतः, तदा श्रेष्ठी विषादं करोति, विलपन्ती पुत्रीं प्रति श्रेष्ठी कथयति, हे पुत्रि ! त्वं विलापं मा कुरु, गृहद्वारि स्थिता दानं देहि धर्मं च कुरु येन तव दुष्कर्मदोषः प्रलीयते, अथ सा तदंगीकृत्य प्रत्यहं दानं ददाति । अथैकदा कश्चिद् ज्ञानी गुरुस्तत्र समागतः, तदा धनमित्रेण तं गुरुं वन्दित्वा तस्याः कन्यायाः स्वरूपं पृष्टम्. गुरुर्भणति-गिरिनारनगरे पृथिवीपालाभिधो राजाऽऽसीत्, तस्य सिद्धिमत्यभिधाना राज्ञी वर्तते, अथैकदा स राजा निजराज्ञीसहितो वने क्रीडां कर्तुं याति, तस्मिन् समये कश्चिद् मासक्षमणपारणकः सागरनामा मुनिः समागच्छति, भिक्षार्थमायान्तं मुनिं सागरं ऐक्षिष्ट, दृष्ट्वा विचारयति-एष साधुर्गुणाकरो महा-

च जाता। अथ क्रमेण यौवनावस्थां प्राप्ता, ईदृशीं तां दृष्ट्वा राजा चिन्तयति-नूनमियं रोहिणी वरयोग्या जाताऽस्ति. अथ राज्ञा स्वयंवरमण्डपं मण्डयित्वा सर्वेऽपि राजकुमारा आकारिताः तेऽपि च मण्डपे समागत्य स्थिताः। तस्मिन्नवसरे रोहिण्यपि स्नानं विलेपनं च कृत्वा क्षीरोदकसदृशे श्वेतवस्त्रे परिधाय मुक्ताभरणैरलंकृता साक्षाद् देवीव शिबिकायां स्थित्वा सखीभिः परिवृता तत्रागता। अथैका सखी तां रोहिणीं पुरस्कृत्य तस्या अग्रे राजकुमाराणां नाम-गोत्र-बल-वयो-यशः-प्रभृतीनां वर्णनं करोति। अथ तयाऽन्यानपि राजकुमारान् वर्जयित्वा नागपुरराज्ञो वीतशोकस्य पुत्रोऽशोककुमाराभिधो वृतः, तस्य कण्ठे च तस्या निजवरमाला क्षिप्ता, ततोऽन्ये सर्वेऽपि राजकुमाराः सहर्षा मिलित्वा तां च तया सह विवाह्य ततो भोजन-वस्त्र-ताम्बूलादि गृहीत्वा स्वस्वगृहे गताः। अशोककुमारोऽपि तत्र कतिचिद् दिनानि स्थित्वा सवधूको हस्त्यश्ववस्त्राभरणादियुतः प्रस्थाय नागपुरसमीपे समागतः। तदा वीतशोकराज्ञा तस्य पुरप्रवेश-महोत्सवः कृतः। कुमारोऽपि रोहिण्या सह विषयसुखानि भुनक्ति। अथैकदा शुभे दिनेऽशोककुमाराय राज्यं दत्त्वा वीतशोको राजा दीक्षां गृहीतवान्। ततोऽशोकराजा सुखेन राज्यं पालयति। क्रमेण अशोकराज्ञोऽष्टौ पुत्राश्चतस्रश्च पुत्रिका जाताः। अथैकदा रोहिण्या सहितो राजा सप्तम्यां भूम्यां गवाक्षे स्थितो लोकपालाख्यं पुत्रमुत्संगे धृत्वा क्रीडयति। तस्मिन् समये नगरे कस्याश्चित् स्त्रियः पुत्रो मृतः। सा स्त्री रुदती विलापांश्च कुर्वती तस्मिन्न मार्गे समागता। तां दृष्ट्वा रोहिण्या राज्ञे पृष्टम्-भो महाराज! किमिदं नृत्यम्? राजा जगाद-हे प्रिये! त्वं साहंकारं वचनं मा ब्रूहि, रोहिण्योक्तम्-स्वामिन्नहमहंकारं न करोमि, एवंविधं नृत्यं मया कदापि न दृष्टमतोऽहं पृच्छामि। तदा राज्ञोक्तम्-एतस्याः स्त्रियः पुत्रो मृतोऽस्ति, अतएवेयं रोदनं करोति। रोहिण्योक्तम्-स्वामिन्! अस्यै रोदनं केन शिक्षितं भवेत्?, तत् श्रुत्वा राज्ञोक्तम्-त्वामप्यहं रोदनं शिक्षयामि। इत्युक्त्वा रोहिण्युत्संगस्थं तस्या लघीयांसं पुत्रं

वाचानाचार्यवर्यस्य, रामचन्द्रगणेर्मुदा । शिष्येणाऽऽजिमगंजे च चतुर्मासीस्थितेन वै ॥ ४ ॥
पाठकमेदचन्द्रेण, रायमल्लकवेर्मुदा । पठनार्थमिदं रम्यं, कृतं शुभतराशया ॥ ५ ॥ युग्मम् ।

॥ इति श्रीदीपमालिकाव्याख्यानं सम्पूर्णम् ॥ ११ ॥

## अथ रोहिणी व्याख्यानं प्रारभ्यते ॥ १२ ॥



उच्छिट्ठमसुन्दरयं, भत्तं तह पाणियं च जो देइ । साहूणं जाणमाणो, भुत्तं पि न जिज्जए तस्स ॥ १ ॥

व्याख्या—यो जीव उच्छिष्टमसुंदरं च भक्तं तथा पानीयं जानन् सन साधुभ्यो ददाति, तस्य भुक्तमप्यन्नं न जीर्यते, तस्य शरीरेऽजीर्णरोगो भवति, यथा—श्रीवासुपूज्यस्य मघवाभिधपुत्रस्य पुत्रिकाया रोहिण्या जीवः पूर्वभवे दुर्गन्धाभिधाना कुष्ठिनी जाता, साधोः कटुतुंबकाहारदानात् ॥ १ ॥ रोहिणीकथा चेत्थं—

श्रीवासुपूज्यमानम्य, तथा पुण्यप्रकाशकम् । रोहिण्याश्च कथायुक्तं, रोहिणीव्रतमुच्यते ॥ १ ॥

श्रीचंपानगर्यां श्रीवासुपूज्यस्य पुत्रो मघवाभिधो राजा राज्यं करोति, तस्य लक्ष्मी नाम्नी राज्ञी सुशीला सदाचारा च वर्त्तते, तस्या अष्टौ पुत्राः सन्ति, अष्टानां पुत्राणामुपर्येका रोहिणी नाम्नी पुत्री वर्त्तते, सा चतुःषष्टिकलावती रूपलावण्यवती सौभाग्यगुणवती

तद्रात्रौ भावोद्योतो गतः, ततो लोकैरुद्योतकरणार्थं स्वस्वगृहे रत्नमयी दीपमालिका कृता, तद्दिनाद् लोकमध्ये दीपमालिकापर्वणः प्रसिद्धिर्जाता । अथ यद्रात्रौ वीरप्रभुर्मुक्तिं गतः, तदा समस्तसंघ उद्विग्नः स्थितः, संघस्य मुखाब्जं म्लानतां गतम्, तस्मिन् समये गौतमस्वामिनः केवलज्ञानमुत्पन्नं तदा समस्तोऽपि संघो हृष्टो जातः । इन्द्रः प्रभोर्निर्वाणोत्सवं कृत्वा प्रभोर्देहसंस्कारं करोति, ततः केचिद् देवाः प्रभोर्दंष्ट्रां लात्वा गच्छन्ति, केचिद् देवा दन्तान् गृह्णन्ति, केचिद् भस्म गृह्णन्ति, शेषं क्षीरसमुद्रे प्रवाहयंति, पश्चात् प्रातःकाले गौतमस्वामिनः केवलज्ञानमहोत्सवं कृत्वा सर्वे देवाः संभूय नन्दीश्वरद्वीपेऽष्टाह्निकं महोत्सवं कृत्वा स्वस्मिन् स्वस्मिन् स्थाने गच्छन्ति । अथ द्वितीयादिने सुदर्शना भगिनी शोकदूरीकरणार्थं नन्दिवर्धनं स्वगृहे भोजनं कारयति, तस्माद् एषा द्वितीया 'भाईबीज' इति प्रसिद्धिं प्राप्ता । प्रथमं लोकै रत्नमया दीपाः कृताः पश्चाल्लोकैः रूप्यमयाः कृताः । अथ पंचमकालप्रभावतो मृत्तिकामया दीपाः कुर्वन्ति । एवमार्यसुहस्तिसूरिर्वक्ति–हे संप्रते ! इदं दीपमालिकापर्व सर्वेषामुत्तमं कथितम्, यथा वृक्षाणां मध्ये कल्पवृक्षः, देवानां मध्ये इन्द्रः, राज्ञां मध्ये चक्रवर्ती, नक्षत्राणां मध्ये चन्द्रमाः, तेजस्विनां मध्ये सूर्यः, सर्वधातूनां मध्ये सुवर्णम्, काष्ठमध्ये चन्दनम्, वनमध्ये नन्दनवनं तथा सर्वपर्वणां मध्ये दीपमालिकापर्व । अस्मिन् दिने श्रीवीरप्रभुर्मुक्तिं गतः, पुनः श्रीगौतमस्य केवलज्ञानमुत्पन्नम् अतो हे राजन् ! इदं दीपमालिकापर्व सिद्धिदायकं भवतु ।

षण्नन्दवसुचन्द्राब्दे ( १८९६ ), ज्येष्ठमासे सिते दले । चन्द्रघस्रे त्रयोदश्यां, साध्ययोगे हितावहे ॥ १ ॥
दीपालिपर्वणो व्याख्या, गद्यबन्धेन निर्मिता । अपशब्दादिदोषश्चेत्, शोधनीयः सदा बुधैः ॥ २ ॥
स्वच्छे खरतरे गच्छे, श्रीसौभाग्यगणाधिपे । धर्मराज्यं कलावर्ये, प्रकुर्वति सुविस्तरे ॥ ३ ॥

अमावास्यादिने उपवाससहिताः पौषधव्रतमंगीकृतवन्तः तद्रात्रौ भावोद्योततीर्थंकररहितं दृष्ट्वा ते राजाभिः स्वकीयगृहाद् रत्नान्याना-
य्य द्रव्योद्योतः कृतः, पौषधः पारितः, यद्रात्रौ तीर्थकरो मुक्तिं गतस्तद्रात्रौ देवानां गमनागमनेन महानुद्योतः संजातः, अस्मिन्नवसरे
देवानां मुखाद् वीरप्रभुमोक्षगमनं श्रुत्वा श्रीगौतमस्वामी मनसि चिन्तितवान् " अहो ! भगवता मत्तश्छलं कृतं स्वस्य मुक्तिं ज्ञात्वा
अहं दूरीकृतः, ज्ञातं भगवता मम पार्श्वे केवलज्ञानं मार्गयिष्यति, बालवत् कदाग्रहं करिष्यति, वस्त्राञ्चलं गृहीत्वा स्थास्यति, हे स्वा-
मिन् ! मया ईदृग् लोभी त्वं न ज्ञातः, केवलज्ञाने दत्ते तु भवतां किमपि न न्यूनमभविष्यत्, हे स्वामिन् ! तवाहं परमसेवकोऽभूवम्,
मां निराशं त्यक्त्वा गतः, हे भगवन् ! महतामेषा वार्ता न युक्ता, हे प्रभो ! बलाद् भवतोऽहं केवलज्ञानं नालप्स्यम भवता दत्तमेव
केवलज्ञानमंग्यकरिष्यम् , तथापि हे स्वामिन् ! अस्मिन्नवसरे अन्तसमये स्वसमीपे रक्षणं युक्तमभूद् , अस्मिन्नवसरे मम प्रेषणं तव
न युक्तम् , पुनर्हे प्रभो ! मम केवलज्ञानस्य तृष्णा नासीत् , भवतां दर्शनस्य तृष्णा जाताऽभूत्, अधुना तव दर्शनमपि मम दूरी-
भूतम् , हे स्वामिन् ! अथाहं कस्य वीर ! इति कथयिष्यामि, मम मनःसंदेहं कस्य समीपे पृच्छाविषये करिष्यामि, को मम सन्देहं
भंक्ष्यति, हे स्वामिन् ! पुनर्मम हे गौतम ! हे गौतम ! इति कः कथयिष्यति ?" एवं विलापं कुर्वन् मनसि विचारयति-रे जीव !
वराक ! त्वं ग्रथिलो जातः, स तु नीरागी त्वं तु सरागी, वीतरागेण रागकरणं न युक्तम् , एकांगिप्रीतिकरणे दीपे पतंगवद् दुःखी
भविष्यति, यस्य नाम वीतरागः स कस्मिन् रागं करोति स भगवान् स्वस्य वीतरागं हि नाम सत्यं कृतवान् , अहमज्ञासिषं भगवान्
मम नाम पुनः पुनः भृते तर्हि ममोपरि रागं रक्षति, परमाश्विनमेघाडम्बरवद् अन्तं दत्त्वा गतः स क्व अहं क कस्य कोऽपि नास्ति,
एवं मोहनीयं निराकृत्य क्षीणमोहं गुणस्थानकं गत्वा तत्कालमेव श्रीगौतमस्य केवलज्ञानमुत्पन्नम् । अथ यद्रात्रौ प्रभुर्मुक्तिं गतः

पक्षे, उपशमदिने, देवानन्दानाम्न्यां रात्रौ, सर्वार्थसिद्धिमुहूर्त्ते, नागे करणे, पद्मासने स्थिते तुर्यारकान्ते एतत्समये इन्द्रासनं चकम्पे, अवधिज्ञानेन हरिः प्रभोर्निर्वाणकल्याणसमयं ज्ञात्वा आगच्छति, अत्यन्तमश्रुपूर्णाक्षो विषण्णश्च सन् हस्तौ संयोज्य वक्ति—

गर्भे जन्मनि दीक्षायां, केवले च तव प्रभो ! । हस्तोत्तरं क्षणेऽधुना, तद्गन्ता भस्मको ग्रहः ॥ १ ॥

अतो हे स्वामिन् ! करुणानिधान ! एकक्षणमात्रमायुर्वृद्धिं स्वस्य कुरु, किं कारणम् ? भवतो जन्मराशेरुपरि भस्मग्रह आगतोऽस्ति स द्विसहस्रवर्षं यावत् स्थास्यति, अतो जिनशासनस्य पूजा प्रभावना मन्दा भविष्यति, तेन हेतुना आयुर्दीर्घं कुरुष्व, भवतो दृष्टिपातस्तस्य तेजो निष्फलं यास्यति, तदा भगवान् वक्ति-हे इन्द्र ! एषा वार्ता कदाऽपि नाऽभूत्, न भवति, न चापि भविष्यति, यदायुर्दीर्घतरं भवति, पुनर्भाविपदार्थस्य नाशो नास्ति, तदुत्तीर्णे तु देवा अपि दर्शनं दास्यन्ति, विद्यामन्त्राणि चाल्पेन जापेन प्रभावं दर्शयिष्यन्ति, जातिस्मरणादिभावाः किंचित् प्रकटयिष्यन्ति, तदनन्तरमेकोनविंशतिसहस्रवर्षं यावद् जिनधर्मो वर्तिष्यति, दुःषमकालपर्यन्तम्, एवं कथयित्वा स्थितः, स्वस्य निर्वाणं समीपं ज्ञात्वा पुण्यफलविपाकानि पञ्चपञ्चाशदध्ययनानि तथा पापफलविपाकानि पञ्चपंचाशदध्ययनानि च जगाद, तथा षट्त्रिंशदपृष्ठव्याकरणादि [उत्तराध्ययनसूत्राऽध्ययनानि] चाभिधाय प्रधानं नामाध्ययनं [ मरुदेवाऽध्ययनं ] जगद्गुरुरकथयत्, पुनः स्वामिनो मोक्षं समीपे विज्ञाय आसनप्रकम्पतस्तत्र सुराऽसुरेन्द्राः सपरिच्छदाः सर्वेऽपि ईयुः ॥ अथ प्रभुः शैलेशीकरणं कृत्वा पञ्चह्रस्वाक्षरोच्चारमितकालेन तुर्येण ध्यानेन एरण्डफलवद् बन्धाभावाद् ऊर्ध्वगतिः सन् यथास्वभावऋजुगत्या मोक्षमुपाययौ । तस्मिन् समयेऽनुद्धरिककुन्थुराशिः समुत्पन्ना, तदा बहुसाधुभिर्विचारितम्–'अद्यदिनादारभ्य संयमो दुराराध्यो भविष्यति' इति ज्ञात्वाऽनशनं कृतम्, तस्मिन् दिने नवमल्लकि–नवलेच्छकिजातीयाः काशी–कोशलदेशपतयोऽष्टादश गणराजानः

भविष्यन्ति, एकस्तीर्थंकरः, एकश्चक्रवर्ती, एवं द्वौ चतुर्थारके भविष्यतः, द्वयोश्चतुरशीति-पूर्वलक्षवर्षायुर्भविष्यति, ततः कल्पवृक्षोत्पत्तिर्भविष्यति सर्वे युगलिका भविष्यन्ति. पाश्चात्यचतुर्विंशतितमजिनस्याग्रतनप्रथमजिनस्याष्टादशकोटाकोटिसागरोपमानामन्तरं भविष्यति. उत्सर्पिणी, अवसार्पिणीकाले एकत्रीकृते एकं कालचक्रं भवति, तानि कालचक्राणि अनन्तानि गतानि, पुनरस्मिन् भरतक्षेत्रे अग्रेऽनन्तानि कालचक्राणि भविष्यन्ति, एवं श्रीवर्धमानः प्रभुर्गौतमस्य कालस्वरूपं निरूप्य समवसरणाद् निर्ययौ, हस्तिपालनरेन्द्रस्य शुल्कशालायां च जगाम ॥ स्वामी तद्दिनयामिन्यां आत्मनो मोक्षं विदित्वा दध्यौ-अहो ! गौतमस्य मयि स्नेहोऽधिकः, य एवास्य महात्मनः केवलज्ञानान्तरायः, स छेद्य इति विज्ञाय गौतममिति जगाद्-अपरस्मिन् ग्रामे देवशर्मा द्विजोऽस्ति, स त्वया प्रतिबोधं प्राप्स्यति, तस्मात् तत्र हे गौतम ? त्वं गच्छ. हे स्वामिन् ! आदेशः प्रमाणमित्युक्त्वा प्रणम्य च गौतमस्तत्र गच्छति. अथ प्रभोः परिवारं वदति-स्वहस्तदीक्षिताः साधवश्चतुर्दशसहस्र ( १४००० ) प्रमाणा अभूवन्, षट्त्रिंशत्सहस्र ( ३६००० ) प्रमाणाः साध्व्यश्च संजाताः, एकोनषष्टिसहस्राधिकलक्ष ( १५९००० प्रमाणाः श्राद्धाश्च संजाताः, द्विगुणाः ( ३१८००० ) श्राविका अभूवन् , चतुर्दशाधिकत्रिशत ( ३१४ ) प्रमाणाः चतुर्दश पूर्वधारिणो जाताः, त्रयोदशशत ( १३०० ) प्रमाणा अवधिज्ञानिनो जाताः, सप्तशत ( ७०० ) वैक्रियलब्धिधारिणो मुनयः संजाताः, सप्त शत ( ७०० ) केवलिनः संजाताः, पञ्चशत ( ५०० ) विपुलमतयो संजाताः, चतुःशत मिता ( ४०० ) वादिनः संजाताः, अष्टशत ( ८०० ) मिता अनुत्तरवासिनः। एवं समस्तसाधुसाध्वीसहितः श्रीवीरप्रभुः षष्ठतपोयुक्तः त्रिंशद्वर्षाणि गृहवासे तस्थौ, सार्द्धद्वादशवर्षाणि पक्षाधिकानि छद्मस्थावस्थायां स्थितः, त्रिंशद् वर्षाणि यावत् केवलिपर्याये स्थितः, एवं द्वासप्ततिवर्षाणि आयुः प्रपाल्य कार्त्तिकाऽमावास्यानिशायाः पश्चिमे क्षणे स्वातिनक्षत्रे, द्वितीये चन्द्रसंवत्सरे, प्रीतिवर्धन-

पोट्टिलाभिधः ९, दशमो शतकस्य जीवः शतकीर्तिनामा जिनेश्वरः १०, देवकीराज्ञीजीवः एकादशः सुव्रताभिधो जिनो भविष्यति ११, कृष्णवासुदेवस्य जीवः अममाख्योऽर्हन्न द्वादशो भविष्यति १२, सत्यकी विद्याधरस्य जीवोऽर्हन् निष्कषायः त्रयोदशः १३, बलभद्रस्य जीवो निष्पुलाकश्चतुर्दशो भविष्यति १४, रोहिणीजीवो निर्ममः पंचदशो जिनः १५, सुलसाश्राविकाया जीवश्चित्रगुप्तो जिनः षोडशो भविष्यति १६, रेवतीश्राविकाया जीवः समाधिनामा सप्तदशो जिनो भविष्यति १७, शतालीश्रावकस्य जीवः अष्टादशोऽर्हन् संवराभिधः १८, द्वीपायनजीवः एकोनविंशोऽर्हन् यशोधरः १९, कपायस्य जीवो विजयो विंशतितमः २०, एकविंशो जिनो मल्लो यः पुरा नारदोऽभवत् २१, अम्बडस्य जीवो द्वाविंशो देव तीर्थंकरः २२, त्रयोविंशः श्राद्धरमस्य जीवोऽनन्तवीर्यो भविष्यति २३, स्वातिजीवश्चतुर्विंशो भद्रकृन्नाम तीर्थंकरो भविष्यति २४, एते आगामिकाले चतुर्विंशति तीर्थंकरा भविष्यन्ति, एषामायुः कल्याणकान्तर–लाञ्छन–वर्णाः पश्चानुपूर्व्या भविष्यन्ति, वर्तमानजिनवत्। अथ भाविनश्चक्रवर्तिनः कथ्यन्ते–दीर्घदन्तः १, गूढदंतः २, शुद्धदंतः ३, श्रीचन्द्र ४, श्रीभूतिः ५, श्रीसोमः ६, पद्मः ७, महापद्मः ८, कुसुमः ९, विमलः १०, विमलवाहनः ११, रिष्टः इत्यपरनामा भरतो द्वादशः १२। अथ वासुदेवानाह–नन्दी १, नन्दमित्रः २, सुन्दरबाहुः ३, महाबाहुः ४, अतिबलः ५, महाबलः ६, बलः ७, द्विपृष्ठः ८, त्रिपृष्ठः ९, इत्यात्मकाः। अथ प्रतिवासुदेवा उच्यन्ते–तिलकः १, लोहजंघः २, वज्रजंघः ३, केशरी ४, बली ५, प्रह्लादः ६, अपराजितः ७, भीमः ८, सुग्रीवः ९, इत्यात्मकाः। अथ बलदेवा उच्यन्ते–जयः १, विजयः २, भद्रः ३, सुप्रभः ४, सुदर्शनः ५, नन्दः ६, नंदनः ७, पद्मः ८, संकर्षणः ९, इत्यात्मकाः। एवमेते त्रिषष्टिशलाकाः * पुरुषा भविष्यन्ति, तेषां मध्ये एकषष्टि शलाकाः पुरुषास्तृतीयारके

*—प्रत्यंतरे त्रिषष्टिशलाकाः पुरुषा नामांतरेण अपि दृश्यते तत्त्वं तु ज्ञानिनो विदन्ति।

पंचत्रिंशतिदिनं यावद् मेघो वर्षिष्यति, तदा वृक्षौषधिलताधान्यप्रमुखाः स्वयं निष्पत्तिं यास्यन्ति. तान् दृष्ट्वा मनुष्या बिलेभ्यो बहिर्निःसरिष्यन्ति, भरतपृथिवी पुष्पफलादियुक्ताभूत्, तदा फलादीनि भक्षिष्यन्ति, अतः परं मांसं न भक्ष्यम्. यथा यथा काल एष्यति तथा तथा रूपसंहननायूंषि धान्यादीनि च भारते वर्धिष्यन्ति, सुखा वाताः ऋतवः सलिलाश्च भविष्यन्ति, तिर्यञ्चो मनुष्याश्च गतरोगाः क्रमेण भविष्यन्ति, द्वितीयारकप्रान्ते मध्यदेशे भरतावन्यां सप्त कुलकरा भविष्यन्ति—तत्र प्रथमो विमल-वाहनः, द्वितीयः सुदामः, तृतीयः संगमः, चतुर्थः सुपार्श्वः, पंचमो दत्तः, षष्ठः सुमुखः सप्तमः समुचिः एते सप्त कुलकरा भविष्यन्ति. तत्र जातिस्मृतिपूर्वं विमलवाहनो राज्यहेतवे ग्रामान्, पुरादीनि च निवेशयिष्यति, राजा विमलवाहनो गोऽश्वादिसंग्रहं करिष्यति, शिल्पानि व्यवहारं लिपिर्गणितानि च व्यञ्जयिष्यति, दुग्धदध्यादौ शस्ये ज्वलने चोत्पन्ने सति हितकामी राजा प्रजानां रन्धनाद्युपदेशं दास्यति, एतत्सर्वं द्वितीयारके भविष्यति । अथ तृतीयारकस्य नवाधिकाशीतिपक्षे गते सति द्वारपुरनगरे समुचिराज्ञो भद्रायां महादेव्यां चतुर्दशस्वप्नसूचितो नन्दनः श्रेणिकजीव आदितीर्थकृत् पद्मनाभाभिधो जन्मादिना महावीरतुल्यो भविष्यति, कथंभूतः पद्मनाभ ? सप्तहस्तशरीरोन्नतः काञ्चनवर्णकायः सिंहलांछनो द्वासप्ततिवर्षायुः प्रथम-तीर्थकरो भविष्यति, अतः परं पूर्ववत् प्रातिलोम्येन पूर्वार्हत्समा अमी सर्वे क्रमाद् जिनेश्वरा भविष्यन्ति, तत्र श्रेणिकराज्ञो जीवः पद्मनाभो जिनेश्वरः १, श्रीमहावीरस्वामिनः पितृव्यः सुपार्श्वजीवः सूरदेवो द्वितीयः जिनेश्वरः २, तृतीयो कोणिकनृपपुत्र उदायिनो जीवः सुपार्श्वः ३, पोटिलाऽणगारस्य जीवः चतुर्थः स्वयंप्रभः ४, दृढायुश्रावकस्य जीवः पंचमः सर्वानुभूतिः ५, कार्तिकस्य षष्ठोऽर्हन् देवश्रुताभिधः ६, सप्तमो संवरश्रावकस्य जीव उदयाह्वयः ७, अष्टमः आनंदस्य जीवः पेढाल इति नामा ८, नवम सुनंदस्य जीवः

शिरोऽर्तिप्रमुखा मनुष्याणां महारोगा भविष्यन्ति, अंगारसदृशा भूमिर्भविष्यति, गिरि-नदी-गर्तादिका जलेन समीभविष्यन्ति, जल-स्थलचारिणः तिर्यंचो दुःखेन स्थास्यन्ति, क्षेत्र-वनाऽऽराम-लता-तरु-तृणानि क्षयं यास्यन्ति, वैताढ्य-ऋषभकूट-गंगा-सिन्धूर्विमुच्य जलेन सर्वे समा भविष्यन्ति, भरतभूमिः कदाचिद् धूलिबहुला, कदाचिद् सार्द्रकर्दमा भाविष्यति, एकहस्तमानाः, कठोरांगाः, दुष्टवर्णाः निष्ठुरवचनाः, रोगार्ताः, क्रोधिनः, घण्टावच्चिपटनासिकाः, निर्लज्जाः, वस्त्ररहिता नराः स्त्रियश्च भविष्यन्ति, नराणां विंशतिवर्षायुः स्त्रीणां च षोडशवर्षायुर्भविष्यति, षड्वर्षा स्त्री गर्भान् धारयिष्यति दुःप्रसवा च. स्थविरा तु षोडशाब्दा बहुसुतेन मातृका भविष्यति. रथचक्रयोर्मध्ये यत्प्रमाणा धरित्री भवति तत्प्रमाणं गंगासिन्ध्वोः पानीयं वहिष्यति, पुनर्वैताढ्यगिरौ द्वासप्ततिनद्युभयतटभूमिषु बिलानि सन्ति तत्र तिर्यञ्चो मनुष्याश्च बीजमात्रतया भविष्यन्ति मांसाहारनिरताः, निर्घृणाः, निर्विवेकाः तस्मिन् काले मनुष्यादयः समस्ता भविष्यन्ति, बहुमत्स्य-कच्छपादिभिर्व्याप्ते गंगा-सिन्धू भविष्यतः, पुनर्नराद्यास्तत्रैत्य निशायां मत्स्यादीनि कृष्ट्वा स्थले मोक्ष्यन्ति, दिवा सूर्यत्विषा पक्वानि मत्स्यादीनि निशान्तरे खादिष्यन्ति, एवं निरन्तरं भोक्ष्यन्ति, यस्मात् तस्मिन् काले दध्याधिकं नास्ति, न च पुष्पफलादिकं, च चान्नं, न च शय्यासनादिकम्, एवं भरतैरवतेषु दशस्वपि दुःषमकालो भविष्यति। अथाग्रे उत्सर्पिण्यां षष्ठारकसदृशः प्रथममारको भविष्यति, उत्सर्पिण्यामेकविंशतिसहस्रवर्षप्रमाणे प्रथमारके गते द्वितीयारकोऽपि एतत्प्रमाणो भविष्यति। अथ द्वितीयारकप्रान्ते पुष्करावर्तमेघः सप्ताहोरात्र यावद् वर्षिष्यति तस्मात् पृथिवीतापो यास्यति, द्वितीयः क्षीरोदनामा मेघो वर्षिष्यति तस्माद् धान्यनिष्पत्तेर्योग्या भविष्यति, तृतीयो घृतोदकमेघो वर्षिष्यति तस्मात् पृथिवी सचिक्कणा भविष्यति, चतुर्थः शुद्धोदकमेघो वर्षिष्यति, तस्मादौषधिर्निष्पत्तिं यास्यति, तदा पंचमो रसोदकमेघो वर्षिष्यति, तस्मात् पृथिव्यां रसोत्पत्तिर्भविष्यति. एवं

केचिदाचार्या एवं वदन्ति—पञ्चभरतै-रवतयोः संघस्य प्रमाणं नत्वेकस्य, केचिदाचार्याः पञ्चभरतस्य संघप्रमाणं वदन्ति, केचित् पुनः एकभरते संघप्रमाणं वदन्ति, तत्त्वं तु ज्ञानिगम्यम्. पुनः पञ्चमारकप्रान्ते द्विहस्तशरीरप्रमाणाः स्वर्गात् च्युत्वा गृहवासे द्वादश वर्षाणि श्रामण्ये चत्वारि वर्षाणि, आचार्यपदे चत्वारि वर्षाणि स्थित्वा विंशतिवर्षायुः प्रपाल्य दुप्पसहसूरयः सौधर्मस्वर्गे गमिष्यंति, कथंभूता दुप्पसहसूरयः ? दशवैकालिक-जितकल्प-आवश्यकाऽनुयोगद्वार-नन्दीसूत्रधारका इन्द्रादिभिर्नताः. षष्ठोग्रतपोधारकाः प्रान्ते कृताष्टमतपसः एकसागरोपमायुः स्वर्गे भुक्त्वा ततो भरतक्षेत्रे जन्मावाप्य मुक्तिं यास्यंति । वीसहजार नवसौ वर्ष, तीनमास, पांच दिन, पांच पहरे, एक घडी, दोपल, ४१ अक्षरोच्चार एतावत्कालप्रमाणो जिनधर्मो भविष्यति, ९० वर्ष, मास ८, दिन २३, प्रहर २, घडी ५॥, पलानि ५७, १९ अक्षरोच्चार एतावन्मध्ये जिनधर्मः स्तोकः स्थास्यति, आरकस्य प्रांते जिनधर्मो विच्छेदं यास्यति, श्रुत-सूरि-संघ-धर्मः पूर्वाह्णे विच्छेदं यास्यति, नृपो विमलवाहनः सुमुखमन्त्री च मध्याह्ने विच्छेदं यास्यतः, अग्निः सन्ध्यायां विच्छेदं यास्यति, पुनः पञ्चमारकान्ते दुप्पसहाख्यः सूरिः, फल्गुश्रीः साध्वी, नागलः श्रावकः, सत्यश्रीः श्राविका, एतदात्मकश्चतुर्विधसंघो भविष्यति, पञ्चमारकस्याग्रे धर्मो वर्त्स्यति इत्यनेन धर्मो नास्ति यः पुनर्वदिष्यति स संघतो बहिः कर्तव्यः, एवमेकविंशतिसहस्रप्रमाणः पंचमारको भविष्यति । एतत्प्रमाणो षष्ठारकोपि भविष्यति । अथ षष्ठारकस्य किंचित् स्वरूपं कथ्यते—धर्मतत्त्वं प्रणाशं यास्यति, जनो हाहाभूतो भविष्यति, पशुवद् मातृपित्रादि व्यवस्थावर्जितश्च भविष्यति, बहुधूलिसहिता अतिनिष्ठुरता अनिष्टा वायवो वास्यन्ति, दिशश्च धूम्रं मोक्ष्यन्ति, चन्द्रमा अतिशीतं स्रावयिष्यति, अर्यमा अत्युष्णं तप्स्यति, अतिशीतोष्णव्याप्तो लोकः क्लेशमवाप्स्यति, भस्म-दृषद-ऽग्निकण-क्षार-विष-मल-विद्युन्मयाः सप्त मेघा वर्षिष्यन्ति, एकैकस्य मेघस्य सप्त सप्त दिनानि यावद् वर्षा भविष्यति, यैः कास-श्वास-शूल-कुष्ट-जलोदर-ज्वर

मिन्द्रः शिक्षयित्वा दत्तनामानं कल्किनः पुत्रं राज्ये स्थापयिष्यति, गुरु संघयोर्नमस्कारं कारयिष्यति, इन्द्रः स्वस्थाने यास्यति, ततो दत्तराजा पितुः पापफलं ज्ञात्वा पुण्ये तत्परो भविष्यति, निरंतरं जिनेश्वराणां चैत्यानि कारयित्वा सर्वपृथ्वीं जिनालयैः शोभायमानां करिष्यति, तदा पुनर्जिनधर्ममहिमा प्रचुरो भविष्यति, । अथाग्रे पञ्चमकाले चतुर्विधश्रावक-श्राविका-साधु-साध्वीनां संख्या कथ्यते—षोडशसहस्राधिका एकादशलक्षा (११६०००) राजानः पंचमकाले जिनमतभक्ता भविष्यन्ति, एककोटिमिता (१००००००), जिनशासनप्रभावका मन्त्रिणो भविष्यन्ति, पुनः पञ्चमकाले श्रीसुधर्मस्वामिप्रमुखाश्चतुरधिकद्विसहस्रप्रमाणा (२००४) युगप्रधानपदधारका महोपकारिण आचार्या भविष्यन्ति, तत्रापि सुधर्मजम्बूस्वामिनौ तद्भवे एव मुक्तिं यास्यतः, शेषाः सर्वे एकावतारिणो भविष्यन्ति। ततो युगप्रधानसदृशा आचार्याः प्राणिनां मोहान्धकारे मार्तण्डसदृशाः षोडशाधिकैकादशलक्षैकादशसहस्रमिता (१११११०१६) एतावन्तो अन्येऽपि आचार्या-श्चारित्रपालका भविष्यन्ति, पुनः पञ्चमारके तेतीस लाख चालीस हजार चारसौ उन्नीस (३३४०४१९) एतावन्तो मध्यमगुणधारका आचार्या भविष्यन्ति, पुनः पंचावनकोटि पंचावनलक्ष पंचावनसहस्र पंचशत पचवीस (५५५५५५५२५.) अधर्माचार्या भविष्यन्ति, पुनः पंचावनलाखकोटि, पंचावनहजारकोटि चौवनसौ कोटि चउमालीसकोटि एतावन्त उपाध्याया वाचनाचार्या भविष्यन्ति, पुनः सत्तरलाखकोटि नवहजारकोटि एकसौकोटि एकवीसकोटि एकलाख साठहजार एतावन्तः साधवो भविष्यन्ति, पुनः पञ्चमारके दशकोटाकोटि द्वादशशतकोटि बाणवेकोटि बत्तीसलाख निनाणवे हजार एकसौ एतत्प्रमाणाः साध्व्यो भविष्यन्ति, पुनः पञ्चमारके सोलाकोटिलाख तीनकोटिहजार तीनसौकोडी सत्तरकोडी चौरासीलाख एतावत्प्रमाणाः श्रावकाः भविष्यन्ति, पुनः पञ्चमारके पैंतीसकोडिलाख बाणुहजारकोडी पांचसौकोडी बत्तीसकोडी एतावत्यः श्राविका भविष्यन्ति, एतावत् पञ्चमारके संघस्य प्रमाणम्. अत्र

करिष्यति, पुनर्नवीननवीनकरं करिष्यति ततो लोकानां मस्तकेऽसद्भूतानि कलंकानि दत्त्वा धनवतां धनं ग्रहीष्यति, अनेकच्छलं
कृत्वा लोकानां धनापहारं करिष्यति, यदा सर्वे लोका निर्धना भविष्यन्ति रूप्य-सुवर्णादि सर्वं धनं नाशं यास्यति, तदा चर्ममयीं
मुद्रां प्रवर्तयिष्यति, वैश्यापाखण्डिसर्वदर्शनिनां समीपे कल्की करं लास्यति, तस्य राजमध्ये लोकानां गृहे भोजनार्थं धातुमयं भाजनं न
स्थास्यति, तदा वृक्षपत्रमध्ये भोजनं करिष्यन्ति, पुनः कल्की राजा मार्गे गच्छतः साधून् दृष्ट्वा लुब्धः सन् भिक्षायाः षष्ठांशं मार्गयिष्यति,
तदा सर्वे साधवः एकत्रीभूय कायोत्सर्गं करिष्यन्ति शासनदेवतां चाराधयिष्यन्ति, शासनदेवता प्रकटीभूय साधुभिक्षाषष्ठांशं निवारयि-
ष्यति, पुनर्वेषधारिणो वेषं त्याजयिष्यन्ति, एतादृशो महादुरात्मा भविष्यति, पुनः कियति काले गते भिक्षाषष्ठांशस्य स्मरणं करिष्यति,
यदा धनार्थमाचार्यादीन् सर्वसाधून् संमेल्य वाटके क्षेप्स्यति रोधयिष्यति, तदा संविज्ञाचार्यप्रमुखाः ससंघाः शासनदेवताराधनार्थं कायो-
त्सर्गं करिष्यन्ति, संघकायोत्सर्गात् शासन देवता आगमिष्यति युक्तितः कल्किने उपदेशान् दास्यति तथापि स न मानयिष्यति, तस्मिन्
समये इन्द्रस्यासनं कम्पयिष्यति तदा स वृद्धब्राह्मणरूपं कृत्वा यत्र कल्की सिंहासनोपरि स्थितस्तत्रागमिष्यति, ततः कल्किनं कथयि-
ष्यति–अहो राजन् ! एते निरपराधिनः साधवः किं रुद्धाः एभिस्तवापराधः कः कृतः ? तदा कल्की तं वदिष्यति–अहो ब्राह्मण ! सर्व-
दर्शनिभिर्मम करो दत्तः परमेते भिक्षवो भिक्षाषष्ठांशमपि न ददति, ततो मया एते रुद्धाः सन्ति, तत इन्द्रो वदिष्यति–एषां पार्श्वतस्तव
किमपि न मिलिष्यति एषां पार्श्वे किमपि नास्ति पुनर्भिक्षाषष्ठांशमपि तव न दास्यंति एषामयं व्यवहारो नास्ति, पुनस्त्वं भिक्षा भागं मार्गयन्
लज्जां न यासि, एषां साधूनां त्वं त्यागं कुरु, ईतरथा तव महत्कष्टमुत्पत्स्यति, एतादृशमिन्द्रवचनं श्रुत्वाऽपि न त्यक्ष्यति ततो भाद्रपदशुक्ला-
ष्टम्यां ज्येष्ठानक्षत्रे इन्द्रो रोषं गतः सन् चपेटाप्रहारात् कल्किनं मारयिष्यति सर्वायुः षडशीति ८६ वर्षं प्रपाल्य नरकं यास्यति, ततोऽर्हद्धर्म-

स्य राजधानी भविष्यति, अनहह्लपत्तनस्य द्वितीयं नाम विजयपुरं भविष्यति, मुंजस्योज्जयिनीदेशं दास्यति, अपराजितस्यान्यमण्डलं दास्यति, कल्किनो राज्यावसरे म्लेच्छक्षत्रिययो रुधिरेण पृथिवी स्नानं करिष्यति, तस्यैकोनकोटिसुवर्णानां कोष्ठागारा भविष्यन्ति, चतुर्दशसहस्रप्रमाणा हस्तिनो भविष्यन्ति, सार्द्धचतुर्दशसहस्राधिकसप्ताशीतिलक्षा (८७१४५९००) घोटका भविष्यन्ति, पञ्चकोटिप्रमाणाः पदातयो भविष्यन्ति, दासादीनां तु बह्वीः संख्या भविष्यन्ति, नमःखलनाम त्रिशूलं भविष्यति, दर्पन्मयतुरंगमः आरोहणार्थं वाहनं भविष्यति, दुरात्मा अत्यन्तकषायो भविष्यति, यदा कल्की राज्यं करिष्यति, तदा मथुरामध्ये कृष्ण-बलभद्रयोरायतनं पतिष्यति, बहुडम दुर्भिक्षरोगैर्मनुष्याः पीडां प्राप्स्यन्ति, पञ्चसु स्तुम्भिकासु बहु धनमस्तीति लोकानां मुखात् श्रुत्वा आनन्दराज्ञा निष्पादिताः पञ्च सुवर्णमयीः स्तुम्भिकाः कल्की खनयिष्यति, सर्वनिधानं निष्कामयिष्यति, तत्र गोरूपा लवणदेव्या मूर्तिः दर्पन्मयी प्रकटीभविष्यति; तां गृहीत्वा राजादिप्रमुखा सर्वलोकाः संभूय नगरचतुष्पथमध्ये स्थापयिष्यंति, कदाचिदवसरे साधवो गौचर्यर्थं चतुष्पथमध्ये निःसरिष्यन्ति, सा साधून् दृष्ट्वा देवानुभावतः शृंगाग्रेण साधूनां मारणार्थमुद्यमवती भविष्यति, तदा गीतार्थाः सर्वे साधव एकत्रीभूय विचारं करिष्यन्ति, अत्र जलोपसर्गः प्रचुरो भविष्यति इति ज्ञात्वा सुविहितक्रियाधारका ये साधवो भविष्यन्ति ते सर्वे विहारं करिष्यन्ति, ये भक्तपानलोलुपा भविष्यन्ति गीतार्थवचनं नांगीकरिष्यन्ति अविवेकिनः सन्तः तत्र स्थास्यन्ति, ततः सप्तदशाहोरात्रं यावत् वर्षा भविष्यति, अत्यन्तवृष्ट्या कल्किनो नगरं जलाच्छादितं भविष्यति, गंगाजलं नगरेण सह एकत्री भविष्यति, कल्किनो नगरात् प्रणश्य कुत्रापि उच्चस्थले स्थास्यति, जलोपद्रवनिवर्तनाद् नवीनं नगरं स्थापयिष्यति, जलप्रवाहतो नव नन्दस्य सुवर्णमयः डुंगरिकाः प्रकटीभविष्यन्ति, ता दृष्ट्वा प्रचुरलोभी भविष्यति, प्रथमं ये मनुष्याः करं न दत्तवन्तस्तेषामुपरि करं स्थापयिष्यति, ये करं दत्तवन्तस्तेषां मस्तके बहुकरं

न्ति, पुनर्हे गौतम् ! म्लेच्छकुले पाटलीपुरपत्तने कलंकी * राजा भविष्यति, पुनः पाटलीनगरस्य रुद्रनाम पुनश्चतुर्मुख इति नाम स्थापयिष्यति । जसनामचाण्डालस्य गृहे भार्या यशोदा तत्कुक्षौ त्रयोदश मासान् यावद् कल्किगर्भः स्थास्यति, चैत्रशुक्लाष्टम्यां जयश्रीदिवसस्य रात्रिसमये मकरलग्नस्य षष्ठांशे वहमाने भौमवासरे चन्द्रेर्कलग्ने स्थिते चन्द्रनामयोगे आगते अश्लेषाप्रथमपादे कलंकिनो जन्म भविष्यति, त्रिहस्तशरीरोन्नतत्वं भविष्यति, कपिलवर्णाः केशा मस्तके भविष्यन्ति, नेत्रे पीते भविष्यतः, तीक्ष्णस्वरो भविष्यति, महाविद्यावान् दीर्घहृदयो गुणरहितश्च भविष्यति, तस्योत्पत्तेरारभ्य पञ्चमे वर्षे उदरपीडा भविष्यति, सप्तमे वर्षेऽग्निपीडा भविष्यति, एकादशे वर्षे तस्य द्रव्यप्राप्तिः भविष्यति, अष्टादशे वर्षे कार्तिकमासे शुक्लपक्षे प्रतिपदि तिथौ शनिवारे तुलाचन्द्रे स्वातिनक्षत्रे नन्दनदिने सिद्धयोगे ववकरणे रावणमुहूर्ते राज्याभिषेको भविष्यति, तस्य आनन्दनामा तुरंगमो भविष्यति, दुर्मासकनामा कुन्तो भविष्यति, मृगांकनामा मुकुटो भविष्यति, त्यमुदनखड्ग भविष्यति, तस्य कटिप्रदेशे चन्द्रसूर्यौ भविष्यतः, पुनः कल्की विक्रमादित्य संवत्सरमुत्थाप्य अमितसुवर्णदानान् स्वसंवत्सरं स्थापयिष्यति, एकोनविंशतितमे वर्षे निजभुजबलेनार्धभरतत्रिखण्डं साधयिष्यति, सार्धविंशतिवर्षे अर्बुदराज्ञः पुत्रीं परिणेष्यति, अन्यासां बह्वीनां राज्ञीनां पतिर्भविष्यति, एवं ताभिः सह महाभोगे भुंज्यमाने तस्य महापराक्रमधारिणश्चत्वारः पुत्रा भविष्यन्ति, तन्नामान्याह-दत्त १ विजय २ मुंज ३ अपराजिताख्याः ४. कल्किनः पाटलीपुरे राजधानी भविष्यति, तस्य पाटलीपुरस्य कलंकिपुरमिति द्वितीयं नाम भविष्यति, दत्तस्य प्रथमपुत्रस्य राजधानी भविष्यति, तस्य नगरस्य दत्तपुरं नाम भविष्यति, विजयस्यानहल्लपत्तन-

* पंचमारके धर्मोन्नतिकारका त्रयोविंशतिः उदयाः भविष्यंति तेषु च चतुरधिकद्विसहस्रयुगप्रधाना भविष्यन्ति तथा संप्रति तृतीयोदयो वर्तते पर' च अष्टमोदये श्रीप्रभयुगप्रधानसमये कलकी राजा भविष्यति, इति ज्ञेयम् ।

तस्य भविष्यन्ति, अयुतप्रमाणा रथा भविष्यन्ति, एकादश लक्षाणि तुरंगाणां भविष्यन्ति, अष्टादश लक्षाः पदातयो भविष्यन्ति, स श्रीकुमारपालराजा कस्मिंश्चित् समये वज्रशाखायां मुनिचन्द्रकुलोत्पन्नं श्रीहेमचन्द्रसूरिं प्रतिवन्दिष्यति, आचार्यमुखाद् धर्मोपदेशं श्रुत्वा सम्यक्त्वसहितं श्रावकद्वादशव्रतमंगीकरिष्यति, देवगुरुप्रणतिं विना भोजनं न करिष्यति, दृढव्रतपालको भविष्यति, पृथिवीं जिनप्रासादमण्डितां करिष्यति, एकस्मिन् प्रस्तावे श्रीहेमाचार्यमुखात् व्याख्याने श्रीतीर्थानां व्याख्यां श्रोष्यति, तत्र जीवितस्वामिमूर्तेः संबंधं श्रुत्वा वीतभयपत्तनमार्गे दुर्गकारापने श्रीजिनप्रतिमां मनुष्येभ्यः प्रकटं कारयिष्यति, तां प्रतिमां पत्तने जिनालये स्थापयिष्यति शुभबुद्ध्या मानयिष्यति, ततः प्रतिमार्थं यदुदायिराज्ञा ग्रामादिदत्तमभूत् तत् प्रकटीभविष्यति, तावन्तं ग्रामशासनादिकं कुमारपालोऽपि दास्यति, सदैवार्चां करिष्यति, सदैव जिनं वन्दिष्यति, स्वदारसंतोषी भविष्यति, वर्षाकालमध्ये त्रिविधं शीलं पालयिष्यति, कदाचिद् मनसः शीलभंगो भविष्यति तर्हि उपवासादि करिष्यति, पुनरष्टाशदेशेऽमारिपटहं दास्यति, वर्षाकाले सेनासमूहं न करिष्यति, जीवरक्षादक्षो भविष्यति, अर्हन्मतभक्तिमान् भविष्यति, शुद्धसम्यक्त्वव्रतधारको भविष्यति, पंचमकाले श्रीकुमारपालं विना अन्यः को भविष्यति ? । पुनर्हे गौतम ! पञ्चमारके कलहकारका भववृद्धिजनका असमाधिस्थाना अनिर्वेदकारका एतादृशाः श्रमणाः पञ्चभरतैरवते च भविष्यन्ति, पुनस्ते श्रमणा मन्त्रतन्त्रयन्त्रादौ नित्यमुद्यमवन्तो भविष्यन्ति, पुनरागमार्थज्ञाता स्तोका एव स्थास्यंति, सिद्धान्तशास्त्रस्य कश्चिदेवाभ्यासं करिष्यंति, धललोभार्थं ज्योतिष्कादिकं धारयिष्यति, उपकरणवस्त्रपात्रार्थं वर्षाकाले श्रावकैः सह युद्धं करिष्यति, यथा राजा प्रजापार्श्वे कलहं कृत्वा दण्डं लास्यति तथा तेऽपि साधवः श्रावकपार्श्वे धनादिग्रहणं करिष्यन्ति, बहवो मुण्डा अल्पाः श्रमणाश्च भविष्यन्ति, पुनर्हे गौतम ! पञ्चमकाले म्लेच्छराजानो बलवन्तो भविष्यन्ति, उत्तमराजानो हीनबला भविष्य-

गवर्णने कथिताः। पुनर्हे गौतम ! कलियुगसंबन्धिनां मानवानां मध्ये लज्जा न भविष्यति, निष्कलंककुलजाताः स्तोका भविष्यन्ति, रम्यवस्तूनां धरित्र्यां हानिर्भविष्यति, लघवः सुताः तरुणाश्च मरणं यास्यन्ति, पुनर्मातरः पितरश्च अतिदीर्घायुषो भविष्यन्ति, ब्राह्मणाः शस्त्रधारका भविष्यन्ति, वेदपाठ–षट्कर्मवर्जिताश्च भविष्यन्ति, सुता मातापित्रोर्विनयं न करिष्यन्ति, पुत्रा मातापितृभ्यो दुःखं दास्यन्ति, वध्वः श्वश्रूणां विनयं न करिष्यन्ति, वधूः सर्पिणीतुल्या भविष्यति, श्वश्रूभिः कार्ये कथिते वधू रोषं कृत्वा सर्पिणीवत् प्रत्युत्तरन्ति, वध्वः श्वश्रूणां विनयं न करिष्यन्ति, वधूः सर्पिणीतुल्या भविष्यति, श्वश्रूभिः कार्ये कथिते वधू रोषं कृत्वा सर्पिणीवत् प्रत्युत्तरवचनरूपं डंकप्रहारं दास्यति, श्वश्रूश्च कालरात्रीतुल्या वधूं हीलयिष्यति; यथा जनानां कालरात्री दुर्लङ्घ्या भवति तथा श्वश्रूरपि वधूजनानां ताडनातर्जनादि कुर्वती दुर्लंघ्या ज्ञेया, अपूज्यलोकाः पूजां प्राप्स्यन्ति, अर्चायोग्या गुणवन्तो न पूजा प्राप्स्यन्ति, शिष्या गुरूणां विनयं न करिष्यन्ति, पुनर्गुरवोऽपि शिष्याणां हितशिक्षाद्युपदेशं न दास्यंति, पुनर्मन्त्रतन्त्रौषधिज्ञानरत्नविद्याधनायुःफलपुष्परसरूपसौभाग्यसंपत्तिसंहननबलयशःकीर्तिगुणशोभादीनि वस्तूनि पञ्चमारके हानिं यास्यन्ति, ज्ञानादिधर्मो हीनतां यास्यति, वस्तुमानादि विपरीतं जनाः करिष्यन्ति, धर्मे मूर्खत्वं भविष्यति, देवानां मध्ये देवत्वं न भविष्यति, सतीनां मध्ये सतीत्वं न भविष्यति, निःसंगानां मध्ये वैराग्यं न भविष्यति, तपस्विनः स्पृहायै तपस्यां करिष्यन्ति, सत्यशौचतपः क्षमादिकानां हानिर्दिने दिने भविष्यति, धरित्र्यामल्पफलादीनि भविष्यन्ति।

पुनः प्रभुर्वक्ति–हे गौतम ! सौराष्ट्रगुर्जरदेशस्य समीपे अनुक्रमेण अणहिल्लपाटणपुरे मन्निर्वाणात् एकोनसप्तत्यधिकषोडशशतवर्षे (१६६९) व्यतिक्रान्ते श्रीकुमारपालराजा भविष्यति, कीदृशः ? चौलुक्यकुलमध्ये चन्द्रसदृशो महाबलवान् अखण्डजिनाज्ञाधारको भविष्यति, पराक्रमेण, दानेन, कीर्तिगुणेन, न्यायेन, विवेकेन, धैर्येण राज्यलीलया सत्त्वगुणेनाद्वितीयो भविष्यति. उत्तरदिशायां यवनदेशं यावत्, पूर्वदिशि गंगापर्यन्तं, दक्षिणदिशि पश्चिमदिशि च समुद्रपर्यन्तं देशान् साधयिष्यति, एकादशशतानि हस्तिनः

करिष्यन्ति, पुनरग्रे गच्छता वने एकस्यां शकट्यां हस्तिनौ योजितौ दृष्टौ, एकस्यां शकट्यां गर्दभौ योजितौ दृष्टौ परं हस्तिनौ परस्परममिलितौ चलतः गर्दभौ परस्परं मिलितौ चलतः, एतादृशं विचारं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वदति हे राजन् ! कलियुगे हस्तिसदृशा उत्तमकुले प्रसूता जनाः परस्परं क्लेशं करिष्यन्ति अन्योऽन्यमीर्ष्यां च करिष्यन्ति, पुनर्गर्दभसदृशा नीचकुलोत्पन्ना नीतिधारका भविष्यन्ति परस्परं स्नेहवन्तो भविष्यन्ति, प्रायेण अन्त्यकुलोत्पन्ना धरित्रीपतयो भविष्यन्ति, पुनर्हंससदृशा उत्तमकुलोत्पन्नाः दासत्वं करिष्यन्ति ॥ अन्यदा पंच पाण्डवा अनुक्रमेण वनवासमध्ये स्थिताः सन्तो युधिष्ठिरराज्ञा भीमादीनां चतुर्णां भ्रातॄणां चतुर्षु प्रहरेषु रात्रौ यामिकत्वेन रक्षिता, अथ प्रथमप्रहरे भीमो जागर्ति चत्वारो भ्रातरः सुप्ताः सन्ति तस्मिन् प्रस्तावे कलिरूपपिशाचस्य वचनं श्रुत्वा भीमः क्रोधभाग् बभूव पिशाचरूपकलेर्मारणार्थं धावितः, कलिना सह भीमो युद्धप्रकार्षीत् , क्रोधेन रक्तनेत्रे कृत्वा लीलया प्रेतरूपकलिना बलवान् भीमो निर्जितः, द्वितीयप्रहरे युद्धं कृत्वा कलिनाऽर्जुनोऽपि जितः, तृतीयप्रहरे नकुलोऽपि जितः, चतुर्थप्रहरे सहदेवोऽपि जितः, अथ चत्वारोऽपि भ्रातरः पराजयं प्राप्ताः सन्तः सुप्ताः सन्ति, अस्मिन्नवसरे पश्चिमरात्रे युधिष्ठिरो जागृतवान् तदा कलिरूपपिशाच आगत्य युधिष्ठिरं वदति, हे राजन् ! भवतः पश्यतो भवद्भ्रातॄन् मारयिष्यामि, एतादृशं प्रेतवचनं श्रुत्वा राजा युधिष्ठिर किंचिन्मात्रमपि क्रोधं न कृतवान् , प्रतिवचनमपि न दत्तवान् , क्षमा कृत्वा स्थितः, क्षमा कीदृशी ? सर्वकल्याणकारिका सर्वसत्त्वप्रीतिजनिका सर्वधर्मप्रधाना एतादृशी क्षमा राज्ञामंगीकृता, तदा राज्ञ उपशमं दृष्ट्वा प्रेतः शान्तिं गतवान् राज्ञो मुष्टिमध्ये चागतः, भ्रातरः सर्वेऽपि उत्थिताः, तदा रात्रिसंबन्धिनी सर्वाऽपि वार्ता युधिष्ठिरेण भ्रातॄणामग्रे कथिता, राज्ञा मुष्टिमध्यात् प्रेतः स्ववशवर्त्तिभूतो दर्शितः, क्षमाप्रभावतोऽयं वशवर्ती जातः, एतादृशा अष्टोत्तरशतदृष्टान्ता लौकिकपुराणादावपि कलियु-

पुनः राजा युधिष्ठिरोऽग्रे गतः सन् कूपप्रणालिकाजलं कूपे पतत् दृष्ट्वा विस्मयं प्राप्तः सन् पृच्छति, तदा ब्राह्मणो वक्ति—हे राजन् ! कृषिवाणिज्यादिभिर्महाक्लेशात् लोका धनमुपार्जयिष्यन्ति तद्धनं सर्वं राजलोका ग्रहीष्यन्ति, सद्युगे राजानः स्वस्य धनं दत्त्वा प्रजां पुत्रवत् ज्ञास्यन्ति कलियुगे राजानः प्रत्युत प्रजाया धनं लास्यन्ति इति वैपरीत्यं भविष्यति । राजा—अग्रे गच्छन् वनखण्डमध्ये महाप्रधानचम्पकवृक्षावृतः पार्श्वतः एकः कण्टकवृक्षो दृष्टः, तदवसरे बहवो लोकाः कण्टकवृक्षस्य सुगन्धचोवाचन्दनविलेपनैः पूजां कुर्वन्तो दृष्टाः, चम्पकवृक्षस्तु सुगन्धपुष्पैर्युक्तः शाखाप्रतिशाखाभ्यां शोभमानोऽस्ति, तं त्यक्त्वा कण्टकवृक्षमर्चितं दृष्ट्वा राजा विस्मयं प्राप्तः सन् ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति—हे राजन् ! लोकाः कलियुगे गुणवन्तमुत्तमाचारवन्तं त्यक्त्वा पापीयसो दुर्जनस्य नीचस्य पूजां करिष्यन्ति, एतादृशं श्रुत्वा राजाऽग्रे गतः पुरतः एकां महतीं शिलां बालाग्रे बद्धामाकाशे लम्बायमानां दृष्ट्वा आश्चर्यं प्राप्तः सन् ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति—हे राजन् ! कलियुगे पापरूपां शिलामल्पधर्मरूपबालाग्रेण तरिष्यन्ति, अन्यच्च यदा बालरूपं धर्मं त्रोटयिष्यन्ति तदा समकालं मनुष्या ब्रडिष्यन्ति । पुनः राजाऽग्रे गतः फलार्थं वृक्षस्य पीडां कुर्वन्तः केचिद् पुरुषा दृष्ट्वा राजा ब्राह्मणं पृच्छति—एतस्य फलं वद, ब्राह्मणो वक्ति-हे राजन् ! कलियुगे पिता वृक्षतुल्यः पुत्रः फलसदृशः—अयमत्र भावार्थः पुत्रफलार्थं वृक्षः पिता कष्टं सहिष्यति, पुनः राजाऽग्रे गतः एकस्मिन् स्वर्णकटाहे उत्तमश्वपाचनयोग्ये मांसं पच्यमानं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वदति-हे राजन् ! आत्महितकारिणं कुटुम्बं जनाः त्यक्ष्यन्ति, अन्यलोकार्थं स्वशीर्षं दास्यन्ति, बह्वीं प्रीतिं करिष्यन्ति उत्तमजनसंगं न करिष्यन्ति, अग्रे गत्वा सर्पस्य पूजां गरुडस्य चापूजां दृष्ट्वा ब्राह्मणं पृच्छति, विप्रोऽवादीत्-हे राजन् ! दयारहितो धर्मिजनः सर्पतुल्यः तस्य बहवो लोका आदरं करिष्यन्ति, सत्कारं च करिष्यन्ति, गरुडसदृशा गुणवन्त उत्तममहाधर्मज्ञास्तेषां निन्दां

लोकाः सर्वे प्रेतसदृशा भविष्यन्ति, राजलोका लुब्धा भविष्यन्ति, पुनरविवेकिनो लोका मूर्खाः कलाहीनाश्च भविष्यन्ति, दातारो दारिद्र्ययुक्ता भविष्यन्ति, लक्ष्मीधराः कृपणा भविष्यन्ति, पापिनो दीर्घजीवा भविष्यन्ति, उत्तमधर्मिणामायुः स्तोकं भविष्यति, राज्ञां कुलानि हीनानि भविष्यन्ति, पुनः सेवका उत्तमकुलवन्तो भविष्यन्ति, सज्जना मनुष्या दुःखिनो भविष्यन्ति, दुर्जना मनुष्याः सुखिनो भविष्यन्ति, एवं हे गौतम ! पंचमकालस्य स्वरूपं त्वं जानीहि ।

पुनर्लोकाः कलियुगस्य स्वरूपमेवं वदन्ति—द्वापरयुगे राजा युधिष्ठिरोऽभूत् , एकस्मिन् दिने स वने गतः, तत्र वने एका बृहती गौः लघुगोस्तनपानं कुर्वती दृष्टा, स्वसमीपे ब्राह्मणमिति पप्रच्छ—इदमाश्चर्यं विपरीतं पश्य, तदा ब्राह्मणो वदति—हे राजन् ! आगामिकाले कलियुगमध्ये हीनसत्त्वा मनुष्या भविष्यन्ति, लक्ष्मीं विना दुःखिनो सन्तौ मातापितरौ कस्मैचित् धनवते कन्यां दत्त्वा धनं लात्वा ततः पश्चात् स्वनिर्वाहं करिष्यतः, एतादृशमुपनयं श्रुत्वा पुनः राजा युधिष्ठिरोऽग्रे गतः, पुरतः समानश्रेणिबद्धजलभृतानि त्रीणि सरांसि दृष्टानि, तत्र प्रथमैकसरसो जलमुच्छलत् मध्यस्थं तटाकं त्यक्त्वा तृतीयसरसि पतति, मध्यस्थसरसि एकबिन्दुमात्रमपि न पतति; एतादृशमाश्चर्यं दृष्ट्वा राजा ब्राह्मणं पृच्छति इदं किंकारणम् ? ब्राह्मणो वक्ति—हे राजन् ! त्वं शृणु—आगामिकाले यथा प्रथमसरसो जलं द्वितीयं तटाकं त्यक्त्वा तृतीये पतितं तथा हे राजन् ! स्वस्य संबन्धिनं त्यक्त्वा अन्यलोकैः सह जनाः प्रीतिं करिष्यन्ति । पुनः राजा युधिष्ठिरोऽग्रे गच्छन्नेकमाश्चर्यं पश्यति जलेन क्लिन्नं वालुकासमूहं तस्य बहवो मनुष्याः संभूयरज्जूः कुर्वन्ति परं रज्जूः त्रुटति यत्ने कृतेऽपि न तिष्ठति, एतादृशं व्यतिकरं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति—हे राजन् ! कृषिकारकलोका बहुभिः क्लेशैः कलियुगे धनमुपार्जयिष्यन्ति, तद् धनं चौराऽग्निराजदंडप्रमुखस्य भयेन मनुष्याणामन्यत्र गमने कृतेऽपि विनाशं यास्यति,

हरिवंशकुलोत्पत्तिः ७, चमरेन्द्रोत्पातः ८, एकस्मिन् समयेऽष्टाधिकशतमुक्तिगमनं ९, असंयतिपूजा १०, एतानि दश वस्तूनि अनन्त-
काले गते सति भवन्ति । बहवो लोकाः क्रोधवन्तो भविष्यंति, पुनर्दुःषमकालप्रभावतो लोका मर्यादां त्यक्ष्यन्ति, धर्मबुद्धेर्नाशो भवि-
ष्यति, लोका वक्रा मूर्खाश्च भविष्यन्ति, यथा कालहीनता भविष्यति तथा कुतीर्थे मतिं धारयिष्यन्ति, पुनर्लोकाः परोपकार-धर्मव-
र्जिता भविष्यन्ति, महान्ति नगराणि ग्रामसदृशानि भविष्यन्ति, ग्रामाः श्मशानसदृशा भयंकरा भविष्यन्ति, राजानः प्रजापालने
यमसदृशा भविष्यन्ति, पुनर्हे गौतम ! धनवन्तो व्यवहारिणो निर्धना भविष्यन्ति, पुनर्देवा दर्शनं न दास्यन्ति, मनुष्याणां जातिस्म-
रणज्ञानादीनि न भविष्यन्ति, मनुष्या लज्जामर्यादारहिता भविष्यन्ति, पृथिव्यां दुष्टजीवा बहवो भविष्यन्ति, पुनर्लोकाः परस्परं विघ्नं
दृष्ट्वा संतोषं प्राप्स्यन्ति, लोकानां पापकरणे चत्वारो हस्ता भविष्यन्ति, पुनर्धर्मकार्येऽलसाः प्रमादिनश्च भविष्यन्ति, आत्मनः कार्ये
लोकानामुदरमध्ये प्रवेशं करिष्यन्ति, पुनर्हे गौतम ! परजीवानामुपद्रवकरणे तत्परा भविष्यन्ति, पुनः पंचमकालसंबन्धिनो जीवा
महानिर्दया भविष्यन्ति, महादीर्घरोषधारका भविष्यन्ति, भद्रकजीवान् विप्रतारयिष्यन्ति, धर्ममूर्तिमन्तः स्तोका भविष्यन्ति, पापा-
नामाकराः स्थाने बहवो भविष्यन्ति, अत्यन्त लोभवन्तो भविष्यन्ति, मिथ्यात्विनोऽभिमानिनोऽनाचारिणोऽन्यायिनश्च लोका बहवो
भविष्यन्ति, पुनर्हे गौतम ! कुलवध्वो लज्जामर्यादारहिता भविष्यन्ति, वेश्यासमानाश्च भविष्यन्ति, राजा भृत्येभ्यो दण्डं दास्यति,
पृथिव्यां तिमिंगिलन्यायो भविष्यति, चौरकुले जाताश्चौरा भवन्ति परं राजानोऽपि चौरसदृशा भविष्यन्ति, लोकानां धनमपहरिष्यन्ति,
लोकान् दरिद्रिणः करिष्यन्ति, पुनर्हे गौतम ! पंचमकालमध्ये लोकानामग्निर्वह्नीं पीडां करिष्यति, गोप्रमुखाणां जीवानां बहुवधो
भविष्यन्ति, जिनालयाः पतिष्यन्ति, पुनर्दुःखदारिद्र्युपद्रवमलोत्सर्गमारीप्रमुखैः कृत्वा धरित्री शून्या भविष्यति, देशो भंगं यास्यति,

स्वर्णपौरुषादिः सिद्धिं यास्यति, धैर्यादिगुणविख्यातस्य विक्रमादित्यस्य स्थाने स्थाने मनुष्या देवाश्च प्रशंसां करिष्यन्ति, पुनः स राजा सर्वलोकानां दानसन्मानादिकं कृत्वा सर्वाननृणीकरिष्यति, स्वनाम्ना च संवत्सरप्रवृतिं करिष्यति, यस्य देवा अपि स्तवनं करिष्यन्ति, महाबलवान् प्रजापालकः परदुःखनिवारकः परस्त्रीसहोदरो राजा विक्रमादित्यो भविष्यति, ततः पंचशतचतुरशीतिवर्षे (५८४) व्यतिक्रान्ते श्रीवज्रस्वामी भविष्यति, ततो दशमपूर्वार्धस्य कीलिकासंहननस्य च विच्छेदो भविष्यति. तदनन्तरं षोडशाधिकषट्शतवर्षे (६१६) पुष्पमित्रेण सार्धं नवमं पूर्वं विच्छेदं यास्यति, पुनर्मम निर्वाणाद् विंशत्यधिकषट्शतवर्षे (६२०) आचार्यादयो ग्राममध्ये स्थास्यन्ति (?), मम निर्वाणाद् नवाधिकषट्शतवर्षे (६०९) रथनूपुरनगराद् दिगम्बरमतोत्पत्तिर्भविष्यति, श्रीविक्रमादित्यात् पंचत्रिंशदधिकशतवर्षे (१३५) गते शाकी राजा शालिवाहनो भविष्यति, पंचाशीत्यधिकपंचशतवर्षे (५८५) गते हरिभद्रसूरिर्भविष्यति अनेकग्रन्थकर्ता महाप्रभावको, मन्निर्वाणात् त्रिनवत्यधिकनवशतवर्षे (९९३) कालिकाचार्यो भविष्यति, यस्येन्द्रो वन्दनां करिष्यति, यः कालकसूरिः पर्युषणापर्व पंचमीतः चतुर्थ्यां कारणादानीतवान्, मन्निर्वाणात् सप्तत्यधिकद्वादशशतवर्षे (१२७०) व्यतिक्रान्ते बप्पभट्टिसूरिर्भविष्यति सर्वविद्याविशारदः, तद्वाक्याद् गोपपर्वते आमराजा जिनालयं कारिष्यति, तत्र सार्धत्रिकोटिस्वर्णप्रतिमां स्थापयिष्यति । मन्निर्वाणात् त्रयोदशशतवर्षे (१३००) बहवो मतभेदा भविष्यन्ति, बहुमोहस्य कारणात् दुःषमकालप्रभावतश्चानेकगच्छभेदा भविष्यन्ति, केचित् तपोऽहंकारं करिष्यन्ति, केचिच्च धर्मक्रियायां शिथिला भविष्यन्ति, क्रियावन्तोऽपि साधवः परस्परं क्लेशं करिष्यन्ति । पुनरस्यामवसर्पिण्यां दश अच्छेरका जाताः तानाह—

समवसरणे उपसर्गः १, गर्भापहारः २, स्त्रीतीर्थंकरः ३, परिषदभावः ४, कृष्णस्यामरकंकागमनं ५, चन्द्रसूर्यमूलविमानागमनं ६,

श्रेणिः ५, उपशमश्रेणिः ६, केवलज्ञानम् ७, परिहारविशुद्धि-सूक्ष्मसंपराय-यथाख्यातचारित्राणि ८, सिद्धिगतिः ९, जिनकल्पकः
१०, एतानि दश वस्तूनि जम्बूस्वामितो विच्छेदं यास्यन्ति, ततो दुःषमकालप्रभावतश्चतुर्दशपूर्वधारी जम्बूस्वामि प्रतिबोधकः निज-
पट्टप्रभावकः श्रीप्रभवस्वामी भविष्यति. तत्पट्टे चतुर्दशपूर्वधरः दशवैकालिककर्ता मनक-पिता श्रीशय्यम्भवसूरिः भविष्यति, तत्पट्टे
चतुर्दशपूर्वधारी यशोभद्रसूरिर्भविष्यति, तच्छिष्यौ सम्भूतिविजय-भद्रबाहुनामानौ चतुर्दशपूर्वधरौ भविष्यतः, ततो मम निर्वाणात्
सप्तत्यधिकशतवर्षे ( १७० ) अनेकशास्त्रकर्ता भद्रबाहुः स्वर्गं यास्यति, ततो मम निर्वाणात् पंचदशाधिकद्विशतवर्षे ( २१५ ) चतुर्द-
शपूर्वधारी सम्भूतिविजयशिष्यः श्रीस्थूलिभद्रो देवलोकं यास्यति, ततः प्रथमं संहननं वज्रऋषभनाराचाख्यं विच्छेदं यास्यन्ति,
ततोऽर्थतः चतुष्पूर्व-सूक्ष्मसंपराय-महाप्राणायामध्यानाख्यानि एतानि विच्छेदं यास्यन्ति, ततः मन्निर्वाणाद् त्रिशतवर्षे ( ३०० )
उज्जयिन्यां नगर्यां सम्प्रति राजा भविष्यति, स च आर्यसुहस्तिसूरिणामुपदेशाद् जातिस्मरणज्ञानमवाप्य जैनधर्ममंगीकरिष्यति, स्वभुज-
बलात् त्रिखण्डभोक्ता भविष्यति, ज्ञानवान् दानवान् न्यायी धर्मज्ञो विनयवान् पराक्रमी च भविष्यति, मुक्ताफलवद् निर्मलजिनालयैः
कृत्वा धरित्रीं देदीप्यमानां करिष्यति, पुनः स राजा अनार्यदेशे लोकानामुपकारार्थं सम्यक्त्वधारिणां जीवाजीवादिनवतत्त्वविदामुप-
देशदानार्थं तादृशानां श्रावकाणां धर्मसंयोगं कारयिष्यति, ततो महासंविग्नगीतार्थानां साधूनां म्लेच्छधरित्र्यां विहारं कारयिष्यति,
अनया रीत्या तीर्थंकराणां धर्मस्य सर्वदेशे प्रवृत्तिं करिष्यति, एतादृशो महादृढधर्मा अनुक्रमेण स्वर्गं यास्यति. पुनर्मन्निर्वाणात् सप्त-
त्यधिकचतुःशतवर्षे ( ४७० ) उज्जयिन्यां श्रीविक्रमादित्योराजा भविष्यति, श्रीसिद्धसेनदिवाकराचार्यस्योपदेशं श्रुत्वा जिनशासनस्यो-
परि भक्तिमान् भविष्यति, सम्यक्त्वं सम्यगरीत्या पालयिष्यति, तस्य सत्त्वसिद्धा अग्निवेतालाद्यनेकदेवाः साहाय्यं करिष्यन्ति, विद्या

न्तु कुदर्शनस्य पूजादि भविष्यति ८, नवमे शुष्क सरोवरं दृष्टं तेन यत्र यत्र देशे जिनानां कल्याणकानि तत्र तत्र धर्महानिर्भविष्यति ९, दशमे सुवर्णपात्रे क्षीरं भक्षयन् श्वा दृष्टस्तेन उत्तमा लक्ष्मीरधमगृहे गमिष्यति १०, एकादशे गजारूढो वानरो वनचरो दृष्टः तेन सुखारूढा दुर्जना भविष्यन्ति, इक्ष्वाकुवंशीयानां यादवप्रमुखाणां च हानिर्भविष्यति ११, द्वादशे समुद्रो मर्यादां मुंचन् दृष्टः, तेन राजानोऽन्यायकर्तारो भविष्यन्ति, क्षत्रियाश्च कुमार्गगामिनो भविष्यन्ति १२, त्रयोदशे महारथे वत्सा युक्ता दृष्टाः, तेन वृद्धावस्थायां चारित्रं जना न ग्रहीष्यन्ति, परं वत्सतुल्या लघुवयसः साधवो भविष्यन्ति, ये च वैराग्यभावेन चारित्रं ग्रहीष्यन्ति ते च प्रमादिनो भविष्यन्ति १३, चतुर्दशे महार्घ्यं रत्नं तेजोहीनं दृष्टम्. तेन भरते ऐरवते च साधवोऽक्षमाधिकराः कलहकरा उपद्रवकराश्च भविष्यन्ति, तथा श्रमणा अपि स्तोका भविष्यन्ति १४, पंचदशे राज्ञः कुमारो वृषभारूढो दृष्टः, तेन क्षत्रिया मिथ्यात्ववासिनो भविष्यन्ति १५, षोडशे गजकलभयुगलं युद्धं कुर्वद् दृष्टम् तेन मुनिवरा अल्पस्नेहा अकालव्यसनिनोऽहर्निशं युद्धकराश्च भविष्यन्ति, गुरुशुश्रूषाकरा न भविष्यन्ति १६, एवं श्रुत्वा चन्द्रगुप्तो नाम राजाऽनशनं गृहीत्वा धर्मध्यानेन स्वर्गं गतः। इति षोडशस्वप्नविचारः कथितः। एतादृशं प्रभोर्वाक्यं श्रुत्वा गौतमस्वामी चित्ते विस्मयं विधाय प्रभोर्वन्दनां कृत्वा भाविस्वरूपं पप्रच्छ—अहो स्वामिन्! लोकालोकप्रकाशक! पंचम-षष्ठारकयोः स्वरूपं कथय, प्रभुर्वक्तिस्म—हे गौतम! त्वं सावधानीभूय शृणु—मम निर्वाणात् त्रिवर्षसार्धाष्टमासे व्यतिक्रान्ते चतुर्थारक उत्तरिष्यति, अग्रे च पंचमारक आयास्यति, ततो मम निर्वाणाद् द्वादशवर्षे व्यतिक्रान्ते तव मोक्षो भविष्यति, ततोऽसन्निर्वाणाद् विंशतिवर्षे गते सुधर्मस्वामिनो मोक्षो भविष्यति, ततोऽस्मन्निर्वाणाच्चतुष्पष्टिवर्षे गते जम्बूर्मुक्तिं यास्यति, ततो जम्बूस्वामितो दश वस्तूनि विच्छेदं यास्यन्ति, तान्याह—आहारकशरीरं १, मनःपर्यवज्ञानम् २, पुलाकलब्धिः ३, परमावधिज्ञानं ४, क्षपक—

न्ताए वट्टमाणस्स पच्छिमे समये सोलससुमिणा दिट्ठा—तत्थ पढमे सुमिणे कप्परुक्खस्स साहा भग्गा १, बीए अकाले सूरो अत्थमि-
ओ २, तइए चंदो सयच्छिद्दीभूओ ३, चउत्थे भूया नचंति ४, पंचमे दुवालसफणो कण्हसप्पो दिट्ठो ५, छट्ठे आगयं विमाणं पडियं
दिट्ठं ६, सत्तमे असुइट्ठांणे कमलं संजायं ७, अट्ठमे खज्जोओ उज्जोअं करेइ ८, नवमे महासरोवरं सुक्कं दक्खिणदिसाओ थोवजलं लभ-
न्ति ९, दसमे सुनहो सुवण्णपत्ते पायसं भक्खेइ १०, इक्कारसमे हत्थिआरूढो वणचरो दिट्ठो ११, दुवालसमे सायरं मंजायं मुंचइ १२,
तेरसमे महारहे वच्छा जुत्ता दिट्ठा १३, चउदसमे महग्घं रयणं तेअहीणं दिट्ठं १४, पनरसमे रायकुमारो वसहारूढो दिट्ठो १५, सोल-
समे गयकलहजुयला जुज्जंता दिट्ठा १६, एएण सुमिणाणुसारेण सासणे किं किं भविस्सइ ? इइ चंदगुत्तस्स रायस्स वयणं सुच्चा भद्द-
बाहुगणहरो युगप्पहाणो भवोदहितारगो चंदगुत्तस्स संघसमक्खं भणइ—चंदगुत्ता ! सुमिणाणुसारेण अत्थं कहेमि तं जहा”—प्रश्नसूत्रं सुग-
ममत उत्तरसूत्रं व्याख्यायते-षोडशस्वप्नानां मध्ये प्रथमं तावत् चन्द्रगुप्तेन राज्ञा कल्पवृक्षस्य शाखा भग्ना दृष्टा,तस्य फलम् अतः पश्चात् कोऽपि
राजा संयमं न ग्रहीष्यति १, द्वितीयस्वप्ने सूर्यस्याकाले एवास्तत्वं दृष्टं तेन केवलज्ञानं विच्छेदं यास्यति २, तृतीये चन्द्रः शतच्छि-
द्रो दृष्टस्तेन एकस्मिन् धर्मेऽनेके मार्गा भविष्यन्ति ३, चतुर्थे भूता नृत्यन्तो दृष्टास्तेन कुमतिजना भूता इव नर्त्स्यन्ति ४, पंचमे द्वाद-
शफणः कृष्णसर्पो दृष्टस्तेन द्वादश वर्षाणि यावद् दुर्भिक्षं भविष्यति, कालिकसूत्रप्रमुखाणि श्रुतानि विच्छेदं यास्यन्ति, चैत्यद्रव्यधारि-
णो भिक्षुकाश्च, तत्र ये साधुधर्मकांक्षिणः ते सर्वे दक्षिणस्यां दिशि वलभ्यां गमिष्यन्ति ५, पष्ठे विमानं पतितं दृष्टं तेन जंघाचारणा-विद्या-
चारणाश्च साधवो भरते ऐरावते च नाऽऽगमिष्यन्ति ६, सप्तमे कचवरधरित्र्यां कमलमुद्गतं दृष्टं तेन धर्मश्चतुर्णां वर्णानां मध्ये वैश्यवंश-
मध्ये भविष्यति, सूत्ररुचिश्चाल्पजनानां भविष्यति, ७, अष्टमे खद्योत उद्योतं करोति, तेन जिनधर्मे उदयपूजासत्कारो न भविष्यति पर-

अमात्यं च तथाविधचेष्टारहितं ज्ञात्वा ते ग्रथिलाः सर्वे विचारयन्ति—राजाऽमात्यौ ग्रथिलो जातौ अतएव अस्माकं कार्यं न कुर्वन्ति, अत एतौ उत्थाप्य अन्यौ राजामात्यौ करिष्यामः, एतादृशं ग्रथिललोकानां विचारं श्रुत्वा अमात्यो राजानं वक्तिस्म, एते सर्वेऽपि लोका आवामुत्थाप्य अन्यौ राजामात्यौ स्थापयिष्यन्ति तदा कमपि उपायं कृत्वा आवयोः रक्षा कार्या, तदा राजा अमात्यं कथयतिस्म, भवता कश्चिदुपायो विधेयो येनाऽऽवयो रक्षा स्यात् , तदा विचार्य अमात्यो वदति स्म—हे राजन् ! अन्यः कश्चिदुपायो नास्ति अत आवामपि ग्रथिलौ भवाव तदा इदं राज्यं स्थास्यति, इति विचार्य राजामात्यौ जानन्तौ अपि ग्रथिलौ भूत्वा, एभिः सार्धम् आत्मराज्यरक्षार्थं मिलितौ, ततः कियति दिने गते सति पुनः सुवृष्टिर्जाता तदा नवीनोदकस्य पाने सति सर्वे लोकाः सावधाना जाताः । एवं दुःषमकाले क्रियावन्तो गीतार्था अपि हीनाचारिभिः सार्धं सदृशीभूय विचरिष्यन्ति । एतादृशं स्वप्नफलविचारं श्रुत्वा गृहस्थावासतः उद्विग्नीभूय श्रीवर्धमानस्वामिसमीपे व्रतमंगीकृत्य पुण्यपालो मोक्षसुखभाग् बभूव । अत्र केचिद् श्रीभद्रबाहुस्वामिना उक्तान् अपि स्वप्नान् व्याख्यायन्ति, तथाहि—"ते णं काले णं, ते णं समए णं पाडलिपुरे नाम नयरे होत्था, जहा णं चंपा तहा भणियव्वा, तत्थ णं पाडलिपुरे नयरे पाडलनामवणसंडे होत्था, तत्थ णं पाडलिपुरे चन्दगुत्ते नाम राया होत्था, ते णं कालेणं ते णं समए णं चन्दगुत्तनामराया समणोवासगो अभिगयजीवाजीवो जाव अट्ठिमिञ्जापवयणरागरत्तो, अह अण्णया कयावि पक्खियपोसहम्मि पडिजागरमाणस्स सुहपत्तेसु ओहीरमाणे ओहीरमाणे सोलससुविणा दिट्ठा, पासिता, चिंता समुपन्ना, अह कमेण दिवायरे उट्ठिए पोसहं पारेइ । ते णं काले णं, ते णं समए णं संभूयविजयसीस्से भद्दबाहुनाम गणहरे जुगप्पहाणे गामाणुगामं विहरमाणे पंचसयसमणपरिवरिया पाडलिपुरे पाडलिवणसंडे समोसरिए, राया आगओ जहा कोणिए, पंचविहेणं अभिगमेणं वन्दणेणं सोलससुमिणाणं अत्थं पुच्छइ—भयवं ! अज्ज रयणीए मम धम्मचि-

युक्ता नाधमकुले, परन्तु धर्मोत्पत्तिः कालप्रभावतो नोत्तमकुले भविष्यति, इति षष्ठस्वप्नफलम् । यथा कश्चिद् मन्दबुद्धिः कृषिकारो
धान्यबीजमूषरक्षेत्रे वपति तथा मूर्खबुद्धिमन्तः पुमांसः पात्रापात्रमनालोक्य पात्रबुद्धया कुपात्रे दानं दास्यन्ति, इति सप्तमस्वप्नफलम् ।
अष्टमस्वप्नफलम्—स्वर्णकलशसदृशा ज्ञानादिगुणयुक्ताः साधवः स्तोका भविष्यन्ति न च तेषां पूजाप्रभावनामपि कोऽपि करिष्यति,
परन्तु ये बाह्याऽडम्बरवन्तो ज्ञानक्रियारहिताः साध्वाभासाः तान् लोकाः पूजयिष्यन्ति, गीतार्था अपि साधवो हीनाचारैभिः सह
मिलिताः चलिष्यन्ति, यथा बहून् ग्रथिलान् लोकान् दृष्ट्वा सज्जनलोका अपि तेषां मध्ये मिलिताः सन्तः जानन्तोऽपि स्वयमात्मजी-
वितरक्षार्थं ग्रथिला भविष्यंति तथा । अथ तत्कथा—पृथिवीपुरे नगरे पूर्णभद्रनामा राजा आसीद् , तस्य महाबुद्धिनिधानः चतुरः स-
कलकार्यकुशलः सुबुद्धिनामा मन्त्रीश्वरोऽभूद् ; अथैकदा प्रस्तावे राजसभामध्ये लोकदेवनामा नैमित्तिकः समागतः, तदा अमात्येन पृष्टं,
हे नैमित्तिकचूडामणे ! आगामिकालस्य शुभाशुभवार्तां कांचित् प्रकाशयतु, तदा नैमित्तिकेन निजनिमित्तशास्त्रं सम्यक् पर्यालोच्य स्व-
ज्ञानबलात् कथितम्—हे मन्त्रीश्वर ! अतो दिनाद् एकस्मिन् मासे मेघवृष्टिर्भविष्यति, तज्जलपानं च ये करिष्यन्ति ते सर्वे मनुष्या ग्रथिलाः भ-
विष्यन्ति, ततः पश्चात् कियति दिवसे शुभा वृष्टिर्भविष्यति, तज्जलपानाच्च पुनः सर्वे सावधाना भविष्यन्ति; एतादृशं नैमित्तिकस्य वचनं श्रुत्वा
राजामात्याभ्यां नगरमध्ये घोषणा कारिता । यत् सर्वैः लोकैः पानीयस्य संग्रहः कर्तव्यः, तदनन्तरं सर्वैरपि राजवचनं श्रुत्वा पानीयस्य
संग्रहः कृतः । अथ नैमित्तिककथनानुसारेण वर्षा जाता, तदा सर्वैरपि लोकैः वर्षापानीयस्य पानं न विहितम् , कियति दिवसे गते पूर्वसं-
गृहीतं जलं यदा सम्पूर्णं जातं तदा राजाऽमात्याभ्यां बिना सर्वैः सामन्तादिभिरपि वर्षापानीयं पीतम् , तेन च सर्वग्रामो ग्रथिलः जातः
अथ सर्वे लोका एकत्रीभूय नग्नाः सन्तः नृत्यन्ति हसन्ति अन्याश्च कुचेष्टाः कुर्वन्ति, राजामात्याभ्यां विना सर्वे तादृशं कुर्वन्तः राजानम्

हे स्वामिन् ! अद्य रात्रौ मया अष्टौ स्वप्ना दृष्टाः,ताननुक्रमेण भवतामग्रे कथयामि—जीर्णशालायां स्थितो हस्ती दृष्टः १, कपिश्चपलतां कुर्वन् दृष्टः २, क्षीरवृक्षः कण्टकैर्व्याप्तो दृष्टः ३, चतुर्थे च स्वप्ने काको दृष्टः ४, पञ्चमे मृतः सिंहो भयं कुर्वन् दृष्टः ५, षष्ठे स्वप्नेऽशुचिभूमिकायामुत्पन्नमरविन्दं दृष्टम् ६, सप्तमे स्वप्ने ऊषरक्षेत्रे बीजमुप्तं दृष्टम् ७, अष्टमे स्वप्ने स्वर्णकलशो म्लानो दृष्टः ८, इति राज्ञा उक्ते एतेषां च फले पृष्टे प्रभुर्वक्ति–हे राजन् ! एषां फलमेकाग्रचित्तेन शृणु—अस्मिन् पञ्चमारके दुःख-दारिद्र्य-रोग शोक-भयैर्व्याप्तो गृहस्थाश्रमो जीर्णशालासदृशो भविष्यति; यस्मिन् गृहस्थरूपो हस्ती रक्तः सन् स्थास्यति; दुःखं च सुखं कृत्वा मानयिष्यति परमुत्तमसुखदात्रीं व्रतशालां नांगीकरिष्यति, इति प्रथमस्वप्नफलम् । पुनः पञ्चमकाले कपिवत् चपला अल्पसत्त्वा जीवा ज्ञानक्रियायामादरभाजो न भविष्यन्ति, साधवश्च शिथिलाचारा भविष्यन्ति, ये पुनः दृढव्रतधारका धर्मकार्ये शिक्षां दास्यन्ति तेषां हास्यं च करिष्यन्ति, यथा ग्रामीणलोका नगरस्थलोकानां हास्यं कुर्वन्ति; तथा करिष्यन्ति, इति द्वितीयस्वप्नफलम् । तथा ज्ञाने क्रियायां च भक्तिमन्तो जिनशासनोन्नतिकारकाः सप्तक्षेत्रीवित्तव्ययविधायकाः शुभगुणवन्तश्चारित्ररागिणः क्षीरवृक्षतुल्या ये श्रावकास्तान् वेषमात्रधारिणोऽहंकारवन्तो गुणवत्साधुपूजामसहमाना लिंगिनः कण्टकतुल्याः रोधयिष्यन्ति, इति तृतीयस्वप्नफलम् । यथा अतिस्वच्छजलभृतां वापीं दृष्ट्वा काको न तत्र रागं करोति, एवं ज्ञानक्रियायुक्तान् अपि साधून् स्वगच्छे दृष्ट्वाऽपि रागं न साधवः प्राप्स्यन्ति, यथा काकस्य रागं न वापी प्राप्नोति तथा साधवोऽपि गच्छस्य रागं न करिष्यन्ति इत्यर्थः । परन्तु यत्र गच्छे मन्दाऽऽचाराः साधवः तत्र सुन्दरं स्वगच्छं त्यक्त्वा यास्यन्ति आत्मनः पण्डितं मन्यमानाः, इति चतुर्थस्वप्नफलम् । जातिस्मृत्यादिरहितं मृतसिंहतुल्यं जिनदर्शनं न परतीर्थिकात् पराभवं प्राप्स्यति परं परदर्शनानां भयं करिष्यन्ति, इति पञ्चमस्वप्नफलम् । पद्महृदे कमलोत्पत्तिर्युक्ता, न अशुचिभूमौ, एवं धर्मोत्पत्तिरपि उत्तमकुले

आगतः, तत्र बहुलविप्रगृहे परमान्नस्य पारणं चक्रे, तत्र पञ्च दिव्यानि प्रादुर्भूतानि । तत्र च सार्धद्वादशस्वर्णकोटीनां देवैर्वर्षा कृता ।
अनन्तरं क्रमेण विहरतः श्रीवीरप्रभोः गोपालक-चण्डकौशिकसर्प-शूलपाणियक्ष-संगमदेव-कटपूतनाव्यन्तरीप्रमुखैः बहव उपसर्गाः
कृताः, तथापि प्रभुर्ध्यानात् किंचिन् मात्रमपि न चचाल; मेरुवन्निष्प्रकंप आसीत्, श्रीवीरप्रभोः चातुर्मासी षण्मासी-द्विमास्यादि प्रचण्डतपः
क्रियायामुद्यतस्य पक्षाधिकसार्धद्वादशवर्षाणि अतिक्रान्तानि । तस्मिन् समये जृम्भिकग्रामे ऋजुवालुकानदीतीरे श्यामाककुटुम्बिनः
क्षेत्रस्य समीपे शालवृक्षस्याधोभागे गोदोहासनेन स्थितस्य षष्ठतपोयुक्तस्य वैशाखशुक्लदशम्यां तृतीयप्रहरे शुक्लध्याने वर्तमानस्य
श्रीवीरप्रभोश्चतुर्णां घातिकर्मणां क्षये सति केवलज्ञानं केवलदर्शनं च समुत्पन्नम् । तत एकादश्यां मध्यमपापायां महासेनवने तीर्थं
प्रवर्तितम्, शक्रादिदेवैरेकत्रीभूय समवसरणं रचितम्, पश्चाद् इन्द्रभूत्याद्येकादश गणधराः श्रीवीरेण स्थापिताः । अथ प्रभोः चतु-
र्दशसहस्रमिताः साधवः संजाताः, चन्दनबालादिषट्त्रिंशत्सहस्रमिताश्च साध्व्योऽभूवन्, शंख-शतकादि एकोनषष्टिसहस्राधिकलक्ष-
प्रमाणाः श्राद्धाः, सुलसा-रेवतीप्रमुखाष्टादशसहस्राधिकत्रिलक्षप्रमाणाः श्राविकाश्च संजाताः । अथ प्रभोश्चतुर्मासीनां संख्या कथ्यते—
दीक्षाऽनन्तरं प्रथमचतुर्मासी अस्थिग्रामे शूलपाणियक्षगृहे कृता, त्रिचतुर्मासी चम्पानगर्याम्, विशालायां-वाणीयग्रामे द्वादश चतु-
र्मास्यः कृता, राजगृहनगर्यां नालन्दपाटके चतुर्दश चतुर्मास्यः, षट् चतुर्मास्यः मिथिलानगर्यां भगवता कृताः, द्वे चतुर्मास्यौ भद्रिकानगर्यां
कृते, एका चतुर्मासी आलम्भिकानगर्यां कृता, एका चतुर्मासी म्लेच्छभूमिकायां कृता, एका चतुर्मासी श्रावस्तीनगर्यां कृता, एका च मध्यमपा
पायां हस्तिपालराज्ञः सभायामन्तिमा कृता, तत्र अन्तिमचातुर्मास्यां श्रीवीरप्रभुः स्वस्यायुषोऽन्तं ज्ञात्वा भव्यलोकोपकारार्थं षोडशप्रहरान् या-
वद् देशनां दत्तवान्, तस्मिन्नवसरे पुण्यपालराजा प्रभोर्वन्दनार्थमागतः, श्रीवीरप्रभोर्वन्दनां कृत्वा हस्तद्वयं सम्पुटीकृत्य इति-वक्ष्यमाणं पृष्टवान्-

षट्पञ्चाशद्दिक्कुमारीणामासनानि चकम्पिरे, अवधिना प्रभोर्जन्म ज्ञात्वा अत्यन्तप्रमुदिताः सन्त आगत्य जन्मकार्यं कुर्वन्ति । तदनन्तरं-चतुष्षष्ठिसुरेन्द्राणामासनानि चकम्पिरे, ततस्तेऽपि अवधिना विज्ञाय अत्यन्तप्रमुदिताः सन्त आगत्य त्रिःप्रदक्षिणीकृत्य जिनाम्बां जिनं च नत्वा मातरमवस्वापिनीं निद्रां दत्त्वा प्रभुं गृहीत्वा मेरुपर्वतोपरि गत्वा स्नात्रमहोत्सवमहंपूर्विकया चक्रुः । पश्चात् मातुः समीपे स्थापयित्वा मातरवस्वापिनीं निद्रां संहृत्य नमस्कृत्य स्वस्थानं जग्मुः । अथ यस्माद् दिनात् प्रभुर्गर्भे आगतस्तस्माद् दिनाद् राजा धनधान्यैर्वृद्धिमाप, स्वर्णरत्नादीनां च वृद्धिः संजाता. ततो गुणनिष्पन्नं सर्वस्वजनसमक्षं माता-पितृभ्यां द्वादशे दिने वर्धमानकुमार इति नाम प्रदत्तम् , देवैश्च अनन्तसत्त्वमनन्तधैर्यं दृष्ट्वा महावीर इति नाम विदधे । अथ भोगसमर्थं ज्ञात्वा पित्रा परं प्रमोदतो यशोमतीनाम्न्या राजकन्यया सह पाणिग्रहणं कारितम् । अथ प्रभोः सुपार्श्वनामा पितृव्यः, नन्दिवर्धननामा ज्येष्ठो भ्राता, सुदर्शनानाम्नी भगिनी, यशोमती नाम्नी पत्नी, प्रियदर्शनानाम्नी च पुत्री आसीद् । श्रीवीरप्रभुः अष्टाविंशतिवर्षाणि यावद् गृहावासे तस्थौ । भगवता पूर्वं गर्भे एवाभिग्रहः कृतोऽभूयत् जीवतोः सतोः मातापित्रो मया दीक्षा न गृहीतव्या इति । अथ मातापितृभ्यां देवलोके प्राप्ते अभिग्रहं पूर्णं सञ्जातं ज्ञात्वा प्रभुर्दीक्षां ग्रहीतुं तत्परोऽभूत् , तदा नन्दिवर्धनराज्ञ आग्रहात् पुनरपि वर्षद्वयं गृहस्थावासे तस्थौ; तत्र सांवत्सरिकं दानं दत्तम् । अथ लोकान्तिकदेवा आगत्य जानन्तमपि प्रभुं दीक्षावसरं ज्ञापयन्ति–'अहो स्वामिन् ! धर्मतीर्थप्रवृत्तिं कुरु' इति देववचनं श्रुत्वा प्रभुः षष्ठतपसा संयुतः चन्द्रप्रभानाम्नीं शिबिकामारुह्य देवमनुष्यपरिकरेण युतः क्षत्रियकुण्डनगरतो निःसृत्य ज्ञातवनखण्डे आगत्य शिबिकातः उत्तीर्य मार्गशीर्षकृष्णदशम्यामपराह्णे एकाकी एकदेवदूष्येण वस्त्रेण सहितः दीक्षां जग्राह । तस्मिन् समये चतुर्थं मनःपर्यवज्ञानमुत्पन्नम् । अथ दीक्षां गृहीत्वा प्रभुरन्यत्र विजहार । प्रव्रज्यादिनाद् द्वितीये दिने कोल्लाकसन्निवेशग्रामे

क्षत्रियकुण्डग्रामन-
प्राणतनामदशमदेवलोकस्य पुष्पोत्तरविमानाच्च्युतः, आषाढशुक्लषष्ठीदिने उत्तराफाल्गुनीनक्षत्रे चन्द्रयोगे आगते सति क्षत्रियकुण्डग्रामन-
प्राणतनामदशमदेवलोकस्य पुष्पोत्तरविमानाच्च्युतः। यस्यां रात्रौ भगवानुत्पन्नः तस्यां रात्रौ गर्भप्रभावात् त्रिशलाराज्ञ्या चतुर्दश
गराधिपतिश्रीसिद्धार्थराज्ञो भार्यायाः त्रिशलायाः कुक्षावुत्पन्नः। यस्यां रात्रौ भगवानुत्पन्नः तस्यां रात्रौ गर्भप्रभावात् त्रिशलाराज्ञ्या चतुर्दश
गराधिपतिश्रीसिद्धार्थराज्ञो भार्यायाः त्रिशलायाः कुक्षावुत्पन्नः। ध्वजः, पूर्णकलशः, पद्मसरः, समुद्रः, देवविमानम्, रत्नराशिः,
स्वप्ना दृष्टाः, तानाह-सिंहः, गजः, वृषभः, लक्ष्मीः, पुष्पमाला, चन्द्रः, सूर्यः, ध्वजः, पूर्णकलशः, पद्मसरः, समुद्रः, देवविमानम्, रत्नराशिः,
स्वप्ना दृष्टाः, तानाह-सिंहः, गजः, वृषभः, लक्ष्मीः, पुष्पमाला, चन्द्रः, सूर्यः, जन्म जातम्, तस्मिन् समये षट्पंचा-
निर्धूमाग्निश्च। एवमेते स्वप्नाः क्रमेण दृष्टाः ❀ ततः चैत्रशुक्लत्रयोदश्यामर्धरात्रे श्रीवीरप्रभोः जन्म जातम्, तस्मिन् समये षट्पंचा-

---

*—अत्र सामान्येन नाममात्रेण सक्षिप्तं श्रीवीरचरित्रं दर्शितम्, अतएव देवलोकात् च्युत्वा आषाढशुक्लषष्ठ्यां देवानंदागर्भागमनं तथैव
द्व्यशीतिदिनव्यतीते इन्द्रेण त्रिशलागर्भे अवतारितः, ( गर्भापहारः कारितः, इत्यर्थः ) एष च विशेषार्थो न दर्शितः। जैनसिद्धांते विशेषार्थे विद्यमाने
ऽपि सामान्यव्याख्याऽवसरे विशेषार्थस्य व्याख्यानं न भवति, यथा-कल्प-आवश्यक-आचारांगादौ आगमपंचांगीशास्त्रेषु 'देवानंदागर्भात् द्व्यशी-
तिदिनव्यतीतेषु सत्सु हरिणेगमेषिदेवेन त्रिशलागर्भे स्थापितः श्रीवीरप्रभुः' एतद्विशेषव्याख्याविद्यमानेऽपि पंचाशकसूत्रवृत्तौ सामान्यव्याख्याऽवसरे
तस्योल्लेखो न कृतः, तेन तस्य तत्र अभावो न भवति, तथैव अत्राऽपि देवानन्दागर्भागमने विद्यमानेऽपि तस्योल्लेखो न कृतः, तथापि तस्य अभावो न
भवति. अतएव अत्र सामान्यविशेषापेक्षया तद् अवगंतव्यम्। किमुक्तं भवति श्रीवर्द्धमानस्वामिनः विशेषतः षट्सु कल्याणकेषु आगमानुसारेण विद्य-
मानेषु अपि, अत्र सामान्यापेक्षया त्रिशलागर्भागमन-जन्म-दीक्षादिपंचकल्याणकानि उक्तानि. तथैव पंचाशकसूत्रवृत्तावपि-सर्वजिनेंद्रापेक्षया च्यवन—
जन्म-दीक्षादिपंचकल्याणकानि-सामान्येन उक्तानि। परं च कल्प-स्थानांग-आचारांग-आवश्यकनिर्युक्ति-चूर्ण्यादिआगमेषु-महापुरुषचरित्र-वीरचरित्र-
त्रिषष्टिशलाकापुरुषचरित्र-कल्पनिरुक्त-टिप्पणकादि प्राचीनशास्त्रेषु च विशेषेण च्यवन गर्भसंक्रमण-जन्म-दीक्षादिषट्कल्याणकानि दर्शितानि, तेनात्र
विसंवादो न संभाव्यः समवायांगसूत्रवृत्ति-आवश्यकचूर्णि-लोकप्रकाश-दशाश्रुतस्कंधादिशास्त्रानुसारेण श्रीवीरस्य च्यवनद्वयस्य संसिद्धत्वात्. सामा-
न्यविशेषापेक्षया च अस्य विशेषनिर्णयो कल्पद्रुमकलिकायाः प्रथमव्याख्यानात्, अस्मत् निर्मितबृहत्पर्युषणानिर्णयस्योत्तरार्धाच्च अवगंतव्य इति
मणिसागरः।

विहरन् जीवितस्वामिश्रीमहावीरप्रतिमावन्दनार्थं गतः, एतस्मिन् प्रस्तावे संप्रति राजा राजमार्गे गच्छन् सुस्थितसूरिं दृष्ट्वा जातिस्मरणभाग् बभूव । ततः राजा समीपे आगत्य बहुभक्तिपूर्वकं श्रीगुरुं ननाम । करद्वयं संयोज्य राजा गुरुं प्रति वक्तिस्म-'हे स्वामिन् ! मां जानीथ' इति पृष्टे गुरुराह-हे राजन् ! भवन्तं को नाम न जानाति ?; ततो राजा पुनरुवाच-हे ज्ञानसमुद्र ! ज्ञानविशेषेण भवताऽहमुपलक्षितो न वा ? इति मया पृच्छयते, तदा सूरिश्चमत्कारं प्राप्य श्रुतज्ञानोपयोगं दत्त्वा उवाच-भो राजन् ! त्वं पूर्वभवे संवेगवानस्माकं शिष्यो बभूव, उत्तमदीक्षाप्रभावतो भवान् राजा जातः, एषा च सम्पत् प्राप्ता । एतादृशं गुरोर्वचनं श्रुत्वा आचार्ये प्रीतिमान् राजा वक्ति-हे स्वामिन् ! मया बुभुक्षितेन रंकेन इदं राज्यं प्राप्तं तत्सर्वं युष्माकं प्रसादफलं; इतरथा मम राज्यं कुतः ? तस्मादिदं राज्यं भवद्भिर्ग्राह्यं; यथाऽहमनृणी स्याम्, एतादृशं राज्ञो वाक्यं श्रुत्वा गुरुरुवाच-हे निर्मलबुद्धे राजेन्द्र ! अस्माकं राज्यस्यवाञ्छा नास्ति, वयं तु शरीरेऽपि निःस्पृहाः किं पुनः राज्ये, तस्माद् हे राजेन्द्र ! अस्माकं राज्येन सह किमपि प्रयोजनं नास्ति, इदं राज्यं भवद्भिः पुण्यात् प्राप्तं; ततो हे राजेन्द्र ! पुनः पुण्ये उद्यमः कर्त्तव्यः, निर्मलं सम्यक्त्वं च पालनीयम् । श्रीजिनेश्वरजगन्नाथस्य निरन्तरं पूजां कुरु । पुनः सुसाधूनां निर्ग्रन्थानां पंचसमितिसमितत्रिगुप्तिगुप्तानां सप्तदशभेदसंयमपालकानां द्विचत्वारिंशदाहारदूषणवर्जितानां भव्यजीवोपकारकाणां सेवां कुरु, दानादिचतुर्विधस्य धर्मस्याराधने उद्यमं कुरुष्व, एष धर्मो विशेषेण पर्वसु आराधनीयः, एतादृशं गुरुवाक्यं श्रुत्वा राजा उवाच-हे स्वामिन् ! संवत्सरादि समस्तपर्व जिनशासने प्रसिद्धं वर्तते, तस्य पर्वणो महिमा श्रावकैः बहुतरो मन्यते; परं लोकोत्तरं दीपावलिपर्व कुतः प्रवृत्तं ? अस्मिन् पर्वणि चारुवस्त्रभूषणादीनि मनुष्या धारयन्ति, पुनः वृषभादिशृंगाररंजनक्रियां गृहांगणप्रमुखसंस्कारादीनि च कुर्वन्ति, तस्य किं कारणम् ? इति राज्ञा पृष्टे सति गुरुर्वक्तिस्म-हे राजन् ! एतस्य सम्बन्धं त्वमेकाग्रचित्ततया शृणु । श्रीवर्धमानस्वामी

धर्मकर्माणि विधाय तत्पर्वाराधनीयं, येनेह परत्र च सर्वेष्टसिद्धिः ॥

संवद्व्योमरसाष्टरात्रिप्रमिते ( १८६० ), मासे शुचौ शोभने । पक्षे प्रोज्ज्वलतायुते सुविहिते, सम्यग्द्वितीयातिथौ ॥
श्रीपूज्यजिनहर्षसूरिगणभृद्राज्ये मुदाष्टाह्निका—व्याख्यानं सुगमं हितं सुविहितं श्रीजेसलाद्रौ पुरे ॥ १ ॥
श्रीमंतो गुणशालिनः समभवन् , प्रीत्यादिमाः सागरा-स्तच्छिष्याऽमृतधर्मवाचकवरा आसन् स्वधर्मादराः ॥
तच्छिष्यैर्जिनराजराजिचरणांभोजप्रसक्तैः क्षमा-कल्याणाभिधपाठकैः सुमनसां श्रद्धावतां प्रीतये ॥ २ युग्मं ॥
मुनेरुदयरंगस्या-ग्रहाद्व्याख्यानमादरात् ॥ इदं व्यधायि प्राचीनं पद्यबन्धं विलोक्य तत् ॥ ३ ॥

॥ इति पर्युषणाद्यष्टाह्निकाव्याख्यानं सम्पूर्णम् ॥

## अथ दीपमालिकाव्याख्यानम् ॥ ११ ॥



श्रीनेमीशं जिनं नत्वाऽजिमगंजपुरे स्थितम् । दीपोत्सवस्य व्याख्यानं, लिख्यते देवभाषया ॥ १ ॥

अस्मिन् जंबूद्वीपे भरतक्षेत्रस्य मध्यखंडे मालवदेशे अलकातुल्या उज्जयिनी नाम नगरी बभूव । तस्यां सूर्यवत् तेजस्वी भूपगुणसमन्वितः संप्रतिनामा राजा राज्यं करोतिस्म । अथैकदा उज्जयिन्यां सुस्थितसूरिनामा आचार्यः षट्त्रिंशद्गुणैर्विभ्राजमानो ग्रामानुग्रामं

दार्थमुद्यतो भवति, तावदेव सा तस्य खड्गधारां बबन्ध, न पुनस्तस्य सत्वस्य. ततो राजा खड्गधाराबन्धनाद्विलक्षः सन् कंठनाल-विडंबकं नवं नवं खड्गं गृहीतवान्, यदासौ भूपतिर्मनागपि सत्वान्न चचाल तदा ते स्त्रियौ स्वकीयं रूपं प्रादुःकृत्याऽत्यादराज्जयज-येत्युचतुः, पुनश्च—

जय ! त्वं वृषभस्वामि ! कुलसागरचन्द्रमाः । जय ! सत्ववतां धुर्यः, जय ! चक्रीशनंदनः ! ॥ १ ॥

अहो ! तव धैर्यं ! अहो ते मनसो निश्चयः ! यत्त्वस्य विनाशेऽपि मनाक् स्वव्रतं न त्यक्तवान्. देवेन्द्रः स्वसभायां देवानां पुरस्तवातुलं सत्त्वं विशेषतः प्रशशंस, हे राजन् ! आवाभ्यां अश्रद्धानाभ्यां स्वर्गादागत्य स्वनिश्चयात्त्वं क्षोभयितुमारब्धः, परं त्वां क्षोभयितुं कोऽपि न समर्थः. हे जगत्प्रभुकुलावतंस ! हे वीर ! त्वयैव इयं पृथ्वी रत्नसूरिति सत्यं नाम बिभर्ति, इत्थं तयोः स्तुवत्योस्तत्र देवेंद्र उपागमत्, जयजयशब्दमुच्चरन् पुष्पवृष्टिं च कृतवान्. तदा प्रतिज्ञाभ्रष्टा उर्वशी इन्द्रेण सोपहासं निरीक्षिता सती तत्पुरतो नृपगुणान् जगौ. इन्द्रोऽपि तस्मै वरमुकुटकुंडलांगदहारान् दत्त्वा च ताभ्यां सह स्वर्गं ययौ. सूर्ययशा अपि सत्यप्रतिज्ञः प्रमुदितः सन् सन्नीत्या पृथ्वीं पालयतिस्म. अथ स राजा भरतेशवत् पृथ्वीं जिनगृहमंडितां कुर्वन् श्रीसंघयात्रया जन्म पवित्रयन् श्रीयुगादि-जिनचरणवत् नित्यं चतुर्दश्यष्टमीपर्वं आराधयामास, तथा व्रतधारिणः श्रावकान स्वगृहे भोजयामास. पूर्वं भारतेन कांकिणीरत्न-रेखाभिः श्रावका अंकिताः, सूर्ययशसा तु सौवर्णोपवीतेन तेन तेंचिताश्चक्रिरे. तस्य राज्ञ उदारचरिता बहवः कुमारा आसन्. यथा ऋषभस्वामिन ईक्ष्वाकुवंशो ववृते, तथा सूर्ययशसः सूर्यवंशोऽभवत्; सोऽप्येकदा पितृवत्स्वरत्नदर्पणे पश्यन् संसारासारतां धारयन् केवलज्ञानं प्राप्य बहून् भव्यान् प्रतिबोध्य मुक्तिं प्राप । इति निजनियमदृढपालने सूर्ययशोनृपकथा ॥ भव्यात्मभिरष्टाह्निकापर्वणीत्थं

करणमंगीकृतमेव, अहमेकदा त्वत्परीक्षार्थं त्वत्तस्तद्याचितवती, त्वं तु हहा स्वल्पेन कार्येण क्रोधवशं गतः, हे नाथ ! अहं शीलादपि सुखादपि उभयस्माद् भ्रष्टा, तस्मान्मम चिताग्निसेवनमेव श्रेयःशरणमस्तु. इति तद्वचः श्रुत्वा तन्मग्नमानसो नृपः स्ववाक्यं स्मरन् जगाद, हे प्रिये ! तातताततेन च यत्कृतं तत्पर्वणो नाशं तत्पुत्रोऽहं कथं कुर्वे ? हे हरिणाक्षि ! मम सकलां पृथ्वीं कोशं गजाश्वादीं च सर्वान् त्वं स्वयं गृहाण; परं येन न सौख्यं, न च धर्मस्तदकृत्यं मां मा कारय ? ततः सापि ईषद्धिहस्य कोमलवाण्या प्रोवाच, हे राजन् ! भवादृशां सत्यवचनमेव सद्वृत्तं, यतो येन पापिना स्वांगीकृतविघातः कृतः सोऽशुचिस्तस्य भारात्पृथ्वी अतिषीदति. हे नाथ ! यदि त्वया इदमपि कार्यं न सिद्ध्यति तदा राज्यादिदातृत्वं कथं सेत्स्यति ? त्वदर्थं मया पितुर्विद्याधरैश्वर्यं त्यक्तं मयैतद्राज्यादिना किं कुर्वे ? अथ हे स्वामिन् ! यदि पर्वभंगं न कर्त्ता, तर्हि मत्पुरतो युगादीशप्रासादं पातय ? इति तद्वचनश्रवणमात्रेणैव नृपो वज्राहत इव मूर्छां प्राप्य गतचैतन्यो भुवि पपात. तदैव मंत्रिणा आदेशादाकुलैस्तत्परिकरजनैः शीतलजलादिसंसेकान्नृपो लब्धचैतन्यो विहितः; अथ सूर्ययशा नृपः स्वपुरः स्थितां तां स्त्रियं दृष्ट्वा कुपितो जगाद, रे अधमे ! अयं तवाचारो वाण्या मत्पुरः स्वकुलाधमतां विकिरति, यत उद्गारवदाहारो भवेत्, त्वं विद्याधरपुत्री न, किंतु चांडालपुत्री दृश्यसे, मया मणिभ्रमेणैव काचखंडादरश्चक्रे, यो देवस्त्रैलोक्यनाथस्त्रैलोक्यवंदितस्तत्प्रासादभंगकृत् कोऽपि कथं भवेत् ? तस्मात् हे स्त्रि ! स्वयं स्ववचसा बद्धं मामनृणं कर्तुं धर्मलोपं विनाऽन्य-द्याचस्व ? पर्वलोपं चैत्यध्वंसं चाहं सर्वथा न करोमि, तत् श्रुत्वा सापि ईषद्धिहस्य पुनस्तमुवाच-हे नाथ ! अन्यदन्यदिति च तद्वचो दूरतो याति, यदीदं त्वं नांगीकर्त्ता, तर्हि त्वं स्वयं स्वपुत्रस्य शिरश्छित्वा सद्यो मह्यं देहि ? अथ राजा विमृश्य वदतिस्म, हे सुलोचने ! मत्सुतो मत्तोऽभवत्, तस्मान्मम शिरस्तव करतलस्थमस्तु, इत्युक्त्वा नृपः करेण खड्गं गृहीत्वा यावत् स्वशिरश्छे-

तपश्च कर्त्तव्यं, जिनपूजाश्च विधेया, इत्थमेतानि पर्वाण्याराधयन् जनः पुण्यान्यर्जयति, ततः क्रमेण कर्माणि क्षपयित्वा मुक्तिं याति, अतो हे कान्ते ! सप्तम्यां त्रयोदश्यां च लोकप्रबोधाय अयं पटहोद्घोषो मयादेशात्प्रजायते. अथोर्वशी एतन्नृपवचः श्रुत्वा तन्निश्चयचमत्कृतापि माय.वचनप्रपंचेन जगाद, हे नाथ ! इदं मनुष्यत्वमिदं रूपमिदं राज्यं सर्वं तपःक्लेशादिभिस्त्वया कथं विडंब्यते ? यथेच्छं सुखानि भुंक्ष्व ? पुनर्मानवो भवः क ? राजसद्भोगाश्च क ?

अथ कर्णयोस्तप्तत्रपुतुल्यं तस्यास्तद्वचनं श्रुत्वा नृप उवाच रे रे धर्मनिंदामलिनस्वभावेऽधमे ! इयं तव वाणी मनागपि विद्याधरकुलाचारोचिता न दृश्यते, तव सकलं चातुर्यं धिक्, रूपं वयः कुलं च धिक्, येन त्वं जिनपूजादिकं मद्धर्मकृत्यं निंदसि, पुनर्मनुष्यत्वमद्रूपारोग्यराज्यादीनि तपसा प्राप्यंते, तत्तपः कः कृतज्ञो नाराधयेत् ? यो नाराधयेत् स कृतघ्न एव, धर्माराधनतो हि देहस्य विडंबनं न स्यात्, धर्मं विना केवलं विषयैस्तु विडंबनमेव, तस्माद्यथेच्छं धर्मः कर्त्तव्यः, पुनः पुनर्मानवो भवः क ? व्रतधीः का ? मृगसिंहादिबाला अपि अष्टम्यां पाक्षिके चाहारं न गृह्णंति, तर्हि अहं कथं गृह्णामि ? तेषां ज्ञातृत्वं च धिगस्तु, ये सर्वधर्मकारण पर्वाराधनं न कुर्वंति. श्रीयुगादिजिनोपदिष्टमिदमुत्तमं पर्वास्ति, तदहं तपो विना कंठगतप्राणैरपि पर्व वृथा न कुर्वे, हे स्त्रि ! मम राज्यं प्रयातु, प्राणक्षयोऽस्तु, परं पर्वतपसोऽहं भ्रष्टो न भवामि ! तत इत्थं क्रोधाकुलं नृपवचः श्रुत्वा उर्वशी मोहमायां कुर्वंती पुनरुवाच—स्वामिन् ! भवतः कायक्लेशो माभूदिति प्रेमरसत एव मयैतद्वचः प्रोक्तं, तस्मात्क्रोधावसरोऽत्र नास्ति. पूर्वंतु आवाभ्यां पितृवाक्यविमुखीभ्यां स्वच्छंदचारी नृपतिर्न वृतः, सांप्रतं पूर्वकर्मपरिपाकात् त्वं वरो वृतस्तेनावयोः संसारसौख्यं शीलं च सर्वमकस्माद्गत, यदि स्वाधीनपुंस्त्रियोर्योगो भवेत्तदा सांसारिक सुखं स्यात्, अन्यथा रात्रिदिवसयोगवद्विडंबनमेव, हे स्वामिन् ! पुरा नाभेयजिनाग्रे त्वया तु मद्वाक्य-

उवाच. आवां मणिचूड विद्याधरराजस्य पुत्र्यौ, आबाल्यात्कलास्वेवादरवत्यौ अभूतां, क्रमेण यौवनं प्राप्ते वीक्ष्य अस्मत्पिता वर्चिंतां कर्तुं लग्नः, आवां स्वमदृशं पतिमलभमाने स्थाने स्थाने अर्हच्चैत्यानां नमस्याभिर्निज जन्म सफलं कुर्वहे। पुनर्भाव्यो भवः क्व ? इयमयोध्यापि तीर्थभूतास्ति, अतोऽत्र भरतकारिते चैत्ये आदिजिनं नमस्कर्तुमावयोरागमनमभूत्. एवं कथयंत्योस्तयोर्मंत्री उवाच-अमुना सूर्ययशसा नृपेण सह युवयोः संगमः श्रेष्ठो; यतोऽसो ऋषभस्वामिनः पौत्रो भरतचक्रिणः पुत्र सर्वकलासंपूर्णः सौम्यः सद्गुणवान् बलवांश्च अस्ति तस्मान्निश्चितं ऋषभस्वामी युवयोस्तुष्टो यदुत अकस्मात्सूर्ययशा वरः प्राप्तः। मंत्रिणि एवं वदति सति ते तमूचतुः आवां हि स्वाधीनं पतिं मुक्त्वान्यं पतिं नैवाश्रयावहे. ततोऽमात्यो नृपाज्ञया ते इत्यवोचत्, युवयोर्वाचमन्यथा कुर्वन्नृपतिर्मया निषेध्यः, मंत्रिणा एवमुक्ते सति तदैव श्रीयुगादीशसमक्षं तेषां पाणिग्रहोत्सवः संजातस्ततस्तयोः प्रीतिरसाकृष्टो भूपतिः संसारे तद्भोगमेव सारं मन्यमानोऽहर्निशं ताभ्या सह विविधान भोगान् भुंजानो विस्मृतान्यकृत्यः सुखेन कालं निनाय। अथ एकदा संध्यासमये ताभ्यां पत्नीभ्यां युतः सूर्ययशा नृपो गवाक्षं ययौ, तदा भो लोकाः! श्वोऽष्टमीपर्व भावि, ततस्तदाराधने सादरैर्भाव्यमिति पटहोद्घोषणां ताभ्यां कपटस्त्रीभ्यां श्रुत्वा ततोऽसरं विज्ञाय रंभाऽजानतीव नृपतिं प्रति सादरा सती भंभावादनकारणमपृच्छत्। नृपतिरुवाच हे रंभे! शृणु, ? अस्माकं तातेनोक्तं चतुर्दश्यष्टमीरूपं पर्वास्ति, यथामावास्या पौर्णमासी अष्टाह्निकाद्वयं चातुर्मासत्रियं वार्षिकं पर्युषणाख्यं च पर्व एतानि अन्यान्यपि पर्वाण्युक्तानि संति; ज्ञानाराधनार्थं पंचमी च प्रोक्तास्ति। एतेषु पर्वदिनेषु विहितं पुण्यं स्वर्गमोक्षसुखप्रदं भवेत्. तस्माच्चतुःपर्व्यामखिलं गृहव्यापारं परित्यज्य शुभं कर्म विधेयं; पुनश्चतुःपर्व्यां स्नान-स्त्रीसंग-कलह-द्यूतक्रीडा-परद्रव्य-मात्सर्य-क्रोधादिकपायसंगप्रमादादि न किमपि कर्त्तव्यं, प्रियेष्वपि ममता न विधेया, परमेष्ठिस्मरणादिशुभध्यानवता भाव्यं, सामायिकं पौषधं च षष्ठाष्टमप्रमुखं

कंपते, समुद्रो वा मर्यादां त्यजेत्, कल्पवृक्षो वा निष्फलो भवेत् तथाप्येषः कंठगतैः प्राणैरपि जिनाज्ञावत् स्वकृतं निश्चयं न मुंचति, अथोर्वशींद्रवचः श्रुत्वा किंचिन्मनसि विचार्य प्रत्युत्तरमुवाच-हे स्वामिन्! युक्तायुक्तज्ञस्त्वं मनुष्येषु निश्चय किं श्लाघसे? यः सप्तधातुनिष्पन्नशरीरोऽन्नजीवकः स देवैरप्यचाल्य इति कः श्रद्धाति? मद्गानरसपूरेण केषां विवेकप्रमुखा गुणा न विलयं यांति? तत्र गत्वा तमप्यहं सद्यो व्रताद् भ्रंशयिष्ये, इति प्रतिज्ञां विधाय रंभया सहिता उर्वशी हस्तेन वीणां दधाना स्वर्गात् भूमिमवतरतिस्म; अयोध्यानिकटोद्याने च श्रीऋषभस्वामिनश्चैत्ये मोहोत्पादकमत्यद्भुतं रूपं कृत्वा गायतिस्म; तद्गानमोहिताः पक्षिमृगसर्पाद्या अपि आलेख्यलिखिता इव पाषाणघटिता इव वा निश्चलनेत्रास्तस्थुः।

इतश्च श्रीसूर्ययशा अश्वं वाहयित्वा पश्चाद्वलमानः पथि तयोरतिमधुरगानध्वनीन् शुश्राव, तदा वाजि-गज--पत्तयः पदमपि यानेऽसमर्था अभूवन्. एतत्स्वरूपं दृष्ट्वा नृपोऽमात्य प्रति सादरमुवाच-भो मंत्रिन्! संसारे नादसमः सुखदः कोऽपि न दृश्यते. यद्वशात्पशवोऽप्यमी ईदृग्मोहिताः संति। नादेन देव-दानव नृप-कामिन्यादयः सर्वेऽपि प्रायो वशी भवन्ति. ततो वयमपि ऋषभस्वामिनं नमस्कर्तुं तत्र चैत्ये यामस्तत्र गत्वा एतद्गेयस्वादमपि लप्स्यामहे। इत्थमामंत्र्य तद्गानमोहितो भूपालो मंत्रिणा सह जिनचैत्यान्तर्जगाम। तत्र हस्तयोर्वीणां बिभ्रत्यौ, गीतध्वनिं कुर्वत्यौ कामभार्येव दिव्यसौंदर्ये द्वे कुमारिके विलोक्य स्नेहचक्षुर्विमुक्तैः कामबाणैर्हृदि विद्धो नृपश्चिंतयामास. एतयोरिदमत्यद्भुतं रूपं कस्य पुण्यवतो भोगाय भविष्यति? ततो राजा मुहुर्मुहुस्तयोश्चक्षुषी क्षिपन् युगादीशितुः पादौ प्रणम्य चैत्यान्निःसृत्य बहिर्प्रदेशे उपविष्टस्तयोः कुलादिक ज्ञातुं मंत्रिणे आदिष्टवान्. मंत्र्यपि नृपादेशात्तयोः समीपं गत्वा सुधामधुरया वाचा संभाष्य इत्थमालपत्. हे कन्यके! युवां के? युवयोः पति कः? किमर्थमिहागमनं चैत्येतत्सर्वं वदत. अथ मंत्रिवचः श्रुत्वा तयोरेका

स्मरणं प्राप्य जिनधर्मानुरक्तोऽभूवं, ईदृशोपायं विना मम जैनधर्मप्राप्तिः कुतः ? अनार्यत्वमहापंके निमग्नोऽहं त्वयोद्धृतस्त्वत्प्रसादादेव च मे चारित्रावाप्तिर्जाता, ततः श्रेणिकाभयकुमारादयः सर्वेऽपि लोकास्तमृषिं वंदित्वा तुष्टमनसः स्वस्थानं ययुः; ततो मुनि राजगृहपुराभ्यर्णे समवसृतं श्रीवीरस्वामिनमभिवंद्य तच्चरणकमलसेवया स्वकीयं जन्म सफलीकृत्य क्रमेणायुः क्षये शिवं प्राप ॥ इति श्रीजिनदर्शनमाहात्म्ये आर्द्रकुमारदृष्टांतः ॥

पुनरत्र पर्वणि यत्कर्त्तव्यं तदाह–तपोविधानादि, यथाशक्ति तपसि यत्नो विधेयः, चतुर्थ-षष्ठा-ष्टमादितपः कार्यमित्यर्थः, तत्र यदि कश्चित् स्नेहवशात्तन्निषेधं करोति तथापि तल्लोपबुद्धिर्न धार्या श्रीभरतपुत्रसूर्ययशोनृपवत् , तत्कथा चेयं—

अयोध्यायां नगर्यां सूर्ययशा नृप आसीत् , स च त्रिखंडभूमिस्वामी नीतिवत् अखंडशासनो दुष्टान् वैरिणः स्ववशे नीतवान् , इंद्रेणोपढौकितं मुकुटं शिरसि धृतवान ; तस्य मुकुटस्यैव माहात्म्याच्च स नृपः सुरसेव्योऽप्यभूत् , तस्य राज्ञो राधावेधपणात् प्राप्ता कनकविद्याधरपुत्री जयश्रीर्नामपट्टराज्ञी बभूव, अन्यान्यपि तस्य बहूनि कलत्राणि आसन् . स राजा चतुःपर्वीं विशेषेणाष्टमीं चतुर्दशीं च प्रत्याख्यानपौषधादितपसा आराधयति स्म, जीवितादप्यत्पर्वादरोऽस्य चेतसि अतिवल्लभोऽस्ति, तेनासौ जीवितादपि पर्वाणि रक्षति। अथैकदा सौधर्मेन्द्रः सुधर्मासभामाश्रितो ज्ञानात्तन्निश्चयं ज्ञात्वा चमत्कृतिं प्राप, तदोर्वशी देवी विश्ववशीकरणसामर्थ्यं बिभ्राणाऽकस्मात्सुरेंद्रशिरःकंपं दृष्ट्वा प्रोवाच. स्वामिन् सांप्रतं शिरः कंपनकारणं तु न किमपि दृश्यते तत किं निमित्तं तुष्टेन नाथेन शिरःकंपः कृतस्तदा सुरेंद्र उवाच-मयाधुना ज्ञानदृष्ट्या भरतक्षेत्रे ऋषभस्वामिनः पौत्रो भरतचक्रिणः पुत्रोऽयोध्याधिपः सूर्ययशा नाम राजा सात्त्विकानां शिरोमणिर्दृष्टः, स चाष्टमीचतुर्दशीपर्वणस्तपसः कृतबहुयत्नैः सुरैरपि चालयितुं न शक्यते, यदि सूर्यः पूर्वदिशमतिक्रम्य पश्चिमायामभ्युदेति तथा मेरुर्वातैः

यः, एवं स मुनिर्गोशालं निरुत्तरीचक्रे तदा जय जय शब्दं कुर्वद्भिः खेचराद्यैश्च तस्य महामुनेर्वह्वी प्रशंसा कृता ॥

तत आर्द्रकऋषिर्हस्तितापसाश्रमसमीपे आययौ, तत्रस्थास्तापसाश्च एकं महांतं हस्तिनं हत्वा तन्मांसं भुंजाना बहून् दिवसान् व्यतीयंति, ते चैवमूचुः, एकस्यैव हस्तिनो हननं वरं, यत एकजीवघातेन भूयान् कालोऽतिगम्यते, मृगतित्तिरमत्स्याद्यैर्धान्यैश्च बहुभिरपि न तथा, तस्मात्तद्भक्षणं न युक्तं बहुपापसद्भावात् तदा च ते मिथ्याधर्मनिष्टास्तपस्विनो मारणार्थं एकं महावत्तं गजं बबंधुः यत्र शृंखलाबद्धः स गज आसीत्तेनैव मार्गेण करुणानिधिः स महर्षिर्जगाम, तदा स हस्ती मुनिपंचशतीयुतं बहुभिर्जनैर्वंद्यमानं तं महर्षिं दृष्ट्वा लघुकर्मत्वादित्यचिंतयत् , अहमप्येनं मुनिं वंदेयं यदि बद्धो न भवेयं, बद्धस्तु किं करवाणि ? एवं चिंतयतस्तस्य महर्षेर्दर्शनात्सद्योऽयः शृंखला व्यशीर्यत, अथ स हस्ती निरर्गलः सन् तं मुनिं वंदितुमभ्यागात् , तदा लोका एष मुनिर्हतो हत इति ब्रुवाणाः पलायनं चक्रिरे, मुनिस्तु तथैव तस्थौ, गजोऽपि नम्रीकृतकुंभस्थलः सन् तं मुनिं नमतिस्म, शुंडादण्डं प्रसार्य मुनिपादौ स्पृष्ट्वा स्पृष्ट्वा परमं सुखं प्राप, ततः स गजः समुत्थाय भक्त्या मुनिं पश्यन् अव्याकुलः सन् अरण्यानीं प्रविवेश, तदात्यद्भुतं तत्प्रभावं दृष्ट्वाऽतिकोपं प्राप्तास्ते तापसा अपि आर्द्रकुमारसाधुना प्रत्यबोध्यंत, ततस्तत्प्रेषिताश्चैते श्रीवीरसमवसरणे गत्वा दीक्षां जगृहुः ॥

अथ श्रेणिकराजापि तथा गजमोक्षणं तापसप्रतिबोधं च श्रुत्वाऽभयकुमारयुक्तस्तत्रागात्, मुनिर्भक्त्या वंदमानं राजानं धर्मलाभाशिषं ददौ, अथ शुद्धभूतले आसीनं मुनिं राजा पप्रच्छ हे भगवन् ! हस्तिमोक्षणान्मम महदाश्चर्यं समजनि । मुनिरूचे–हे राजन् ! हस्तिमोक्षणं न दुष्करं, किन्तु आमतंतुपाशमोक्षणं मां दुष्करं प्रतिभासते । राज्ञा पृष्टं स्वामिन् तत्कथं ? तदा स मुनिः सकलामपि स्वां कथां कथयामास । तत आर्द्रकुमारोऽभयं प्रत्यभाषत त्वं मम निष्कारणोपकारी धर्मबांधवोऽभूत् , हे मित्र ! त्वत्प्रेषितार्हत्प्रतिमादर्शनादहं जाति-

अथ प्रतिज्ञापूर्णीभवनानंतरं स वैराग्यपूर्णमानसो रात्रेः पश्चिमे प्रहरे इत्यचिंतयत् , मया प्राग्भवे मनसैवव्रतं भग्नं तेनाहमनार्यत्वं
प्राप्तोऽस्मि, अत्र भवे पुनर्व्रतं गृहीत्वा मुक्तमतः का गतिर्मे भविष्यति ? इदानीमपि प्रव्रज्यां गृहीत्वा तपसा आत्मानं शोधयामि,
इति विचिंत्य प्रातःकाले श्रीमतीं पत्नीं स्वसुतं च संभाष्य तदनुमतिं च लात्वा साधुलिंगं समादाय निर्ममत्वो गृहान्निर्ययौ । अथ
राजगृहं व्रजन् अंतराले चौर्यवृत्तिं कुर्वाणां स्वसामंतपंचशतीं ददर्श, तैरप्युपलक्ष्य भक्त्या वंदितः, स साधुस्तानवादीत् युष्माभिर्महापा-
पहेतुरेषाजीविका किमादृता ? तैरुक्तं हे प्रभो ! अस्मान् वंचयित्वा यदा त्वं पलायिष्टस्तदोदितो लज्जया भूपतेर्मुखं न दर्शयामः, तवैवा-
न्वेषणे लग्नाः पृथ्वीं भ्रमंतश्चौर्यवृत्त्यैव जीवामः, मुनिरुवाच अयुक्ता वृत्तिर्भवद्भिरादृता, केनापि पुण्ययोगेनेदं मानुष्यकं प्राप्य स्वर्गा-
पवर्गप्रदो धर्म एव सेव्यो हिंसाऽसत्यचौर्याब्रह्मपरिग्रहपरित्यागः कर्त्तव्यः, हे भद्रा ! यूयं स्वामिभक्ताः स्थ, प्राग्वदहं युष्माकं स्वामी-
अतो ममैव मार्गं प्रपद्यध्वं, ततस्ते प्रोचुः पूर्वं त्वमस्माकं स्वाम्येवाभूः, सांप्रतं तु गुरुरप्यसि यतस्त्वयाऽस्मभ्यं धर्मो ज्ञापितोऽथास्मान्
दीक्षयानुगृहाण; तत आर्द्रकुमारस्तान् प्रव्राज्य तैः सहितः श्रीमहावीरं वंदितुं राजगृहाभिमुखं ययौ, मार्गे गच्छतस्तस्य गोशालोऽभि-
मुखो मिलितो विवादं कर्तुं प्रवृत्तः, भूचराः खेचराश्चापि सहस्रश आयाताः कौतुकार्थिनस्तस्थुः ॥

अथ गोशालोऽवदत् भवतां तपःकष्टं वृथैव, यतः शुभाशुभफलानां कारणं नियतिरेवास्ति, ततो मुनिरवादीत् पौरुषमपि कारणं
मन्यस्व, यदि सर्वत्र नियतिमेव कारणं मन्यसे तर्हि अभीष्टसिद्ध्यर्थं सर्वाः क्रिया वृथा प्रसज्येरन् , तथाहि—हे नियतिवादिन् ! सर्वदा
स्वस्थाने एव किं न तिष्ठसि ? भोजनाद्यर्थं च कथमुद्यमं करोषि ? एवं स्वार्थसिद्धये नियतिवत्पौरुषमपि साध्यमस्ति, अर्थसिद्धौ नियते-
रपि पौरुषमाधिक्यं भजते, तथाहि आकाशात्पानीयं पतति, परं भूखननादपि तद्भवेत्, यतो नियतिर्बलीयसी, परं नियतेरपि पौरुषं बली-

यथा प्रतिदिनं यातानायातांश्च सर्वानपि साधून् पश्यामि, श्रेष्ठयूवाच इह पत्तने ये केऽपि महर्षयः समायांति तेभ्यस्त्वं प्रत्यहं स्वयं भिक्षां देहि, येन सर्वेषां दर्शनं स्यात् , ततः सापि प्रत्यहं तथैव चक्रे, तल्लक्षणं दिदृक्षमाणा च मुनीनां चरणानवंदत, अथ द्वादशे वर्षे स महामुनिर्दिग्मूढः सन् तत्रागतस्तल्लक्षणदर्शनात्तयोपलक्षितश्च, तदा श्रीमती तमृषिमुवाच हे नाथ ! तत्र देवकुले तदा यो मया वृतः स मम वरस्त्वमेवासि, मद्भाग्यैरेवाधुनागतोऽसि, अथ मां मुग्धां त्यक्त्वा क्व यास्यसि, यदा त्वं दृष्टनष्टोऽभूः; तद्दिनादारभ्य मम महादुःखेन कालोऽगमत् , तस्मात्प्रसादं विधाय मामंगीकुरु, एवं स्थितेऽपि यदि मामवमन्यसे तर्हि अग्निप्रवेशं कृत्वा तुभ्यं स्त्रीहत्यापातकं दास्ये, तदान्यैरपि तत्पित्रादिभिर्महाजनैर्विवाहाय अभ्यर्थितः स साधुव्रतारंभनिषेधकं तद्देवीवचनं सस्मार, ततस्तद्भोग्यकर्मोदयाद्दणमोक्षमिव कर्तुं तां श्रीमतीं पर्यणैषीत् । अथ श्रीमत्या सह चिरं भोगान् भुंजानस्य तस्य क्रमेण पुत्रः संजातः, स च क्रमेण वर्द्धमानो राजशुक इव वक्तुमुल्लसज्जिह्वोऽभवत् , तावति पुत्रे संजाते सति स आर्द्रकुमारो हर्षितः सन् श्रीमतीं प्रोवाच, अतः परं ते पुत्रः सहायोऽस्तु, अहं प्रव्रजामि, तदा बुद्धिनिधिः श्रीमती सुतं प्रत्यवसरं ज्ञापयितुं तूलपूणिकासहितं तर्कुमादाय समुपाविशत् , तदा तूलकर्त्तनक्रियां कुर्वाणां तां विलोक्य स बालकः पप्रच्छ हे अंब ! एतत्पामरलोकोचितं कर्म किं प्रारब्धं ? सा प्रोचे-हे पुत्र ! तव पिता त्वां मां च त्यक्त्वा प्रव्रज्यार्थं गंतुमनो वर्त्तते, गते चास्मिन् पतिहीनाया मे तर्कुरेव शरणं, तदा बालको बाल्यान्मनाक्षरैरुवाच–अहं बद्ध्वा धारयिष्यामि कथं मे पिता यास्यति ? इत्युक्त्वा तन्तुभिः पादौ बबन्ध. आर्द्रकुमारोऽपि तन्मधुरं बालवचोवृंदं श्रुत्वा सुतस्नेहादेवमुवाच, हे पुत्र ! यावद्भिस्तंतुभिर्मे पादौ बद्धौ तावंति वर्षाणि पुनर्गृहे स्थास्यामि, गणयित्वा बंधनानि अच्छोटय ? ततो गणिता द्वादशबंधा अभवन्, तेन स द्वादश वर्षाणि पुनर्गृहे स्थास्ये इत्युक्त्वाऽवाहयत् ॥

मुनिस्तीक्ष्णं व्रतं पालयन् भूमंडले विचरन् अन्यदा वसंतपुरपत्तनं प्राप्य कस्मिंश्चिद्देवकुले कायोत्सर्गेण च तस्थौ ॥

इतश्च तस्मिन्नगरे देवदत्तो नाम महाश्रेष्ठ्यभूत्, तस्य धनवती नामा पत्न्यासीत्, अथ बन्धुमतीजीवो देवलोकाच्च्युत्वा श्रीमतीनामा अद्भुतरूपा तयोः पुत्री समजनि, सा च धात्रीभिर्लाल्यमाना क्रमेण रजःक्रीडोचितं वयः प्राप, एकदा तत्र देवकुले पौरकन्याभिर्युक्ता श्रीमतीकन्या पतिवरणक्रीडया रंतुमाययौ, तदा सर्वाः कन्या भर्त्तारं वृणुतेत्यूचुस्तत कयापि कोऽपीत्येवं सर्वाभिः स्वरुचिवरा वृताः, श्रीमत्योक्तं हे सख्यो ! मया तु अयं पूज्यो वृतस्तदा साधुवृतमिति देवता प्रोवाच, पुनर्गर्जितं तन्वाना सा एव देवी तत्र रत्नान्यवर्षत्, श्रीमती गार्जिताद्भीता तस्य मुनेः पादेऽलगत्, स मुनिः क्षणमात्रं स्थित्वाऽचिंतयत्, इह तस्थुषो ममानुकूलं उपसर्गोऽभूत्, अतोऽत्र न स्थेयमिति विचिंत्य सोऽन्यत्रागात् . तदा अस्वामिकं धनं राज्ञ एवेति निश्चयं कृत्वा तानि रत्नान्यादातुं राजा तत्राजगाम, राजपुरुषास्तद्द्रव्यस्थानं नागसंकुलं ददृशुः, देवतया चोक्तं एतद् द्रव्यमस्यै कन्यायै मया वरके प्रदत्तमस्ति, इति श्रुत्वा नृपो विलक्षः सन् स्वस्थानं ययौ, ततस्तत्सर्वं धनं श्रीमतीपिता श्रेष्ठी जग्राह । अथ कियता कालेन श्रीमतीं परिणेतुं बहवो वरा अढौकंत, तत्स्वरूपं पित्रा पुत्र्यै उक्तं तदा श्रीमती जगाद-हे तात ! यो महर्षिर्मया वृतः स एव मम वरः, तद्वरणे देवता य द्रव्यमदात् तद् द्रव्यं गृह्णता त्वयापि तदनुमतमेव, ततस्तस्मै मां कल्पयित्वान्यस्मै दातुं नार्हसि, उक्तं च—

सकृज्जल्पंति राजानः, सकृज्जल्पंति साधवः ॥ सकृत्कन्याः प्रदायत, त्रीण्येतानि सकृत् सकृत् ॥ १ ॥

एतत् श्रुत्वा श्रेष्ठ्यूचे, स तु भ्रमर इव एकत्र नावतिष्ठतेऽतः कथं प्राप्यते पुनरत्रायास्यति न वा, आयातोऽपि कथं ज्ञायते ? किं तस्याभिज्ञानं ? तदा श्रीमत्या उक्तं-हे तात ! मया तद्दिने गर्जितभीतया तच्चरणे विलग्नयाभिज्ञानं दृष्टमस्ति, तस्मादतः परं तथा कुरु

प्रतिमां पूजयन्नार्द्रकुमारो दिवसानतिवाहयतिस्म, एकदा कुमारो नृपमेवं व्यजिज्ञपत् हे तात ! स्वमित्रमभयकुमारं द्रष्टुमिच्छामि, आर्द्रकनृपोऽवादीत् , हे वत्स त्वया तत्र गमनेच्छा न कर्त्तव्या, अस्माकमपि स्थानस्थितानामेव श्रेणिकेन सह मैत्र्यमस्ति; तदा पित्राज्ञया निबद्धोऽभयसंसर्गं प्रति उत्कंठितश्चार्द्रकुमारोऽपि न तस्थौ न च जगाम, तथा स आसने शयने याने भोजनेऽन्यक्रियासु च अभयकुमारेणाश्रितां दिशं नेत्रयोरग्रे चकार. पुनः कीदृशो मगधदेशो, राजगृहपुरं च कीदृक्; तत्र गमने कस्को मार्ग इत्थं पार्श्ववर्त्तिनो जनान् पप्रच्छ; तस्मिन्नवसरे आर्द्रकनृपो दध्यौ, कदापि कुमारो मामकथयित्वैव निश्चितमभयसमीपे यास्यत्यतो यत्नः कर्त्तव्यस्ततो नृपः पंचमामतशतानि इत्यादिशत् , अहो ! अयं कुमारो देशांतरं गच्छन् भवद्भिरक्षणीयस्तदा ते सामंता देहच्छायेव तत्पार्श्वं न त्यजन्ति स्म, कुमारोऽप्यात्मानं देहधृतमिवामंस्त, ततोऽभयसमीपगमनं मनसि अवधार्य प्रत्यहमश्ववाहनभूमौ अश्ववाहनं कर्त्तुमारेभे, ते सामंताश्च अश्वारूढा अंगरक्षकाः संतः पार्श्वे तस्थुः, कुमारोऽश्वं वाहयन् तेभ्यः किंचिदग्रे गत्वा न्यवर्त्तत, एवं चाश्वं वाहयन् सोऽधिकाधिकं ययौ, पुनः पुनर्व्याघुट्य ययौ च, इत्थ तेषां विश्वासमुत्पाद्यान्यदार्द्रकुमारो निजैः प्रतीतिमत्पुरुषैः समुद्रे यानपात्रं प्रगुणं कारयित्वा तच्च रत्नादिभिः प्रपूर्य जिनप्रतिमां च तत्रारोप्य तथैवाश्वं वाहयन् दूरगमनाददृश्यीभूय तद्यानपात्रमारुह्य आर्यदेशं ययौ, ततो यानपात्रादुत्तीर्य तां प्रतिमामभयकुमाराय संप्रेष्य सप्तक्षेत्र्यां धनान्युप्त्वा यतिलिंगं गृहीतवान् , स च यावत्सामायिकमुच्चारयितुमारेभे तावदाकाशस्थितया देवतया उच्चैः स्वरेणोचे–यद्यपि त्व महासत्त्वस्तथापि सांप्रतं दीक्षां मा ग्रहीः, अद्यापि ते भोगफलं कर्मास्ति तद्भुक्त्वावसरे व्रतं गृह्णीथाः, यतो भोग्यं कर्म तीर्थकृतामप्यवश्यं भोक्तव्यं, तस्मात् हे महात्मन् ! तेन व्रतेनालं यद् गृहीतमपि त्यक्ष्यते; यथा तेन भोजनेन किं यद्भुक्तमपि वम्यते; इत्थं बहुधा निषिद्धोऽप्यार्द्रकुमारः स्वपौरुषमंगीकृत्य देवी वाचमनादृत्य स्वयं दीक्षामाददे, स प्रत्येकबुद्धो

शमाचख्यौ. ततः कुमार एकांते स्थित्वा तां पेटामुद्घाट्य तन्मध्यस्थां तमस्युद्योतकारिणीं तां श्रीऋषभस्वामिप्रतिमां दृष्ट्वा स्वचित्ते
चिंतयामास, किमिदं किंचिदुत्तमं देहाभरणमस्ति, तत् किं मूर्ध्नि आरोप्यं, कंठे वा हृदये वान्यत्र कुत्रचिदारोप्यं, क्वापीदं दृष्टपूर्वमिव
मां प्रतिभासते, परं स्मृतिपथं नायाति, इत्थमत्यर्थं चिंतयत आर्द्रकुमारस्य जातिस्मरणजनिकी मूर्च्छा समजनिष्ट, तत उत्पन्नजातिस्म-
रणः स कुमारः संप्राप्तचेतनः सन् स्वयमेव एवं निजपूर्वभवकथां चिंतयामास, तथाहि—

इतो भवात्तृतीये भवे मगधदेशे वसंतपुरेऽहं सामठिको नाम कुटुम्बी अभूवं; मम बंधुमती भार्याभूत्, एकदा सुस्थिताचार्यसमीपे
तया सह अहमर्हद्धर्ममश्रौषं, ततः सभार्योऽपि अहं प्रतिबुद्धो गृहवासविरक्तः सन् तत्पार्श्वे प्रव्रज्यां गृहीतवान् , क्रमेण गुरुणा सह वि-
हरन् एकस्मिन् पत्तनेऽगां, बंधुमती साध्व्यपि अपरसाध्वीसंगता तत्रागात् , एकस्मिन्नह्नि तां पश्यन् पूर्वभोगान् स्मरन् अहं तस्याम-
नुरक्तोऽभूवं, तच्चान्यसाधवे आख्यां, सोऽपि प्रवर्त्तिन्यै आचख्यौ, सा पुनर्बंधुमत्यै आचख्यौ, तदा बंधुमती विषण्णा सती प्रवर्त्तिनीं
प्रोवाच, एष गीतार्थोऽपि यदि मर्यादां लंघेत तदा का गतिः, असौ मां देशांतरं गतामपि यावच्छ्रोष्यति तावन्मोहप्रभावान्मयि रागं न
त्यक्ष्यति, तस्मात् हे भगवति ! अहं निश्चित्तं मरणं प्रपत्स्ये, येन नास्य नापि मे शीलखंडनं जायते, इत्युक्त्वा सा साध्वी अनशनं कृत्वा
शुद्धभावनया प्राणांस्तत्याज, देवत्वं च प्राप, ततस्तां मृतां श्रुत्वा मया विचिंतितं सा महानुभावा निश्चितं व्रतभंगभयान्मृता, अहं पुन-
र्भग्नव्रतस्ततो मामपि जीवितेन अलं, तदाहमप्यनशनं कृत्वा विपद्य देवोऽभूवं, ततश्च्युत्वाहमत्रानार्यदेशे धर्महीनः समुत्पन्नोऽस्मि,
सांप्रतं यो मम प्रतिबोधकः स मे बंधुः स एव च गुरुरस्ति, केनापि भाग्योदयेनाभयकुमारमंत्रिणाहं बोधितः, परमद्यापि मन्दभाग्यो-
ऽस्मि यतस्तं द्रष्टुमसमर्थः, तस्मात् पितरमनुज्ञाप्यार्यदेशं गमिष्यामि, यत्र मे गुरुरभयकुमारोऽस्ति, इत्थं मनोरथं कुर्वन् आदिमार्हत

१०

मंत्रिणा सार्द्धं राजगृहपुरं गत्वा श्रेणिकाय अभयाय च प्राभृतान्यर्पयामास, तथा नृपपुत्र आर्द्रकुमारस्त्वया सह मैत्र्यं कर्त्तुमिच्छतीत्य-भयाय मंत्री संदेशमुवाच । तदा जिनशासने कुशलोऽभयः स्वचेतसि इत्यचिंतयत्; निश्चितं स कुमारो विराधितश्रामण्यत्वादनार्येषु जातोऽस्ति, परं स राजपुत्रो महात्मा नियमादासन्नभव्योऽस्ति, यतोऽभव्यदूरभव्यानां तु कदापि मया सह मैत्र्यभिलाषो न भवेत्, तस्मा-त्केनाप्युपायेन तं जिनधर्मानुरक्तं विधाय धर्ममार्गे प्रवर्त्तयामि, तत्र चायमुपायोऽस्ति, प्राभृतच्छलेन यदि तत्रार्हत्प्रतिमां प्रेषयामि, तद्दर्शनाच्च यदि तस्य जातिस्मरणज्ञानमुत्पद्यते तदेष्टसिद्धिः स्यादित्युपायं विचिंत्य छत्रसिंहासनादिप्रातिहार्यविराजितां रत्नमयीं प्रथम जिनेन्द्रप्रतिमां ❀ पेटीमध्ये धृत्वा तदग्रे सकलानि धूपघटिकादिदेवपूजोपकरणानि मुमोच, ततस्तद्द्वारे तालकं दत्त्वाऽभयो निजमुद्रया तां मंजूषां मुद्रयामास. अथ कियद्भिर्वासरैः श्रेणिको नृपस्तमार्द्रकेशपुरुषं प्रियालापपूर्वकं प्रभूतैः प्राभृतैः सह विससर्ज, अभयोऽपि तां पेटां तस्य हस्ते समर्प्य तं सत्कृत्य अमृततुल्यवाण्या इत्युवाच, एषा पेटा आर्द्रकुमारस्य पुरस्तादुपढौकयतां, तथा तस्य मद्बन्धोरिदं वक्तव्यं, त्वया-एकांतप्रदेशे एकाकिना स्थित्वा इयं पेटा स्वयमुद्घाट्य तदंतर्गतं वस्तु स्वयं द्रष्टव्यं, अन्यस्य कस्यचिन्न दर्शनीयं, ततोऽभयोक्तं वचोंगीकृत्य स पुमान् स्वपुरं ययौ, तानि च प्राभृतानि स्वस्वामिने स्वामिपुत्राय चार्पयामास, तथार्द्रकुमारायाभयोक्तसंदे-

❀अत्रकेऽपि जिनेन्द्रप्रतिमास्थाने रजोहरणमुखवस्त्रिका प्रेषणं वदन्ति तथा प्राचीनजैनशास्त्रे जिनेन्द्रप्रतिमोल्लेखस्याभावं दर्शयन्ति तदसत्यं, यतः—जीवाभिगम–भगवती—ज्ञाताधर्मकथा–राजप्रश्नेयावश्यकनिर्युक्त्यागमपंचागीप्राचीनशास्त्रे स्थाने स्थाने जिनप्रतिमोल्लेखो विस्तरेण दर्शितः, तथा रायप्रश्नेण्यादिषु आगमेषु (धुवं दाऊण जिणवराण ) इति वचनात् जिनेन्द्र प्रतिमा जिनेन्द्र सदृशत्वेन उक्ता, किंच सूत्रकृदगव्याख्याप्रभृतिषु अभयकुमारेण आर्द्रकुमाराय प्रथम जिनेन्द्र प्रतिमा प्रेषिता इत्येवलिखितमस्ति, अतो रजोहरणमुखवस्त्रिकाप्रेषणस्य कथनं तु अयुक्तमेव, अस्य विशेषनिर्णयः प्रतिमाशतक, सम्यक्त्वशल्योद्धारादिग्रन्थादवगन्तव्यः ॥ इति ॥

जिनदर्शनादेव बहूनां भव्यानां बोधिबीजावाप्तिर्भवत्यार्द्रकुमारवत् , तद्वृत्तांतस्त्वित्थं—
अस्मिन् भरतक्षेत्रे समुद्रतीरे आर्द्रको नाम यवनदेशोऽस्ति, तत्रार्द्रकपुरं नाम नगरं, तत्रार्द्रकनामा राजा बभूव, तस्य चार्द्रका नाम्नी
पट्टराज्ञी, तयोरार्द्रकुमारो नाम पुत्रोऽभूत् , स च क्रमेण संप्राप्तयौवनः स्वेच्छया मनोज्ञान् भोगान् भुञ्जानः सुखेन तिष्ठतिस्म, तस्या-
चार्द्रकराजस्य श्रेणिकराजेन सह परंपरागता परमप्रीतिरभूत् . एकदा श्रेणिको नृपः प्रचुरं प्राभृतं प्रगुणीकृत्य आर्द्रकराजसमीपे निजा-
मात्यं प्रैषीत् , सोऽमात्योऽपि कियद्भिर्दिनैस्तत्र गतः, आर्द्रकनृपेण बहुमानादरेण संभाष्य तेन मंत्रिणा उपनीतानि प्राभृतानि गृहीतानि,
पृष्टं च तस्मै मद्बंधोः श्रेणिकस्य कुशलं वर्त्तते ? ततस्तेनापि तत्रत्यसकलकुशलोदंतनिवेदनेन राज्ञो मनसि परमानंदः संपादितः, तस्मिन्न-
वसरे आर्द्रकुमारो नृपं पप्रच्छ भो तात ! कः श्रेणिको येन सः तवेदृशी प्रीतिर्वर्त्तते, ? राजा प्रोवाच, मगधदेशस्वामी श्रेणिकनृपो विद्यते, तत्कुले
मत्कुले च परंपरागता प्रीतिरस्ति, एतत्पितृवचः श्रुत्वार्द्रकुमारोऽपि मंत्रिणमुवाचः भो मंत्रिन् ! त्वत्स्वामिनः कश्चित्संपूर्णगुणोपेतः पुत्रोऽस्ति ?
तेन सहाहमपि मैत्र्य कर्त्तु मिच्छामि, मंत्र्युवाच श्रेणिकभूपस्य अभयकुमारो नाम पुत्रोऽस्ति, स च सकलकलानिधिः सर्वबुद्धिसमुद्रो मंत्रि-
पंचशत्या–अधिपो महादयावान् महादाताऽतिदक्षो निर्भयो धर्मज्ञः कृतज्ञश्च विद्यते, किं बहुना ? ते केऽपि जगति गुणा न सन्ति ये
ऽभयकुमारे निवासं न कृतवंतः, इत्थं मंत्रिवचनादभयकुमारगुणान् श्रुत्वार्द्रकुमारः पितुराज्ञां समादाय मंत्रिणं प्रत्युवाच, मामनापृच्छय
त्वं स्वदेशं मा यासीः, तत्र गच्छता त्वयाऽभयं प्रति स्नेहद्रुमबीजतुल्यं मद्वचः श्रोतव्यमिति, ततो मंत्र्यपि, तद्वचनमंगीकृत्य राज्ञा-
ऽनुसृष्टः सन् मंत्रिणा दर्शितं निवासस्थानं ययौ, अथान्यदार्द्रकनृप प्रवरमौक्तिकादीनि प्राभृतान्यर्पयित्वा स्वपुरुषं तं मंत्रिणं च श्रेणि-
कपार्श्वे प्रैषीत् , तदार्द्रकुमारोऽपि तस्यैव मंत्रिणा हस्तेऽभयकुमारनिमित्तं विद्रुममौक्तिकादीन्यनुपमवस्तूनि प्रेषितवान् . अथ स पुमान्

मनोवाकायशुद्धयाऽत्र पर्वणि पूजास्नात्रादिकं विधेयं, तदवसरे च भगवतः छद्मस्थत्व-केवलित्व-सिद्धस्वरूपमवस्थात्रयं भावनीयं, यदुक्तं—न्हवणच्चणेहिं छउमत्थ-वत्थपडिहारगेहिं केवलियं ॥ पलियं कुस्सगोहिय । जिणस्स भाविज्ज सिद्धत्तं ॥ १ ॥ द्रव्यपूजासामग्र्यभावे तु भावपूजैव कर्त्तव्या, सा चेत्थं-प्रातः श्रीजिनगृहं गत्वा शुद्धभावेन भगवद्दर्शनं कार्यं, भगवन्मुद्रां विलोक्य च तद्गुणगणस्मरणं विधेयं, तत्फलं यथा—दर्शनाद् दुरितध्वंसी, वंदनाद्वाछितप्रदः । पूजनात्पूरकः श्रीणां, जिनः साक्षात्सुरद्रुमः ॥ १ ॥ पुनः श्री-

शालागृहं पौषधशाला तत्र वा तत् सामायिकं कार्यं श्राद्धैः सदा नोभयसन्ध्यमेवेत्यर्थः । कथं विधिना—खमासमणं दाउं इच्छाकारेण संदिसह भगवन् सामाइय मुहपत्ति पडिलेहेमिति भणिय, बीय खमासमणपुव्वं मुहपत्तिं पडिलेहिय, खमासमणेणं सामाइय संदिसाविय बीय खमासमणपुव्वं सामाइय ठामित्ति वुत्तं खमासमणदाणपुव्वं अद्धाविणय णतो पचमंगल कड्ढित्ता "करेमि भन्ते ! सामाइय सावज्जं जोगं पच्चक्खामि जाव नियम पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भन्ते ! पडिक्कमामि निन्दामि गरिहामि अप्पाणं वोसिरामि त्ति " सामाइयसुत्तं भणति, तउ पच्छा इरिय पडिकमति इत्यादि पूर्वसूरिनिर्दिष्टविधानेन । अत्र च ईर्या पतिक्रम्यैव सामायिकोच्चारणं यत्केचिदाचक्षते तत्सिद्धान्तानुत्तीर्णम् , यत उक्तमावश्यकचूर्णि, बृहद् वृत्त्यादौ—" करेमि भन्ते ! सामाइय सावज्जं जोग पच्चक्खामि जाव साहू पज्जुवासामि दुविह तिविहेणमिति, काउण पच्छा इरिअ पडिक्कमइ त्ति " इत्यादि- सर्वमान्यप्राचीनशास्त्रे प्रकटतया प्रथमं करेमिभंते उच्चारणानतरं पश्चाद् इर्याप्रतिक्रमणं दर्शित. यथा—उत्तराध्ययन—आवश्यकनिर्युक्त्यादिप्राचीनशास्त्रे षडावश्यकविधि सङ्क्षिप्तःसामान्येन दर्शितः पर तस्य विशेषार्थः गावपरंपरानुसारेण गुरुपरंपराया पूर्वाचार्यविरचितविधिवादशास्त्रतो वा ज्ञायते, ततः तस्यानुसारेणैव विशेषतः सप्रति षडावश्यकविधिः क्रियते । तथैव अत्रापि सङ्क्षिप्तमात्रसामान्येन सामायिकविधिः दर्शितः, परं तस्य विशेषविधि पूर्वाचार्यविरचितविधिवादशास्त्रतोऽवगंतव्यः । तथा उत्तराध्ययनादिगताऽऽवश्यकविधि सङ्क्षिप्त ज्ञात्वा तस्यानादरकरणे सूत्रार्थोत्थापनदोषप्रसगः स्यात , तथैव अत्राऽपि एतद्विधेरनादरकरणे शास्त्रपाठोत्थापनदोषप्रसग: स्यात् , अतएव तदनुसारेण भव्यात्मभिः समाचरणीय, पर जिनाज्ञाविरुद्धाचरणं न युक्त " पयमपि असद्दहंतो सुत्तत्थं मिच्छादिट्ठीओ " इति वचनात् । इति । श्रीमत् सुमतिसागरमहोपाध्यायाना लघुशिष्य पं० मुनि-मणिसागरः ।

तस्मात् शुभ आचारो येषां ते शुभाचारास्तैः श्रावकैराश्रव-कषायरोधः कर्त्तव्य इत्युक्तं। अथ पुनरत्र पर्वणि यत्कर्त्तव्यं तदेव श्रावकविशेषणद्वारेणाह-कीदृशैः श्रावकैः, सामायिकजिनपूजातपांसि तेषां विधानं करणं, तदादीनी तत्प्रभृतीनि कृत्यानि-कार्याणि तेषु तत्परैरित्यर्थः, एतावतात्र पर्वणि सुश्रावकैः सामायिकं कार्यं, ❀ सामायिकस्वरूपं चेदं—

समता सर्वभूतेषु, संयमः शुभभावना ॥ आर्त्तरौद्रपरित्याग--स्तद्धि सामायिकं व्रतम् ॥ १ ॥

दिवसे दिवसे लक्खं, देइ सुवण्णस्स खंडि एगो ॥ एगो पुण सामाइयं, करेइ न पहुप्पए तस्स ॥ २ ॥

आदिपदात्पौषधं कार्यं, पौषधफलमिदं—

पोसहि य सुह भावे। असुहाइं खवेइ नत्थि संदेहो ॥ छिंदइ नरयातिरियगइं, पोसहं विहि अप्पमत्तणं ॥ १ ॥

तत्करणसामर्थ्याभावेऽस्मिन् पर्वणि सुश्रावकैर्यथाशक्ति जिनानां द्रव्यपूजा भावपूजा च कर्त्तव्या, पूजाफलमिदं—

सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे। सयसाहस्सिया माला, अणंतं गीयवाइए ॥ १ ॥

---

❀ --सामायिकविधिविषय आवश्यकचूर्णि-बृहद्वृत्ति-लघुवृत्ति-पंचाशकचूर्णि-वृत्ति-योगशास्त्रवृत्ति-श्राद्धदिनकृत्यसूत्र-वृत्ति-श्रावकप्रतिक्रमणचूर्णि-वृत्ति - श्रावकप्रज्ञप्ति-शतपदी-विचारामृतसंग्रहादिगतशास्त्रीयपाठः विस्तरभयात् नात्र लिख्यन्ते-तथापि सङ्क्षेपतः श्रावकधर्मप्रकरणवृत्तिपाठोऽत्र दर्श्यते तथाहि-अथ यत्र क्रियमाणं श्राद्धानां सामायिकं निष्प्रत्यूहं निर्वहति तत्स्थानमुपदिशति—

चैत्यालये स्वनिशान्ते, साधूनामन्तिकेऽपि वा। कार्यं पौषधशालायां, श्राद्धस्तद्विधिना सदा ॥ १ ॥

चैत्यालये विधिचैत्ये, स्वे निशान्ते स्वगृहेऽपि विजनस्थान इत्यर्थः। पौषो ज्ञानादीनां धीयतेऽनेनेति पौषधं पर्वानुष्ठानम् उपलक्षणात् सर्वधर्मानुष्ठानार्थं,

स एव चौरः समाहूय पृष्टोऽहो कया तव बहूपकारः कृत ? इति, तेनाप्यभाणि भो महाराज ! 'चतुरोदिनान् यावन्मरणभयभीतेन मया न किंचित्स्नानभोजनादिसुखमज्ञायि, अद्य पंचमेऽहनि अस्याः पंचम्या राज्ञ्यः मुखादभयदानाकर्णनेन परमसुखमनुभूयते, अतएव तस्या उपकारः सर्वतो महान्' एतच्चोरवचः श्रुत्वा सर्वैरपि सा प्रशंसिता, पट्टराज्ञी च कृता, अतः सर्वदानानामभयदानं श्रेष्ठमिति ज्ञापितं। ततः सुश्रावकेणात्र पर्वणि खंडन-पेषण-वस्त्रक्षालनाद्यारंभो विवर्जनीयः, तैलिक-लोहकार-भाण्डूकर्मकारकादिषु वाचा धनव्ययेन चारंभो निवारणीयः, स्वशक्त्या बंदिमोक्षश्च कार्यः, ग्रामनगरमध्येऽमारीघोषणा कारयितव्या, येन केनापि प्रकारेण जीवरक्षा कार्या ॥

द्वितीयाश्रवपरित्यागे मृषावचनमत्र पर्वणि न वक्तव्यं, गालिप्रदानादिकठिनवाणी न वाच्या, सर्वथा वाक्शुद्धिः कार्या। तृतीयाश्रवपरित्यागे परधनग्रहणं विवर्जनीयं, द्रव्यस्य हि जंतूनां बाह्यप्राणरूपत्वात्, तदपहारस्य च मरणरूपकष्टहेतुत्वात्। चतुर्थाश्रवपरित्यागेऽत्र पर्वणि ब्रह्मचर्यं पालनीयं, स्त्रीसंगो विवर्ज्य इत्यर्थः, परस्त्रीसेवनं तु लोकद्वयविरुद्धत्वात् सुश्रावकेणावश्यमेव वर्ज्यं। पञ्चमाश्रवपरित्यागे धनधान्यादिनवविधपरिग्रहे परिमाणं कार्यं, परिग्रहतृष्णाऽपरिमिता न धार्या, इच्छापरिमाणं विधेयमित्यर्थः। तथा पुनरस्मिन् पर्वणि कषायरोधः कर्त्तव्यः, कषायाश्चत्वारः क्रोध-मान-माया-लोभाख्यास्तेषां परित्यागो विधेयः, क्रोधोदये हि कलहोत्पत्तिश्चिरंतनप्रीतिनाशश्च, मानोदये विनयनाशस्तथा च सद्ध्यानवतामपि मुनीनां केवलावाप्तौ अंतरायः स्यात्, राजर्षिबाहुबलिवत्, एवं मायोदये लोभोदयेऽपि च बहवो दोषा उत्पद्यन्ते, अतश्चत्वारोऽपि कषायास्त्याज्याः, उक्तंच—

कोहो पिइं पणासेइ। माणो विणयनासणो ॥ माया मित्ताणि नासेइ। लोहो सव्वविणासणो ॥ १ ॥

दीयते म्रियमाणस्य, कोटिजीवितमेव च ॥ धनकोटिं न गृह्णीयात्, सर्वो जीविताभिच्छति ॥ १ ॥
अपि च—या दद्यात्कांचनं मेरुं, कृत्स्नां चापि वसुंधराम् ॥ एकस्य जीवितं दद्यान्नहि तुल्यमहिंसया ॥ २॥

अतोऽभयदानख्यापनार्थं कथानकमुच्यते--तथाहि--वसंतपुरेऽरिदमनो राजा, तस्य पंच राज्यः, तासु चैका दुर्भगा, चतस्रोऽत्यंतव-ल्लभाः, एकदा चतुर्वधूसमेतो राजा निजप्रासादगवाक्षस्थो नानाविधक्रीडाविलासं कुर्वंस्तिष्ठति, तस्मिन्नवसरे एकश्चौरो राजमार्गेण नीय-मानो राज्ञा सपत्नीकेन दृष्टः, स च कीदृशः ? कंठन्यस्तरक्तकणवीरमालो, रक्तवस्त्रपरिधानो, रक्तचन्दनानुलिप्तगात्रः पुरस्ताद्वाद्यमानव-ध्यडिंडिमः, इत्थं विविधविडंबनाभिर्विडंब्यमानं तं चौरं दृष्ट्वा राज्ञीभिः पृष्टं, किमकार्यमनेनाकारीति, तदा एकेन राजपुरुषेण तासां पुरः कथितं, परद्रव्यापहारेण राजविरुद्धमनेन कृतमिति, ततः संजातकृपया एकया राज्या विज्ञप्तो राजा, स्वामिन् ! यो भवता मह्यं प्राग्वरः प्रतिपन्नः सोऽधुना दीयतां, येनाहमेकदिनमुपकरोमि चौरं, तदा कथंचिद्राज्ञा प्रतिपन्नं तद्वचः, ततस्तया स्नानादिपुरस्सरं दीनारसहस्रव्ययेन विविधवस्त्रालंकारैरलंकृतः स चौरः, ततो द्वितीयया द्वितीयदिने राजानं विज्ञप्य दीनारदशसहस्रव्ययेन स सत्कृतः, ततस्तृतीयया तृतीयदिने स दीनारलक्षव्ययेन स उपचरितः, ततश्चतुर्थ्या दीनारकोटिव्ययेन चतुर्थो दिवसोऽतिवाहितः, ततः पंचम्या दुर्भगया राज्या पंचमदिने राज्ञः समीपमागत्य विनयेन नम्रया दीनवचसा नृपो विज्ञप्तः, स्वामिन् ! मम दुर्भगाया उपरि भवदीया तादृशी कृपा नास्ति, तेन मया कदापि भवंतो न याचिताः, अधुनाऽस्य चौरस्य जीवितदानं मया त्वां याच्यते, तदा राज्ञापि जीवित-प्रदानपूर्वकं चौरः प्रदत्तोऽनया च तं चौरं स्वगृहे नीत्वा सामान्यभोजनेन भोजयित्वा कथितं मया तुभ्यं जीवितं प्रदत्तं, पुनश्चौर्यं मा कार्षीस्ततोऽसौ हृष्टस्तदा सपत्नीभिर्हसितं नास्य त्वया किंचित् सुखकारि कृतं, तासां च परस्परं बहूपकारविषये विवादे संजाते राज्ञा

तोरणादिभिरलंकृतानि अतिसुन्दराणि संति, तत्र देवेंद्रा बहुदेवदेवीपरिवृताः प्रवर्द्धमानभावेनाष्टाह्निकमहोत्सवं कुर्वन्ति, जल-चंदन-पुष्प-धूपाद्यष्टद्रव्यैर्जिनबिंबानि पूजयंति, जिनगुणान् गायंति, नाटकं च विदधति, इत्यमष्टदिवसावधि महोत्सवं समाप्य पुनः स्वस्थानं गच्छति. एवं श्रावकैरपि श्रीमत्तीर्थंकरप्रकाशितेऽस्मिन् ❀ पर्वणि समागते धर्मणि यत्नो विधेयः, तथा चास्मिन् पर्वणि श्रावकाणां कृत्यान्याह–

आश्रवकषायरोधः कर्त्तव्यः श्रावकैः शुभाचारैः । सामायिकजिनपूजा–तपोविधानादिकृत्यपरैः ॥ १ ॥

तत्राश्रवाः पंच ते चामी–प्राणातिपात–मृषावादाऽ–दत्तादान-मैथुन-परिग्रहस्तेषां रोधो निरोधः, अर्थात्त्यागः कर्त्तव्यः, एतावता प्रथमं द्वींद्रियादयो ये त्रसजीवास्तेषां विराधनाः श्रावकैर्वर्ज्याः, सर्वदानेषु अभयदानमेव श्रेष्ठं, यदुक्तं सूत्रकृदंगे—' अभयप्पहाणमिति ' अन्यत्राप्युक्तं च—

❀निशीथभाष्य–चूर्णि-बृहत्कल्पभाष्य चूर्णि-वृत्ति स्थानांगसूत्रवृत्ति-समवायागसूत्रवृत्ति-कल्पसिद्धान्त-व्याख्यादिशास्त्रानुसारेण जैनटिप्पणकसद्भावे अधिकमास आगते आषाढ-चातुर्मासात् विंशत्या दिनैः पर्युषणाकरणं प्रोक्तं, तथा अधिकमासाऽभावे पचाशतैव दिनैः प्रोक्तं, परं च जैनटिप्पणकाऽभावे संप्रति लौकिकटिप्पणके मासवृद्धिर्भवतु वा मा भवतु तथापि पंचाशतैव दिनैः पर्युषणाकरणमर्यादा सर्वगच्छीयपूर्वाचार्यैः प्रमाणीकृता आसीत्, अतएव पंचाशतैव दिनैः द्वितीयश्रावणे प्रथमभाद्रपदे वा पर्युषणाया आराधनं युक्तियुक्तं शास्त्रसम्मतं जिनाज्ञानुसारं च ज्ञेयं, परं नअशीतिदिनैः । अस्य विशेषनिर्णयः कल्पसूत्रस्य कल्पद्रुमकलिकाया नवमव्याख्यानाद् अस्मत् कृतबृहत्पर्युषणानिर्णयग्रंथाच्च अवगंतव्यः, इति हस्ताक्षराणि श्रीमत् सुमतिसागरमहोपाध्यायानां लघुशिष्य पं० मुनि-मणिसागरस्य ।

## ॥ श्रीपर्युषणाव्यष्टान्हिकाव्याख्यानम् ॥ १० ॥



शांतीशं शांतिकर्त्तारं, नत्वा स्मृत्वा च मानसे । अष्टाह्निकाया व्याख्यानं, लिख्यते गद्यबंधतः ॥ १ ॥

इह च सकलदुष्कर्मवारिणि विमलधर्मकर्मकारिणि इह परत्र च कृतप्रभूतशर्मणि श्रीपर्युषणादिपर्वणि समागते सति, सकलसुरासुरेंद्राः संभूय श्रीनंदीश्वरनामनि * अष्टमद्वीपे धर्ममहिमानं कर्तुं गच्छंति; तत्र तावन्नंदीश्वरद्वीपस्य मध्यभागे चतुर्दिक्षु चत्वारोंजनगिरयः संति, अंजनवर्णाः पर्वता इत्यर्थः । तेषां प्रत्येकं चतुर्दिक्षु चतस्रो वाप्यः संति, तासां वापिनां मध्यभागेषु दधिमुखाः पर्वताः संति, दधिवर्णाः श्वेतवर्णा इत्यर्थः । पुनर्द्वयोर्वाप्योरंतरे द्वौ द्वौ रतिकरपर्वतौ वर्त्तेते, रक्तवर्णा इत्यर्थः । एवं चैकैकांजनगिरिः, समंताच्चत्वारो दधिमुखाः, अष्टौ च रतिकराः संति, संमिलने द्वादश, त्रयोदशश्च स्वयमंजनगिरिः, इत्थं चतुर्दिक्षु चतुर्णामंजनगिरीणां सपरिकराणां मीलने जाता द्विपंचाशद्गिरयः, ते च पृथग्नामसंख्यया—चत्वारोंजनगिरयः ( ४ ), षोडश दधिमुखाः ( १६ ), द्वात्रिंशद्रतिकरपर्वताः ( ३२ ), तेषामुपर्येकैकं जिनभवनमस्तीति द्विपंचाशज्जिनभवनानि संति, तेषु च जिनचैत्येषु प्रत्येकं चतुर्विंशत्यधिकशतं जिनबिंबानि संति, सर्वेषां मिलनेऽष्टचत्वारिंशदधिकचतुःषष्टिशतानि ( ६४४८ ) जिनबिंबानि भवंति, तानि च सर्वाण्यपि चैत्यानि चतुर्द्वाराणि शाश्वतानि प्रवर-

*एकलक्षयोजनप्रमाणो जम्बूद्वीपः, द्विलक्षयोजनप्रमाणो लवणसमुद्रः, एवं द्वीप समुद्राणां द्विगुणद्विगुणकरणेन—धातकी-पुष्कर-वारुणी-क्षीर घृत-इक्षु-यावत् षोडशाब्ज अष्टत्रिंशत् कोटि-चत्वारिंशत् लक्षाः-( १६३८४००००० ) एतावत् योजनप्रमाणोष्टमनंदीश्वरनामको द्वीपोऽस्ति ॥

स्थानांतरे मोचनं प्रेष्यप्रयोगः २, कंचित् कार्येणाकारयंतं दृष्ट्वा स्वकार्यसाधनार्थं शब्दकरणं शब्दानुपातः, ३, तथैव परं प्रति स्वस्य रूपदर्शनं रूपानुपातः ४, अभिगृहीतदेशाद् बहिः कार्यज्ञापनाय पाषाणादिक्षेपणं पुद्गलक्षेपः ५ ॥ एकादशे पौषधव्रते पंचातिचाराः, यथा-अप्रतिलेखितदुःप्रतिलेखितशय्यासंस्तारकासेवनं १. अप्रमार्जितशय्यासंस्तारकासेवनं २, अप्रतिलेखितादिभूमिकासु उच्चारप्रस्रवणपरिष्ठापनं ३, अप्रमार्जितादिभूमिकासु उच्चारादिपरिष्ठापनं ४, प्रभातसमये अमुकमाहारं पाचयिष्यामीत्यादिप्रकारचिंतनं ५ ॥ द्वादशे अतिथिसंविभागव्रते पंचातिचाराः, यथा–साधुसमागच्छंतं दृष्ट्वाऽदानबुद्धया देयद्रव्यस्य सचित्तोपरिस्थापनं १, सचित्तेन फलादिना देयवस्तुन आच्छादनं २, स्वकीयमपि मोदकादिद्रव्यमन्यदीयमेतदिति कथनं ३, यदि एतेन निःस्वेनापि दानं दत्तं तत्किमहमतोऽपि हीन इति मात्सर्याद्दानं ४, आहारमानीय भुंजानानां भुक्तवतां साधुनां निमंत्रणं, यथा मदीयोऽभिग्रहोऽपि न भज्यते, वस्तवपि एते न गृह्णतीत्यभिप्रायेणेति ५ ॥ इत्थं द्वादशव्रतानां षष्ठ्यतिचाराः, सर्वेऽपि मिलिताः ( १२४ ) इति. एषां मध्ये ये केऽप्यतिचारा लग्ना भवेयुस्तेषां मे मिथ्यादुष्कृतमस्तीति संघादिसमक्षं वाच्यं, ततः सर्वेष्टार्थसिद्धिः ॥

इति चातुर्मासिकत्रयव्याख्यानं समाप्तं ॥ ९ ॥



भ्यो दानं ३, कुप्यस्य स्थालादीनां दशकादेः संयोज्य पंचकादिकरणं ४, पूर्वं सामान्यतो नियमं विधाय पश्चात् सगर्भयोर्द्विपदचतुष्पदयोर्ग्रहणं ५ ॥

अथ षष्ठे दिक्परिमाणाख्ये गुणव्रते पंचातिचाराः, यथा–ऊर्ध्वाधस्तिर्यक् ३ प्रमाणातिक्रमेण वस्त्वानयनप्रेषणाभ्यां त्रयोतिचाराः ३, अन्यदिग्योजनानामन्यस्यां दिशि क्षेपणं क्षेत्रवृद्धिः ४, किंचित् स्वयमेव कृतदिक्प्रमाणविस्मरणं स्मृत्यंतर्धानं ५ ॥ सप्तमे भोगोपभोगव्रते पंचातिचाराः, यथा–सचित्तभक्षणकृतनियमस्य कृततत्परिमाणस्य वा पुंसो दाडिमादि यत्सचित्तं वस्तु तस्य भक्षणं १, पक्वाम्रफलादिसचित्तप्रतिबद्धं तस्य भक्षणं २, अपक्वालितकणिकादि 'अप्पोल' मित्युच्यते, तस्य भक्षण ३, पृथुकादि 'दुप्पोल' मित्युच्यते, तस्य भक्षणं ४, अतृप्तिजनका लघुबीजा औषध्यस्तुच्छौषध्यस्तासां भक्षणं ५ ॥ अष्टमे अनर्थदण्डविरमणे पंचातिचाराः, यथा–कामोद्दीपकशास्त्राभ्यासः कंदर्पः १, मुखाक्षिभ्रूविकारपूर्विका भंडचेष्टा कौकुच्यं २, गाल्याद्यसंबद्धप्रलापित्वं मौखर्यं ३, संयुक्तस्य उदूखलमुशलघरट्टादेर्धारणं संयुक्ताधिकरणं ४, स्नानादिसमये अधिकतैलमृत्तिकादिसामग्रीमेलनं,सरोवरादौ स्नानादिकरणेन पृथिव्यप्कायादिविराधनं च भोगोपभोगातिरेकः ५ ॥

अथ नवमे सामायिकव्रते पंचातिचाराः, यथा–मनसि पापव्यापारचिंतनं मनोदुःप्रणिधानं १, विकथाकरणं वाग्दुःप्रणिधानं २, अप्रतिलेखिते स्थाने हस्तादिक्षेपणं कायदुःप्रणिधानं ३, सामायिकं कृत्वा मुहूर्त्तमात्रमपि तदासेवनया अकरणं अनवस्थानं ४, सामायिकं मया कृतं न वेति स्मृतिविहीनता ५ ॥ दशमे देशावकाशिकव्रते पंचातिचाराः, यथा—यं प्रति त्वया इदमानेतव्यमित्युक्त्वाभिग्रहविषयकदेशात्परतो वस्त्वानयनं आनयनप्रयोगः १ त्वयेदं मम वस्तु गृहादौ नेतव्यमित्युक्त्वा स्वपार्श्वस्थाधिकवस्तुनोऽभिगृहीतदेशा

अथ द्वादशव्रतानां षष्ठ्यतिचारा उच्यंते. तत्र प्रथमं स्थूलप्राणातिपातविरमणव्रते पंचातिचाराः यथा—निर्दयतया पश्वादीनां कशादिभिस्ताडनं वधः १, रज्ज्वादिभिर्गाढबंधनं बन्धः २, शस्त्रेण कर्णादिकर्त्तनं वृषणच्छेदनं च छविच्छेदः, छविः शरीरं तस्य छेद इति व्युत्पत्तेः ३, वृषभादीनां स्कंधे पृष्ठे च सामर्थ्यातिरिक्तभारारोपणमिति भारः ४, वृषभादीनां वेलाप्राप्तावपि अन्नजलघासनिवारणा भक्तपानव्यवच्छेदः ५ ॥ स्थूलमृषावादविरमणव्रते पंचातिचाराः, यथा—त्वं चोरस्त्वं जार इत्यादि परं प्रति अविचार्यभाषणं सहसाभ्याख्यानं १, एकांते स्थितान् कानपि विलोक्य एते राजविरुद्धं चिंतयंतीति प्रकाशनं रहोभ्याख्यानं २, विश्वासिभिः स्वदारैः स्वमित्रैर्वा यत्प्रच्छन्नं कथितं तदन्येषामग्रे प्रकाशनं स्वदारमन्त्रभेदः ३, कष्टे पतितस्य कस्यचित् पृच्छतोऽलीकमीदृशं वदेरित्यादिशिक्षणं मृषोपदेशः ४, कूटलेखश्च प्रतीतः ५ ॥ स्थूलादत्तादानविरमणव्रते पंचातिचाराः, यथा—चौराहृतवस्तुग्रहणं स्तेनाहृतं १, चौराणां शंबलादिदानेन साहाय्यकरणं स्तेनप्रयोगः २, घृतादौ तादृशवस्तुनो वशादेर्मीलनं तत्प्रतिरूपक्षेपः ३, विरोधिराज्ये लाभार्थं वस्तुविक्रयणार्थं गमनं विरुद्धगमनं ४, लोकप्रसिद्धतुलामानयोर्न्यूनाधिककरणं कूटतुलाकूटमानं ५ ॥ स्थूलमैथुनविरमणव्रते पंचातिचाराः यथा—वेश्यायां १, विधवायां २, कन्यायां ३ वा गमनं अपरिगृहीतागमनं १, भाटकप्रदानेन स्तोककालं यात्मीया कृता तस्यां गमनं इत्वरीगमनं २, अंगं स्त्रीपुरुचिह्नं, तदन्यानि अंगानि कुचकक्षोरुवदनादीनि तेषु रमणं अनंगक्रीडा ३, स्वापत्यानामिव अन्यापत्यानां परिणायनं परविवाहकरणं ४, कामभोगेषु गाढाभिलाषस्तीव्रानुरागः ५ ॥ स्थूलपरिग्रहपरिमाणव्रते पंचातिचाराः, यथा—गणिम १ धरिम २ मेय ३ परिच्छेद्य ४ भेदाच्चतुर्विधस्य धनस्य शालिगोधूमादेर्धान्यस्य च समर्घस्य सत्यंकारादिना स्वीकृत्य नियमावधि यावत्तत्रैव व्यवस्थापनं १, क्षेत्रवास्तुनोर्मध्यवर्तिवृत्त्यादिदूरीकरणेन एकीकरणं २, पूर्णेऽवधौ ग्रहीष्यामीति बुद्ध्या रूप्यस्वर्णादेर्भार्यादि-

पंचदश कर्मादानातिचाराः ॥

ज्ञानस्याष्टौ अतिचाराः यथा–अकालवेलायां प्रतिषिद्धदिने वा श्रुताध्ययनं १, गुरोर्ज्ञानोपकरणानां पुस्तकादीनां वा पादादिसंघट्टनेनाऽविनयकरणं २, तथा एषामेव बहुमानस्याऽकरणं ३, उपधानयोगादि विना श्रुताध्ययनं ४, यस्य पार्श्वे श्रुतमधीतं तस्य गुरोर्नाम्नोऽपलपनं ५, देववंदनप्रतिक्रमणादौ शुद्धाक्षराणामपठनं ६, तत्रैव शुद्धार्थस्यापठनं ७, तत्रैवाऽशुद्धयोः सूत्रार्थयोः पठनं ८, इति ज्ञानस्याष्टौ अतिचाराः ॥

दर्शनस्याप्यष्टौ अतिचारास्तथाहि–देवगुरुधर्मविषये शंकाकरणं १, सर्वाण्यपि दर्शनानि शोभनानीति श्रद्धाकरणं २, धर्मस्य फले संदेहकरणं ३, मिथ्यादृष्टीनां महत्त्वं दृष्ट्वा तदुपरि तीव्ररागकरणं ४, साध्वादीनां गुणश्लाघाया अकरणं ५, नवप्रतिबुद्धश्राद्धादेः स्थिरताया अकरणं ६, साधर्मिकाणां वात्सल्याऽकरणं ७, सति सामर्थ्ये जिनशासनस्य प्रभावनाया अकरणं ८, इति दर्शनस्याष्टौ अतिचाराः ॥

तथा पंचानां समितिनामीर्यादीनां ५, तिसृणां च गुप्तीनां मनोगुप्त्यादीनां ३, तथाविधाऽपालने चारित्रस्याष्टौ अतिचाराः । तथा 'अणसणमूणोयरिया' इत्यादि द्वादशतपोभेदानां सम्यगकरणे तपसो द्वादशातिचाराः । तथा मनोवीर्य १ वचनवीर्य २ कायवीर्याणां ३ देववंदन-प्रतिक्रमण-स्वाध्याय-दान-शीलादौ अस्फोरणे वीर्यस्य त्रयोऽतिचाराः । सम्यक्त्वस्य पंचातिचाराः, यथा–श्रीजिनेंद्रोक्तपदार्थेषु सन्देहः शंका १, अन्यान्यदर्शनाभिलाषः कांक्षा २, धर्मफलं प्रति सन्देहो विचिकित्सा, अथवा मलमलिनवपुषः साधून् दृष्ट्वा जुगुप्साकरणं विचिकित्सा ३, मिथ्यादृष्टीनां प्रशंसनं कुलिंगप्रशंसा ४, मिथ्यादृष्टिभिः सह परिचयः कुलिंगसंस्तवः ५ ॥

पत्तेयं २४ ॥ बारस वय १२ विरयतिग ३ । पण सम्म ५, वयाणं पत्तेयं ६९ ॥ १ ॥ व्याख्या–संलेखनायाः पंचातिचारास्तथाहि—अत्र इतस्तपः प्रभावादहं मनुष्यो राजादिर्भूयासमिति इहलोकाशंसा १, इतोऽनुष्ठानात्परलोके देवो भूयासमिति परलोकाशंसा २, कृतानशनोऽहं लोकैः पूज्योऽस्मि, अतश्चिरं जीयासमिति जीविताशंसा ३, अपूज्यत्वाद्व्याधिपीडितत्वाद्वा शीघ्रं म्रियते चेद्वरमिति यत्प्रार्थनं तन्मरणाशंसा ४, रूपं शब्दश्च कामौ, गंधरसस्पर्शा भोगास्ते मम प्रशस्ता भूयासुरिति या इच्छा सा कामभोगाशंसा ५, संलेखनां कृत्वा यद्येवं चिंतयति तदातिचाराः, एषु च यदि कोऽपि कालयत्रसंबंधी अतिचारो लग्नो भवेत्तदा तस्य मे मिथ्यादुष्कृतमिति संघादिसमक्षं वाच्यं, एवमग्रेऽपि बोध्यम् ।

अथ पंचादश कर्मादानातिचाराः यथा—

आजीविकादिनिमित्तं काष्ठदहनेन अंगाराणां करणं, तद्विक्रयणं, इष्टिकापाचनमित्यादि अंगारकर्म १, वृक्षादेः पत्रपुष्पादेर्वा छेदनविक्रयणादि वनकर्म २, शकटानां तदंगानां च निष्पादनवाहनादि शकटकर्म ३, शकटवृषभादीनां भाटकेनार्पणं भाटककर्म ४, हल कुद्दालादिभिर्भूमिविदारणं पाषाणादिघटनं यवादिधान्यानां भुंजनादिकरणं च स्फोटककर्म ५, प्रथमत एव म्लेच्छादिभ्यो मूल्यदानेन गजदंताद्यानाय्य विक्रयणं, आकाराद्वा स्वयमानीय विक्रयणं दंतवाणिज्यं ६, लाक्षा–नीली–मनःशिलादेः सुलितधान्यादेश्च विक्रयो लाक्षावाणिज्यं ७, घृत–तैलादि रसविक्रयो रसवाणिज्यं ८, यस्मिन् भक्षिते प्राणी म्रियते तद्विषं, तस्य वाणिज्यं ९, द्विपद–चतुष्पदादि विक्रयः केशवाणिज्यं १०, तिलेक्ष्वादीनां यंत्रैः पीडनं यंत्रपीलनं ११, वृषभादेर्वृषणकर्णादिच्छेदनं निर्लांछनकर्म १२, क्षेत्रादौ वह्नेर्ज्वालनं दवदानं १३, गोधूमादेः पोषः ( पार्थः ) सरोहृदादिशोषश्च प्रसिद्धः १४, असत्यो दुःशीला दास्यादयस्तासां पोषणमसतीपोषः १५ ॥ इति

तथा तपो हि दुष्टाष्टकर्मविनाशकं सकललब्धिजनकं बाह्याभ्यंतरभेदतो द्वादशविधं दृढप्रहारिवद्भव्यात्मभिः समाचरणीयं । तपोमुखानीत्यत्र मुखशब्द आद्यर्थस्तेन भावनादिपरिग्रहः, इति व्याख्यातं ब्रह्मक्रियादिपदं यत्र । किंचात्रधर्मार्थिनात्मनिंदा कर्त्तव्या, न परनिंदा, तत्र चित्रकृत्पुत्रीदृष्टांतः, स चैवं-कांचनपुराधीशेन जितशत्रुराजेन स्वस्य नवीनसभायां कनकमंजरी नामचित्रकरसुतानिर्मितं चित्रमयूरं साक्षान्मयूरमिव दृष्ट्वा तच्चातुर्यगुणरंजितेन सा परिणीता, तया च स्वबुद्ध्या प्रत्यहं नवनवकथाकथनेन नृपः षण्मासान् यावत् स्ववासे आनीतः, तदा राज्ञा बहु मन्यमानापि सा प्रतिदिनं स्वगृहे एकांतदेशे उपविश्य पितृगृहसंबंधिसामान्यवेषं परिधाय हे आत्मन् ! राजमान्यत्वमस्थिरमस्ति, अतोऽहंकृतिर्न विधेया, तव पितृगृहसंबंधिनी त्वियं ऋद्धिरस्तीत्यादिवचनैरात्मानं निंदति स्म. अथ छलं पश्यंतीभिः सपत्नीभिस्तथाकुर्वाणां तां विलोक्य नृपायोक्तं, एषा तु भवतां कार्मणं करोति, ततो राज्ञा परीक्षार्थमेकदाकस्मादागत्य तामात्मनिंदां कुर्वाणां दृष्ट्वा तुष्टेन पट्टराज्ञी कृता, अपराश्चापमानिताः, एवं धर्मार्थिभिरात्मनिंदा कार्येति ॥

अन्यच्च चातुर्मासिकपर्वाराधयितुकामैर्भव्यात्मभिरस्मिन् दिने स्वे स्वेऽतिचारा आलोचनीयाः, गुर्वादिसमक्षं च तेषां मिथ्यादुष्कृतं च वाच्यं, तत्र साधूनां चरणसप्तति (७०, करणसप्तति (७०) मिलनाच्चत्वारिंशदधिकशत (१४०) मतिचारा भवंति, ते च ग्रन्थगौरवभयान्न लिख्यंते. ❋ । श्रावकाणां तु चतुर्विंशदधिकशतमतिचाराः (१२४) स्युस्ते संक्षेपतो दर्श्यंते—पण संलेहण ५ पन्नरस-कम्म १५, नाणाइ अट्ठ

❋ संक्षेपतो गाथाद्वयं यथा—वय (५) समणधम्मं (१०) संजम (१७) वेयावच्चं च (१०) बंभगुत्तीओ (९) ॥ नाणाइ तिअं (३) तव (१२), कोह निग्गओ (४) इइ चरणमेयं ॥ १ ॥ पिंड विसोही (४) समिई (५) भावणा (१२), पडिमा य (१२) इंदिय निरोहो (५)॥ पडिलेहण (२५) गुत्तीओ (३), अभिग्गहो (४) चेव करणं तु ॥ २ ॥

अथ देवार्चनस्नात्रविलेपनानि व्याख्यायन्ते—देवस्य श्रीजिनेंद्रस्य तत्प्रतिमायाश्च अर्चनं वासादिना, स्नात्रं जलादिना, विलेपनं च चन्दनादिना कर्त्तव्यमेतत्पदत्रयेण सर्वोऽपि पूजाप्रकारः सूचितः । पूजाफलं चेदं—सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे ॥ सयसाहस्सिया माला, अणंतं गीयवाइयं ॥ १ ॥ इत्यादि, अत्र दृष्टांताः स्वयं वाच्याः । अथ ब्रह्मक्रिया १ दान २ तपोमुखानि ३ व्याख्यायंते, तत्र ब्रह्मक्रिया-ब्रह्मचर्यं सुदर्शनश्रेष्ठ्यादिवत् शीलव्रतपालनमित्यर्थः, तत्फलं यथा—जो देइ कणयकोडिं, अहवा करेइ कणयजिणभवणं ॥ तस्स न तत्तिय पुन्नं, जत्तिय बम्भव्वए धरिए ॥ १ ॥ ॥ इति । तथा दानं हि अभयं १ सुपात्रा-२ नुकंपो ३ चित ४ कीर्त्ति ५ भेदात्पंचविधं, तत्र द्वाभ्यां मोक्षः, त्रिभिश्च भोगप्राप्तिः, इहाभयदाने दृष्टांतो यथा—

राजगृहे सभास्थितेन श्रेणिकनृपेण प्रोक्तं, संप्रति नगरे किं वस्तु सुलभं स्वादु चास्ति ? क्षत्रियाः प्रोचुर्मांसं समर्घं स्वादु चास्ति, तदा अभयकुमारेण चिंतितं, एते निर्दयाः, अथ यथा पुनरप्येवं न जल्पेयुस्तथा कुर्वे, ततो रात्रौ सर्वक्षत्रियगृहेषु पृथग्पृथग्गत्वाऽभय एवमवादीत्—भो क्षत्रियाः ! राजपुत्रशरीरे महाव्याधिरुत्पन्नोऽस्ति, यदि मनुष्यसत्कं कालेयमांसं टंकद्वयमितं दीयते तदा स जीवति नान्यथेति वैद्यैरुक्तमस्ति. ततो यूयं राज्ञो ग्रासजीविनो भवद्भिरेवैतत्कार्यं कर्त्तव्यं. तदा एकेनोक्तं दीनारसहस्रं गृहाण ? परं मां मुंच ? अन्यत्र गच्छ ? अभयेन तद् गृहीतं, एवं रात्रौ प्रतिगृहं परिभ्रम्य तैर्दत्तानि बहूनि दीनारलक्षणाण्यादाय प्रभाते नृपसभायां तद्धनं क्षत्रियभ्यो दर्शितं, प्रोक्तं च अहो गतदिने यूयमेव वदथ यन्मांसं सुलभमिति. अद्य तु एतावता द्रव्येणापि तन्मांसं न प्राप्तं, ततो लज्जितास्तेऽभयेन हक्किताः, ततो मांसभक्षणनियमं प्रापिताश्च, अत्रार्थे श्लोकः—स्वमांसं दुर्लभं लोके, लक्षेणापि न लभ्यते ॥ अल्पमूल्येन लभ्यते । पलं परशरीरजं ॥ १ ॥ एवमन्यैरप्यभयदानबुद्धिर्धार्येति ॥

अथावश्यकपदं व्याख्यायते, तत्रोभयकालं यदवश्यं कर्त्तव्यं तदावश्यकं प्रतिक्रमणमित्यर्थः, तत्फलं चेदं—आवस्सएण एएण । साव-
ओ जइवि बहुरओ होइ ॥ दुक्खाणमंतकिरियं । काही अचिरेण कालेण ॥ १ ॥ व्याख्या—श्रावको यद्यपि बहुरजस्को बहुपापयुक्तो
भवति तथाप्येतेनावश्यकेन कृत्वा स्तोकेन कालेन दुःखानामंतक्रियां विनाशं करिष्यतीति, किंच— आवस्सअं उभयकालं, ओसहमि-
वं जे करंति उज्जुत्ता ॥ जिणविज्जकहियविहाणा, अकम्मरोगा य ते हुंति ॥ २ ॥ व्याख्या—श्रावका उपयोगयुक्ताः संतः प्रभात-
संध्याकालयोर्जिनवैद्यकथितविधिना सम्यक्प्रकारेण औषधमिवावश्यकं कुर्वंति ते कर्मरोगरहिता भवंतीति. प्रतिक्रमणनियमे साजणसिंह-
दृष्टांतः । स चैवं—साजणसिंहनामा श्रेष्ठी द्विसंध्यं कालवेलायां प्रतिक्रमणं विना भोजनं न कार्यमिति नियमवान् बभूव. एकदा पीरो-
जपातसाहेन केनचिदपराधेन स कारागारे क्षिप्तस्तदा तत्र स्थितेनापि तेनारक्षकपुरुषेभ्यः पंचाशत्पंचाशन्मितान् सुवर्णनिष्कान् दत्त्वा
प्रत्यहं प्रतिक्रमणं कृतं, अन्यदा रत्नद्वयपरीक्षणव्यतिकरे तृतीयं रत्नं जगन्मध्ये त्वमिति वचनात्प्रसन्नेन सुत्राणेन स मुक्तः सन्मानि-
तश्च. तदा तैर्भीतैरारक्षकैर्निष्कास्तस्य पश्चात्प्रदत्तास्ततः श्रेष्ठिना ते निष्कास्तेभ्य एव दत्ताः, प्रोक्तं च अहो एतद्धनं कियत् ! यतो
ऽमूल्यं प्रतिक्रमणं मया कृतं भवत्साहाय्यादिति दृष्टांतः ॥

अथ पौषधं व्याख्यायते— धर्मस्य पोषं पुष्टिं दत्ते तत्पौषधं, तच्चाहार १ शरीरसत्कार २ गृहव्यापार ३ अब्रह्म ४ निवृत्तिरूपं बोध्यं,
तत्फलं चेदं—पोसहि य सुहे भावे । असुहाइ खवेइ नत्थि संदेहो ॥ छिंदेइ निरयतिरिगइं । पोसह विहिअप्पमत्तेणं ॥ १ ॥ पौषधव्र-
तस्थिरत्वे कामदेवदृष्टांतः—यथा कामदेवश्रावकः पौषधे स्थितः सन् निशायां मिथ्यात्विदेवेन—दुष्टगज १ नाग २ पिचाश ३ रूपैर्व-
हुधा क्षोभितोऽपि मनोवाक्कायैर्मनागपि न क्षुभित इति.

नर्त्तकीनिमग्नचित्तोऽपि तयोर्निर्विकारभावदर्शनात् सद्यः संप्राप्तवैराग्योऽनित्यादिभावनां भावयन् केवलज्ञानं प्राप, देवैर्महोत्सवो विहितो, वंश एव च सिंहासनं बभूव, तत्स्वरूपदर्शनान्नृपादयोऽपि प्रतिबुद्धाः ॥ इति ॥ परिज्ञायामिलापुत्रदृष्टांतः ॥७॥ अथ परिहरणीयवस्तुत्यागे तेतलिपुत्रदृष्टांतो यथा—तेतलिपुरे कनककेतुर्नामराजा, स च राज्यलोभाज्जातमात्रान् स्वपुत्रान् विनाशयति. तस्य राज्ञस्तेतलिपुत्रनामामात्यस्तस्य पोट्टिलानाम भार्या, सा च प्रथमं मंत्रिणोऽतिवल्लभासीत् , पश्चात्कथंचिदनिष्टा जाता. एकदा तस्या गृहे आहारार्थमेका साध्वी समुपागता, मंत्रिपत्न्या तां प्रति प्रणम्य भर्तृवशीकरणोपायः पृष्टः, साध्व्या प्रोक्तं धर्मः सेव्यो येन सर्वेष्टार्थाः सिद्ध्यंति, ततः सा संसाराद्विरक्ता सती दीक्षाग्रहणार्थं पतिं पप्रच्छ, मंत्रिणोक्तं दीक्षां गृहाण, परं यदि त्वं देवपदं प्राप्नुयास्तर्हि मां प्रतिबोधयः, तयापि तद्वचोंगीकृत्य दीक्षामादाय आयुःक्षये समाधिना मृत्वा देवपदं प्राप्तं, अथ मंत्रिणा राज्ञ एकः पुत्रो जातमात्र एव प्रच्छन्नं गृहीत्वा स्वगृहे वार्द्धित आसीत् . एकदा कनककेतुनृपे परलोकं गते सति मंत्रिणा स कनकध्वजकुमारो राज्ये स्थापितः, राजकार्यममात्याधीनं कृतं, ततो मंत्री अहर्निशं राजकार्ये मग्नः सन् कदापि धर्मकृत्यं न कृतवान्. तस्मिन्नवसरे देवपदं प्राप्तया पोट्टिलया मंत्रिणस्तत्स्वरूपं दृष्ट्वा तत्प्रतिबोधाय नृपादयः सर्वेऽपि लोकास्तत्पराङ्मुखा विहिताः, ततो नृपस्थानं गतेन मंत्रिणा क्वाप्यादरमलभमानेन सद्यो गृहमागत्यात्मनः कुमरणाशंकया स्वहस्तेनैवानेके मरणप्रयोगाः कृताः, परं देवेन सर्वेऽपि वैयर्थ्यं नीताः, ततो विलक्षीभूय स्थितं मंत्रिणं प्रति देवः प्रादुर्भूय उवाच, भो मंत्रिन् ! ईदृक्संसारस्वरूपं विद्यते, तत्त्वतो न कोऽपि कस्यापि स्वजनोऽस्ति. इत्यादिवचनैर्मंत्रिणं प्रतिबोध्य देवः स्वस्थानं ययौ, मंत्र्यपि सर्वं विभवं परित्यज्य सद्यो दीक्षां जग्राह। इति प्रत्याख्याने तेतलिपुत्रदृष्टांतः ॥ इति सामायिकपदं व्याख्यातम् ॥

सर्वजीवैः सह क्षामणां कृत्वा तत्र स्थितः सन् स्वयमेव तत्कटुकतुंबिकाशाकं भुक्तवान् , न पुनः परप्राणि वधभिया परिष्ठापितवान्. ततः सद्यो मृत्वा स सद्गतिं प्राप्तः ॥ इति ॥ निष्पापाचरणे धर्मरुचिर्दृष्टांतः ॥ ८ ॥ अथ पापत्यागेन यद्वस्तुतत्त्वज्ञानं, तत्र इलापुत्रदृष्टांतो यथा--इलानगरे धनदत्तश्रेष्ठी, तस्य इलादेवीसेवनात् इलापुत्रोनाम पुत्रो जातः, स चैकदा तत्रागतानां विदेशिनटानां नृत्यं पश्यन् अतिसुन्दररूपां नर्त्तकपुत्रीं विलोक्य प्राग्भवस्नेहात्तस्यामत्यन्तानुरक्तो बभूव, ततः सद्यो गृहमागत्य पितरं प्रति उवाच-भो तात ! मां प्रति नर्त्तकपुत्रीं परिणायस्व, नोचेद् मरणमेव शरणीकरिष्ये, परमपरकन्यापाणिग्रहणं सर्वथा न विधास्ये, तदा पित्रा तस्यात्याग्रहं विज्ञाय कथमपि निषेद्धुमशक्नुवता वृद्धनटसमीपं गत्वा तस्य पुत्री मार्गिता. नटेनोक्तं यद्ययमस्मत्कलां शिक्षयित्वा बहुधनं चोपार्ज्य अस्मज्ज्ञातिं पोषयेत् तर्हि--अस्मत्पुत्र्याः पाणिग्रहणं कुर्यात्. श्रेष्ठिना तद्वचः श्रुत्वा इलापुत्रं प्रति सर्वोऽपि वृत्तांतः प्रोक्तः, इलापुत्रस्तु तदप्यंगीकृत्य हठेन गृहान्निर्गत्य नटेषु संमिलितः, ततः कियता कालेन तेषां सर्वकलासु निपुणो भूत्वा वेन्नातटनगरं प्राप्तः, तत्र राज्ञे स्वकलादर्शनाय स्वयं वंशमारुह्य रमतेस्म. सा नटपुत्री च वंशपार्श्वे स्थिता गानं करोतिस्म, तदा तां नटपुत्रीं विलोक्य राजा चलचित्तः सन् चिंतयतिस्म, यद्येष इलापुत्रो वंशान्निपत्य म्रियते तर्हि एनां कन्यामहं गृह्णामि. अथ इलापुत्रः सर्वा एव कलाः कृत्वा वंशादुत्तीर्य दानग्रहणेच्छया नृपपुर स्थितः, राज्ञोक्तं व्यग्रतया मया नृत्य न दृष्टं, ततः पुनः कुरु ? तदा तेन धनलिप्सया पुनर्नृत्यं कृतं, परं राज्ञा तन्मरणमिच्छता पुनस्तथैवोक्तं. ततः सतृतीयवारं पुनः- वंशमारुह्य रमतेस्म. तस्मिन्नवसरे एकभाग्यवतः श्रेष्ठिनो गृहे एकः साधुराहारार्थं गतस्तदा सर्वालंकारविभूषिताऽतिसुन्दरांगी श्रेष्ठिपत्नी सद्यः समुत्थाय सानंदं वंदनां विधाय मोदकैः स्थालं भृत्वा साधुं प्रतिलाभयति, साधुरप्यधोदृष्टिः सन् 'इत्थं इत्थमिति' शब्दमुच्चरन्नाहारं गृह्णाति. एतत्स्वरूपं वंशारूढेन इलापुत्रेण दृष्टं, तदासौ स्वयं

तत्प्राप्त्यर्थं समपरिणामं दधानः, करस्थं खड्गादि तत्रैव परित्यज्य तन्मुनिस्थाने एव कायोत्सर्गेण तस्थौ. तदानीं हि रुधिरगन्धादुपागतेन कीटिकागणेन तच्छरीरं सच्छिद्रं कृतं, परं स मनागपि न चचाल, तृतीयदिने तत्रैव कालं कृत्वा स्वर्गं प्राप्तः ॥ इति ॥ समासे चिलातीपुत्रदृष्टांतः ॥४॥ अथ स्तोकाक्षरैर्महार्थकथने लौकिकः पंडितचतुष्टयदृष्टान्तो यथा—वसन्तपुरे जितशत्रुराजा, तस्यैकदा शास्त्रश्रवणेच्छासीत्, तदा चतुर्भिः पंडितैः श्लोकलक्षप्रमितमेकैकं ग्रंथं विधाय नृपाय निवेदितं, नृपेणोक्तं—एते ग्रंथा अतिमहांतो मया स्तोककालेन श्रोतुं न शक्यंते, तस्मात्स्वल्पाक्षरैरेवैतेषां सारं वदत, तदा चतुर्भिः पंडितैः सारभूतमेकं श्लोकं निष्पाद्य नृपाग्रे प्रोक्तं, तथाहि—जीर्णे भोजनमात्रेयः, कपिलः प्राणिनां दया ॥ बृहस्पतिरविश्वासः, पंचालः स्त्रीषु मार्दवं ॥१॥ व्याख्या—आत्रेयनामा विद्वान् वक्ति—प्रथमं भुक्ते आहारे जीर्णे सति पुनः भोजनं कार्यमिति वैद्यग्रंथपरमार्थः १, कपिलपंडितः प्राह—सर्वेषां प्राणिनां दया कार्येति धर्मशास्त्रपरमार्थः २, बृहस्पतिनामा विद्वान् वदति—कस्यापि विश्वासो न कार्य इति नीतिशास्त्रसारः ३, पंचालो विद्वान् ब्रूते—स्त्रीषु मृदुता धार्या परं तासामंतो न ग्राह्य इति कामशास्त्ररहस्यं ४, एवं स्तोकाक्षरैर्बहर्थकथनं द्वादशांगीरूपं संक्षेपसामायिकं बोध्य ॥५॥ अथ निष्पापाचरणे धर्मरुचिसाधुदृष्टांतो यथा—धर्मघोषाचार्यस्य शिष्यो धर्मरुचिनामा साधुर्नगरे आहारार्थं भ्रमन् रोहिणीनामब्राह्मण्या गृहे भिक्षार्थं प्रविष्टः, तया कुटुम्बनिमित्तं मिष्टभ्रान्त्या निष्पादितं कटुकतुंबिका शाकं विषप्रायं विज्ञाय दुष्टबुद्ध्या साधवे दत्तं, साधुना तु सरलस्वभावेन तद् गृहीत्वा स्वस्थाने आगत्य गुरुभ्यस्तद्दर्शितं. गुरुभिस्तद् दृष्ट्वा प्रोक्तं भो महानुभाव ! इदं शाकं विषप्रायमस्ति. तस्मान्निरवद्यस्थंडिले गत्वा परिष्ठापय । तदा धर्मरुचिसाधुर्गुर्वाज्ञया निर्वद्यभूमौ गत्वा यावत्तच्छाकं परिष्ठापयितुं लग्नस्तावत्तन्मध्यात्पतितबिंदुमात्रे एव तद्गन्धाकृष्टा बह्व्यः कीटिकाः संमिलितास्तद्गन्धग्रहणेनैव च मृताः, अथैवं बहुकीटिकामरणं दृष्ट्वा पापभीरुः साधुर्जीवदयां चिंतयन्

भटैर्निरुद्धय निजगृहं चागत्य प्रच्छन्नं स्थितः, ततः स दत्तो मतिमोहात्सप्तममपि दिनमष्टमं मन्वानोऽथाचार्यप्राणैः शांतिकं कुर्वे इति विचिंत्य गृहान्निर्गतः, तदा एको मालिकः पुर्यां प्रविशन् कार्याकुलत्वात् राजमार्गे एव मलोत्सर्गं कृत्वा तत्पुष्पैराच्छादयामास, तावत्तत्रैव मार्गे गच्छतो दत्तस्याश्वखुरोत्क्षिप्ता सा विष्टा मुखे पतिता. तदा स विष्टास्वादाच्चमत्कृतः सन् पश्चान्निवृत्तस्तदैतस्य बहुविधदुराचारेण खिन्नैर्मूलमंत्रिभिर्जितशत्रुनृपः पंजरान्निष्कास्य राज्ये स्थापितः, दत्तस्तु छलाद् बद्ध्वा राज्ञे समर्पितः; राज्ञा च स कुंभ्यां प्रक्षिप्य अधश्चाग्निं प्रज्वाल्य श्वानान् (शुनो) विमुच्य स कदर्थितः सन् मृत्वा नरकं गतः आचार्यास्तु बहुधा सन्मानिताः, इति सत्योक्तौ कालिकाचार्यदृष्टांतः ॥३॥ अथ स्तोकाक्षरैर्महातत्त्वज्ञाने चिलातीपुत्रदृष्टांतो यथा—राजगृहनगर्यां धनदत्तनामा व्यवहारी, तस्य चत्वारः पुत्राः, सुसमानामपुत्री, चिलातीपुत्रनामैको दासश्चासन्. एकदा श्रेष्ठी तं दासं दुराचारिणं विज्ञाय गृहाद् बहिर्निष्कासितवान्. सोऽपि ततो निःसृत्य चौरपल्ल्यां गत्वा स्थितः । अथान्यदा स चिलातीपुत्रो बहुचौरान् संमेलयित्वा राजगृहनगर्यामागतः, तत्र स्वयं च तस्य श्रेष्ठिनो गृहे प्रविश्य सुसमानामकन्यां चादाय सद्यो गृहान्निर्गतः, तावत् श्रेष्ठ्यपि कन्यानयनार्थं चतुष्पुत्रसहितस्तत्पृष्ठे चलितः एवं च कियति मार्गेऽतिक्रान्ते श्रेष्ठिनमत्यासन्नमागतं वीक्ष्य भीतश्चिलातीपुत्रः सुसमायाः मस्तकं छित्त्वा करे च तद् गृहीत्वा, द्वितीयकरे च रुधिरलिप्तं खड्गमुत्पाट्य पर्वतोपर्यारुरोह, श्रेष्ठी तु तत्स्वरूपं दृष्ट्वा विषण्णः सन् पश्चाद्वलितः, अथ चिलातीपुत्र एतादृशभयंकररूपेणाग्रे चलन् मार्गे कायोत्सर्गस्थं साधुं च विलोक्य इत्थमुवाच, भो मुंड ! धर्मं कथय ? नोचेदनेन खड्गेन तवापि शिरश्छेत्स्यामि, साधुना तत्स्वरूपं वीक्ष्य झटिति 'णमो अरिहंताणं' इति पदमुच्चार्य आकाशे चोड्डिय उपशम १ विवेक २, संवरेति ३ पदत्रयात्मकं धर्मं तदग्रे उक्त्वाऽन्यत्र जग्मे. अथ चिलातीपुत्रस्तमर्थं विचारयन् आत्मनि तन्मध्यगमेकमपि गुणमपश्यन्

मेतार्यमुनिः प्राग्भवाचरितदुरितवशाद्राजगृहनगर्यां चांडालकुले समुत्पन्नः, चांडाल्या च जन्मसमय एव मृतवत्सायै धनदत्तश्रेष्ठिपत्न्यै स प्रच्छन्नमर्पितस्तद्गृहे स वृद्धिं प्राप्तः, क्रमेण यौवने प्राग्भवमित्रदेवसाहाय्यादष्टौ श्रेष्ठिकन्या एकां च श्रेणिकनृपपुत्रीं स परिणीतवान् . ततो द्वादशवर्षांते देववचनात् श्रीवीरप्रभुसमीपे प्रव्रज्यामादाय बहुदेशेषु विहरन् एकदा राजगृहनगर्यां स्वर्णकारगृहे भिक्षार्थं प्रविष्टः, तत्र स्वर्णकारे भिक्षानयनार्थं गृहांतः प्रविष्टे सति पश्चात् श्रेणिकनृपस्य देवपूजानिमित्तं तत्कृता अष्टोत्तरशतप्रमिताः स्वर्णयवाः क्रौंचपक्षिणा भक्षितास्ततश्चोड्डीय स भित्त्युपरि स्थितः, तावत् स सुवर्णकारः शुद्धाहारमानीय बहिः समागतः, स्वर्णकारस्तत्र स्वर्णयवानपश्यन् तं साधुमेव तच्चौरं विचिन्तयन् जगाद–भो साधो ! इहस्था यवाः केन गृहीताः ? तदा साधुना चिंतितं यदि पक्षिणा भक्षिता इति वक्ष्ये तर्हि मद्वचनादसौ एनं क्रौंचं हनिश्यति एवं विचिंत्य तेन मौनमाश्रितं, ततोऽतिरुष्टेन स्वर्णकारेण साधोर्मस्तकमार्द्रवार्ध्रेण बद्धं, तदा साधोश्चक्षूषी निःसृत्य पतिते, महती वेदना समुत्पन्ना, ततः स साधुरन्तकृत्केवली भूत्वा मुक्तिं प्राप्तः । इत्थं प्राणांतोपसर्गेपि तेन मेतार्यमुनिना जीवदयैव मनसि धृता, न किमप्यन्यच्चिंतितं, एवमन्यैरप्याचरणीयम् । इति । समयिके मेतार्यदृष्टांतः ॥ २ ॥ अथ सत्यवादे कालिकाचार्यदृष्टांतो यथा–तुरीमिणीनगर्यां कालिकाचार्याणां भागिनेयेन दत्तनाम्ना पुरोहितेन छलात्स्वामिनृपं कारागारे निक्षिप्य स्वयं च राज्यभारं बिभ्रता अन्यदा च मातुः प्रेरणयाऽऽचार्यसमीपं गतेन तेन उन्मत्ततया धर्मेर्ष्यया च सक्रोधं श्रीगुरुभ्यो यज्ञफले पृष्टे सति गुरुभिर्धैर्यमवलम्ब्य तस्याग्रे यज्ञो हिंसारूपो हिंसायाः फलं च नरक इति सत्यमेव वचः प्रोक्तं, न पुनरन्यथा. ततः कोऽत्र प्रत्यय इति तेन पृष्टे सति गुरुणोक्तं, तस्मिन्नेव दिने तव मुखेऽकस्माद्विष्टा पतिष्यति. ततोऽतिक्रुद्धेन दत्तेनोक्तं त्वं कथं मरिष्यसि ? गुरुणोक्तमहं समाधिना मर्त्तास्मि, मृतोऽपि च स्वर्गं गतास्मि । तदा दत्तः साहंकृतिः सन् तत उत्थाय सूरिं च स्व-

रागद्वेषभयादिपरिहारेण यथास्थितकथनं ३, समासः-स्तोकाक्षरैः कर्मनाशकस्तत्त्वबोधः ४, संक्षेपः-स्तोकाक्षरा महार्था द्वादशांगी ५, अनवद्यं-निःपापाचरणं ६, परिज्ञा-पापत्यागेन समंताद्वस्तुतत्त्वज्ञानं ७, प्रत्याख्यानं-परिहरणीयवस्तुत्यागः ८ इत्यष्टौ नामानि. अथैषां क्रमेणाष्टौ दृष्टांता दर्श्यते, तत्रादौ दमदन्तदृष्टांतो यथा—

हस्तिशीर्षनगरे दमदंतो राजा, तस्य चैकदा हस्तिनागपुरस्वामिभिः पांडवैः कौरवैश्च सह सीमानिमित्तं महान् विवादः संजातः, तदनंतरं
क्रियद्भिर्दिनैर्दमदंते जरासंधनृपसेवार्थं गते सति पांडवकौरवैश्च तद्देशो भग्नस्तां वार्त्तां श्रुत्वा क्रुद्धो दमदंतः सद्यो बहुसैन्यमादाय हस्ति-
नागपुरोपरि समागतस्तत्र चोभयेषां परस्परं महद्युद्धं संजातं, परं दैववशात्पांडवाः कौरवाश्च भग्नाः; दमदंतस्तु विजयं प्राप्य स्वस्थानमा-
यातः, तत एकदा स नृपः संध्यायां पंचवर्णवार्दलस्वरूपं दृष्ट्वा संप्राप्तवैराग्यः संसारमपि तादृशमेवासारं विभावयन् प्रत्येकबुद्धतया
प्रव्रजितः, ततः प्रतिग्रामं विहरन् अन्यदा हस्तिनागपुरे प्रतोल्या बहिर्देशे कायोत्सर्गेण स तस्थौ, तदा राजवाटिकां गच्छद्भिः पांडवैः
मार्गे तं मुनिं विलोक्य लोकमुखाच्च तं दमदंतराजर्षिं विज्ञाय सद्योऽश्वेभ्य उत्तीर्य विधिनाभिवन्द्य तस्य द्विविधमपि बलं प्रशंस्य अग्रे च-
लितं, ततः कौरवाः समेतास्तेषु वृद्धेन दुर्योधनेन तथैव तं दमदंतं विज्ञाय बहुभिर्दुर्वाक्यैस्तिरस्कृत्य साधुसमीपं च बीजपूरफलं प्रक्षि-
प्य अग्रे चलितं, ततो 'यथा राजा तथा प्रजेति' न्यायात्तदनुगच्छद्भिः सर्वैरपि सैनिकैः काष्ठपाषाणादेर्निःक्षेपाद् समन्तादुच्चैस्तरं
चत्वरमिव विदधे. अथ पश्चाद्वलमानाः पांडवा मुनिस्थाने तन्महच्चत्वरं दृष्ट्वा लोकेभ्यः प्रश्नपूर्वकं तत्सर्वं कौरवकृतं दुश्चेष्टितं ज्ञात्वा
सद्यस्तत्रागत्य पाषाणादिदूरीकरणपूर्वकं तं दमदंतं प्रणम्य स्वस्थानं गताः, एवं पांडवैः सन्मानितः कौरवैश्चापमानितोऽपि स मुनिः उभयत्र
समभावं बभार, मनागपि रागद्वेषौ न कृतवान्। इति समभावे दमदंतदृष्टांतः ॥ १ ॥ अथ दयापूर्वकवृत्तौ मेतार्यदृष्टांतो यथा—

माराध्यं, एतावता सम्यग्दृष्टिभिर्मिथ्यात्वपरिहारेण देवपूजन-गुरुसेवन-जैनागमश्रवण-धर्मक्रियानुमोदन-तीर्थयात्राकरण-जिनकल्याणकभूमिस्पर्शनादिभिः सततं सम्यक्त्वं निर्मलं कार्यमिति, उक्तं च—

जम्मं दिक्खा नाणं, तित्थयराणं महाणुभावाणं ॥ जत्थ य कयनिव्वाणं अगाढं दंसणं होइ ॥१॥इति॥ प्रसंगत उक्तं,

अथ प्रथमं सामायिकस्वरूपमुच्यते, समस्य-रागद्वेषरहितस्य मतो-जीवस्य आयो-ज्ञानादीनां लाभ प्रशमसुखरूपः समायः, स एव-सामायिकं, मनोवाकायचेष्टापरिहारेण मुहूर्त्तं यावत् सर्ववस्तुषु समपरिणाम इत्यर्थः, उक्तं च, निंदपसंसासु समो, समो य माणावमाणकारीसु । समसयणपरियणमणो । सामाइयं संगओ जीवो ॥ १ ॥ जो समो सव्वभूएसु, तसेसु थावरेसु य ॥ तस्स सामाइयं होइ, इमं केवलिभासियं ॥ २ ॥ तथा सामायिकस्थितः श्रावको गृहस्थोऽपि यतितुल्यो भवति, यतः—सामाइयंमि उ कए, समणो इव सावओ हवइ जम्हा ॥ एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥ १ ॥ अत एव सामायिकस्थस्य देवस्नात्रपूजनादावप्यधिकारो नास्ति; सामायिकरूपे भावस्तवे प्राप्ते सति द्रव्यस्तवकरणानौचित्यात् । सामायिकस्य दुर्लभता कथितास्ति, यथा—सामाइयसामग्गिं, देवावि चिंतंति हियमज्झंमि ॥ जइ हुइ मुहुत्तमेगं, ता अम्ह देवत्तणं सहलं ॥ १ ॥ इति ॥ इह सामायिककर्त्ता श्रद्धालुर्द्विविधः ऋद्धिमान् अनृद्धिकश्च; तत्र य ऋद्धिरहितः स साधुसमीपे जिनगृहे पौषधशालायां स्वगृहे वा निर्विघ्ने स्थाने सामायिकं कुरुते, यस्तु राजादिर्महर्द्धिकस्तस्य सामायिकविधानं महताडंबरेणोपाश्रयमागत्योचितं भवति, यत ईदृशा अपि सामायिकं कुर्वंतीति लोके जिनशासनस्य महाप्रभावना संजायते इति.

अथ सामायिकस्याष्टौ नामानि उच्यंते—सामाइयं १ समइयं २ सम्मवाओ ३ समास ४ संखेवो ५ । अणवज्जं च ६ परिण्णा ७, पच्चक्खाणे य ८ ते अट्ठ ॥ १ ॥ व्याख्या—सामायिक-समभावः १. समयिकं-सम्यग्दयापूर्वकं सर्वजीवेषु प्रवर्त्तनं २, सम्यग् वा

तरसं चिर्भटिकादिफलं जीवाश्रयत्वाद्वर्जनीयं, पुनः सच्छिद्रमपरिपक्वं फलमपि अंतर्जीवसद्भावात्त्याज्यं, एवमन्यदपि अज्ञातफलादियद्भक्ष्यवस्तु तत्सर्वं परिवर्ज्यं, उक्तं च—

अज्ञातकं फलमशोधितपत्रशाकं, पूगीफलानि सकलानि च हट्टचूर्णं ॥
मालिन्यसर्पिरपरीक्षकमानुषाणा-मेते भवंति नितरां किल मांसदोषाः ॥ १ ॥

पुनर्यद् द्रव्यं ग्रीष्मादिकाले शीघ्रविनाशि भवति तत्तत्सोपयोगेन सता निरवद्यमेव सेव्यमिति ॥

अथ विशेषतोऽस्मिन्पर्वणि कृत्यं दर्शयति—

सामायिकावश्यक-पौषधानि, देवार्चन-स्नात्र-विलेपनानि। ब्रह्मक्रिया-दान-तपोमुखानि, भव्याश्चतुर्मासिकमंडनानि॥१॥

व्याख्या--भो भव्या ! एतानि सामायिकादिधर्मकृत्यानि चातुर्मासिकस्य मंडनानि-अलंकारभूतानि विद्यंते, ततो भवद्भिस्तानि सेव्यानीति ज्ञेयं, यद्यपि चातुर्मासिकत्रयमस्ति तथापि यदुद्दिश्य व्याख्यानं विधीयते तन्नाम ग्राह्यं, तत्र न कोऽपि दोषः, अत्र हि कश्चित्पुमान् सामायिकं करोति, कश्चित्प्रतिक्रमणं, कश्चित्पौषधमित्यादि योज्यं, यथाशक्ति एतानि कर्त्तव्यानीति न कश्चिद्विरोध इति, इह प्रथमं तिथयो विलोक्याः, ते च त्रिधा तथाहि-"चाउद्दसट्ठ-मुद्दिट्ठपुण्णमासिणीत्ति" सिद्धांते उक्तत्वात्, मासमध्ये द्वे चतुर्दश्यौ, द्वे अष्टम्यौ, आमावास्या, पूर्णिमा च, षट् चारित्रतिथयः, आसु चारित्रमाराध्यं. शीलांगाचार्यादि-गीतार्थैरादृत्वात्, उद्दिष्टशब्देन जिनकल्याणकतिथयः पर्युषणातिथिरपि च ग्राह्या, द्वितीयापंचम्येकादश्यो ज्ञानतिथयः, एषु ज्ञानमाराध्यं, अन्ये दर्शनतिथयस्तेषु दर्शन-

## अथ श्रीचातुर्मासिकव्याख्यानं प्रारभ्यते ॥ ९ ॥

स्मारं स्मारं स्फुरज्ज्ञानं, धाम जैनं जगन्मतम् ॥ कारं कारं क्रमांभोजे, गौरवे प्रणतिं पुनः ॥ १ ॥
निबद्धां प्राक्तनप्राज्ञैर्वीक्ष्य व्याख्यानपद्धतिम् ॥ लिख्यते लेशतो व्याख्या, चातुर्मासिकपर्वणः ॥ २ ॥ युग्मम् ॥

इहाषाढ २ कार्तिक २ फाल्गुन ३ चातुर्मासिकानामन्यतमे चातुर्मासिकपर्वणि समागते सति अन्योऽन्यसापेक्षव्यवहारनिश्चयाभ्यां युक्तं श्रीजिनशासनं विज्ञायैकांतवादनिराकरणेन आवश्यकग्रंथोक्त-समाहिताक्षर- शुद्धटंकरूप्यलक्षणचतुर्थ-भंगतुल्यं द्रव्यभावलिंगं संयुक्तमिच्छद्भिः स्याद्वादरुचिभिर्धर्मार्थिभिः प्राणिभिः सम्यग्धर्मकृत्यं कर्त्तव्यम् । अत्र हि चत्वारो भंगाः प्रोक्ताः संति, तथाहि—अशुद्धं रूप्यमशुद्धमुद्रं १, अशुद्धं रूप्यं शुद्धमुद्रं २, शुद्धं रूप्यमशुद्धं मुद्रं ३, शुद्धं रूप्यं शुद्धं मुद्रं ४. तत्र प्रथमे भंगे चरकपरिव्राजकादयः १, द्वितीये पार्श्वस्थादयः २, तृतीये प्रत्येकबुद्धा अंतर्मुहूर्त्तकालमगृहीतद्रव्यलिंगाः ३, चतुर्थे साधवो द्रव्यतो भावतश्च शुद्धिभाजः ४. एतेषु चतुर्थभंग एव शुद्धत्वादुपादेय इति । अथ श्राद्धानां प्रथमतः सामान्येन किंचिन्नित्यकर्त्तव्यमुच्यते । एतद्दुरंतानंतभवभ्रमण भीरुभिर्जैनमार्गानुसारिभिः श्रद्धालुभिः सर्वदा बहुसावद्यव्यापाराः वर्जनीयाः, विशेषतः फाल्गुनादिमासेषु तिलादिधान्यं न रक्षणीयं बहुत्रसजीवोत्पत्तिविनाशसंभवात् , तथा संधानमाम्रफलादीनां यदि संमक्तं भवेत्तदा त्याज्यं, जंतुभिमिश्रं फलं मधुकबिल्वादि, पुष्पमरणिशिग्रुमधुकादि त्याज्यं, वर्षाकाले तंदुलीयादिपत्रशाकं न भक्षणीयं, बहुसूक्ष्मत्रसजीवमिश्रत्वादिति, योगशास्त्रे हेमाचार्यैर्गुर्जरादौ महाजनप्रसिद्धैरुक्तमस्ति, फाल्गुनपूर्णिमात आरभ्य कार्तिकपूर्णिमां यावत् प्रायेण पत्रशाकं न भक्ष्यमिति । तथातिपक्कं श्लथीभूतं चलि-

रिसहेस समं पत्तं, निरवज्जं इक्खुरससमं दाणं ॥ सेयांससमो भावो, हविज्ज जई मग्गिय हुज्जा ॥४॥ इयं गाथा स्पष्टार्था।

ननु त्रैलोक्यपूज्यस्यापि भगवतः कथमेतावान्—अन्तरायोऽजनिष्ट ? तत्रोच्यते—प्राक्कृतकर्मोदयाद्, तथाहि—कस्मिंश्चित् प्राग्भवे ऋषभस्वामिजीवेन पथि व्रजता धान्यखले धान्यं भक्षयतो बलीवर्दान् तोदनेन कर्षुकैस्ताडयमानान् विलोक्य चिन्तितमेते मूढाः वृषभमुखेषु शिक्यबन्धनं न जानते, तस्मिन् क्षणे स्वयं तत्र स्थित्वा स्वहस्तेन वृषभमुखेषु तद्बन्धनोपदेशश्चक्रे, तदानीं च बलीवर्दैः निःश्वासानां षष्ट्यधिकत्रिशती मुमुचे, तस्मिन् कर्मणि उदिते सति भगवानत्र भवे वर्षमेकं यावद् आहारविघ्नं लेभे, तस्मिन् कर्मणि क्षयोपशमं च प्रापिते श्रेयांसदत्तमाहारं लब्धवान्, श्रेयांसश्च तद्दानफलेन मुक्तिसुखभाग् बभूव, तद्दिनादेव साधुभ्यः प्रासुकाहारदानविधिः सर्वैरपि लोकैरज्ञायि । ततश्च भगवान् ऋषभदेवो वर्षाणामेकसहस्रं यावत् छाद्मस्थ्येन विहृत्य तपस्तप्त्वा घातिकर्मचतुष्टयं क्षपयित्वा केवलज्ञानं प्राप्य वर्षसहस्रोनपूर्वलक्षं यावदार्यक्षेत्रेषु विहृत्य बहुभव्यान प्रतिबोध्य अष्टापदपर्वतोपरि दशसहस्रमुनिसहितेन मोक्षं जगाम. इति श्रुत्वा भो भव्याः ! रत्नत्रयात्मके मोक्षमार्गे बह्वादरेण यतध्वम् इति श्रेयः ॥

अक्षयादितृतीयाया, व्याख्यानं वीक्ष्य प्राक्तनम् । अलेखि सुगमं कृत्वा, क्षमाकल्याणपाठकैः ॥ १ ॥

॥ इति श्री अक्षयतृतीयाव्याख्यानं सम्पूर्णम् ॥ ८ ॥



एतच्च भगवतः पारणकं श्रेयांसगृहे वैशाखशुक्लतृतीयायामभूद्, तद्दानस्य अक्षयसुखजनकत्वेन तद्दिनस्याक्षयतृतीया, इति प्रसिद्धिर्बभूव, शेषाणामजितादित्रयोविंशतितीर्थंकराणाममृतरससदृशोपममृतरसतुल्यं परमान्नं घृतखण्डमिश्रितक्षैरेयीरूपं भोजनकं पारणके आसीद् इति प्रथमगाथार्थः । अथ पंचदिव्यानि एव आह—

घुट्ठं च अहो दाणं, दिव्वाणि य आहयाणि तूराणि । देवा वि सन्निवइया, वसुहारा चेव वुट्ठा य ॥ २ ॥

गाथार्थः—यदा श्रेयांसगृहे भगवता पारणकं कृतं तदा देवैः, 'अहोदानमहोदानमिति'घुष्टम्—उद्घोषणा कृता, तथा देववृन्देन दिव्यानि तूर्याणि वादित्राणि आहतानि--वादितानि, आकाशे बधिरितदिक्चक्रा देवदुन्दुभयो नेदुरित्यर्थः, तथा देवाः—तिर्यग्जृम्भकादयोऽपि सन्निपतिताः—आगताः, तथा वसुधारा च वृष्टा—सार्धद्वादशकोटिमितसौवर्णिकादिवृष्टिरभूदित्यर्थः । उपलक्षणात् सुगन्धिजलवृष्टिः सुगन्धपुष्पवृष्टिश्चाभूदिति ज्ञेयम्, एतदेव स्पष्टयति—

भवणं घणेण भुवणं, जसेण भयवं रसेण पडिहत्थो । अप्पा निरुवमसुखं, सुपत्तदाणं महग्घवियम् ॥३॥ इति ।

गाथार्थः—दानावसरे भवनं—श्रेयांसगृहं धनेन—स्वर्णरत्नादिमयेन भृतमिति शेषः, भुवनं--स्वर्ग-मृत्यु-पाताल-लोकरूपं यशसा भृतम्—अहो ! श्रेयांसकुमारेण त्रिजगत्पतये केनाऽप्यदत्तपूर्वं दानं दत्तमिति त्रिलोकिव्यापिनी तस्य कीर्तिरभूदिति भावः, भगवान् ऋषभस्वामी इक्षुरसेन प्रतिहस्तः—लाभभागभूद् संयमलाभस्य इक्षुरसाहारपूर्वकत्वाद्; आत्मा—श्रेयांसजीवो निरुपमं सुखं प्राप्तवान्, अतः सुपात्रदानं महाप्रशस्यम् ।

कानर्थमूलकारणं परमाणुमात्रमपि परिग्रहं न वांछति; किं पुनः मणिस्वर्णकन्याश्वगजमौक्तिकादिकमिति सम्यग् विचार्य गवाक्षादुत्तीर्य यत्र श्रीऋषभदेवस्तत्र समागत्य हर्षभरेण पुलकितशरीरो भगवन्तं त्रिःप्रदक्षिणीकृत्य वन्दयित्वा उवाच-हे भगवन् ! प्रसन्नो भव, अष्टादशकोटाकोटिसागरोपमानि यावद् विच्छिन्नस्य प्रासुकाहारदानविधेः सम्यक् प्रदर्शनेन भव्यजन्तून् निस्तारय, गृहाण च मद्गृहे प्राभृतार्थं समागतान् शतसंख्यान् इक्षुघटान् इति । अथ स्वामिनाऽपि चतुर्ज्ञानयुक्तेन द्रव्यक्षेत्रादिसामग्रीं सम्यग् ज्ञात्वा इक्षुरसग्रहणाय करद्वयं प्रसारितम्, तदा श्रेयांसो रत्नपात्रतुल्याय श्रीमद्भगवते त्रिकरणशुद्ध्या इक्षुरसरूपं निर्दुष्टमाहारं ददानो हर्षभरेण स्वचित्ते शरीरे च न ममौ*, आत्मानं धन्यं मन्यमानः त्रिजगत्पूज्येन भगवता आहारग्रहणेनानुगृहीतोऽहमिति चिन्तयन् यावत् स्वहस्तेन इक्षुरसभृतैर्घटैर्भगवन्तं प्रीणयन् तिष्ठति, तावद् देवैर्हर्षभरेणाकाशे पंच दिव्यानि प्रकटीकृतानि, एतदेवाह श्रुतकेवली भगवान् भद्रबाहुः-'उसभस्स उ पारणए' इत्यादि, गाथा पूर्वं दर्शिता। अथ गाथार्थः—ऋषभस्य लोकनाथस्य प्रथमतीर्थंकरस्य प्रथमपारणके इक्षुरस आसीद्,

*आनंदाश्रुणि रोमांचो, बहुमानं प्रियंवचः । किंचानुमोदना पात्र-दानभूषणपंचकम् ॥ १ ॥
अनादरो विलंबश्च वैमुख्यमप्रियंवच । पश्चात्तापश्च सद्दाने, स्मृतं दूषणपंचकम् ॥ २ ॥
दानं ख्यातिकरं सदा हितकरं, संसारसौख्यंकरं । नृणां प्रीतिकरं गुणाकरकरं, लक्ष्मीकरं किंकरं ।
स्वर्गावासकरं गतिक्षयकरं, निर्वाण संपत्करं । वर्णायुर्बलबुद्धिवर्धनकरं, दानं प्रदेयं बुधैः ॥ ३ ॥

इहादौ श्रीऋषभस्वामिसम्बन्ध उच्यते, श्रीऋषभस्वामी सर्वार्थसिद्धविमानात् च्युत्वा आषाढकृष्णचतुर्थ्यां श्रीमरुदेवाकुक्षावुत्पन्नः, नवमासान् चतुर्दिनाधिकान् गर्भे स्थित्वा चैत्रकृष्णाष्टम्यामर्धरात्रे जन्म संप्राप्तः, विंशतिपूर्वलक्षाणि कुमारपदं भुक्त्वा त्रिषष्टिपूर्ववर्षं राज्यं प्रपाल्य चैत्रकृष्णाष्टम्यां दीक्षां जग्राह. तदा हस्तिनागपुरे श्रीबाहुबलिपुत्रस्य श्रीसोमयशोनृपस्य पुत्रः श्रेयांस आसीद् । अथ भगवान् प्राक्तनकर्मोदयाद् वर्षं यावद् आहारालाभाद् निराहारो विहरन् हस्तिनागपुरे समाययौ, तस्यां रात्रौ श्रेयांसादिभिः त्रिभिस्त्रयः स्वप्ना लब्धाः, तथाहि—श्यामीभूतं मेरुममृतघटैः प्रक्षाल्याहमुज्ज्वलमकार्षमिति श्रेयांसो लब्धवान् १, तथा सूर्यबिम्बात् च्युतं किरणसहस्रं श्रेयांसेन सूर्यबिम्बे स्थापितमिति स्वप्नं सुबुद्धिनामा श्रेष्ठी लब्धवान् २, तथा एकः शूरो बहुभिर्वैरिभिः रुद्धः, श्रेयांससाहाय्याद् जयं प्राप्तवान्, इति स्वप्नं च सोमयशाः राजा लब्धवान् ३, प्रातः सभायां सर्वेऽपि मिलिताः स्वं स्वं स्वप्नमुक्तवन्तश्च, ततः स्वप्नविचारं कृत्वा नृपादिभिः सर्वैरपि उक्तम्—अद्य श्रेयांसस्य कश्चिदपूर्वो महान् लाभो भविष्यतीति । तदा भगवान् भिक्षार्थं इतस्ततो भ्रमन् श्रेयांसगृहसमीपमाययौ, श्रेयांसः स्वामिनं दृष्ट्वा हर्षं प्राप्तः, लोकास्तु पूर्वं साधुमुद्राया अदर्शनेन अन्नदानविधेरज्ञानाद् भगवन्तं मणिस्वर्णगजाश्वादिभिर्निमन्त्रयामासुः, भगवांस्तु तैर्दीयमानं वस्तु किमपि न गृह्णातिस्म, तदा भगवानस्माकमुपरि अतीव रुष्टोऽस्ति, येनास्माकं किमपि वस्तु न गृह्णाति इति ते लोकाः कोलाहलं चक्रुः । एवमेकः संवत्सरो व्यतिक्रान्तः, तस्मिन्नवसरे श्रेयांसो भगवन्मुद्रां विलोक्य 'अहो दृष्टं मया ईदृक्रूपं कदाचिद्' इति ऊहापोहं कुर्वाणो जातिस्मरणं ज्ञानं प्राप्य भगवता सह स्वस्याष्टभवसंबन्धं च ज्ञात्वा प्राक् स्वयमनुभूतं साधुभावं स्मृत्वा चिन्तयतिस्म—अहो ! अज्ञानविजृम्भितमेतत् संसारिजीवानां, येनैते एव कुर्वन्ति—यतः त्रैलोक्यराज्यं तृणाय मन्यमानो भगवान् विषयतृष्णां त्यक्त्वा सांसारिकसुखं च किंपाकफलतुल्यं गणयन् साधुत्वमंगीकृत्य मोक्षसुखार्थं यतमानोऽने–

चले बालिनामा महामुनिर्मोक्षं प्राप्तः । श्रीकृष्णपुत्रौ शाम्ब-प्रद्युम्ननामानौ मुनी सिद्धिं गतौ । दशरथपुत्रो भरतोऽपि तत्रैव शिवं प्राप्तः । शुकनामा मुनिः, शैलकाचार्य-पन्थको च मुक्तिं प्राप्तौ । राम-भरत-द्राविडनरपतिनारदाद्या मुनयोऽप्यत्रैव मुक्तिं प्राप्ताः, पाण्डवप्रमुखाः सत्पुरुषा अपि श्रीसिद्धाचले मुक्तिं प्रापुः । चैत्रीपूर्णिमादिने उपवासं कृत्वा श्रीसिद्धाचलतीर्थे गत्वा पूजाध्यानदानादीन् ये प्राणिनः कुर्वन्ति ते नरकतिर्यग्गतिविच्छेदं कुर्वन्ति, इत्यादि पर्वाराधनस्वरूपं प्रोक्तम् । तद्दिने श्रीगुरुपार्श्वाद् मन्त्राक्षरपूतं स्नात्रजलं गृहीत्वा गृहादौ सेचनीयम्, तेन मरकोपद्रवादि भयं याति, सदाऽऽनन्दश्च भवति, ऋद्धिं वृद्धिं सुखं च जनः प्राप्नोति । अस्मिन् पर्वणि समागते केचिद् दानं ददति, केऽपि शीलं पालयन्ति, केचिद् भावं भावयन्ति, वक्तॄणां श्रोतॄणां च सदाश्रेयो भवतु ।

नन्दे-रसे-सिद्धिचन्द्रे ( १८६९, ) प्रमिते वत्सरे वरे । इयं व्याख्या गुणग्राह्या, चैत्रशुक्लाष्टमीतिथौ ॥ १ ॥
दुर्गे जेसलमेरौ च, कृतावासेन धीमता । गणिनाऽमरचन्द्रेण, वाचकेन सुसाधुना ॥ २ ॥
तच्छिष्यजीवराजेन, कृता व्याख्या मनोरमा । चैत्रशुक्लपूर्णिमायाः, कीर्तिरत्नसहायतः ॥ ३ ॥

इति चैत्रशुक्लपूर्णिमाव्याख्यानं समाप्तम् ॥ ७ ॥

## अथ अक्षयतृतीयाव्याख्यानम् ॥ ८ ॥

प्रणिपत्य प्रभुं पार्श्वं, श्रीचिन्तामणिसंज्ञकम् । अक्षयादितृतीयाया, व्याख्यानं लिख्यते मया ॥ १ ॥
उसभस्सयपारणए, इक्खुरसो आसि लोगनाहस्स । सेसाणं परमन्नं, अमियरससरिसोवमं आसी ॥ २ ॥

शुद्धभावेनोपवासं कृत्वा श्रीजिनालये स्नात्रपूजामहोत्सवादि करणीयम्, सर्वजिनानां पूजा विधेया, सद्गुरुमुखाच्च तस्मिन् दिने चैत्री व्याख्यानश्रवणं कार्यं, दीनहीनजनेभ्यो दानं देयं; शीलं च पालनीयं; जीवरक्षा विधेया, विधिपूर्वकं विमलगिरिपट्टं उच्चैः स्थापयित्वा मुक्ताफलैस्तन्दुलादिभिश्च महतीं पूजां विधाय गुरुसमक्षं पंचशक्रस्तवादिभिर्देवान् वन्दित्वा शुभध्यानेन दिनरात्रीकृत्यं विधाय पारणवेलायां मुनिभ्यो दानं दत्त्वा पारणकं विधेयम्, पंचदशवर्षाणि यावदेवं प्रतिवर्षं व्रतमाराधनीयम्, पश्चादुद्यापनं यथाशक्ति समाचरणीयम्, तेन निर्धनो धनी भवेद्, पुत्र–कलत्र–सौभाग्य–कीर्त्ति–देवसुखं शिवपदप्राप्तिश्च भवेत्, तथा स्त्रीणां पतिवियोगो न भवति, रोग-शोक–वैधव्य–दौर्भाग्य–मृतवत्सात्व पारवश्यादि सर्वं कर्मफलं नश्यति। अस्या आराधने स्त्री पतिवल्लभा भवति, विषकन्या भूत–प्रेत–शाकिन्यादिग्रहादिकष्टं विलयं याति, बहुना किं भावेनाऽऽराधिता चैत्रीपूर्णिमा मुक्तिं ददाति, इति गणधरमुखात् श्रुत्वा सा बाला हर्षं प्राप, उक्तवती चाहं एतद् व्रतं करिष्यामि। तदा जनन्या सह सा बाला गुरुं नत्वा गृहे गत्वाऽवसरे चैत्रीपूर्णिमाऽऽराधनं कृतवती, तदा सा सुखिता जाता, विषयविकारस्यापि शान्तिः संजाता, परमपदे मनोऽभूद्, प्रति वर्षं व्रतं कुर्वत्या पूर्णे व्रते शुभभावेनोद्यापनं कृतम्, पुण्डरीकगणधरध्यानेन श्रीसिद्धाचलयात्राकरणेन श्रीऋषभदेवस्य जापेन प्रान्तेऽनशनं विधाय कालं कृत्वा सौधर्मदेवलोके देवत्वेनोत्पन्नाः, तत्र देवसंबन्धिनो भोगान् भुक्त्वा महाविदेहे क्षेत्रे सुकच्छविजये वसन्तपुरे नरचन्द्रस्य राज्ञो राज्ये ताराचन्द्र–श्रेष्ठिनो गृहे तारानाम्न्या भार्यायाः कुक्षौ पुत्रत्वेन स जीव उत्पन्नः, नाम्ना पूर्णचन्द्रो, द्वासप्ततिकलाकुशलो जातः, पंचदशकोटिद्रव्यं, पंचदश भार्याः, पंचदश पुत्रा, इत्यादि सर्वं सुखं प्राप्तवान्, तद्भवे पुनः स चैत्रशुक्लपूर्णिमाऽऽराधनं कृत्वा, प्रान्ते श्रीजयसमुद्रगुरुपार्श्वे दीक्षां गृहीत्वा, तत्र च शुभध्यानेन केवलज्ञानं प्राप्य मुक्तिं गतः। एवं चैत्र्याराधने बहवो जनाः परमानन्दं प्राप्ताः, पुनरपि विमला-

सा कामविह्वला भर्तारं प्रत्युवाच-भर्तुः समीपे समागता, तदा भर्त्रा प्रोक्तम्-अद्य वारकं तव नास्ति कथं त्वया मर्यादा लंघिता ?, सा कामविह्वला भर्तारं प्रत्युवाच- केयं मर्यादा ?, तदा भर्त्रा प्रोक्तम्-कुलोद्भवानां मर्यादोल्लंघनं न युक्तं; समुद्रोऽपि मर्यादां न मुंचति; सत्पुरुषः स्वमर्यादया न चलति । ततः सा संतोषरहिता कलुषवदना मित्रश्रियं प्रति द्वेषमुद्वहन्ती स्वगृहे समागता, सपत्न्या सह पतिसंबन्धवियोगमिच्छन्ती कनकश्रीः (चन्द्रश्रीः) विषयप्रमादव्याकुला सती मन्त्रतन्त्रयन्त्रोपायकार्मणादिसामग्रीं विधाय तस्याः शरीरे भूत-प्रेत-शाकिनी-डाकिनीप्रवेशं कारितवती, साऽपि कर्मयोगात् पारवश्यं प्राप्ता । अथ कनकश्रीः सपत्नीशरीरं कुचेष्टितं ज्ञात्वा जहर्ष, पुनः स्ववशीकरणबलेन भर्तारं स्ववशी चक्रे, भर्ताऽपि लघुपत्नीं दृष्ट्वा पूर्वकर्मफलं विचिन्त्य तत्याज । कनकश्रीर्हर्षिता, धनावह श्रेष्ठी कनकश्रिया सह विषयसुखं भुंजानः सन् कालं निनाय । कियति काले गते सति सा कनकश्रीर्मृता त्वत्पुत्री जाता, सपत्नीपतिवियोगकरणेन विषकन्या कर्मविपाकं पतिविरह-पीडापीडितं भोगसुखरहितं कर्मोपार्जितं, तेन कारणेन तव पुत्री महादुःखेन दुःखिताऽस्ति, कर्मणां विचित्रा गतिरस्ति । तदा तज्जननी प्राह-हे गुरो ! इयं पतिविरहेण पीडिता वृक्षशाखायां पाशं बद्ध्वा मरणाय समुद्यता, तावन् मया एतत्स्वरूपं दृष्ट्वा पाशं छित्त्वा भवत्समीपे समानीता भवद्भिर्दीक्षा प्रदीयताम्, तदा गणधरः प्राह-हे भद्रे ! एषा तव पुत्री दीक्षायोग्या नास्ति, नितरां चंचलस्वभावा बाला वर्तते, इति गुरुवचनं श्रुत्वा तन्माता प्राह-अस्या योग्यं धर्मकृत्यं कथयतां येन दुष्टकर्मविपाको दूरीभवेद् । गुरुरपि ज्ञानबलेन तस्या योग्यं व्रतं कथयतिस्म-हे भद्रे ! चैत्रशुक्लपूर्णिमाऽऽराधनं कुरु, तस्या आराधनेऽस्याः पूर्वकर्मविनाशो भविष्यति, इति श्रुत्वा तस्याः कन्याया अपि गुरुज्ञानयोगाद् रुचिः समुत्पन्ना, तदा सा सावधानीभूय गुरुवाणीमशृणोद्, तदा गणधरेणोक्तम्-श्रीसिद्धाचलतीर्थं शाश्वतमस्ति, तत्रानन्तानन्तकालेनानन्ता जीवाः सिद्धाः, सकलतीर्थेषु मुख्यम्, तस्य चैकविंशतिर्नामानि सन्ति, तैर्ध्यानं विधेयम्, चैत्रीपूर्णिमादिने

उत्तरश्रेण्यां च गगनवल्लभप्रमुखाणि षष्टिर्नगराणि वासयित्वा प्रदत्तानि; तत्र विद्याबलेन लोकान् वासयित्वा यावन्ति नगराणि तावंतो देशान् संस्थाप्य तौ पृथक् पृथग् नमिविनमी तत्र राज्यं पालयामासतुः। तौ चिरकालं राज्यसुखमनुभूय प्रान्ते सर्वसंगं परित्यज्य दीक्षां गृहीत्वा श्रीविमलाचले समागत्य श्रीदेवाधिदेवं युगादिदेवं भावेनाऽभिनम्य तत्रैव तीर्थे मुक्तिं प्रापतुः, इति नमिविनमिसम्बन्धः।

अथ श्रीऋषभदेवस्य प्रथमगणधरः पुण्डरीकनामाऽत्रैव मुक्तिं प्राप्तस्तत्सम्बन्धश्चायम्।

श्रीआदिनाथपुत्रो भरतः, तस्य पुत्रः पुण्डरीकः, श्रीप्रभोः पार्श्वे धर्मं श्रुत्वा प्रतिबुद्धः सन् दीक्षां गृहीत्वा प्रथमगणधरो जातः, पञ्चकोटिसाधुपरिवृतः गणधरो ग्रामानुग्रामं विहरन् सौराष्ट्रदेशे समागतः तदागमनं श्रुत्वाऽनेकभूपमण्डलीकमात्यश्रेष्ठि-नरनारीगणा वन्दनार्थमाययुः, गुरुरपि यथायोग्यं धर्मदेशनां ददाति स्म। तस्मिन्नवसरे एका सबाष्पजला सशोका चिन्तासागरसंप्रविष्टा दीना महिला समागता, तया सार्धं विधवा दौर्भाग्ययुक्ता एका कन्याऽपि समागता। श्रीपुण्डरीकगणधरं नमस्कृत्यावसरं प्राप्य कन्यया सह सा स्त्री इति पप्रच्छ-हे भगवन्! अनया कन्यया पूर्वभवे किं पापं कृतं, येन विवाहसमये करमोचनवेलायामेवास्याः पतिर्मरणं प्राप्तः? इति प्रश्ने कृते सति गणधरः प्राह-हे भद्रे! अशुभकर्मणोऽशुभमेव फलम्, तथाहि-जम्बूद्वीपे पूर्वमहाविदेहे मनोरमं विश्वविख्यातं कैलासपर्वताकारतुंगप्राकारवेष्टितं नानादेशोद्भवजनाकुलं विशालशालगृहैर्मण्डितं चन्द्रकान्तनामकं नगरं बभूव। तत्र श्रियो धाम सकलकला-गुणगणग्रामो जगति प्रसिद्धः समरसिंहो नाम महीपतिरभूत्। तस्य शीलालंकारधारिणी धारिणीनाम्नी वल्लभा बभूव। तत्र नगरे महा-धनाढ्यः परमश्राद्धो जिनभक्तिरतोऽनेकगुणसागरो धनावहनामा श्रेष्ठी बभूव। तस्य कर्मयोगाद् द्वे भार्ये बभूवतुः, एका कनकश्रीः द्वितीया मित्रश्रीस्ताभ्यां भार्याभ्यां सह स श्रेष्ठी सुखेन कालं गमयतिस्म। अथैकदा मदनपरवशात् कनकश्रीर्मित्रश्रियो वारकं समुल्लंघ्य

## अथ चैत्रीपूर्णिमाव्याख्यानम् ॥ ७ ॥

तीर्थराजं नमस्कृत्य, श्रीसिद्धाचलसंज्ञकम् । चैत्रशुक्लपूर्णिमाया, व्याख्यानं क्रियते मया ॥ १ ॥

सिज्झो विज्झायर चक्की, नमिविनमिमुणी, पुण्डरीओ मुणिन्दो। बालीपज्जुम्नसंबो, भरहसुगमुणी, सेलगो पंथगो य ॥
रामो कोडीपंच, दविडनरवई, नारओ पण्डुपुत्ता ॥ मुत्ता एवं अणेगे, विमलगिरिमहं, तित्थमेयं नमामि ॥ १ ॥

व्याख्या—अहमेतत् तीर्थं नमामि यत्रानेक प्राणिनः सिद्धा बभूवुः, ते के ? तानाह—यत्र विमलाचले विद्याधरादिचक्रवर्तिनः सिद्धाः—मुक्तिं प्राप्ताः, पुनर्युगादिदेवस्य पौत्रकपुत्रौ नमिविनमिनामानौ मुक्तिं गतौ, तत्सम्बन्धोऽयम्-अयोध्यायां नगर्यां भगवान् ऋषभदेवः स्वज्येष्ठपुत्राय भरताय राज्यं दत्त्वाऽन्येषामपि यथायोग्यं देशं विभज्य स्वयं दीक्षां गृहीतवान् , तदा नमिविनमिनामानौ कस्मैचित् कार्याय कुत्रचित् प्रदेशे गतावभूताम् , भगवता तु राज्यविभागावसरे तौ विस्मृतौ, दीक्षाग्रहणानन्तरमयोध्यायां समागतौ भरतं पप्रच्छतुः—ऋषभदेवोऽस्माकं पिता क्वास्ति ?, भरतेनोक्तं-स्वामिना दीक्षा गृहीता, युवाभ्यां मम सेवा कर्तव्या, अहं युवाभ्यां देशग्रामं दास्यामि, तदा तौ भरतमपमान्य राज्यार्थं स्वामिसमीपे आगत्य विहारं कुर्वतो भगवतोऽग्रे कण्टकादिकं मार्गाद् निवारयन्तौ कायोत्सर्गे स्थितस्य भगवतो दंशमशकादीन् उड्डापयन्तौ प्रातर्वन्दनापूर्वकं 'स्वामिन् ! राज्यप्रदो भव' इत्युक्तवन्तौ नित्यं तिष्ठतः स्म । एकदा वन्दनार्थमागतेन धरणेन्द्रेण तयोरुपरि महतीं कृपां विधाय भगवद्रूपं कृत्वा ताभ्यामष्टचत्वारिंशत्सहस्रपठितसिद्धविद्याः प्रदत्ताः, षोडशविद्यादेव्याः समाराधनं च दत्तम् , वैताढ्यपर्वते दक्षिणश्रेण्यां रथनूपुरचक्रवालप्रमुखाणि पञ्चाशन्नगराणि,

तस्य दश उपवासाः प्रायश्चित्तम् , एककलशप्रमाणजलप्रक्षेपणे शतमुपवासानां प्रायश्चित्तम् , मूत्रप्रक्षेपणे पंचाशदुपवासाः, छगणप्रक्षेपणे पंचविंशतिरुपवासाः, एकगालिप्रदाने पंचदशोपवासाः, गीतगानेऽसभ्यगाने सार्धशतमुपवासाः, तत्संबन्धिवादित्रताडने सप्ततिरुपवासाः, एककरीषप्रक्षेपणे विंशतिरुपवासाः, छगणहारप्रक्षेपणे जन्मान्तरे शतं वाराः स्वस्य भस्मीभवनं भवति, श्रीफलप्रक्षेपणे सहस्रशो भस्मीभवनं भवति, एकपूगीफलप्रक्षेपे पंचाशद् वाराः, धूलिप्रक्षेपे पंचविंशतिर्वाराः, होलिकागर्तखनने शतं वाराः, होलिकायां काष्ठप्रक्षेपे सहस्रशो भस्मीभवनं भवति । होलिकादाहकरणे सहस्रशश्चाण्डालकुलोत्पत्तिः, होलिकाव्रतकारकस्य सहस्रशो म्लेच्छकुले उत्पत्तिर्भवति, एवं पापं विज्ञाय श्रेयोऽर्थिभिरात्महितेच्छुभिः द्रव्यहोलिकां त्यक्त्वा भावहोलिका एवं आराध्यते, तेनैवात्र जगति इष्टार्थः प्राप्यते, इति ।

संवद्बाणकृशानुसिद्धिवसुधा, (१८३५) संख्ये नभस्येऽसिते ॥ पक्षे पावनपञ्चमीसुदिवसे पाटोधिसंज्ञे पुरे ।
श्रीमच्छ्रीजिनलाभसूरिगणभृत्तुल्यप्रतापोद्धुरे ॥ कान्ते श्रीजिनचन्द्रसूरिमुनिपे धर्मेशतां बिभ्रति ॥ १ ॥
श्रीमन्तो गुणशालिनः समभवन्, प्रीत्यादिमाः सागरा-स्तच्छिष्याऽमृतधर्मवाचकवराः, सन्ति स्वधर्मादराः ॥
तत्पादाम्बुजरेणुराप्तवचनस्मर्ता विपश्चित्क्षमा-कल्याणः कृतवानिदं सुविशदं व्याख्यानमाख्यानभृत् ॥ २ ॥

इति होलिकाव्याख्यानं समाप्तम् ॥ ६ ॥

---

सह पौषधप्रतिक्रमणसामायिकादिधर्मकृत्यं करोतिस्म, यथाशक्ति व्रतनियमपालनमपि करोति । अथ तस्या गृहसमीपे मिथ्यात्वि-
लोका वसन्ति, तेषां मिथ्यात्विनां पुत्रीभिः सह सा तिष्ठति, उत्तिष्ठति, भ्रमति, ब्राह्मणाः कथां यत्र वाचयन्ति तत्र गत्वा कदापि कथां
अपि श्रृणोतिस्म । यद्यपि सा जैनं धर्मं पालयति, तथापि संगतिवशाद् मिथ्यात्वस्याप्यादरं कृतवती, यथा—ज्येष्ठ-श्रावणमासयोः
गणगोरपूजनात् सुन्दरवरप्राप्तिः धनधान्यप्राप्तिः एतादृश्यो वार्तास्तस्यै रोचन्ते । अथैकदा कुमारी मनसि व्यचिन्तयत्-यद् जैनधर्मे
वीतरागो देवोऽस्ति, स च न कमपि सुन्दरमसुन्दरं करोति; सांख्यादिदर्शने तु ब्रह्मा जगतः कर्ताऽस्ति, विष्णुः रक्षणं करोति, शिवः
संहारं करोति, ततो यदि ईश्वर—पार्वत्योः पूजा विधीयते तौ च तुष्टौ स्यातां तदा मनोवाञ्छितसांसारिकसुखस्य लाभो भवेत् । एवं
विचार्य गणगोरप्रभृतिमिथ्यात्विपर्वसु आदरवती अभूत् । अथ तस्या मातापितरौ बहुनिषेधं कृतवन्तौ-यत् त्वं हे पुत्रि ! मिथ्यात्वि-
पर्वण आराधनां मा कुरू, चिन्तामणिसमानं जैनं धर्मं प्रक्षीय काचशकलतुल्यमन्यं धर्मं मा गृहाण, अमृतस्वाद त्यक्त्वा विषस्वादं मा
स्वीकुरु, विषपानेन दुःखिता भविष्यसि; इत्यादि बहु कथितं परन्तु मिथ्यात्विपरिचयवशाद् तया किंचिदपि न मेने, मिथ्यात्विप-
र्वाराधनां कर्तुं लग्ना, यथा यथा मिथ्यात्विजनाः प्रशंसन्ति तथा तथा साऽऽनन्दं दधार । अथ मातापितृभ्यां सा परिणायिता, अल्प-
कालेनैव मृत्वा मनोरथश्रेष्ठिनः पुत्री संजाता, कथावाचकव्यासस्य पुत्री यया सह बाल्यावस्थात एव होलिकादिमिथ्यात्विनां व्रत-
मकरोद्; सा मृत्वा ढुण्ढा संजाता, कथावाचकश्च कामपालः संजातः, पूर्वत्र संबन्धाद् ढुण्ढा कामपालस्य होलिकया सह समागमं कृत-
वती । इत्थं वृथैव संभूतं होलिका पर्वं विज्ञाय सुधीभिः भव्यात्मभिः शुभार्थं तन्न कर्तव्यम्, किन्तु तस्मिन् दिने प्रतिक्रमण-व्रत-
जिनपूजादिधर्मकार्यं विधेयम्, होलिकासंबन्धि किमपि कार्यं न विधेयम् । यो हि होलिकाज्वालायां गुलालस्यैकां मुष्टिं प्रक्षिपति

गृहातु, ततः कुमारेण सा तत्राऽऽनीता, तां दृष्ट्वाऽसौ मम पुत्रीति श्रेष्ठिनोक्तम्, तदा कामपाल उवाच—हे सरलश्रेष्ठिन्! त्वं निजपुत्रीं वह्निदग्धां किं न जानासि ?, पूर्वं सूर्यदेवगृहे त्वत्पुत्र्यां मम भार्याभ्रमोऽभूद्; अधुना मद्भार्यायां तव निजपुत्रीभ्रमो जातः, द्वयोः रूपस्य परस्परसादृश्याद् अपरं कारणं नास्ति. तत एवं श्रुत्वा हर्षितः श्रेष्ठी तं जजल्प—इतः प्रभृति त्वद्भार्या मम पुत्रीस्थाने भवतु, इयमेव हि मत्पुत्रीति तद्दिनादारभ्य श्रेष्ठी प्रीत्या तस्यै वस्त्रालंकारभोजनादिकं सर्वमपि पूरयामास। अथ सा ढुण्ढा परिव्राजिका मृता पिशाची बभूव, पूर्वभवं स्मृत्वा तया ज्ञातम्-दुष्टा एतन्नगरवासिनो लोकाः, ये मह्यं भिक्षामपि न ददुः, ततः सा कोपचित्ता लोकचूरणाय तन्नगरोपरि महतीं शिलां चक्रे, पुनः प्रबलभाग्ययुक्तां होलिकां प्रतिहन्तुं न समर्था बभूव, ततो भीताः पौरलोकाः बलिं चक्रुः, तदा पिशाची कस्यचिच्छरीरेऽवतीर्य उवाच–भो लोकाः! पूर्वं कुलद्वयवत्सलाहं भण्डान् भरडांश्च त्यक्त्वाऽन्यान् सर्वलोकान् हनिष्यामि, ततो लोका मरणाद् भीताः सन्तोऽन्यं जीवितोपायमलभमानाः स्वयमपि भण्डभावमाश्रित्य स्वजीवितकृते मुक्तसज्जनमर्यादा असत्यवचनभाषिणो दुष्टवादित्रवादिनः, एवं भण्डा जाताः, पुनर्भस्मधूलिकर्दमादिभिर्मलिनदेहा भरडाप्राया बभूवुः। ततः प्रतिवर्षं होलिकादिनाद् द्वितीयदिने धूलिहरिकापर्व प्रवृत्तं, ततः सा प्रसन्नीभूय स्वस्थानं गता।

## अथ होलिकापूर्वभवः कथ्यते।

पाटलीपुरनगरे ऋषभदत्तनामा श्रेष्ठी निवासमकरोद्, तस्य चन्द्राननानाम्नी पत्नी। अथ तयोर्द्वयोः पुत्रयोरुपरि देवीनाम्नी पुत्री जाता, सा च रूपलावण्यादिगुणैरतीव शोभिताऽऽसीद्। सा च अष्टवर्षीया जाता ततः पितृभ्यां पाठिता, ततः सा कन्या स्वमात्रा

जिकया सा होलिका पृष्टा–हे पुत्रि ! कथय ते मनोगत चिन्ताम् ? तदा कथितस्तया तदग्रे स्वाभिप्रायः, ततः परिव्राजिकया प्रोक्तम्–हे पुत्रि ! रविदिने पूजामिषात् सूर्यदेवगृहे त्वमागच्छेः, तत्राहं तव कुमारसंगं कारयिष्यामि, यतो जन्ययात्राजागरिकोत्सवेषु दुर्लभस्यापि जनस्य संगमः स्यात्, यथेप्सितव्यभिचारसिद्धिर्भवेद्, इति लोकोक्तिरस्ति। ततो रविदिने होलिका तत्र गता, कुमारोऽपि तपस्विन्याः संकेतितस्तत्रायातः ततः सा विधिना सूर्यमूर्तिं प्रपूज्य यावत् प्रतिचचाल तावत् कुमारस्तामालिलिंग, तदा तया कुमारपृष्टे हस्तप्रहारं दत्त्वा पूत्कारः कृतः, अहं परपुरुषस्पर्शसंजातपातकस्य शुध्यर्थमग्निप्रवेशं करोमि, तदा तां मरणाभिमुखीं गूढदम्भां पुत्रीं वीक्ष्य बलाज्जनको गृहमानीतवान्, ततः फाल्गुनपूर्णिमारात्रौ तपस्विनी पुनः तयोः संगमं कारयामास; स्वयं च तत्समीपे गृहे सुप्ता, सिद्धकार्यत्वाद् गाढनिद्रां प्राप्ता।

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णो न भिद्यते। द्विकर्णस्य च मन्त्रस्य ब्रह्माऽप्यन्तं न गच्छति ॥ १ ॥

इति वाक्यं विचार्य होलिका निजगृहे सुप्तां तापसीं गृहं च दग्ध्वा शीघ्रं कुमारसहिता तत्स्थानान्नष्टाऽन्यत्र स्थिता। प्रभाते पुत्रीं दग्धां ज्ञात्वा श्रेष्ठी बहु विललाप, तदा लोकास्तां सतीं ज्ञात्वा तदीयभस्म प्रणमंतिस्म, तत्प्रभृति सर्वत्र प्रतिवर्षं तद्दिने होलिकापर्व प्रवृत्तं, तदधुनाऽपि परमार्थशून्या लोकाः कुर्वन्ति। अथ कतिषु दिनेषु गतेषु स कुमारो होलिकां प्रोचे–अधुना धनं नास्ति तेन धनार्जनाय विदेशं व्रजामि, ततस्तयोक्तम्–स्वामिन् ! मदुक्तमुपायं कुरु यतो धनप्राप्तिः स्याद्, त्वं हि मत्पितृहट्टं याहि, तस्मान्मूल्येन शाटिकामानय, ततस्तेन तत्र गत्वा तथैव सानीता, भार्यया प्रोक्त न एषा मम योग्या, अन्यामानय, ततः पुनस्तेन तत्र गत्वा सा पश्चाद् दत्ता अपराऽऽनीता, साप्ययोग्या उक्ता पश्चाद् दत्ता, तदा श्रेष्ठिना उक्तम्—तव पत्नी स्वयमागत्य सम्यक् परीक्ष्य विशिष्टशाटिकां

## अथ होलिकाव्याख्यानम् ॥ ६ ॥

होलिका फाल्गुने मासे, द्विविधा द्रव्य-भावतः । तत्राद्या धर्महीनानां द्वितीया धर्मिणां मता ॥ १ ॥

लोके हि इदं पर्व होलिकेति वदन्ति, होलिका तु द्विविधा द्रव्यतो भावतश्च, तत्र येऽज्ञानिनः सदसद्विवेकविकलाः प्राकृतलोकप्रवाहरक्ताः श्रीजिनधर्मविमुखा गतानुगतिकाः लोकास्ते काष्ठच्छगणादिना वह्निमयीं द्रव्यहोलिकां कुर्वन्ति, धर्मपर्व विराधयन्ति, अपरदिने च धूलिक्रीडनाऽवाच्यजल्पन-मलमूत्रजलाच्छोटन-स्त्र्यादिवस्त्राकर्षण-रासभारोपितनरपीडनादिकं कुर्वन्ति । सर्वमपीदमनर्थदण्डं विज्ञाय धार्मिकैः परिहर्तव्यम् । ये पुनर्धर्मिणस्ते तपोरूपजाग्रद्वह्निना कर्मदलच्छगणभस्मीकरणरूपां भावहोलिकां कुर्वन्ति सद्ध्यानरूपिजलखेलनादिकं च कुर्वन्ति । ननु कुत इदं लौकिकं रजः पर्व प्रवृत्तमिति ? प्रश्नमाशंक्य सम्प्रदायगम्यं तत्कथानकमुच्यते-पूर्वदेशे जेतपुरं नाम नगरमस्ति, तत्र च जयवर्मा राजा, मदनसेना च तत्पट्टराज्ञी, अमात्यो मतिचन्द्रनामा । तत्रैव मनोरथनामा श्रेष्ठी, तस्य चत्वारः पुत्राः, तेषामुपरि अतीव रूपवती होलिकानाम्नी पुत्री, सा च पित्रा महोत्सवेन विवाहिता, परं कर्मवशाद् विधवा जाता, सा सदा पितृगृहे तिष्ठति, अन्यदा गवाक्षस्थिता सा बंगदेशस्वामिभुवनपालभूपस्य पुत्रं कामपालनामानं विलोक्य कामाकुला जाता, सोऽपि तां दृष्ट्वाऽत्यर्थं कामव्याप्तः संजातः, तदा श्रेष्ठी तां पुत्रीं गुप्तपीडापीडितां दृष्ट्वा विषादं प्राप्तः, इतश्च तत्र पुरे एका परिव्राजिका वसतिस्म, सा च द्विजकुलोत्पन्न-चंडरुद्रभाण्डस्य पुत्री, अचलभूतिनाम भरडकस्य पत्नी 'ढुंढा' इति नाम्ना विख्याता, कूटकपटकारिणी लोकानां भूतकर्मादिकं करोतिस्म, तथा सा क्षुधातुरा कृशांगी भिक्षार्थं दिने दिने गृहं गृहं प्रतिभ्रमतिस्म, पर लाभान्तरायवशात् क्वापि भिक्षां न लभते, ततः सा लोकेभ्यः कोपं चकार । अथ मनोरथश्रेष्ठिना सा सत्कृत्य याचिता, हे मातर्मम सुतां पट्टीं कुरु, ततो रहसि परिव्रा-

बभूव । ततः क्रमेण कर्माणि क्षपयन् द्वादशगुणस्थानान्त्यसमये घातिकर्मचतुष्टयं शुक्लध्यानेन क्षपयित्वा त्रयोदशगुणस्थानप्रथमसमये केवलज्ञानं प्राप्य बहून् भव्यान् प्रतिबोधयन् पृथिव्यां विजहार । ततः द्विसप्ततिपूर्वलक्षाणि सर्वायुः प्रपाल्य चतुर्दशे गुणस्थाने पंचह्रस्वाक्षरोच्चारणकालमाने योगनिरोधं कृत्वा शेषकर्मचतुष्टयं क्षपयित्वा मुक्तिं प्राप्तः । इह शरीरं त्यक्त्वा पूर्वप्रयोगबन्धनच्छेदादिना सिद्धशिलोपरि योजनान्ते सिद्धक्षेत्रे एकस्मिन् समये गत्वा साद्यनन्तस्थित्या स्थितवान् । इत्थं पिंगलरायतो मेरुत्रयोदश्या महिमा प्रवृत्तः । पूर्वं रत्नमया मेरवो ढौकिताः, पश्चात् कियत्कालं यावत् स्वर्णमयाः, ततः पश्चाद् रूप्यमयाः, अस्मिन् काले घृतमया मेरवः प्रवृत्ताः सन्ति, इत्थं मेरुत्रयोदश्याः महिमानं श्रुत्वा भो भव्याः ! शुद्धभावेन विधिना एतद् व्रतं कर्तव्यम्, येन इह परत्र च सर्वप्रकारसुख-संपत्तिः प्रादुर्भवेदिति ॥

सम्वद्व्योमरसाष्टेन्दु ( १८६० ) मिते फाल्गुनमासके ॥ असितैकादशीतिथ्यां बीकानेराख्यसत्पुरे ॥ १ ॥
व्याख्यानं प्राक्तनं वीक्ष्य निबद्धं लोकभाषया ॥ अलेखि संस्कृतीकृत्य क्षमाकल्याणपाठकैः ॥ २ ॥
संविग्नवाचनाचार्यपदस्थानं सुधीमताम् । श्रीयुक्तामृतधर्माणां शिष्यैरामोदतस्त्वदः ॥ ३ ॥ त्रिभिर्विशेषकम्,

॥ इति मेरुत्रयोदशीव्याख्यानं सम्पूर्णम् ॥ ९ ॥

रत्नमयं मेरुपञ्चकं श्रीजिनाग्रे ढौकनीयम्–मध्ये एको महान् मेरुः, चतुर्दिक्षु चत्वारो लघवः, तदग्रे चतुर्दिक्षु चत्वारो नन्द्यावर्ताः कर्तव्याः। दीपधूपादिपूर्वकं बहुविधाः पूजाः कर्तव्याः। एवं मासत्रयोदशकं यावत्, अथवा वर्षत्रयोदशकं यावत् कर्तव्यम्। तथा 'ॐ ह्रीँ श्रीऋषभदेवपारंगताय नमः' एतत् पदं द्विसहस्रवारान् जपनीयम्, एवं प्रतिमासं कुर्वतः सकलरोगक्षयो भवति, इह परत्र च सुखं संपद्यते। यदि त्रयोदश्यां पौषधं कुर्यात् तर्हि प्रागुक्तं कर्तव्यं सर्वं पारणकदिने कृत्वा गुरुं प्रति अतिथिसंविभागं विधाय पारणकं कुर्यात्। इत्थं गुरुवचः श्रुत्वाऽनन्तवीर्यो राजा व्रतं अंगीकृत्य गुरून् नत्वा स्वस्थानं ययौ। अथ पिंगलरायकुमारः प्रथम–माघकृष्णत्रयोदश्यां प्रथमं व्रतं कृतवान् तावता चरणांकुरौ प्रादुर्भूतौ, एवं त्रयोदशमासान् यावत् कुर्वतः सुन्दररूपौ–पादौ प्रकटी–भूतौ। राजाऽतीव हर्षं प्राप्तः, धर्मस्य महिमानं विलोक्य उल्लसितः सन् विशेषतो धर्मं कर्तुं प्रवृत्तः। ततः षोडशवर्षे कुमारेण गुण–सुन्दरी परिणीता, अन्यासामपि बहूनां राजकन्यानां पाणिग्रहणं चक्रे। ततोऽनन्तवीर्येण राज्ञा कुमाराय राज्यं दत्त्वा गांगिलमुनिपार्श्वे चारित्रं गृहीत्वा निरतिचारं तत् प्रतिपाल्य श्रीशत्रुंजयेऽनशनं कृत्वा शिवपदं प्राप्तम्। ततः पिंगलरायनृपः मन्नीत्या प्रजां पालयन् पुनः—त्रयोदशवर्षाणि यावद् मेरुत्रयोदशीमाराध्य प्रान्ते उद्यापनं चकार। तत्र त्रयोदशजिनगृहाणि कारयामास, त्रयोदश स्वर्ण–मयीः प्रतिमाः, त्रयोदश रूप्यमयीः त्रयोदश रत्नमयीश्च निर्मापयामास। त्रयोदशविधै रत्नैर्मेरुपञ्चकं निर्माप्य ढौकयामास। त्रयोदश–वारान् श्रीसंघेन सह तीर्थयात्रां चकार। त्रयोदशसाधर्मिकवात्सल्यान् कृतवान्, एवं बहुधा ज्ञानभक्तिमपि चकार। ततः कियन्ति पूर्वाणि व्रतसहितं राज्यं प्रपाल्य स्वकीय–महसेनकुमाराय राज्यं दत्त्वा श्रीसुव्रताचार्यसमीपे बहुभिरन्यपुरुषैः सह दीक्षां जग्राह। द्वादश–शांगीमधीत्य चतुर्दशपूर्वधरः संजातः, क्रमेण आचार्यपदं च संप्राप्तः, ततः क्षपकश्रेण्यारोहार्थमष्टमगुणस्थाने शुक्लध्यानं ध्यातुमुद्यतो

पुत्रमादाय उपरि गत्वा सूर्यकुंडजलेन पुत्रं स्नपयामास । परं तज्जलं देवताऽधिष्ठितमस्ति स्वयंप्रभस्य च न तत्कर्माद्यापि क्षीणं तेन तज्जलं पादौ न स्पृशति । तद् दृष्ट्वा सर्वेऽपि संवलोकाः विस्मिता जाताः, तदा सर्वैरपि मुनीश्वरः पृष्टः–स्वामिन् ! किमत्र कारणम् ? मुनिरुचे–अनेन बहुभवेभ्यः प्राग् देवद्रव्यं भक्षितमस्ति, तथा एकस्या मृग्याश्चत्वारोऽपि पादाच्छिन्नाः तत्कर्म बहु क्षीणं किंचिदद्यापि अवशिष्टं वर्तते, तेन तीर्थजलं न स्पृशति तीव्रकर्मणां भुक्तिं विना क्षयाभावात् । एतद् मुनिवचनं श्रुत्वा माता, पिता, पुत्रश्च त्रयोऽपि वैराग्य प्राप्ताः, ततः श्रीऋषभदेवचरणान् अभिवन्द्य गृहमागत्य धर्मकरणोद्यता बभूवुः । इत्थं षोडशसहस्रवर्षाणि कुष्ठरोगादिपीडामनुभूय तत्कर्मालोच्य कालं कृत्वा प्रथमदेवलोके देवत्वेनोत्पन्नः, ततश्च्युत्वा हे राजन् ! अनन्तवीर्योऽयं तव पुत्रः पिंगलरायनामा संजातः । इत्थं गांगिलमुनिः कुमारस्य प्राग्भवमुक्त्वा पुनरुवाच—

मद्यपानाद् यथा जीवो, न जानाति हिताऽहिते ॥ धर्माधर्मौ न जानाति, तथा मिथ्यात्वमोहितः ॥१॥

मिथ्यात्वेनालीढचित्ता नितान्तं, तत्त्वातत्त्वं जानते नैव जीवाः ।

किं जात्यन्धाः कुत्र चिद्वस्तुजाते, रम्यारम्यव्यक्तिमासादयेयुः ? ॥२॥

अभव्याश्रितमिथ्यात्वेऽनाद्यनन्ता स्थितिर्भवेद् ॥ सा भव्याश्रितमिथ्यात्वेऽनादिसान्ता पुनर्मता ॥३॥

ईदृक्-मिथ्यात्वोदयाद् जीवाः कर्माणि बध्नन्ति, तत्पुत्रेणापीत्थमेव दुष्कर्मोपार्जितं तेन पंगुर्जातः । एतद् मुनिवचः श्रुत्वा राजा उवाच–हे स्वामिन् ! एतत् कर्म केन पुण्येन नश्यति ? मुनिना उक्तम्–हे राजन् ! तृतीयारकप्रान्ते सार्धाष्टमासयुक्तवर्षत्रये शेषे सति माघकृष्णत्रयोदश्यां श्रीऋषभदेवस्वामिनो निर्वाणकल्याणकमभूत्, तेन तद्दिनं श्रेष्ठमास्त । तद्दिने चतुर्विधाहारत्यागेन उपवासं कृत्वा

एकदा प्रमोदकमालाभरणानि गृहीत्वा क्वचिद् अनाचारं सेवितवान्, तदा श्रेष्ठिना तत्स्वरूपं ज्ञात्वा गृहाद् बहिर्निष्कासितः। ततो वनमध्ये भ्रमन् आखेटकसंगेन बहून् मृग-शशकादीन् जन्तून् विनाशयन्नुदरपूर्तिं चकार। अथ तत्रैव वने तापसाश्रमो विद्यते तत्र बहवस्तापसास्तपस्यां कुर्वन्ति, मृगा अपि तत्राऽऽगत्य उपविशन्ति। एकदा एका सगर्भा मृगी तत्राऽऽगच्छन्ती तेन सामन्तसिंहेन तीक्ष्णशस्त्रेण पादेषु प्रहृता तस्याश्चत्वारोऽपि पादाः छिन्नाः, सा अधः पतिता तापसैर्दृष्टा, ततस्तैः सद्यस्तत्राऽऽगत्य धर्मः श्रावितः सा मृत्वा सद्गतिं प्राप्ता। ततस्तापसाः सामन्तसिंहं प्रत्येवमुक्तवन्तः—रे दुष्ट! यथा त्वयाऽस्माकं मृग्याः पादाश्छिन्नास्तथा त्वमपि परत्र पंगुत्वं प्राप्नुयाः। इत्थं शापं दत्त्वा ते स्वाश्रमं जग्मुः। सामन्तसिंहोऽपि तापसान् क्रुद्धान् दृष्ट्वा भीतः सन् नष्ट्वा वनं गतः, दुष्कर्मयोगात् संमुखं सिंहो मिलितः, मध्यस्तेन सिंहेन हतः, स मृत्वा नरकं गतः। ततश्च्युत्वाऽसंख्येयान् तिर्यङ्नरकादिभवान् कृत्वाऽकामनिर्जरया बहूनि कर्माणि क्षपयित्वा महाविदेहे कुसुमपुरनगरे विशालकीर्त्तिनृपस्य गृहे शिवानामदास्याः पुत्रत्वेनोत्पन्नः। तया वज्र इति स्थापितं नाम, क्रमेण तरुणो जातः। नृपसेवां करोतिस्म, परं प्राक्कृतकर्मोदयात् तच्छरीरे गलत्कुष्ठरोग उत्पन्नः। हस्तौ, पादौ च गलित्वा पतितौ पङ्गुर्जातः। अथ मरणसमये शिवादास्या नमस्कारमन्त्रः श्रावितः, ततः समाधिना मृत्वा व्यन्तरो जातः, ततश्च्युत्वा जम्बूद्वीपे भरतक्षेत्रे सौहार्दपुरनगरे सूरदासश्रेष्ठिगृहे वसन्ततिलकाभार्यायाः स्वयंप्रभो नाम पुत्रो जातः, स च गुणवान्, विवेकवान्, परं चरणे व्रणरोगयुक्त एवोत्पन्नस्तेन चलितुं न शशाक। क्रमेण अष्टवर्षवया अभूत्, एकपुत्रत्वात् पितरौ तद्दुःखदुःखितावभूताम्। तस्मिन् समये श्रीशत्रुंजयतीर्थयात्रार्थं संघोऽगमद्, तदा तत् श्रुत्वा श्रेष्ठी अपि सरोगपुत्रसहितः संघमध्ये चचाल। क्रमेण सिद्धक्षेत्रे संघः समागतः, ततो विधिना गिरिमारुह्य श्रीऋषभदेवभक्तिं चकार, तदा सूरदासश्रेष्ठी अपि सभार्यः

तथा धर्मस्य मूलं दया, पापस्य मूलं हिंसा, एको हिंसां करोति, अन्यः कारयति, अपरोऽनुमन्यते एते त्रयोऽपि सदृशपापभाजः, पुनर्यो हिंसां कुर्वन् मनसि श्रामं न प्राप्नोति तस्य हृदये दया नास्ति, यो जीवो निर्दयः सन् बहून् एकेन्द्रियान् विनाशयति स परभवे वातपित्तादिरोगभाग् भवति । यः पुनर्द्वीन्द्रियान् विनाशयति स परत्र मूकः, मुखरोगी दुर्गन्धनिःश्वासश्च भवति, यश्च त्रीन्द्रियाणां विनाशकः स नासिकारोगी भवेत् । चतुरिन्द्रियविनाशकस्तु अक्ष्णा काणः अन्धो वा, क्लिन्ननेत्रो वा भवेत् । यस्तु पचेन्द्रियविनाशकः स परत्र बधिरो भवति, यः पुनः पंचप्रकारानपि जीवान् विनाशयति स भवान्तरे पंचापीन्द्रियाणि पटूनि न प्राप्नोति, तस्मात् भो भव्याः ! हिंसाऽनृतादिकं सर्वथा त्याज्यमित्यादिधर्मोपदेशं श्रुत्वा राजा पप्रच्छ—स्वामिन् ! मत्पुत्रः केन कर्मणा पंगुर्जातः ? तदा गांगिलमुनिरुवाच—अस्य प्राग्भवं शृणु, अस्मिन् जम्बूद्वीपे ऐरवतक्षेत्रे अचलपुरनाम्नि नगरे महेन्द्रध्वजो नाम राजा, उभया पद्मरागज्ञी तयोः सामन्तसिंहो नाम पुत्रोऽभूत् । स च लेखनशालायां पठनार्थं गच्छन् द्यूतकृत्संगाद् द्यूतं शिक्षितवान्, क्रमेण सप्तव्यसनसेवनतत्परोऽभूत् । राज्ञा बहुधा निषिद्धोऽपि यदा व्यसनसप्तकं न तत्याज, तदा अयोग्यं ज्ञात्वा स्वदेशाद् बहिर्निष्कासितवान् । ततोऽपि व्यसनमत्यजन् देशाटनं कुर्वन् सुरपुरनगरे समागतः, तत्र चम्पक श्रेष्ठिना सुन्दराकारं विलोक्य उत्तमपुरुषोऽयमिति ज्ञात्वा सुकुमारोयम्, अस्मात् कार्यान्तरं न भविष्यतीति च विचिन्त्य स्वगृहपार्श्ववर्तिजिनगृहरक्षार्थं स सामन्तसिंहः स्वगृहे स्थापितः । अथ स दुष्टात्मा जिनाग्रे ढौकितानि तन्दुलपूगीफलादीनि प्रच्छन्नं गृहीत्वा द्यूतक्रीडार्थं ययौ । कियद्भिर्दिनैः श्रेष्ठिना तद् ज्ञात्वा तस्मै उक्तम्—हे भद्र ! यः पुमान् देवद्रव्यादिकं भुंक्ते सोऽनन्तकालं संसारपरिभ्रमणं करोति, तस्मात् त्वया अतः परमेतत् कार्यं न कर्तव्यम् । इत्थं बहुशोपदेशो दत्तस्तथापि स दुष्टो मिथ्यात्वाज्ञानतीव्रकर्मोदयाद् न ततोऽपि विरमतिस्म ।

कुमारः सत्वरं प्रेषणीयः, इति श्रुत्वा राजा उद्विग्नचित्तः सजातः, ततः सद्य उत्थाय स्वमन्दिरे एकान्तदेशे गत्वा राज्याः, प्रधानस्य चाग्रे इत्थमुवाच—अथ किं कर्तव्यम् ? पुत्रस्तु पंगुर्वर्तते एतस्य कथं भविष्यति ? पंगवे कः स्वकन्या प्रदास्यति ? तदा प्रधानमंत्री किंचिद् विचार्य तान् सेवकान् आहूय इत्युवाच—साम्प्रतमिह कुमारो नास्ति तन्मातुलगृहे वर्तते। मातुलगृहं तु इतो द्विशतयोजनेषु मुहनीपत्तने समस्ति तेन सांप्रतं लग्नं न भवेत्, पश्चाद् ज्ञास्यते। एतत् श्रुत्वा सेवकाः प्रोचुः—हे स्वामिन्! पन्था दूरे वर्तते, अतो लग्नं निर्धार्य देयं, स्वयमपि लग्नोपरि शीघ्रं समागन्तव्यम्। एतत् सेवकवचनं श्रुत्वा मासषोडशकानन्तरं लग्नं भविष्यति, इति निर्धारितम्। ततो लग्नं गृहीत्वा सेवका मलयदेशं गताः। अथ राजा अनन्तवीर्यश्चिन्तातुरः सन्नुवाच—अथाऽत्र क उपायः कर्तव्यः ? षोडशमासास्तु सत्वरमेव यास्यन्ति। तदा नृप-राज्ञी-प्रधानैर्बह्वी चिन्ता कृता परं कोऽप्युपायो न लब्धः। अस्मिन्नवसरे नगर्युद्याने साधुपंचशतीपरिवृतश्चतुर्ज्ञानधरो गांगिलनामा साधुः समवसृतः, वनपालकेन प्रतिपत्तिं कृत्वा नगरमध्ये गत्वाऽनन्तवीर्यराजाय वर्धापनिका दत्ता। राजा तन्मुखात् साध्वागमनं श्रुत्वा तं संतोष्य हस्त्यश्वादिबहुऋद्धिसमेतो वन्दनार्थं निस्सृतः। क्रमेण तत्र गत्वा विधिना मुनीन् अभिवन्द्याग्रे उपविष्टः, पर्षद् मीलिता, मुनिरुपदेशं ददौ। स च इत्थम्—

जीवदयाइ रमिज्जइ, इन्दियवग्गो दमिज्जइ सयावि ॥ सच्चं चेव वदिज्जइ, धम्मस्स रहस्सं इणमेव ॥१॥
जयणा उ धम्मजणणी, जयणा धम्मस्स पालिणी चेव ॥ तह वुड्ढिकरी जयणा, एगंतसुहावहा जयणा ॥२॥
आरंभे नत्थि दया, महिलासंगेण नासए धंमं ॥ संकाए सम्मत्तं, पवज्जा अत्थगहणेणं ॥३॥
जे बम्भचेरभट्ठा, पाए पाडंति बम्भयारीणं ॥ ते हुंति टुंटमुंटा, बोहिवि पुण दुल्लहा तेसिं ॥४॥

कृतवान् । ततस्तमन्तःपुरे एव ररक्षतुः बहिर्न प्रकटी चक्रतुः । यदा पुनः लोकाः पप्रच्छुस्तदा एवमूचतुः—कुमारस्य रूपमत्यद्भुतं वर्तते, मा कदाचिद् दृष्टिदोषो भवेद् इति न प्रादुष्क्रियते । तदा सर्वस्मिन्नपि नगरे एषा प्रवृत्तिः प्रादुर्भूता । यदुत पिंगलरायकुमारतुल्यः पृथिव्यामपरः कोऽपि रूपसौन्दर्यवान् नास्तीति । अथैवं क्रमेण कुमारो वृद्धिं प्राप्तः । अस्मिन्नवसरे अयोध्यानगरीतः सपादशत ( १२५ ) योजनेषु मलयनामा देशोऽस्ति, तत्र ब्रह्मपुरं नाम नगरम् , तत्र च इक्ष्वाकुवंश्यः काश्यपगोत्रीयः दशरथो नाम राजा तस्य च इन्दुमती नाम्नी पट्टराज्ञी । तत्कुक्षिसंभवा गुणसुन्दरी नाम पुत्री, सा चातिशयरूपलावण्यसौभाग्यादिगुणयुक्ताऽभूत् । तस्य राज्ञः पुत्रो नास्ति सैवैका पुत्री आसीद् , अतस्तेन मातापित्रोरतिवल्लभा आसीद् । अथ पुत्रीं वरयोग्यां ज्ञात्वा तद्योग्यवरालाभाच्च राजा तद्विवाहचिन्तातुरो बभूव । तस्मिन्नवसरे तन्नगरवासिव्यापारिणः शकटेषु विविधानि क्रयाणकानि भृत्वा देशान्तरं चलितास्तदा राज्ञा तेभ्य उक्तम्—देशान्तरे भ्रमद्भिर्भवद्भिर्गुणसुन्दरीयोग्यवरप्राप्तौ सत्यां विवाहसम्बन्धः कार्यः, इति नृपवचनं श्रुत्वा तथेति प्रतिपद्य ते चलिताः । क्रमेण बहूनि नगराणि विलोकयन्तोऽयोध्यां नगरीं प्राप्ताः, तत्र च क्रयाणकानि सर्वाण्यपि विक्रीतानि भूयान् लाभः संजातः, अपराणि तत्रत्यानि क्रयाणकानि संगृहीतानि । यदा ते चलनार्थमुद्यता जातास्तदा स्वनृपवचनं संस्मृत्य तन्नगरवासिलोकानां मुखात् कुमारस्याद्भुतं रूपं श्रुत्वा नृपसमीपे गत्वा कुमारेण सह गुणसुन्दर्या विवाहसम्बन्धं चक्रुः, राज्ञाऽपि शुल्क ( कर ) मोचनादिना तेषां बह्वादरश्चक्रे, ततस्ते हर्षिताः सन्तः स्वदेशं प्रति चेलुः, क्रमेण स्वनगरं गत्वा राज्ञोऽग्रे सर्वं वृत्तान्तं कथयामासुः, राजापि कुमारस्याद्भुतरूपसौभाग्यादिगुणान् श्रुत्वा संतोषं प्राप्तः । अथ यदा कन्या वरयोग्या जाता तदा कुमारस्य आकरणार्थं राज्ञा स्वसेवकाः प्रेषिताः, तेऽपि अयोध्यां गत्वा अनन्तवीर्यं नृपं प्रोचुः—हे महाराज ! विवाहार्थे

# अथ मेरुत्रयोदशी व्याख्यानम् ॥ ५ ॥

माद्देवं जिनं नत्वा, स्मृत्वा सद्गुरुभारतीम् । मेरुत्रयोदशीघस्त्र-व्याख्यानं लिख्यते मया ॥ १ ॥

इहाष्टमहाप्रातिहार्यविराजितेन जगद्गुरुणा श्रीवर्धमानस्वामिना श्रीगौतमादीनामग्रे यथा माघकृष्णत्रयोदश्या माहात्म्यमुक्तं, तथा-परंपरयाऽऽयातमस्माभिरुच्यते, श्रीऋषभदेवाऽजितनाथयोरन्तरे पञ्चाशल्लक्षकोटिसागरोपमानि व्यतिक्रान्तानि, तन्मध्ये अयोध्यायां नगर्यां इक्ष्वाकुवंश्यः काश्यपगोत्रीयोऽनन्तवीर्यो नाम राजा बभूव, स च बहुलहस्त्यश्वरथपदात्यादिसेनानायकः । तस्य च राज्ञः पञ्चशतानि राज्य आसन् , तन्मध्ये प्रियमती नाम पट्टराज्ञी बभूव, धनजयो नाम चतुर्बुद्धिनिधिर्महामात्यश्च आसीत् । सुखेन राज्यं पालयतः राज्ञ एकदा मनसि महाचिन्ता समुत्पन्ना-यदुत्तमो ममैकोऽपि पुत्रो नास्ति, क एतद्राज्यस्य भोक्ता भविष्यति ? पुत्रं विना गृहं शून्यप्रायमिति । ततो राज्ञा अनेके उपायाः कृताः परं पुत्रोत्पत्तिर्न जाता । तस्मिन्नवसरे एकदा एकः कोणकनामा साधुराहारार्थं राज्ञो गृहे समागतः, तदा नृपराज्ञ्यौ उत्थाय विधिना वन्दित्वा शुद्धाहारेण प्रतिलाभ्य करद्वयं संयोज्य मुनिं पप्रच्छतुः-स्वामिन् ! अस्माकं पुत्रो नास्ति स कदापि भविष्यति न वा ? मुनिरुवाच-ज्योतिष्कनिमित्तादिकं मुनिर्न भाषते, तदा नृपराज्ञीभ्यां पुनः पुनः प्रार्थनायां कृतायां मनसि दयां धृत्वा मुनिना उक्तम्-हे राजन् ! तव पुत्रस्तु भावी परं पङ्गुर्भविष्यति, एतदुक्त्वा मुनिर्गतः, तदा भूपराज्ञीभ्यां चिन्तितम्-अस्माकं पङ्गुरपि पुत्रस्तु भावी । क्रमेण राज्ञी सगर्भा जाता, पूर्णे काले पंगुं पुत्रं प्रासूत । राजा पुत्रजन्म श्रुत्वा हर्षितः सन् महोत्सवं चकार, द्वादशे दिवसे सर्वमपि कुटुम्बं भोजयित्वा कुमारस्य पिंगलराय इति नाम

बिम्बानि कारितानि पश्चात् कतिपयदिने वैराग्यवासितः श्रेष्ठी गृहभारं सुन्दरनाम्नि ज्येष्ठे पुत्रे नियोज्य सर्वानाहूय कथयति-स्म–हे पुत्राः! यूयं दशमीदिने सप्तदशप्रकारेण वामेयमर्चित्वा व्याख्यानं श्रुत्वा गृहे समागत्य साधून् प्रतिलाभ्य एकासनेन भोजनं कृत्वा चतुर्विधाहारनियमो ग्राह्यः, पारणकदिने स्वामिवात्सल्यं कर्तव्यम्, एवं विधिना वयं सुखिनो जाताः, भवद्भिरपि एवं कर्तव्यम्, येन सुखिनो भविष्यन्ति। एवं पुत्राणां शिक्षां दत्वा गुरुपार्श्वे गत्वा एवं वदति–स्वामिन्! ममोपरि कृपां विधाय चारित्रं देहि येन स्वर्गाऽपवर्गौ प्राप्नोमि, तदा गुरुणा कथितं–यथा रुचिस्तथा कुरु। एवं श्रुत्वा गुरुणां पार्श्वे चारित्रं गृहीतम्। विविधानि षष्ठाष्टमादीनि तपांसि कुर्वाणो द्वादशवर्षप्रान्ते पञ्चदशदिनानि अनशनं विधाय अष्टादशदोषरहितः समाधिना मृत्वा दशमे देवलोके विंशतिसागरोपमायुर्देवत्वेनोत्पन्नः, अनुक्रमेण देवसुखं भुक्त्वा प्राणतकल्पात् च्युत्वा इहैव जम्बूद्वीपे महाविदेहे पुष्कलावतीविजये मंगलावत्यां नगर्यां सिंहसेनराजस्य गुणसुन्दरीभार्यायाः कुक्षिसरोवरे मरालवत् पुत्रो जयसेननाम्ना प्रकटिष्यति। तत्र संसारसुखं भुक्त्वा पश्चात् चारित्रं ग्रहीष्यति, एकादश अंगानि द्वादशोपांगानि पठिष्यति। एकाकी विहारं कुर्वन्नेकदा कायोत्सर्गे स्थास्यति, तत्रोपवनाधिष्ठायको देवो मिथ्यात्ववासितः तस्य श्रमणस्यैकविंशत्युपसर्गान् नकुल–वृश्चिक–पन्नग–गज–सिंह–व्याघ्र–पिशाच–राक्षस खेचर–वेताल–प्रमुखान् करिष्यति। मुनिस्तु शमदमगुणेन, शुभध्यानेन चतस्रघातिकर्मणां क्षयं कृत्वा केवलं प्राप्स्यति। शीलवत्यपि चारित्रं गृहीत्वा प्रतिपाल्य देवलोकं गता महाविदेहे सेत्स्यति, एवं श्रीवर्धमानस्वामिना गौतमाग्रे निरूपितम्, तद् हे भव्याः! इदं व्रतमवश्यं कर्तव्यं येन सुखं स्यात्। अस्य चारित्रस्य श्रवणमात्रेण इह भवे धनधान्यादिकं परभवे स्वर्गापवर्गसुखं जनः प्राप्नोति॥

इति श्रीपूर्वाचार्यहेमचन्द्रसूरिकृतसपादलक्षग्रन्थमध्यादिमं पौष–दशम्या–व्याख्यानं समाप्तम् ॥ ४ ॥

श्रीणिदिनेषु एकभक्तकरणम्, भूमिशयनम्, ब्रह्मचर्यपालनम्, कुर्याः टंकयोरावश्यकम्, देववन्दनम्, जिनालये स्नात्रादिमहोत्सवविधानम्,

'ॐ ह्रीँ श्रीपार्श्वनाथाय अर्हते नमः' इति द्विसहस्रवारं गुणनीयं। पारणान्ते च स्वामिवात्सल्यं, एवं दिग्वर्ष (१०) यावद् विधिना कर्तव्यम्। एवमाराधनेनेहलोके धनधान्यसौभाग्यादिकम्, परलोके च स्वर्गसुखं क्रमेण च मोक्षसुखं भविष्यति। एवं श्रुत्वा हर्षोत्कर्षप्रफुल्ललोचनः श्रेष्ठी जैनं धर्मं गृहीत्वा गुरुं वन्दित्वा स्वगृहं गतः, आचार्यश्चान्यत्र विहृतवान्। श्रेष्ठिना दशमी आराधितुमारब्धा, दशमासेषु गतेषु कालकूटद्वीपाद् पोताः समागताः तदनुचरमुखात् श्रुत्वा श्रेष्ठी न श्रद्दधौ, तदा तत्प्रियया शीलवत्योक्तम्-स्वामिन्! तत् सत्यमेव जानातु, माऽसत्यं मन्यताम्। यतोऽद्य निजगृहे निधानं प्रकटं भविष्यति तदा तु सत्यमित्युक्त्वा निधानस्थाने निधिदर्शनार्थं गतवन्तौ, तदा ताभ्यां निधानानि विलोकितानि। श्रेष्ठी स्वप्रियामुवाच-हे प्रिये! जैनशासन-प्रभावात् प्रवहणवर्धापिका समागता, एकादशस्वर्णकोटिमानो निधिरपि प्रादुर्भूतः। वामेयजिनप्रसादात्, श्रीगुरुणामुपदेशादहं श्रीमान् जातः। अथ जैनधर्मवासनया सुखेन कालो गच्छति, श्रेष्ठिपदमपि पुनः प्राप्तम्, श्रेष्ठिनो दशपुत्राः संजाताः राज्ञा संमान्य निजसमीपे स्थापितः। पुनरेकदा श्रीदेवेन्द्रसूरिर्विहरन् तत्रैवोपवने समवसृतः, तत् श्रुत्वा श्रेष्ठी वन्दनार्थं गतः वन्दित्वा यथास्थानं स्थितः, गुरुणा देशना दत्ता, देशनान्ते श्रेष्ठी पप्रच्छ-हे स्वामिन्! दशम्या उद्यापनं किं कर्तव्यम्? गुरुणा प्रोक्तम्-हे श्रेष्ठिन्! प्रष्टकानि दशपुस्तक-दशलेखनानि, दशपुस्तकबन्धनानि, दशस्थापनाचार्यासनानि (ठवणी), दश जपमालाः, दश चन्द्रोदयाः दशजिनालयानि दश जिनबिम्बानि, दीवि, आरति, एवं सर्वं दश-दशसंख्याकं कर्तव्यम्। एवं [illegible]त्वा श्रेष्ठिनोद्यापनिकां कृत्वा मणिमयानि जिन-

चेतना लक्षणश्चात्मा, सामान्येन बुधैः स्मृतः ॥ संसारात्मा तथा जीवः, परमात्मा द्विधा मतः ॥ २ ॥
संसारात्मा सदा दुःखी, जन्म-मरण-शोकभाक् ॥ चतुरशीतिलक्षासु, योनिषु भ्राम्यते सदा ॥ ३ ॥
न सा जातिर्न सा योनिर्न तत् क्षेत्रं न तत् कुलम् ॥ यत्र कर्मवशादात्मा नोत्पन्नोऽयमनेकधा ॥ ४ ॥
एगया देवलोएसु, नरएसु वि एगया ॥ एगया असुरं कायं, जहा कम्मेहिं गच्छइ ॥ ५ ॥
एगया खत्तिओ होइ, तओ चण्डाल-वुक्कसो ॥ तओ कीड-पयंगो य, तओ कुन्थु-पीपिलिया ॥ ६ ॥
सुभगो दुर्भगः श्रीमान, रूपवान् रूपवर्जितः ॥ स एव सेवकः स्वामी, नरो नारी नपुंसकः ॥ ७ ॥
संसारी कर्मसम्बन्धाद्, नटवत् परिभ्राम्यति । अनन्तकालपर्यन्तं, जीवः संसारवर्त्मनि ॥ ८ ॥
भव्यजीवे दयादानं, धर्मकल्पतरूपमम् । दानशीलतपोभावं, शाखा मुक्तिसुखं फलम् ॥ ९ ॥
धर्मादेव कुले जन्म, धर्माद्धि विपुलं यशः ॥ धर्माद् धनं सुखं रूपं, धर्मः स्वर्गाऽपवर्गदः ॥ १० ॥

दोहा-धर्म करत संसारसुख, धर्म करत निर्वाण । धर्म पंथ साधन विना, नर तिर्यंच समान ॥ १ ॥
सुपुरुष तीन पदार्थ साधे, धर्म विशेष जानी आराधे । धर्म प्रधान कहे सब कोई, अर्थ काम धर्म हित होई ॥ २ ॥

इत्यादिधर्मकथां श्रुत्वा श्रेष्ठी जीवाऽजीवादि नवपदार्थयुक्तं सम्यक्त्वरत्नं प्राप्तः, पुनः पप्रच्छ-हे भगवन् ! एवं किमपि तपस्याफलमुपदिश्यतां येन मम गृहे निधानं प्रकटयति । तदा मुनिना प्रोक्तम्-भोः श्रेष्ठिन् ! पौषकृष्णदशम्यां व्रतं गृहाण, तद्दिने श्रीपार्श्वनाथस्य जन्मकल्याणकमासीद्, नवमीदिने, दशमीदिने, एकादशीदिने एवं

धनमर्जय काकुत्स्थ !, धनमूलमिदं जगत् । अन्तरं नैव पश्यामि, निर्धनस्य शवस्य च ॥ १ ॥

दुहा—बाप कहे मेरे पूत सपूता, बेन कहे मेरा भइया ॥ घर जोरू भी लेत बलैयां, सोई बडो जांकी गांठ रुपैया ॥ १ ॥

अथ श्रेष्ठी निर्धनत्वेन दुःखेन कालं गमयतिस्म । कतिपयदिने तस्य नगरे श्रीदेवेन्द्रसूरिः समवसृतः, तद्वर्धापनिका वनपालेन राज्ञे निवेदिता । राज्ञा वनपालो बहुद्रव्यदानेन तोषितो विसृष्टः, पश्चाद् राजा, श्रेष्ठिवर्गः, सुरेन्द्रश्रेष्ठी, सर्वनगरलोकश्च वन्दनार्थं निर्ययौ । मुनिसमीपे आगत्य मुनिं वन्दित्वा सर्वे यथास्थानं निषण्णाः, मुनिभिर्देशना प्रारब्धा—भो भव्याः ! संसारे सारं धर्मपदार्थः श्रेयान् । यतः—

धर्मतः सकलमंगलावलि-धर्मतः सकलसौख्यसंपदः ॥ धर्मतः स्फुरति निर्मलं यशो, धर्म एव तदहो ! विधीयताम् ॥१॥

विवेकः परमो धर्मो, विवेकः परमं तपः ॥ विवेकः परमं ज्ञानं, विवेको मुक्तिसाधनम् ॥ २ ॥

भक्ष्याऽभक्ष्यविचारः स्याद्, गम्यागम्यविभेदकृत् ॥ मार्गाऽमार्गपरिज्ञानं, गुणाऽगुणविचारणा ॥ ३ ॥

निद्राऽऽहारो रतिर्भीतिः, पशूनां च नृणां समम् । विवेकोऽन्तरमत्रास्ति, तं विना पशवः स्मृताः ॥ ४ ॥

एक उत्पद्यते जन्तुर्यात्येकश्च भवान्तरम् । एको दुःखी सुखी चैकस्तथैकः सिद्धिसौख्यभाक् ॥ ५ ॥

इत्यादिदेशनां श्रुत्वा पर्षद्याः स्वं स्वं स्थानं जग्मुः, तदा सूरश्रेष्ठी पप्रच्छ—हे भगवन् ! जीवस्य किं लक्षणम् ?

तदा मुनिनोक्तम्-हे श्रेष्ठिन् ! ज्ञान-दर्शन-चारित्रयुक्त-तपो-वीर्योपयोगवान् स जीवः यतः—

नाणं च दंसणं चेव, चरित्तं च तवो तहा ॥ वीरियं उवयोगो य, एयं जीवस्स लक्खणम् ॥ १ ॥

परलोके देवादिऋद्धिमनुभूय परम्परया निर्वाणं प्राप्नोति, एवं भगवता उक्ते श्रीगौतमस्वामी प्राह-हे भगवन् ! पुरा केनेयं समाराधिता ? तत् कथ्यताम् । भगवानुवाच-हे गौतम ! श्रीवामेयं मां चान्तरा सूरदत्तश्रेष्ठिना सम्यगाराधिता, तथाहि—जम्बूद्वीपे भरतक्षेत्रे सुरेन्द्रपुरनाम नगरमस्ति, तत्र नरसिंहो नाम राजा राज्यं करोतिस्म, तस्य चतुरा गुणवती शीलालंकारयुता गुणसुन्दर्यभिधाना पट्टराज्ञी विराजतेस्म । तस्य नगरे सूरदत्तश्रेष्ठी परिवसतिस्म । तस्य शीलालंकारधारिणी पतिव्रता शीलवतीनाम्नी पत्नी आसीद् । यद्यपि धनदवद् महाधनाढ्यो यशस्वी च स श्रेष्ठी, परं मिथ्यात्ववासितः सांख्यमतावलम्बी त्रिदण्डिभक्तः शैवधर्माराधनतत्परः जैनधर्मं न जानाति, यतः—

न देवं नाऽदेवं न शुभगुरुमेवं न कुगुरुं ॥ न धर्मं नाऽधर्मं न गुणपरिणद्धं न विगुणम् ॥
न कृत्यं नाकृत्यं न हितमहितं नापि निपुणं ॥ विलोकन्ते लोका जिनवचनचक्षुर्विरहिताः ॥ १ ॥

स कदापि जिनवचनं न शृणोति मिथ्यात्वेन ग्रसितो राहुणा विधुवत् जीवशरीरमेकं मन्यते । परं राजमान्यो नगरे बहुमान्यः श्रेष्ठिपदे आसीद्, एवं काले याते एकदा सार्धद्वयशतप्रमितानां प्रवहणानां चतुर्विधं क्रयाणकं भृत्वा भृत्यान् रत्नद्वीपे प्राहिणोद् । तत्र गत्वा क्रयविक्रयं कृत्वा पुनः नवीनं क्रयाणकं भृत्वा मध्यसमुद्रे आगतास्तावद् पूर्वकृतकर्मोदयेन उल्कापातप्रचण्डपवनवेगेन ते प्रवहणाः कालकूटद्वीपे गताः गृहे नागताः । पुनश्च श्रेष्ठिगृहे एकादशस्वर्णकोटिद्रव्यं भूमिगृहे स्थापितमासीद्, तत् पन्नगवृश्चिकांऽगारकरूपेण जातम् यानि च ग्रामान्तरात् पंचशतानि आगच्छन्ति शकटानि तेषामुपरि भिल्लधाटिः पतिता तान्यपि गतानि । ततश्च श्रेष्ठी निर्द्रव्यो जातः श्रेष्ठिपदं च गतं महादरिद्रश्च संजातः, ततो लोके सन्मानमपि गतम् । यतः—

॥ इति श्रीमौनैकादश्या माहात्म्यं [ व्याख्यानं ] सम्पूर्णम् ॥ ३ ॥

अथ श्रीपौषदशमी व्याख्यानं प्रारभ्यते ॥ ४ ॥

प्रणम्य पार्श्वनाथांघ्रिपंकजं सर्वसौख्यदम् । समस्तमंगलश्रेणिलतापल्लवताऽम्बुदम् ॥ १ ॥
भव्यजीवप्रबोधार्थं, जन्तूना च सुखाप्तये । पौषकृष्णदशम्याश्च, माहात्म्यं कथ्यतेऽधुना ॥ २ ॥

इह जम्बूद्वीपे भरतक्षेत्रे मगधजनपदे चम्पानाम्नी सुमनोहरा नगरी चाऽस्ति, तस्याः समीपे पूर्णभद्राख्ययक्षाश्रिते उपवने श्रीचरमतीर्थाधिपतिमहावीरस्वामी एकदा समवसृतः । तदुपदेशश्रवणार्थं वन्दनार्थं च श्रीमगधाधिपतिः समागतः । स च भगवन्तं त्रिःप्रदक्षिणीकृत्य यथास्थाने समुपविष्टः । तदा स्वामी संसारसागरनिमज्जतामुद्धारकारिणीं देशनां प्रारेभे—

जीवदया रमिज्जइ, इन्दियवग्गो दमिज्जइ सयावि । सच्चं चेव वदिज्जइ, धम्मस्स रहस्समिणमेव ॥ १ ॥

इत्यादिदेशनां श्रुत्वा केचिद् भद्रकतां प्राप्ताः केचिद् श्राद्धधर्मं केचिच्च साधुधर्ममंगीकृतवन्तः, तदानीं श्रीगौतमस्वामी श्रीवीरं वन्दित्वा पप्रच्छ—हे स्वामिन् ! पौषदशमीमाहात्म्यं कथ्यताम्, ? एवं श्रुत्वा, वर्धमानस्वामी कथयति—हे इन्द्रभूते ! पौषदशम्यां श्रीवामेयजिनजन्मकल्याणकं वर्तते, तद्दिने द्विसन्ध्यमावश्यकं कर्तव्यम् । देववन्दनां भूशयन ब्रह्मचर्यपालन जिनालयेऽष्टविध–सप्तदशविधस्नात्रमहोत्सवादिकं विविधाऽऽडम्बरेण जिनापूजां च विधाय गुरुसमीपे गत्वा उपदेशः श्रोतव्यः । पश्चाद् गृहं गत्वा एकासनेन भोजनं कृत्वा चतुर्विधाऽऽहारनियमो ग्राह्यः, नवम्यामेकादश्यां चापि एकवारमेव भोक्तव्यं, एतद्विधिना दश वर्षाणि यावत् क्रियमाणे साऽराधिता भवति । मनोवाक्कायेन त्रिकरणशुद्ध्या अस्या आराधक इह भवे धनधान्य-पुत्रकलत्रादिसौख्यं प्राप्य

जानिते द्वे शते षष्ठे, अष्टमानां शतं तथा। चतुष्टयं चतुर्मास्या, एकं षाण्मासिकं तपः ॥ १ ॥

स मौनैकादशीतिथ्यास्तपस्तपन् विशेषतः। पाठको द्वादशांगीनां शुद्धां दीक्षामपालयत् ॥ २ ॥ इति

अथैकदा एकादश्यां मौनमास्थाय तपः कुर्वति सुव्रते तत्परीक्षार्थं कश्चिद् मिथ्यादृष्टि देवः कस्यचित् साधोः कर्णयोः महतीं वेदनामकारयत्, तस्य वेदना महति उपचारे कृतेऽपि न शाम्यति, तदा तेन देवेन साधुना प्रुस्त उक्तम्—अस्य वेदना सुव्रतमुनेः भैषज्यात् क्षयं यास्यति, यदि स एव स्वस्थानाद् बहिरागत्य उपचारं करिष्यति इति, तत् श्रुत्वा ते साधवः तत्रागत्य उपचारार्थं सुव्रतमभ्यर्थयन्, सुव्रतोऽपि मौनी रात्रौ न स्वस्थानाद् बहिर्याति, ततः देवानुभावतः स वेदनार्तो मुनिः सुव्रतं मस्तके मारयति ततः सुव्रतस्यातीववेदना संभूता परन्तु स मुनिश्चिन्तयति—

अर्हन्तो भगवन्तो ये, साधवो गणधारिणः। इन्द्राश्चन्द्रा दिनेन्द्राश्च, नागेन्द्रा व्यन्तरेन्द्रकाः ॥ १ ॥

सचक्रवर्तिनो वासुदेवाः प्रतिनारायणाः। बलदेवा नराधीशा, मानवा अपरेऽपि च ॥ २ ॥

कर्मणा पापिनाऽनेन, ते सर्वेऽपि विडम्बिताः। कियन्मात्रो वराकोऽहं, पुरस्तात् तस्य कर्मणः ॥ ३ ॥

अरे जीव ! क्षमस्व त्वमुदितं कर्म तेऽस्ति यत्। तद् भोगेन विना नैव, प्रक्षीयेत कदाचन ॥ ४ ॥

लद्धं अलद्धं पुव्वं—जिणवयण सुभासिअं अमियभूयं। गहिउं सग्गइमग्गो—नाइं मरणाउ बीहेमि ॥ ५ ॥

तपस्तीव्रं घरट्टोऽयं, क्षमामर्करिकान्वितः। धृतिहस्तो मनःकीलः, कर्मधान्यानि चूर्णयेत् ॥६॥ इति

अथ विभंगज्ञानेन मुनिमक्षुभितं मत्वा देवः विशेषेणोपसर्गान् अकरोद्, मुनिस्तु क्षपकश्रेणिमारूढः केवलज्ञानं प्राप्तवान् भव्याव्

स्याज्यः इति इदानीं दीक्षां चेत् सुगुरुयोगतो गृह्णामि तदा वरम्, इति चिन्तयतस्तस्य प्रातःकालः सञ्जातः, उद्याने च तरणतारणसमर्थाः चतुर्ज्ञानधरा गुणसुन्दरसूरयः समागताः, तान् वन्दनार्थं सर्वोऽपि लोको गतः, निजतनूज-स्त्रीपरिवारेण संयुतः श्रेष्ठी अपि गतवान् यावत् वन्दित्वा सर्वे स्थिता तावद् गुरुभिः देशना प्रारब्धा-यो यतीनां केवलिप्रज्ञप्तः अहिंसालक्षणः सप्तदशविधः विनयमूलः क्षान्तिप्रधानः महाव्रतपुरस्सरो धर्मः तेन पवनवद् द्रुतं मोक्षं व्रजेत्, यस्तु द्वादशव्रतात्मकः श्रावकधर्मस्तेन तुरंगवेगवद् व्रजेत्, इति अल्पकालेनैव सर्वदुःखान्तकरः साधुधर्मः द्रुतं मोक्षगमनाय सेव्यः । यदुक्तम्—

चारित्ररत्नान्न परं हि रत्नं, चारित्रवित्तान्न परं हि वित्तम् । चारित्रलाभान्न परो हि लाभश्चारित्रयोगान्न परो हि योगः ॥ १ ॥

दीक्षा गृहीता दिनमेकमेव, येनोग्रचित्तेन शिवं स याति । न तत् कदाचित्तदवश्यमेव, वैमानिकः स्यात् त्रिदशप्रधानः ॥ २ ॥

इत्यादि देशनां श्रुत्वा सुव्रतोऽब्रवीत्-हे तारक ! अहं संसारकान्तारादुद्विग्नोऽस्मि इति, गृहभारं पुत्र समारोप्य श्रीमतां समीपे दीक्षां ग्रहीष्यामि, इति श्रुत्वा गुरुः उवाच-यथासुखं प्रवर्तस्व प्रतिबन्धं मा विधेहि । ततः श्रेष्ठी गृहं गत्वा कुटुम्बं भोजयित्वा स्वजनपुत्राणामग्रे दीक्षाऽऽदेशममार्गयत् । तैरनुमतः सुव्रतः एकादशभिः स्त्रीभिः सह प्रवव्राज । शीघ्रमेव तपोविशेषात् कायबलं क्षयीकृत्य मासिकेनाऽनशनेन तस्य एकादशपत्न्योऽपि केवलं प्राप्य शिवं गताः । अथ सुव्रतः मुनिर्ग्रहणासेवनाशिक्षां पठित्वा साधुधर्मे चरति । यदुक्तम्—

जयं चरे जयं चिट्ठे, जयमासे जयं सुए । जयं भुंजंतो भासंतो, पावकम्मं न बंधई ॥ १ ॥

एवं पवित्रं चारित्रं पालयामास तथा विशेषतः षष्ठाष्टमादितपः कृतवान् तस्य संख्या लिख्यते—

बहुप्राभृतपूर्वं सुव्रतः पादयोर्लग्नः, राज्ञाऽपि व्यतिकरः पृष्टः, सुव्रतेन कथितः वृत्तान्तः पुनः धर्मोपदेशं दत्त्वा राजा तोषितः, राज्ञा उक्तम्-वरं वृणु, तदा सुव्रतेन उक्त-अवध्याश्चौरा इति । राज्ञा तथा स्वीकृते शासनदेव्या तलारक्षकाः चौराश्च मुक्ताः । श्रेष्ठिनाऽपि पारणकं कृतम् । पुनरपि एकदा दावानल इव समग्रं पुरं ज्वालनाय अग्निरुत्थितः, तदा नगरस्थः सर्वलोक इतस्ततः नष्टः किन्तु गृहीतपौषधः श्रेष्ठी स्वव्रतरक्षार्थं न कुत्रापि गतः, सर्वनगरमरण्यमिव ज्वलित परन्तु सुव्रत श्रेष्ठिनो हट्ट-गृहादि किमपि न अज्वलत् । प्रातः काले समुद्रे द्वीप इव तस्य हट्टगृहादि वीक्ष्य सर्वेऽपि पौराः सुव्रतं प्रशंसयामासुः, यथा--

सत्त्वेन धार्यते पृथ्वी, सत्त्वेन तपते रविः । सत्त्वेन वायवो वान्ति, सर्वं सत्त्वे प्रतिष्ठितम् ॥१॥

अहो धर्मस्य माहात्म्यमस्याहो दृढता व्रते । पालयेद् व्रतमेवं यो, द्विधाऽप्यस्य शिवं भवेत् ॥२॥

यतः-धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं ॥ धर्मेणैव भवंति निर्मलयशो विद्यार्थसंपत्तयः ॥

कांताराच्च महाभयाच्च सततं धर्मः परित्रायते ॥ धर्मः सम्यगुपासितो हि भवति स्वर्गाऽपवर्गप्रदः ॥३॥

अथ एकादशीव्रते पूर्णे जाते श्रेष्ठी उद्यापनाय मुक्ताफलानि रत्नानि शंखः प्रवालकानि स्वर्णानि कलधौतानि ताम्राणि पित्तलानि त्रपूणि कांस्यानि पट्टकुलानि, बहुविधानि धान्यानि पक्वान्नानि, नालिकेर-द्राक्षासहकारादीनां फलानि, स्वर्ण-रूप्यकानां पुष्पाणि अशोकादीनां पुष्पाणि, इत्यादीनि अनेकानि वस्तूनि एकादशसंख्यया जिनेन्द्राग्रे ढौकयामास । एवं विस्तारेण उद्यापनं कृत्वा संघ-पूजनं साधर्मिकवात्सल्यादीनि सप्तक्षेत्र्यां धनवपनं च विधाय मानुषं जन्म कृतार्थं कृतवान् । अथैकदा वृद्धावस्थायां रात्रौ मनसि श्रेष्ठी चिन्तयति-मया जन्मपर्यन्तं श्रावकव्रतं पालितं मौनैकादशीतपोऽपि तदुद्यापनादिना पूर्णं कृतम्, अथ असारः संसारः पूर्वं पश्चाद् वा

विज्ञाय पुनरपि गुरुसमीपे आजन्म यावद् मौनैकादशीतपः उच्चचार। गुरुणा उक्तम्—एकादशांगानामाराधना कर्तव्या, सम्यक् तपः कार्यम्, पूर्वभवे एकादशीव्रतं कृत्वा निर्मलज्ञानमाप्तवान्, तदुद्यापनवशाच्च अत्र एकादशस्वर्णकोटयः प्राप्ताः, निर्मलं यशः, लोके प्रभुत्वम्, अधिकारित्वम्, नगरश्रेष्ठित्वम् च प्राप्तम्, अतएव तपसि उद्यमो विधेयः। एवमुक्त्वा धर्मलाभाशिषं दत्त्वा गुरवोऽन्यत्र विहृताः। अथ सुखेन सह कुटुम्बेन श्रेष्ठी एकादशीदिवसे प्रहराष्टक आहारादित्यागरूपं पौषध विदधाति। लोकेऽपि मौनैकादशीपर्वणः प्रसिद्धिर्मान्यता च जाता, यतः वृद्धमान्यं सर्वे मानयन्ति यथा महादेवेन भाले स्थापितत्वात् तत्कलामात्रमपि चन्द्रं द्वितीयादिने लोकाः पूजयंति एवं च अनेके लोका मौनैकादशीमाराधयन्ति। अथ एकदा सकुटुंबेन तेन श्रेष्ठिना मौनैकादशीतिथ्याम् अहोरात्रपौषधः कृतः पौषधग्राहिभिः सर्वैरपि रात्रौ कायोत्सर्गः कृतः। अथैकदा चौरैर्ज्ञातम् मौनैकादश्यां सुव्रतःश्रेष्ठी न ब्रूते अपहियमाणमपि वस्तु न पश्यति इति विचार्य चौरघाटी तद्गृहे प्रविष्टा उद्योतं (दीपकं) विधाय चौरा यावत् पश्यन्ति तावत् सर्वत्र पदे पदे स्वर्णराशिमेव पश्यन्ति, यावता गृण्हन्ति तावता शासनदेव्या सर्वे चौराः स्तम्भिताः, अतएव शासनदेवी पूज्यते कायोत्सर्गेणाऽऽराध्यते*। अथ प्रातःकाले स्तम्भितान् सायुधान् परद्रव्यहरणोतान् चौरान् दृष्ट्वा लोकाः मीलिताः। तलारक्षकाश्च तान् वेष्टयित्वा स्थिताः। अथ सकुटुम्बः सुव्रतः स्थापनाचार्यसमीपे पौषधं प्रपाल्य उपाश्रयं गत्वा गुरून् नत्वा धर्मं श्रुत्वा गृहे समागतः, तत्र चौरान् दृष्ट्वा मा राजा चौरान् मारयतु इति बुद्ध्या श्रेष्ठिना मौनं कृतम्, ततः तलारक्षका अपि शासनदेव्या स्तंभिताः, अथ मध्यान्हे समागतो राजा,

* तान् स्तम्भितान् प्रातः तलारक्षको दृष्ट्वा भूपालसमीपे निनाय, राज्ञा वधाय आदिष्टाः, प्रातः श्रेष्ठी पौषधं पारयित्वा प्राभृत लात्वा राज्ञः पार्श्वे गत्वा सर्वान् अमोचयत् इत्याद्यपि समुपलभ्यते पाठः।

रूपलावण्यसंयुक्ता, नरा जात्यादिसंभवः । विद्याहीना न राजन्ते, ततोऽमुं पाठयाम्यहम् ॥१॥

इति चिन्तयित्वा महामहैः पितरौ उपाध्यायसमीपे द्वासप्ततिकलाभ्यासं कर्तुं मुमुचतुः । अनायासेन सकला अपि कला अल्प-काले एव पपाठ । षड्विधावश्यकसूत्रादिकं श्रावकाचारमपि पपाठ, प्राप्तयौवनस्य तस्य पिता—श्रीकान्ता, पद्मा, लक्ष्मीः पद्मलता, तारा, रम्भा, पद्मिनी, गौरी, गांगेया, रतिः, इतिनाम्न्यः महर्द्धिकव्यवहारिणां एकादशकन्याः पारिणायिताः, ताभिः रूपलावण्यशालिनीभिः सह भोगान् भुञ्जानः दोगुन्दकसुर इवाभवत् । तदनंतरं तस्मिन् गृहभारं समारोप्य स श्रेष्ठी प्रव्रज्यां गृहीत्वा सम्यक्प्रपाल्य प्रान्तेऽनशनं विधाय मृतः स्वर्गं च प्राप्तः । अथ गृहस्वामी सुव्रतः श्रेष्ठी पूर्वजन्मनि एकादशीमाराधितवान् तत एकादशस्वर्णकोटिनां नायको जातः । तथा एकादशस्वर्णकोटीश्वरो दाता भोक्ता नगरश्रेष्ठिसुवर्णपट्टालंकृतभालो राजमान्यः सत्यवादी सर्वत्र विश्रुतो अतिप्रतापी सज्जनश्रेष्ठः व्यापारिकशिरोरत्नं सुखेन कालं निनाय । अथ कालान्तरेण एकादशस्त्रीणामेकैकः पुत्रो जातः, एवमेकादश पुत्राः, तत्परिवारोऽपि विपुलो जातः, अथान्येद्युः उद्याने धर्मघोषो मुनीश्वरः सपरिवारः समवसृतः, राजादयः सुव्रतश्च वन्दितुं गताः गुरुणाऽपि तदानीं तपो महिमा व्याख्यातः—

यद् दूरं यद् दुराराध्यं, यच्च दूरे व्यवस्थितम् । तत् सर्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥ १ ॥

तत्रापि पञ्चमीतपसा ज्ञानपञ्चकस्यावाप्तिः, अष्टमीतपसाऽष्टकर्मनिषूदनम्, एकादशीतपसा एकादशांगानां सुखागमनम्, चतुर्दशीतपसा चतुर्दशानां पूर्वाणामागमनम्, पौर्णमासीतपसा संपूर्णागमनं एवं श्रुत्वा सुव्रतो मूर्च्छामापन्नो जातिस्मृत्या पूर्वभवं मौनैकादशीतपोविधानं

धातकीखण्डे इषुकारभूधरात् पश्चिमे दिग्विभागे विजयं नाम पत्तनमस्ति, तत्र पृथ्वीपालो नाम राजाऽभूत्, तस्य च औदार्यचातुर्य-शीलादिगुणशालिनी चन्द्रवती नाम प्रिया, तत्र च व्यवहारिशिरोमणिः प्रबलव्यापारोपार्जितबहुधनः षड्विधावश्यकरतः सत्पुत्रयुतो जिनभक्तिकारकः सूरनामा श्रेष्ठी। स च वृद्धावस्थायामेकदा गुरुसमीपमागत्य भक्त्या प्रणम्य उवाच–भगवान् ! ईदृग्विधं धर्मं कथय येन स्वल्पेनाऽपि कर्मक्षयः स्यात्, गुरुणा एकादशीव्रतमादिष्टम्, अथ स गुर्वाज्ञया गृहमागत्य एकादशवर्षैकादशमासपर्यंतं* यावत् तपश्चकार, समाप्ते च व्रते तेन विधिपूर्वमस्या उद्यापनमपि कृतम्, अथ उद्यापनदिवसात् पञ्चदशे दिवसे आकस्मिकेन उदरशूलेन मृत्वा एकादशे आरण्ये देवलोके एकविंशतिसागरपरिमितायुः देवो जातः। देवलोकसुखमनुभूय ततश्च्युत्वा सौर्यपुरे समृद्धिदत्तव्यवहारिक-गृहे प्रीतिमतीप्रियाकुक्षौ पुत्रत्वेनोत्पन्नः, तस्य नालस्थापनार्थं यदा गर्तं खनितुमारब्धं तदा गर्तखननस्थाने निधिर्निर्गतः, तद्वर्धा-पनिका सर्वत्र जाता, जाताऽऽह्लादः श्रेष्ठी महीयांसं जन्मोत्सवं दशदिवसपर्यन्तं कृतवान्। निवृत्तेऽशुचिकर्मणि प्राप्ते च द्वादशे दिवसे ज्ञातिबांधवान् भोजयित्वा गर्भस्थेऽस्मिन् मातुर्व्रतेच्छाऽभूदिति गुणनिष्पन्नं सुव्रत इति नाम कृतवान् पिता। न पुनर्मंगला-दिवन्निरर्थकम्। उक्तं च–

भौमं मंगल वृष्टिनाम करणे, भद्रा कणानां क्षये ॥ वृद्धिः शीतलकाचदुष्टापिटके, राजारजः पर्वणि ॥
मिष्टत्वं लवणे विषे मधुरता, दग्धे गृहे शीतलं ॥ पात्रत्वं च पणाङ्गनासु गदितं नाम्ना परं नार्थकम् ॥१॥

अथ पञ्चभिः धात्रीभिः लाल्यमानोऽसौ अवर्धत, अनुक्रमेणायम् अष्टवार्षिकः संजातः, तं पुत्रं वीक्ष्य तत्पित्रा चिंतितम्–

* लघिष्ठं मौनैकादशीव्रतमेकाद शमासपर्यन्तं मौनेन कृतवान् इत्यापि पाठः।

दिवसयोरेकभक्तं (एकवारं भोजनम्) कर्त्तव्यम्, पारणकदिवसे जिनगृहे गन्तव्यम्, जिनस्याग्रे फलानि उपढौक्य भावतः जिनार्चा कर्त्तव्या, ततो गुरुसमीपे गत्वा नत्वा ज्ञानपूजां विधाय साधूनां संविभागं कृत्वा पारणा कर्त्तव्या, एकादशवर्षैकादशमासपर्यन्तं यावत् व्रतं कर्त्तव्यम्, द्वादशे वर्षे व्रते पूर्णे पौषधं पारयित्वा गुरूनभिवन्द्य जिनदेवस्याग्रे एकादश पक्वान्नानि एकादश फलानि एकादशविधानि धान्यानि एवं सुन्दरं वस्तु एकादशसंख्यया उपढौकनीयम्, जघन्यतोऽपि एकादशश्रावकवात्सल्यम्, संघपूजा, एकादशांगपुस्तकलेखनम्, इत्यादि उद्यापनं कर्त्तव्यम्—अत्र कथानकम्—

एकदा ग्रामानुग्रामं विहरन् सर्वज्ञो भगवान् नेमिनाथो द्वारिकायां समवासरत् तं वन्दनार्थं श्रीकृष्णः समागतवान्, वान्दित्वा कृष्णोऽवोचत्--स्वामिन् ! षष्ठ्यधिकशतत्रयदिनमध्ये एकं सारं वासरं कृपां कृत्वा मम निवेदय यमाराध्य दानशीलतपोव्रतशक्तिहीनोऽप्यहम् निस्तीर्णो भवामि. भगवान् उवाच–यद्येवं तर्हि त्वं मार्गशीर्षशुक्लैकादशीमाराधय यतः—

अपि मिथ्यादृशां मान्या, सा मौनैकादशी तिथिः। मार्गशीर्षाख्यमासस्य, शुक्लपक्षे प्रकीर्तिता ॥१॥
तत्र पुण्यं कृतं स्वल्पमपि प्रौढफलं भवेत्। तस्मादाराधनीया सा, विशेषेण विशारदैः ॥२॥
सर्वेभ्योऽपि च पर्वेभ्यः, पर्व पर्युषणाह्वयम्। दिनेभ्योऽप्यखिलेभ्योऽयं, तथा मुख्योऽस्ति वासरः ॥३॥
श्रमणैः श्रमणीभिश्च, श्रावकैः श्राविकादिभिः। धर्मकर्म विधातव्यमस्मिन् दिने विशेषतः ॥४॥

इति श्रुत्वा श्री कृष्ण उवाच–विभो ! पूर्वं केनाऽपि एकादशीव्रतमाचीर्णम् ? तस्य च कीदृशी फलप्राप्तिर्जाता ? स्वामी प्राह—

सन्मुखं गत्वा महताऽऽडम्बरेण श्रीयुगादिजिनबिम्बं रथे संस्थाप्य पूजास्नात्रमहोत्सवादिकरणेन महाकर्मराशिः दूरीक्रियते, महती पुण्यवृद्धिश्च भवति, तेनाद्य पर्वदिने पूजापौषधादिकरणेन दिवसः सफलः क्रियते ।

त्रिमुनिश्चाष्टभूवर्षे, [१८७३] दुर्गे च जेसलाभिधे ॥ गणिना जयसारेण, व्यलेखि शिष्यहेतवे ॥१॥

इति श्रीकार्त्तिकपूर्णिमायाः व्याख्यानं सम्पूर्णम् ॥२॥

## अथ मौनैकादशी व्याख्यानम् ॥ ३ ॥

अरस्य प्रव्रज्या नमिजिनपतेर्ज्ञानमतुलं, तथा मल्लेर्जन्म व्रतमपमलं केवलमलम् ।
वलक्षैकादश्यां सहसि लसदुद्दाममहसि, क्षितौ कल्याणानां क्षिपतु विपदः पञ्चकमिदम् ॥१॥

अर्थः—अरस्य-अरजिनस्य प्रव्रज्या-दीक्षा, नमिजिनपतेः-नमिनाथस्य अलतुम्–अनुपमं ज्ञानम्, तथा मल्लेः-मल्लिजिनस्य जन्म, अपमलम्-मलरहितं व्रतम्--दीक्षा, अलम्--सर्वद्रव्यगुणपर्यायप्रेक्षणे समर्थम्, केवलम्-केवलज्ञानं च; लसदुद्दाममहसि तेजोवति, सहसि--मार्गशीर्षमासे वलक्ष्यैकादश्यां–शुक्लैकादश्यां सञ्जातं कल्याणानां इमं पञ्चकं क्षितौ विपदः क्षिपतु ।

यथाऽस्मिन् भरते कल्याणानां पञ्चकं सञ्जातमेवं पञ्चसु भरतेषु पञ्चसु च ऐरवतेषु--क्षेत्रेषु मीलित्वा जातं पञ्चाशत् (५०) कल्याणानाम् । एवं भूतभाविवर्त्तमानकालाऽपेक्षया जातं सार्धशतं (१५०) । एकोपवासेऽपि सार्धशतोपवासफलं भवति । अस्मिन् दिने उपवासं कृत्वा मौनमाधाय अहोरात्रं पौषधं विधाय स्थेयम्, भणनं गुणनं विना नाऽन्यत् किमपि वक्तव्यम् । पारणकोत्तर-

द्विद्विकोटिपरिवारेण परिवृतौ फाल्गुनशुक्लदशम्यां नमिविनमी विद्याधरराजर्षी श्रीसिद्धशैले शिवपुरं गतौ, पुनः नमिविनमिराज्ञोः पुत्र्यश्चतुष्षष्टिः विमलगिरौ चैत्रशुक्लचतुर्दश्यामनशनं कृत्वा शिवपुरीं प्राप्ताः, तेन शिवमन्दिरारोहणे सोपानसदृशो वाच्यः, पुनः पापमलपरिहरणे नीरवद् ज्ञेयः, तेन विमलगिरिरिति कथ्यते, पुनः पापारिगञ्जनेऽतीव शूरवद् ज्ञेयः। पुनर्येन नरभवं प्राप्य शत्रुञ्जये गत्वाऽऽदिजिनभक्तिपूर्वकं द्रव्यभावाऽर्चनं न कृतं तेन नरत्वं पशुरिव हारितम्, यस्तीर्थबुद्ध्या स्वहृदये संप्रधार्य श्रीशत्रुञ्जये गत्वा आदिजिनं नमति तस्य जीवितं सफलं स्यात्, स्तोककालमध्ये शिवसुखं प्राप्नोति। एवं गुरुमुखात् सिद्धगिरेर्महान्तं महिमानं श्रुत्वा सिद्धशैलपर्वतवन्दनार्थं पञ्चपञ्चकोटिमुनिपरिवारपरिवृतौ द्राविडवारिखिल्लौ वल्कलचीवरधारिणौ तापसौ स्वगुरोराज्ञां गृहीत्वा श्रीशत्रुञ्जयं प्रति चेलतुः, गुरुरपि अन्यत्र स्थाने विजहार। अथ द्राविडवारिखिल्लौ क्रमेण सपरिवारौ श्रीशत्रुञ्जयगिरौ आरोहणसमये एतादृशमवग्रहं जग्राह–यदाऽऽवयोः कर्मक्षयो भविष्यति तदाऽऽहारं ग्रहीष्यावः, एवं द्राविडवारिखिल्लौ चातुर्मासकालावग्रहमभिगृह्य श्रीशत्रुंजये चातुर्मास्यां तस्थतुः, भावतः साधुधर्ममंगीचक्रतुः, आत्मानं भावानुसारिणं प्रवर्तयन्तौ तपः तप्तवन्तौ, शुभध्यानयोगेन कर्मराशिदूरीकरणेन चातुर्मासीप्रान्तदिवसे प्रवर्तमाने कार्तिकशुक्लपौर्णमासीदिने क्षीणमोहेन त्रयोदशगुणस्थानकारोहणेन शुक्लध्यानेन ध्यायमानेन घनघातिचतुष्कर्मराशिक्षपणेन केवलज्ञानं केवलदर्शनं च तयोरुत्पन्नम्। चतुर्दशरज्जुलोकं ददृशतुः। बहुभव्यजीवान् प्रतिबोध्याऽऽयुष्कादिचतुष्कर्मराशिं क्षपयित्वा द्राविड–वारिखिल्लराजर्षी दशकोटिमुनिभिः सह मुक्तिपुरीं प्रापतुः, अचलाक्षयगतिं शिवं निरुपद्रवं पदं लब्धम्। तेन कार्तिकशुक्लपूर्णिमाऽतीवोत्तमा वर्तते, तस्माद् अद्य दिवसे श्रीशत्रुञ्जय–

कृतुः, कन्दमूलाद्याहारं कुर्वन्तौ वल्कलचीवरं धारयतः, तपः करणेन कृशतनू जातौ। एवं बहुकालो गतः। अथास्मिन्नवसरे केचित् साधवस्तीर्थयात्राकरणार्थं मार्गे तत्रैव वने आगताः, द्राविडवारिखिल्लावपि तान् साधूनवलोक्य बह्वादरं दत्तवन्तौ, साधवोऽपि गमनागमनमालोच्य भूमिं प्रमार्ज्य तरोस्तले स्थिताः, द्राविडवारिखिल्लावपि मुखाग्रे उपविष्टौ, तस्मिन्नवसरे तरुशाखात एकश्चटको मुखाग्रे पतितः, तं चटकं स्तोकायुषं ज्ञात्वा मुनिना करुणां विचार्य नमस्कारः सुश्रावितः, विमलगिरेर्महिमा कथितः, तेन चटकेन मनसि धर्मोपदेशो दधे, तद्धर्मप्रभावात् प्रथमकल्पे देवो जातः, स देवः साधिकमुहूर्त्तान्तरे मुनीनां पार्श्वे आगत्य मुनीनां चरणानानम्य मुनीनामग्रे उपविष्टः, तस्मिन्नवसरे देवस्य महर्द्धिं रूपं चावलोक्य द्राविडवारिखिल्लौ मुनिं प्रति पप्रच्छतुः, हे स्वामिन् ! अयमत्यन्तरूपकान्तिधारकः कः सुरोऽस्ति ? तदा मुनिराह अयं चटको मृत्वा एतत्स्थानात् सुर उत्पन्नोऽस्ति, नमस्कारश्रवणेन तीर्थराजशत्रुञ्जयोज्ज्वलभावधारणेन चास्मिन् समये तीर्थराजमानम्य अत्रागतोऽस्ति। एतद्गुरुमुखान्निशम्य तौ पुनः पप्रच्छतुः—हे स्वामिन् ! स विमलगिरिः कीदृशोऽस्ति, किञ्च तन्माहात्म्यमित्यावयोरुपरि कृपां कृत्वा सुश्रावय, तदा मुनिराह—अस्मिन् जम्बूद्वीपे दक्षिणार्धभरते श्रीशत्रुञ्जयगिरिरष्टोत्तरशतनाम्नाऽलंकृतं महातीर्थमस्ति, पुनः शत्रुञ्जयः १ पुण्डरीकः २ सिद्धगिरिः ३ विमलगिरिः ४ सुरगिरिः ५ इत्यादिभिः एकविंशतिनामभिः लोके प्रसिद्धोऽस्ति, एष गिरिर्नामनिक्षेपेण निश्चलोऽस्ति, अनन्तकालापेक्षया सिद्धशैलोपरि अनन्ता मुनयो मुक्तिं गताः, पूर्वमपि सम्प्रतिनाम्नश्चतुर्विंशतितमजिनस्य प्रथमगणधरः कादम्बगिरिनामा मुक्तिं गतः, इहैव वर्तमानकाले प्रथमजिनस्य प्रथमगणधरः पुण्डरीकनामा चैत्रशुक्लपूर्णिमायां पञ्चकोटिमुनिभिः सह श्रीशत्रुञ्जये शिवपुरीं गतः। तेन पुण्डरीकगिरिरिति कथ्यते, पुनः

न्यमादाय सन्मुखं चचाल स्वस्वदेशसीमां च रुरोध। क्रमेणोभयभ्रातृबहुसेनासमुदायेन द्वादशवर्षं यावत् महायुद्धकरणे बहवो गजा अश्वा-मनुजा भूमौ पतिताः, रुधिरसरितः प्रचलिताः, एतादृशः संग्रामो जायते, तस्मिन् समये द्राविडराजा वनक्रीडाकरणार्थं वने जगाम, तद्वनमनेकाम्रानिम्बकदम्बादिगुल्मलतापत्रपुष्पफलवनर्द्धर्या विभ्राजमानं सरोनिर्झरणैः शोभितमेतादृशं वनं द्राविडराजा पश्यति, तस्मिन्नेव वनमध्यभागे तापसगणास्तपः कुर्वन्ति, ते परिव्राजका राज्ञा ददृशिरे। अश्वादुत्तीर्य तत्र पार्श्वे गत्वाऽभिवन्द्य स्वोचितस्थाने तस्थौ। तस्मिन्नवसरे एकेन तापसेन धर्मोपदेशो दत्तः, तन्मध्ये संसारासारताऽपि दर्शिता तदुक्तम्–

गयकन्नचंचलाए अपरिचित्ताए रायलच्छीए। जीवा सकम्मकलमलभरिय भारतो पडन्ति अहे ॥ १ ॥

इत्यादिधर्मोपदेशं श्रुत्वा संसारमसारं ज्ञात्वा क्रोधं त्यक्त्वा एवं मनसि चिन्तयति–अहो! मम जीवितं धिक्, एक एव मद्भ्राता तेन सहाहं युयुधे द्वादश वर्षाणि संजातानि, एतदनिष्टं कार्यं कृतं, स्तोकजीवनोपरि एतद् वैरं किं क्रियते? राज्यलोभाद् एतदनिष्टं कृतम्, एवं विचार्य द्राविडस्तापसाश्रमादुत्थाय स्वसहोदरापराधक्षामणार्थं वारिखिल्लसेनामध्ये आयाति तावद् वारिखिल्लो बृहद्भ्रातुरागमनवृत्तान्तं श्रुत्वा सन्मुखमागत्य चरणयोर्निरपतत्, स च द्राविडो बाष्पपूर्णनयनः स्नेहार्द्रहृदयस्तमुत्थाप्य इति जजल्प–हे भ्रातः! एतत् सर्वमपि राज्यं त्वं गृहाण अहं तापसीं दीक्षां ग्रहीष्यामि, तदा वारिखिल्ल इत्युवाच–अहमपि राज्यपदं न ग्रहीष्यामि, एतद्वचनपरस्प-रालापनां कृत्वा स्वस्वपुत्राभ्यामर्धार्धं राज्यं विभज्य दत्त्वा स्वस्वापत्यं स्वस्वस्थाने प्रेषितवन्तौ, तौ पुत्रावपि स्वं स्वं राज्यं बुभुजाते। अथ द्राविडवारिखिल्लावपि पञ्चपञ्चकोटिक्षत्रियपरिवारेण परिवृतौ तापसाश्रमे गत्वा तापसपार्श्वे तापसीं दीक्षां जगृहतुः, आतापनां च-

लक्षपूर्वाणि व्यतीतानि तदा स्वामी राज्यभोक्ता जातः क्रमेण त्रिषष्टिपूर्वलक्षवर्षे राज्यं प्रपाल्य दीक्षाऽवसरं ज्ञात्वा भरताय स्वमूलराज्य विनीता दत्ता बाहुबलाय तक्षशिला च प्रदत्ता, एवं क्रमेण शतपुत्रेभ्यो राज्यं वासयित्वा स्वस्वनाम्ना देशाः प्रदत्ताः । तन्मध्ये एको 'द्रविड' इत्यभिधानः, तस्य द्रविडदेशं कञ्चनपुरनगरं च वासयित्वा ददौ । स्वामी दीक्षां ललौ । क्रमेण कर्मक्षये केवलज्ञानमुत्पन्नम् । अथ भगवाननेककोटाकोटीदेवपरिवारेण परिवृतः साधुसाध्वीसमुदायेन सह देशेषु विहृत्य धर्मवृद्धिं चकार । अथ द्रविडराजाऽपि पितृदत्तं राज्यं बुभुजे, स्वनार्याभिः सार्धं विषयसुखमनुभवतस्तस्य क्रमेण द्वौ पुत्रौ बभूवतुः, बृहत्पुत्रो द्राविडः अपरो वारिखिल्लो लघिष्ठः, क्रमेण भोगसमर्थौ ज्ञात्वा उभयपुत्रौ प्रति भार्याः विवाहिताः । तावपि विषयसुखं बुभुजाते, तत्तद्भार्ययाऽपि पुत्राः प्रसूताः, तेऽपि चन्द्रकलेव ववृधिरे, एवं द्रविडराजा स्वराज्यं सुखेन प्रपालयति स्म । अथ तस्मिन्नवसरे भरतेन स्वाज्ञापालनार्थमष्टनवतिभ्रातृपार्श्वे दूतो मुमुचे, तदा द्रविडराजा दूतमुखात् सर्वं भरतस्य चक्रवर्तिपदस्वरूपं ज्ञात्वा एवं सर्वेऽपि संमील्य स्वस्वपुत्रं राज्यं ददौ, तदा द्रविडराजापि द्राविडबृहत्पुत्राय राज्यं प्रददौ । कनिष्ठाय वारिखिल्लाय च एकलक्षग्रामान् पृथग् ददौ, स्वयञ्च संसारवासनां परित्यज्य दीक्षां गृहीत्वा यथेच्छं पर्यटन् श्रीऋषभदेवजिनपार्श्वे तपस्तप्त्वा कैवल्यं प्राप । अथ द्राविडः पित्रा दत्तं स्वराज्यं वारिखिल्लोऽपि पितृदत्तस्वराज्यं लक्षग्रामान् प्रपालयति स्म । कानिचिद् वर्षाणि गतानि । तस्मिन्नवसरे द्राविडराजा स्वमनसि एवं चिन्तयति स्म, मत्पित्रा दीक्षावसरे मल्लघुभ्रातरं प्रति लक्षग्रामं दत्तं तद्भव्यं न कृतम्, मद्राज्यन्यूनता कृता, परमहमेतद्राज्यमुद्दाल्य ग्रहीष्यामि । एतद् विचिन्त्य स्वसैन्यं सम्मील्य युद्धार्थं चचाल । तदा वारिखिल्लोऽपि भ्रातुरागमनवृत्तान्तं श्रुत्वा स्वसै-

# अथ कार्तिकपूर्णिमायाः व्याख्यानम् ॥ २ ॥

श्रीसिद्धाचलतीर्थेशं, नत्वा श्रीऋषभं प्रभुम् । कार्तिकी पूर्णिमायाश्च, व्याख्यानं वक्ष्यते मया ॥ १ ॥

सिज्झो विज्जायरचक्की नमी विनमी मुणि पुंडरिओ मुणींदो । वाली पज्जुन्नसंबो भरहसुगमुनि सेलगो पंथगो य । रामो कोडी पंच दविडनरवई नारदो पण्डुपुत्ता । मुत्ता एवं अणेग विमलगिरिमहं तित्थमेयं नमामि ॥ २ ॥

व्याख्या—भो भव्याः ! एतादृशं पापकर्ममलपरिहारकं श्रीविमलाचलतीर्थं मनोवाक्कायैर्नमामि, तद् विमलाचल तीर्थं कीदृशम् ? यद् यस्मिन् तीर्थोपरि विद्याधरः चक्री-भरतः-नमी-विनमी-शुक-शैलक-पंथक-रामचन्द्र-द्राविड—वारिखिल्ल-नवनारद-पाण्डव-पुण्डरीकाद्या अनशनं विधाय, अष्ट कर्मारीन् हत्वा मुक्तिं गताः, एतादृशं सिद्धशैलं तीर्थं मनोवाक्काययोगेन नमामि । पुनरस्मिन् कार्त्तिकपूर्णिमाऽऽगमने श्रीशत्रुञ्जयगिरिसन्मुखदिशं गत्वा चैत्यवन्दनकरणे महती धर्मवृद्धिर्भवति, पुनरस्मिन् कार्त्तिकपूर्णिमाया दिने श्रीसिद्धशैले द्राविड-वारिखिल्लौ आरोहणेन शिवपुरीं प्राप्तौ, तद् दृष्टान्तो यथा—

अस्मिन् जम्बूद्वीपे दक्षिणभरतार्द्धस्य मध्यखण्डे इक्ष्वाकुभूम्यामस्मिन्नवसर्पिण्यां पूर्वं सप्तमः कुलकरो नाभिनामा बभूव, तद्भार्या मरुदेवी, तस्या उदरकन्दरायां श्रीप्रथमतीर्थंकरश्रीऋषभजिनः उत्पन्नः स षट्पूर्वलक्षाणिकुमारपदे स्थितः तदनन्तरमिन्द्रेण सुनन्दा सुमङ्गला परिणायिते, स्वामिनः संसारव्यवहारो वर्तते स्म, क्रमेण भरतबाहुबल्याद्याः शतं पुत्राः द्वेपुत्र्यौ अभूवन्, यदा विंशतिल-

स्वयं-वर्ण्यते-तस्यास्तपः प्रभावात् सर्वेऽपि रोगा दूरं गताः, अद्भुतं रूपं जज्ञे, सा च जिनचन्द्रेण परिणीता, करमोचनवेलायां पित्रा बहुधनं दत्तम्, चिरकालं गृहसौख्यं भुक्त्वा यावज्जीवं पञ्चमीतपः कृत्वा प्रान्ते चारित्रमग्रहीत्, तौ गुणमञ्जरी-वरदत्तौ जिनोदितं चारित्रं प्रपाल्य कालं कृत्वा वैजयन्तविमाने सुरोत्तमौ जातौ। ततश्च्युत्वा वरदत्तजीवो महाविदेहे पुण्डरीकिण्यां नगर्याममरसेन राज्ञः स्त्री गुणावती, तस्याः पुत्रत्वेन समुत्पन्नः। शुभेऽन्हि तस्य शूरसेन इति पित्रा नाम-कृतम्। क्रमेण यौवनं प्राप्तः कन्यकानां शतमुपयेमे, पित्रा स्वराज्ये स्थापितः। एकदा श्रीसीमन्धरस्वामी विहरन्तस्तत्र समागतः। अर्हदागमनं श्रुत्वा शूरसेनो वन्दनार्थमगमत्। भगवता धर्मदेशना प्रारब्धा, तत्र सौभाग्यपञ्चम्यास्तपसः फलं प्रकाशितम्. ततो राज्ञा पृष्टम्-भगवन्! केनाऽपि तपसः फलं प्राप्तम्? तदा भगवता वरदत्तनृपदृष्टान्तः कथितः, तत् श्रुत्वा जातजातिस्मृतिः सन् पूर्वभवं ददर्श, पुनः तद्व्रतं जग्राह, दशसहस्रवर्षं राज्ये स्थित्वा तीर्थंकरपार्श्वे संयममग्रहीत्, वर्षसहस्रं दीक्षां प्रपाल्य केवलज्ञानं प्राप्य मोक्षं प्राप। अथ गुणमञ्जरीजीवो सुखं भुक्त्वा रमणीयाख्ये विजये शुभायां नगर्याममरसिंहाभिधनृपपत्न्या अमरावत्याः कुक्षौ पुत्रत्वेन समुत्पन्नः, समये जाते च पित्रा सुग्रीव इति नामस्थापनं कृतं, क्रमेण यौवनं प्राप्तो बह्वीनां कन्यानां पाणिग्रहणं च चकार, विंशतितमे वर्षे पित्रा राज्यं दत्वा स्वयं दीक्षा गृहीता, सुग्रीवो राजा बहूनि वर्षाणि राज्यं प्रपाल्य अन्ते गुरुपार्श्वे दीक्षां गृहीत्वा पूर्वलक्षं चारित्रं प्रपाल्य केवलमुत्पाद्य मोक्षं जगाम।

जायन्तेऽधिकसौख्यानि, पञ्चम्याराधनात् नृणाम्। इत्यस्या अभिधा जज्ञे, लोके सौभाग्यपञ्चमी ॥ १ ॥
एवं विभाव्य भो भव्याः! पञ्चम्याराधनोद्यमः। भवभीतिविभेदाय, कार्यो युष्माभिरद्भुतः ॥ २ ॥

इति कार्तिकसौभाग्यपञ्चमीमाहात्म्यविषये वरदत्त-गुणमञ्जरी कथानकं सम्पूर्णम् ॥ १ ॥

इदि चिंतयामास—कृतपुण्यो मम बृहद्भ्राता मूर्खत्वात् तस्मै प्रष्टुं कोऽपि न याति, स्वैरं भुङ्क्ते भाषते शेते च, अत एव मूर्खे बहवो गुणाः सन्ति, यतः—

मूर्खत्वं हि सखे! ममापि रुचितं तस्मिन् यदष्टौ गुणाः। निश्चिन्तो बहु भोजनोऽ१ त्रपमना २ नक्तं दिवा शायकः।
कार्याऽकार्यविचारणान्धबधिरो मानापमाने समः। प्रायेणाऽऽ ३ मयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥१॥

इति। अतः परं न कस्मै पदमात्रमपि कथयिष्यामि नवं पदं च न पाठयिष्यामि इति विचार्य शरीरे रोगाऽऽक्रान्तो द्वादश दिवसान् मौनेन निनाय। तत्पातकमनालोच्य आर्तध्यानपरो मृत्वा, राजन्! तव सुतो जातः पूर्वोपार्जितेन कर्मणा अतीव मूर्खः कुष्ठादि-रोगाऽऽक्रान्ततनुश्च बभूव। एतद् गुरोर्वचनं श्रुत्वा वरदत्तो जातिस्मृत्या निजपूर्वभवं दृष्ट्वा मूर्च्छां प्राप, क्षणान्तरे स्वस्थीभूय सर्वं सत्यमिति गुरुं प्रति—उवाच। पुनरपि नृपो बभाण—भगवन्! स देहरोगः कथं कदा व्रजिष्यति?। गुरुणा उक्तम्—कार्तिकशुक्लपञ्चमी आराध्या। पूर्वोक्तः सर्वोपि विधिः कथितः, प्रतिपन्नं कुमारेण पञ्चमीतपः, गुरुं प्रणम्य सर्वेऽपि स्वस्वस्थानं जग्मुः, अनन्तरं सम्यक् तत्तपः कुर्वतो तपः प्रभावात् वरदत्तस्य सर्वेऽपि रोगाः क्षयं प्रापुः, स्वयंवरसमेतानां वरभूपोद्भवानां सहस्रकन्योत्तमानां स महोत्सवं पाणिग्रहणं च चकार। शिक्षिताशेषसत्कलाय वरदत्ताय राज्यं दत्त्वा नृपो गुरुसन्निधौ चारित्रमग्रहीत्। वरदत्तो राज्यं पालयन् वर्षे वर्षे महाशक्त्या पञ्चम्या विधिं विदधे। अखण्डाऽऽज्ञो राज्यं प्रपाल्य भुक्तभोगः स्वतनये राज्यं दत्त्वा स्वयं दीक्षामग्रहीत्। अथ—गुणमञ्जर्यास्तपोमाहा—

१ लज्जारहितमानसः। २ रात्रौ। ३ रोग रहित।

धूपोत्क्षेपपूर्वकं पञ्चवर्णानि धान्यानि पञ्चपक्वान्नानि पञ्चफलानि च ढौकयन्ते । ततो गुरोरग्रे गत्वा भक्त्याऽभिवन्द्य यथाविधि उपवासस्य प्रत्याख्यानं क्रियते । तस्मिन् दिने 'नमो नाणस्स' इति पदमेकसहस्रसंख्या * उत्तराभिमुखेन गुण्यते । चेत् पौषधः क्रियते तदा तद्दिने अयं विधिर्न भवेत् तस्मात् पारणकदिने विधिः कार्यः, यथाशक्ति उद्यापनादि अपि विधेयम् । ततो गुणमञ्जर्या तत् तपः प्रतिपन्नम् । अस्मिन्नवसरे राजा पृच्छति–हे साधुपुरन्दर ! मत्सूनोः वरदत्तस्य कुष्ठरोगः कथमभवत् ? पठनं च किं नाऽऽयाति ? तस्य किं कारणम् ? गुरुर्जगाद–अस्यापि पूर्वभवं शृणु—जम्बूद्वीपे भरतक्षेत्रे श्रीपुरं नाम नगरम्, तत्र वसुनामा श्रेष्ठी वसति स्म, तस्य वसुसार–वसुदेवौ पुत्रौ, तौ एकदा क्रीडार्थं वने जग्मतुः, तत्र वने मुनिसुन्दरनामानः सूरयो दृष्टाः वन्दिताश्च । गुरुभिर्धर्मदेशना प्रारब्धा—

यत्प्रातः संस्कृतं धान्यं, मध्यान्हे तद् विनश्यति ॥ तदीयरसनिष्पन्ने, काये का नाम सारता ॥ १ ॥

इत्यादिदेशनां श्रुत्वा तातमापृच्छ्य वैराग्यात् तौ व्रतं जगृहतुः । लघुना वसुदेवेन चारित्रं बिभ्रता सिद्धान्तसारः सर्वेऽपि अधीतः, गुरुणा वसुदेवाय सूरिपदं दत्तम्, स च पंचशतसाधुभ्यो वाचनां ददाति । एकदा वसुदेवसूरीश्वरो रुजाऽऽक्रान्तः संस्तारके सुप्तः तं कोऽपिसाधुरागमार्थं पृच्छति, गुरुर्व्याख्यायति, तस्मिन् गते द्वितीयो मुनिः समागतः तस्मै वाचना दत्ता, एवं भूयस्सु समागत्य समागत्य गतेषु किञ्चिन्निद्रायमाणः केनाऽपि साधुना पृष्टो भगवन् ! अग्रेतनं पदं वाच्यं पदस्यार्थोऽपि वाच्यः । तदा सूरिः कुविकल्पान्

---

* अष्टोत्तरैकसहस्रसंख्या इत्यापि क्वापि क्वापि उपलभ्यते पाठः, तत्त्वतस्तु अयमेव श्रेयान् प्रतिभाति । क्वापि च द्विसहस्राष्टोत्तरशतमित्यपि ।

मूर्खा एव रक्षिताः, अतः कोऽपि कन्यां न ददाति, सा उवाच—तव पिता पापिष्ठः येनैवं मूढमतिना शिक्षितोऽसि यतः—

आः ! किं सुन्दरि ! सुन्दरं न कुरुषे ?, किं नो करोषि स्वयं ?, आः ! पापे ! प्रतिजल्पसि प्रतिपदं ?, पापस्त्वदीयः पिता।
धिक् त्वां क्रोधमुखीमलीकमुखरीं त्वत्तोऽपि कः कोपनो, दम्पत्योरिति नित्यदंतकलहक्लेशार्तयोः किं सुखम् ? ॥१॥

एतद्वचनमाकर्ण्य रुष्टेन जिनदेवेन उपलेन सा शिरो मर्मणि जघ्ने। तदा सा मृता, सा च तव-पुत्री समजायत, अनया ज्ञानस्याऽऽशातना पूर्वभवे चक्रे, तेन रोगोत्पत्तिर्जज्ञे, यतः—

कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥ १ ॥

इति गुरोर्वचनं श्रुत्वा सा गुणमञ्जरी जातजातिस्मृत्या पूर्वभवं ददर्श। ततो गुरुं प्रति सा सत्यमिति प्रोवाच। श्रेष्ठिना गुरुः पृष्टः—भगवन् ! अस्या रोगाः कथं प्रयास्यन्ति ?। गुरुणाऽभाणि—श्रेष्ठिन् ! ज्ञानस्याऽऽराधनतः सर्वं सुखं सम्पद्यते दुःखं च विलयं याति। ज्ञानस्य चाराधनमित्थम्—विधिना शुक्लपञ्चमीदिने उपवासो विधीयते, पुस्तिकां पट्टे संस्थाप्य पुरः स्वस्तिकः क्रियते, पञ्चवर्तिमयो दीपश्च क्रियते, पञ्चफलानि पञ्चवर्णकं च धान्यं ढौकयन्ते, पञ्चवर्षाणि पञ्चमासान् यावत् पञ्चमी अनया रीत्या मनोवाक्कायशुद्ध्या समाराधनीया। यदि मासे मासे कर्तुं न शक्यते तदा कार्तिकमासस्य, शुक्लपञ्चमी यावज्जीवमाराधनीया। सा सम्यगाराधिता सर्वं सुखं दत्ते, इति गुरुवचनं श्रुत्वा जिनदेवोऽब्रवीत्—भगवन् ! मम तनयायास्तपस्या-शक्तिर्न विद्यते, अतः कार्तिकपञ्चम्या विधिरादिश्यताम् वाचंयमः प्रोचे—कार्तिकशुक्लपञ्चमीदिने पुस्तकं पट्टे संस्थाप्य सुगंधपुष्पैःसंपूज्य

इत्यादिदेशना श्रुत्वा सिंहदासश्रेष्ठी मुनिं जगौ–भगवन्! केन कर्मणा मम सुतातनौ रोगा जाताः ? । गुरुणा ऊचे–महाभाग! कर्मणा किं न संभवेत ? । अत्र श्रेष्ठिन्! अस्याः पूर्वभवः श्रूयताम्—धातकीखण्डमध्यस्थभरते खेटकनामनगरम्, तत्र जिनदेवनामा श्रेष्ठी, सुन्दरीनाम्नी च तस्य गेहिनी, तयोः पञ्च पुत्राः–आशपालः, तेजपालः, गुणपालः, धर्मपालः, धनसार इतिनामानोऽभूवन्। तथा–लीलावती, शीलावती, रङ्गावती, मंगावती, इतिनाम्न्यश्चतस्रश्च पुत्र्योऽभूवन्। अथैकदा जिनदेवेन पञ्चापि तनयाः पण्डितसमीपे विद्याकलाग्रहणार्थं स्थापिताः। ते च चापल्यं कुर्वन्ते परन्तु अध्ययनं न कुर्वन्ति, यदा पण्डितस्तान् कम्बया ताडयति तदा ते रुदन्तो गृहमागत्य मातुः समीपे दुःखं निवेदयन्ति, माता–उवाच–पठनेन किं प्रयोजनम् ? यतः–

पठितेनाऽपि मर्तव्यं, शठेनाऽपि तथैव च। उभयोर्मरणं दृष्ट्वा, कण्ठशोषं करोति कः ? ॥ १ ॥

पण्डितस्यापि उपालम्भं दत्ते ईर्ष्यया च पुस्तिकां प्रज्वालयामास। पुत्रान् वक्ति, पठनार्थं भवद्भिर्न गन्तव्यम्। श्रेष्ठी एतद्व्यतिकरं ज्ञात्वा प्रोवाच—हे भद्रे! जडेभ्यः पुत्रेभ्यः कः कन्याः प्रदास्यति ? कथं चैते व्यवसायं करिष्यन्ति ? यतः–

माता वैरी पिता शत्रुर्बालो येन न पाठितः। न शोभते सभामध्ये, हंसमध्ये बको यथा ॥ १ ॥

विद्वत्त्वं च नृपत्वं च, नैव तुल्यं कदाचन। स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते ॥ २ ॥

इति श्रेष्ठिवचनं श्रुत्वा सा प्रोवाच–यूयं किं न पाठयथ ? अत्र मम को दोषः ? इत्युक्ते श्रेष्ठी हक्कितः सन् मौनं चकार। अथ अनुक्रमेण ते पंचापि तयोः पुत्राः यौवनं प्रापुः, परं न कोऽपि तेभ्यो कन्या दत्ते मूर्खत्वात्, ततः श्रेष्ठी स्त्रीं ति जगौ–पापिष्ठे! त्वया पुत्रा

तयोः रूपलावण्यशोभनो वरदत्तनामा पुत्रो बभूव । सोऽष्टवर्षप्रमाणः पित्रा बुधान्तिके विद्याग्रहणहेतवे स्थापितः । परमक्षरमात्रं तस्य मुखे न चटति, अध्यापकस्योद्यमो निष्फलोऽभूत् । स यौवनं प्राप्तः पूर्वकर्मोदयात् कुष्टेन विनष्टदेहत्वात् कुत्रापि रतिं न प्राप । इतश्च तत्रैव पुरे सप्तकोटिसुवर्णाधीशो जिनधर्मरतः प्रसिद्धिभाक् सिंहदासो नाम श्रेष्ठी, तस्य गृहे गुणोचिता कर्पूरतिलका-नाम्नी भार्या, तयोः पुत्री गुणमञ्जरी आजन्मतो रोगैरुपद्रुता वचनेन मूकतां प्राप्ता बभूव । विविधैरौषधैरपि तस्या रोगशान्तिर्न जायते न च यौवने तां कोऽप्युद्वहति । तस्याः षोडशवार्षिकया दुःखेन मातापित्रादिः सकलस्वजनो दुःखितः समजायत । तत्रैव पुरे एकदा श्रीविजयसेन-सूरयश्चतुर्ज्ञानधरा गुरवः समाजग्मुः । तदा सर्वेऽपि नागरिकलोकः, सपुत्रो भूपतिः, सकुटुम्बः सिंहदासश्रेष्ठी सर्वे वन्दनार्थमुपगताः, गुरुणा च धर्मदेशना प्रारब्धा—

ज्ञानस्याराधने यत्नोऽध्ययनश्रवणादिभिः । भव्यैर्विधेयः सततं, निर्वाणपदमिच्छुभिः ॥ १ ॥
विराधयन्ति ये ज्ञानं, मनसा ते भवान्तरे । नराः स्युः शून्यमनसो, विवेकपरिवर्जिताः ॥ २ ॥
विराधयन्ति ये ज्ञानं, वचसापि हि दुर्धियः । मूकत्वमुखरोगित्वदोषास्तेषामसंशयम् ॥ ३ ॥
विराधयन्ति ये ज्ञानं, कायेनायत्नवर्तिना । दुष्टकुष्टादिरोगाः स्युस्तेषां देहे विगर्हिते ॥ ४ ॥
मनोवाक्काययोगैर्ये, ज्ञानस्याऽऽशातनां सदा । कुर्वन्ते मूढमतयः, कारयन्ति परानपि ॥ ५ ॥
तेषां परभवे पुत्रकलत्रसुहृदां क्षयः । धनधान्यविनाशश्च तथाऽऽधिव्याधिसंभवः ॥ ६ ॥ युग्मम् ॥

ॐ श्रीपंचपरमेष्ठिभ्यो नमः ।

श्रीमत्क्षमाकल्याणकोपाध्यायादिविरचितः—

# श्रीसौभाग्यपंचम्यादि-पर्वकथा-संग्रहः ।



## अथ ज्ञानपञ्चम्यांव्याख्यानम् ॥ १ ॥

श्रीमत्पार्श्वजिनाधीशं,सुराऽसुरनमस्कृतम् । प्रणम्य परया भक्त्या, सर्वाभीष्टार्थसाधकम् ॥ १ ॥
कार्तिकशुक्लपञ्चम्या, माहात्म्यं वर्ण्यते मया । भव्यानामुपकाराय, यथोक्तं पूर्वसूरिभिः ॥ २ ॥ युग्मम् ॥
भुवने हि परं ज्ञानं, ज्ञानं सर्वार्थसाधकम् । अनिष्टवस्तुविस्तारवारकं ज्ञानमीरितम् ॥ ३ ॥
ज्ञानादासाद्यते मुक्तिर्ज्ञानात् स्वर्गोद्भवं सुखम् ॥ लभन्ते प्राणिनो यस्मात्, तज्ज्ञानं स्वर्द्रुमोपमम् ॥ ४ ॥
भव्यैरासाद्यते ज्ञानं, पञ्चम्याराधनाद् ध्रुवम् । अतः प्रमादमुत्सृज्याऽऽराध्या सा विधिना तथा ॥ ५ ॥
मञ्जरीवरदत्ताभ्यां, यथैवाराधिता किल । पञ्चमी भावतोऽथात्र दृष्टान्तः प्रोच्यते तयोः ॥ ६ ॥ युग्मम् ॥

अस्त्यत्र जम्बूद्वीपे दक्षिणार्धभरतक्षेत्रे पद्मपुराभिधं नगरम्, तत्र भुवि विश्रुतोऽजितसेनो नृपो बभूव, तस्य च यशोमती पट्टराज्ञी,

# अनुक्रमणिका

श्रीसुमति साहित्य माला—१८

पाठकावतंसश्रीमत्क्षमाकल्याणोपाध्यायादिविरचितः

# श्रीसौभाग्य-पञ्चम्यादि-पर्वकथा-संग्रहः ।

संशोधकः—मुनि-विनयसागर साहित्यरत्न

प्रकाशकः—
श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय कोटा.

वीर सं० २४७५ ] मूल्यम् २॥) सार्द्धद्वौरूप्यकम् [ वि० सं० २००६

# इति श्रीसौभाग्यपञ्चम्यादि पर्वकथा संग्रहः

पुस्तकें मिलने का पताः—
श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय
जैन प्रिंटिंग प्रेस
कोटा ( राज. )

२ ईंधन के काम आने वाली सूखी हुई पतली-पतली व छोटी-छोटी काटेदार टहनिया या टहनियो का समूह ।

झुरको—स०पु०—ऊँट की चाल विशेष । उ०—वटाऊ वैठा आड पिलाण, ऊठडा मारग झुरकै जाय । सुणीजै फुरणी मूरी ढील, मोद सू मूमल-रूप सराय ।—साफ्र

झुरटियौ—स०पु०—नखक्षत, खरोच (अल्पा.)

झुरडणौ, झुरडवौ क्रि०स०—१ नाखूनो से खुजली मिटाने के लिये हाथ को वार-वार शरीर पर फेरना २ खरोचना, कुरेदना ३ वृक्ष की टहनी को हाथ मे पकड कर उसके पत्ते सूत लेना, हाथ की रगड से पत्तिया दूर करना. ४ किसी को तग करना, कष्ट पहुँचाना ।

झुरडणहार, हारौ (हारी), झुरडणियौ—वि० ।

झुरडिग्रोडौ, झुरडियोडौ, झुरडयोडौ—भू०का०कृ० ।

झुरडीजणौ, झुरडीजवौ—कर्म वा० ।

झुरडियोडौ—भू०का०कृ०—१ नाखूनो से खुजली मिटाने के लिये हाथ को वार-वार शरीर पर फेरा हुआ २ खरोचा हुआ, कुरेदा हुआ. ३ हाथ की रगड से टहनी की पत्तिया दूर किया हुआ. ४ किसी को तग किया हुआ, कष्ट पहुँचाया हुआ ।

(स्त्री० झुरडियोडी)

झुरणी—देखो 'झुरनी' (रू भे)

झुरणौ—स०पु०—वियोगजनित दु ख, विलाप, रुदन ।

उ०—इसडा तौ झुरणा ये जीण सगती झुरती, गई गई कोस दोय च्यार ।—लो गी

झुरणौ, झुरवौ—क्रि०अ०स०—१ बहुत दुखी होना, शोक करना ।

उ०—१ झुरै इम रगरेजणी, कूडा ठाकुर काय । वसन सती घण रगता, दीधी आस छुडाय ।—वी स

उ०—२ मारू जाता चाकरी, करग्या कोल करार । सावण सुरगी तीज नै, आवागा घर-नार । सावण सुरगो वीतग्यो, गयी रे तुहेली तीज, पिव विन झुर झुर मैं मरू, उफळै म्हारो हीव ।—लो गी.

२ वेचैन होना, विकल होना । उ०—जिणि दीहै पाळउ पडइ, टापर तुरी सहाइ । तिणि रिति वूढी ही झुरइ, तरुणी केम रहाइ ।
—ढो मा

३ विलखना, सुवकना । उ०—इहि जोडा उणिहार, जणणी फिर जाया नही । निकमी नाजुक नार, झुरती रैंगी जेठवा ।—जेठवा

४ रुदन करना, विलाप करना, प्रलाप करना ।

उ०—१ निरखै मिळै झुरै रघुनायक, सुण सुण वायक सारा । जोवा अमर विया जड जगम, व्याकुळ हुआ विचारा ।—र रू.

उ०—२ पडी चाकरी चूक धणी जद धणो रिसायौ । झुरती कामण छोड रामगिरि यक्ष सिधायौ । जनक सुता रै स्नान जेथ रो निरमळ पाणी । गहरी विरछां-छाह जाय न कदे वखाणी ।—मेघ

उ०—३ झुरै म्रिगनयणी भुरै, मेह तणी रुत मोरा । जोगण पूठ दिया सायजादी, धूमर ऊपर घोरा ।—अमरसिंह राठौड री वात

५ कलपना, आँसू वहाना ।

६ रोग, अधिक परिश्रम या वहुत अधिक चिन्ता के क होना, दुर्वल होना, घुलना । उ०—१ छट्ठै सहेली माहि रह्यौ परदेस । झुर-झुर नै पींजर हुई, वाळा जोवन वेस । उ०—२ ईयै गोरवधियै रै कारणै म्हैं तो झुर-झुर पींज रे, म्हारो गोरवध लूवाळो ।—लो गी.

७ झूमना, लटकना । उ०—सावण आयौ, सायवा, वेला वाड । चातक झुर रह्यौ मेघ नैं, पिव नैं झुर रहि नार ।—

८ याद करना, स्मरण करना । उ०—१ झुरसी निर हजारा, रीभा दियण सिरै दोय राह । पदतै 'पदम' कम पाड लियौ दिखण्या पतसाह ।—महाराजा पदमसिंह रो गी

उ०—२ वीणा जंतर तार, थें छेडया उण राग रा । गुग गवार, जात न भीकू जेठवा ।— जेठवा

उ०—३ वा घर आवै पीवजी, वीत गई वरसात । झ कामणी, जाडो जहर लखात ।—लो गी

झुरणहार, हारौ (हारी), झुरणियौ—वि० ।

झुरवाड़णौ, झुरवाडवौ, झुरवाणौ, झुरवावौ, झुरवावणौ, झुराड़णौ, झुराड़वौ, झुराणौ, झुरावौ, झुरावणौ, झुराव

झुरिग्रोडौ, झुरियोडौ, झुरयोडौ—भू०का०कृ० ।

झुरीजणौ, झुरीजवौ—भाव वा०, कर्म वा० ।

झूरणौ, झूरवौ—रू०भे० ।

झुरनी—स०स्त्री०—१ प्रायः किशोरावस्था के वालको द्वार टहनियो से झूम-झूम कर पृथ्वी पर आने व वार-वार चढ जाने वाला एक खेल. २ इस खेल मे प्रयोग किया जाने का एक डडा ।

क्रि०प्र०—आणी, खेलणी, दैणी, रमणी ।

रू०भे०—झुरणी ।

झुरमट—देखो 'झुरमुट' (रू.भे.)

झुरमटियौ—देखो 'झुरमुट' (अल्पा, रू भे)

झुरमुट—स०पु०—१ झाड, पत्ते, लताओ अथवा वृक्षो का जिससे कोई स्थान ढक जाये किन्तु नीचे या वीच मे कुछ रहे. २ झुड, समूह (मा म) ३ चादर या अन्य कि शरीर को चारो ओर से ढक या छिपा लेने की क्रिया ।

रू०भे०—झुरमट ।

अल्पा०—झुरमटियौ, झुरमुटियौ ।

झुरमुटियौ—देखो 'झुरमुट' (अल्पा रू.भे)

झुररी—स०स्त्री०—किसी वस्तु पर पडने वाली सिकु शिकन ।

झुरगौ—स०पु०—नेत्रो के आँसू ।

# इति श्रीसौभाग्यपञ्चम्यादि पर्वकथा संग्रहः

पुस्तकें मिलने का पता:—
श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय
जैन प्रिंटिंग प्रेस
कोटा (राज.)

॥१२४॥

# श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय

## से प्रकाशित सस्ती–सुन्दर और मनोहर पुस्तकें:—

| | |
|---|---|
| ६. बृहत्पर्युषणा निर्णय | भेंट |
| ७. षट् कल्याणक निर्णय | ,, |
| ८. आत्मभ्रमोच्छेदनभानुः | ,, |
| १०. आगमानुसार मुहपत्तिका निर्णय | ,, |
| १३. कल्पसूत्र हिन्दी भावार्थ | ३) |
| १४. दसवैकालिक सूत्र-मूल-मूलार्थ | १) |
| १६. संस्कृत पर्वकथा संग्रहः | २॥) |
| १७. अनुत्तरोववाई सूत्र मूल-मूलार्थ | भेंट |
| २२. उपासकदशांग सूत्र-मूल-मूलार्थ, टीका-टीकार्थ | २) |
| २५. गौतमपृच्छासार | भेंट |
| २८. चतुर्विंशति जिनेन्द्र स्तवनानि | ,, |
| २९. सामायिक जिनदर्शन विधिः | ,, |
| ३०. चतुर्विंशति जिनस्तुतिः | ,, |
| ३१. राईदेवसी प्रतिक्रमणसूत्र | ,, |
| ३३. आत्म भावना | ,, |
| ३४. भावारिवारणपादपूर्त्यादि स्तोत्र संग्रहः | ,, |
| ३५. श्रीनेमिदूतम् | १॥) |
| द्वादश पर्व व्याख्यान | २) |





२ ईंधन के काम आने वाली सूखे
काटेदार टहनिया या टहनियो का
झुरको—स०पु०—ऊँट की चाल विशे
पिलाग्ग, ऊडा मारग झुरकै जाय
म मूमल-रूप सराय ।—माफ
झुरडियौ—स०पु०—नखक्षत, खरोच ।
झुरडणी, झुरडवौ क्रि०स०—१ नाखू
को बार-बार शरीर पर फेरना
टहनी को हाथ मे पकड कर उसके
पत्तिया दूर करना. ४ किसी को
झुरडणहार, हारौ (हारी), झुरड
झुरडिग्रोडौ, झुरडियोडौ, झुरडयो
झुरडीजणी, झुरडीजवौ—कर्म वा
झुरडियोडौ—भू०का०कृ०—१ नाखू
को बार-बार शरीर पर फेरा हुआ
३ हाथ की रगड से टहनी की प
को तग किया हुआ, कष्ट पहुँचाय
(स्त्री० झुरडियोडी)
झुरणी—देखो 'झुरनी' (रू भे)
झुरणौ—स०पु०—वियोगजनित दुख
उ०—इनहा तो झुरणा ये जीव
ग्पार ।—लोगी
झुरणौ, झुरवौ—क्रि०अ०स०—१ व
उ०—१ झुरै इम रगरेजणी,
रगता, दीधी प्रास छुडाय ।—
उ०—२ मारू जाता चाकरी,
तीज नै, प्रावांगा घर-नार । स
तीज, पिव विन झुर झुर मैं मर
२ बेचैन होना, विकल होना ।
टापर तुरी सहाय । तिणि रिति

३ चिन्तना, गुजरना । उ०-
जाता नहीं । निकमी नाजुक ना
४ रुदन करना, विलाप करना,
उ०—१ निरखै मिळै झुरै रपु
प्रमर दिया जद जगम, ग्याळ
उ०—२ पती चाकरी गुर घर
ढोर रामगिरि दस निधायो ।
पाणी । गहगी चिन्दा-धार जा
उ०—३ झुरै चितानरी झुरै
...ग्रार्थी, प्रमर हहर

पुत्रिका अभूवन्, ता महारूपवत्यो गुणवत्यश्चासन्, एकदा वनमध्ये क्रीडन्त्यस्ता गुरुभिः दृष्टा, आलापिताश्च-भो पुत्र्यः ! यूयं धर्मं कुरुध्वम्, युष्माकमायुरेकदिनप्रमाणमेव विद्यते. ताभिरुक्तम्-हे भगवन् ! एकदिनमध्ये को धर्मो भविष्यति, तदा गुरुभिरुक्तम्-यूयमद्य शुक्लज्ञानपंचमीतपः कुरुध्वम्, अद्यैव दिने पंचम्या उपवासं कृत्वा गृहे देवपूजां च कृत्वा पुण्यस्यानुमोदना कुरुध्वम्, ताभिरपि गृहे गत्वा तथैव कृतम्. अथ तस्मिन्नेव रात्रौ विद्युत्पाताच्चतस्रोऽपि मृत्वा प्रथमदेवलोके देवा जाताः, ततश्च्युत्वा तवैताः पुत्र्यः संजाता। अथ ताः सर्वा वार्ताः श्रुत्वा राजा जातिस्मरणं लब्ध्वा सपरिवारो रूप्यकुम्भ-स्वर्णकुम्भगुरूं नत्वा निजगृहे समागतः। कियत्कालानन्तरं राजा राज्ञी पुत्राः पुत्र्यश्च श्रीवासुपूज्यप्रभोः समीपे दीक्षां गृहीत्वा कर्मक्षयं च कृत्वा मोक्षं गताः। उक्तं च-

रोहिणीतप-पंचमीतप, गुरुआ ए तप जाणी। दुःखित होय करी सुखी होवे, बोले केवलनाणी ॥ १ ॥

॥ इति रोहिणी-अशोकराजकथा सम्पूर्णा ॥ १२ ॥

## इति श्रीपर्वकथा संग्रहः।

दुःखं न वेति, पुनर्हे अशोकराजेन्द्र ! अस्या उपरि तवाधिकः स्नेहः कुतो वर्तते ? तस्यापि कारणं शृणु—सिंहसेननामा नृपतिः स्वयं सुगन्धाख्यं पुत्रं राज्येऽभिषिच्य सुगुरोःपार्श्वे दीक्षां ललौ, अथ सुगन्धराजोऽपि जिनशासनमाराध्य प्रान्ते समाधिना मृत्वा देवभवं गतः. ततश्च्युत्वा इहैव जम्बूद्वीपे विदेहे पुष्कलावत्यां विजये पुण्डरीकिणीनगर्यां विमलकीर्तिराज्ञः सुभद्राख्यायाः सधर्मिण्याः कुक्षौ चतुर्दशमहास्वप्नसूचितः स देवजीवोऽवातरत् । अथ क्रमेण शुभेऽह्नि सा देवी शुभलक्षणं पुत्रं प्रासूत, तस्य पित्रा अर्ककीर्तिरिति नाम निर्मिमृत, क्रमेण स चक्रवर्ती जातः, राज्यं भुंक्त्वा जितशत्रुमुनेः पार्श्वे स दीक्षामादाय दुष्करं तपस्तप्त्वा स्वायुः-क्षये च मृत्वा द्वादशे देवलोकेऽच्युतेन्द्रोऽभूत्. ततश्च्युत्वा त्वमयमशोकराजा जातः, रोहिण्याश्च वल्लभोऽभूः, युवाभ्यां रोहिणीतपःकरणाद् युवयोः परस्परमधिकः स्नेहो जातः अथ त्वं पुत्राणां कारणं शृणु—मथुरायामग्निशर्माख्यो ब्राह्मणो वसति, तस्य सप्त पुत्राः परं ते दरिद्रिणः । एकदा पाटलीनगरे ते सप्ताऽपि भ्रातरो भिक्षार्थं गच्छन्ति, तदा वाटिकामध्ये कश्चिद् राजकुमारः कन्दर्पावतारः क्रीडति. तं दृष्ट्वा शिवशर्मा ब्राह्मणः स्वबान्धवान् वक्ति–भो बान्धवाः ! विधिना कियदन्तरं कृतमस्ति, अयं राजकुमारो मनोवाञ्छितं सुखं भुनक्ति, वयं तु भिक्षार्थं गृहे गृहे भ्रमामः, तदेकेन भ्रात्रोक्तमस्मिन् विषये कस्योपालम्भो दीयते ? पूर्वभवेऽस्माभिः पुण्यं न कृतम्, अनेन राजकुमारेण च सुकृतं कृतम्, अतोऽसौ सुखं भुनक्ति. तदा तैः सर्वैरपि ब्राह्मणपुत्रैः जीवदयायुतं धर्मं पालयित्वा प्रान्ते गुरोः पार्श्वे दीक्षा गृहीता. मृत्वा च ते सप्तमे देवलोके देवा जाताः, ततश्च्युत्वा तव गुणपालादय इमे सप्त पुत्रा अभूवन् । तवाष्टमपुत्रजीवश्च वैताढ्यवासी क्षुल्लक-विद्याधरोऽभूत् । स निरन्तरं नन्दीश्वरद्वीपे शाश्वतीं जिनप्रतिमां अपूजयत्, स विद्याधरो मृत्वा सौधर्मे देवो जातः । ततश्च्युत्वा तवायमष्टमो लोकपालाख्यः पुत्रो बभूव. अथ चतसृणां पुत्रीणां सम्बन्धं शृणु–वैताढ्यपर्वते एको विद्याधर आसीत्, तस्य चत्वारः

तदा मुनिर्वदति-सिंहपुरे सिंहसेनो राजा तस्य कनकप्रभाभिधाना राज्ञी वर्तते, तयोर्दुर्गन्धाख्यः पुत्रोऽभूत् , स क्रमेण यौवनं प्राप्तः, परं कस्यापि मनसि न रोचते, एकदा श्रीपद्मप्रभतीर्थंकरस्तत्रागतः । तं पद्मप्रभं वन्दित्वाऽसौ निजदुर्गन्धत्वकर्मणो विपाकं पृच्छति, तदा श्रीसर्वज्ञप्रभुः कथयति—नागोरनगराद् द्वादशे क्रोशे नीलनामा पर्वतोऽस्ति, तस्योपरि एका शिला तत्रैको मुनिर्मासक्षमणादि तपः करोति, तत्तपःप्रभावाच्च आखेटकस्याखेटकं निष्फलं याति, तदा स लुब्धकस्तस्य मुनेरुपरि ईर्षां करोति । एकदा स ऋषिः पारणार्थं ग्राममध्ये प्राप्तः, तस्मिन् समये तेन लुब्धकेन शिलाया अधोऽग्निं प्रज्वाल्य सा शिला अतीवोष्णा विहिता । अथ स ऋषिः पारणकं विधाय शिलाया उपरि स्थितः, बहुतापात् शुद्धध्यानाच्च स ऋषिः केवलज्ञानं प्राप्य मृत्वा मोक्षं गतः, अथ ऋषिघातात् स लुब्धकः कुष्ठी जातः, यतः—

ऋषिहत्याकरो जीवो, दुःखं भुंजति भूतले । संसारसागरे घोरे, पीड्यते च पुनः पुनः ॥ १ ॥

पश्चात् मृत्वा स सप्तमीं नरकावनिं गत्वा ततो मत्स्यो भूत्वा गोपालो जातः, परं स दरिद्री जातः, केनचिद् वणिजा च स नमस्कारं शिक्षितः । पश्चाद् दावानलमध्ये ज्वलितः । नमस्कारप्रभावाच्च त्वं राज्ञः पुत्रोऽयं दुर्गन्धोऽभूः । तत्श्रुत्वा जातिस्मरणं प्राप्य स प्रभुं पृच्छति-हे भगवन् ! कथमहमथ सुगन्धो भवामि ? तस्योपायं कृपां कृत्वा कथयत, तदा श्रीतीर्थंकरेण भणितम्-त्वं सप्तमासाधिकानि सप्तवर्षाणि यावद् रोहिणीतपः कुरु, पश्चाच्च तस्य तपसः उद्यापनं कुरु, तत्श्रुत्वा तेन रोहिणीतपः कृतम् , यस्य प्रभावात् स सुगन्धोऽभूत् । इति कथां श्रुत्वा सा दुर्गन्धा रोहिणीतपो विधिपूर्वकं कृत्वा सुगन्धा जाता. पश्चाद् मृत्वा सा देवी अभूत्. ततश्च्युत्वा चम्पायां श्रीवासुपूज्यस्य मघवापुत्रस्य पुत्रिकेयं रोहिणी नाम्नी तव राज्ञी जाता, पूर्वभवकृततपःप्रभावाद् इयमाजन्म यावद्

तीर्थं पुण्यपात्रमस्ति, तस्य दर्शनमपि महते पुण्याय. यत उक्तम्—

साधूनां दर्शनं पुण्यं, तीर्थभूता हि साधवः। तीर्थं फलति कालेन, सद्यः साधुसमागमः ॥ १ ॥

तदस्मै निःस्पृहाय मुनिसत्तमाय दत्तं दानं महते फलाय भवेद्, इति ध्यात्वा राजा स्वप्रियां प्राह-हे वरानने ! अस्मै मुनये वलित्वा दानं देहि, तत्श्रुत्वा क्रीडान्तरायं मत्वा बहिःप्रमोदभाग् अन्तश्च दुष्टा सा गृहं प्रति चचले, आगत्य गृहे द्वेषवशात् तया कटुतुम्बिकाशाकं मुनये दत्तम्, मुनिना तेनाहारेण पारणकं कृतम्, तद्भक्षणाच्च मुनिः पंचत्वं प्राप्तः शुभध्यानाच्च स देवलोके देवोऽभूत्, तां वार्तां श्रुत्वा राज्ञा राज्ञी स्वदेशतो निष्कासिता, सा सप्तमे दिने वराकी कुष्ठिनी जाता, चिरं जनैर्निन्द्यमाना सा मृत्वा षष्ठं नरकं जगाम। तत उद्धृत्य तिरश्चां योनौ समुत्पन्ना, ततो दुःखप्रचुरे सप्तमे नरके. एवं सर्वेषु नरकेषु सा पापा भ्रान्ता, ततः सा सर्पिणी, उष्ट्री, शृगाली, कुक्कुटी, तथा शूकरी, ततो गृहगोधा, जलौका, मूषिका, काकी, शुनी, बिलाडी, ततो रासभी, ततो गौः जाता तेषु भवेषु प्रायशः अग्निशस्त्रघाताद्यैः मृतिरभूद्, धेनुभवे स्वान्त्यसमये गुरूदितं नमस्कारं श्रुत्वाऽनुमोदयामास, मृतिं चाप, ततो नमस्कारप्रभावेण सा दुर्गन्धा दुर्भगा च तव तनया अभूत्। ततो दुर्गन्धा निजपूर्वभवं श्रुत्वा करौ योजयित्वा पृच्छति-हे स्वामिन् ! एतस्माद् दुःखादहं कथं निःसरिष्यामि ? तत् कथ्यतां. तदा मुनिना उक्तम्-त्वं दुःखभंजकं रोहिण्या व्रतं कुरु, तयोक्तम्-हे भगवन् ! केन विधिनाहं तद्व्रतं करोमि, मुनिनोक्तम्, शृणु—रोहिणीनक्षत्रदिने श्री वासुपूज्यजिनबिम्बं पूजयित्वा सप्तमासाधिकं सप्तवर्षं यावद् उपवासं कुरु एवं शुभध्यानयुततपःप्रभावात्तव शुभं भविष्यति, पश्चाच्च त्वया तत्तपस उद्यापनं विधेयं येन तव सर्वं दुःखं यास्यति, सुगन्धराजवत्. तत्श्रुत्वा दुर्गन्धा मुनिं प्रति पृच्छति-हे भगवन् ! तस्य सुगन्धराजस्य वृतान्तं मयि कृपां विधाय कथयत,

लोकपालाख्यं राजा निजहस्तेन भूमावपातयत् । तदा तत्रस्थाः सर्वेजनास्तं तथा पतन्तं दृष्ट्वा हाहारवं कर्तुं लग्नाः परं रोहिण्या हृदि किंचिन्मात्रमपि दुःखं न जातम्, इतस्तं पतन्तं बालकं नगराधिष्ठितदेवेन धृत्वा सिंहासने स स्थापितः, तद् दृष्ट्वा सर्वे जनाश्चमत्कृताः सन्तो विचारयामासुः- नूनमियं रोहिणी धन्यैव या दुःखस्य वार्तामपि न जानाति ।

इतश्च तत्र श्रीवासुपूज्यतीर्थंकरस्य रूप्यकुम्भ-स्वर्णकुम्भनामानौ द्वौ शिष्यौ ज्ञानवन्तौ समागतौ, तदा राजा परिवारयुतस्तौ वन्दितुं गतः, गुरुभ्यां च देशना दत्ता, देशनाश्रवणानन्तरं राज्ञा पृष्टम्-भो भगवन्! अनया रोहिण्यैवंविधं किं तपः कृत येनेयं दुःखस्य वार्तामपि न जानाति, एतस्या अष्टौ पुत्राः चतस्रश्च पुत्र्यो जाताः सन्ति, तथा ममापि तस्या उपरि-अतीव स्नेहो वर्तते, अतः तस्याः कथां युवां कृपां विधाय कथयतम्, तच्छ्रुत्वा गुरुः कथयति. अस्मिन्नेव नगरे धनमित्रनामा श्रेष्ठी वसति, तस्य धनमित्रा नाम्नी च भार्याऽस्ति, तस्या एका दुर्गन्धा नाम्नी पुत्री, सा कुरूपा दुर्भगा च जाता एवंविधां तां कुरूपां दृष्ट्वा कोऽपि द्रव्येश्वरो नो परिणयति, तदा पित्रा एकं मार्यमाणं श्रीषेणाभिधं चौरं मोचयित्वा तस्या दुर्गन्धायाः स स्वामीकृतः, सोऽपि रात्रौ दुर्गन्धां त्यक्त्वा नष्ट्वा गतः, तदा श्रेष्ठी विषादं करोति, विलपन्तीं पुत्रीं प्रति श्रेष्ठी कथयति, हे पुत्रि! त्वं विलापं मा कुरु, गृहद्वारि स्थिता दानं देहि धर्मं च कुरु येन तव दुष्कर्मदोषः प्रलीयते, अथ सा तदंगीकृत्य प्रत्यहं दानं ददाति । अथैकदा कश्चिद् ज्ञानी गुरुस्तत्र समागतः, तदा धनमित्रेण तं गुरुं वन्दित्वा तस्याः कन्यायाः स्वरूपं पृष्टम्. गुरुर्भणति-गिरिनारनगरे पृथिवीपालाभिधो राजाऽऽसीत्, तस्य सिद्धिमत्यभिधाना राज्ञी वर्तते, अथैकदा स राजा निजराज्ञीसहितो वने क्रीडां कर्तुं याति, तस्मिन् समये कश्चिद् मासक्षमणपारणकः सागरनामा मुनिः समागच्छति, भिक्षार्थमायान्तं मुनिं सागरं ऐक्षिष्ट, दृष्ट्वा विचारयति-एष साधुर्गुणाकरो महा-

च जाता। अथ क्रमेण यौवनावस्थां प्राप्ता, ईदृशीं तां दृष्ट्वा राजा चिन्तयति–नूनमियं रोहिणी वरयोग्या जाताऽस्ति. अथ राज्ञा स्वयंवरमण्डपं मण्डयित्वा सर्वेऽपि राजकुमारा आकारिताः तेऽपि च मण्डपे समागत्य स्थिताः। तस्मिन्नवसरे रोहिण्यपि स्नानं विलेपनं च कृत्वा क्षीरोदकसदृशे श्वेतवस्त्रे परिधाय मुक्ताभरणैरलंकृता साक्षाद् देवीव शिबिकायां स्थित्वा सखीभिः परिवृता तत्रागता। अथैका सखी तां रोहिणीं पुरस्कृत्य तस्या अग्रे राजकुमाराणां नाम-गोत्र-बल-वयो-यशः-प्रभृतीनां वर्णनं करोति। अथ तयाऽन्यानपि राजकुमारान् वर्जयित्वा नागपुरराज्ञो वीतशोकस्य पुत्रोऽशोककुमाराभिधो वृतः, तस्य कण्ठे च तस्या निजवरमाला क्षिप्ता, ततोऽन्ये सर्वेऽपि राजकुमाराः सहर्षा मिलित्वा तां च तया सह विवाह्य ततो भोजन-वस्त्र-ताम्बूलादि गृहीत्वा स्वस्वगृहे गताः। अशोककुमारोऽपि तत्र कतिचिद् दिनानि स्थित्वा सवधूको हस्त्यश्ववस्त्राभरणादियुतः प्रस्थाय नागपुरसमीपे समागतः। तदा वीतशोकराज्ञा तस्य पुरप्रवेश-महोत्सवः कृतः। कुमारोऽपि रोहिण्या सह विषयसुखानि भुनक्ति। अथैकदा शुभे दिनेऽशोककुमाराय राज्यं दत्त्वा वीतशोको राजा दीक्षां गृहीतवान्। ततोऽशोकराजा सुखेन राज्यं पालयति। क्रमेण अशोकराज्ञोऽष्टौ पुत्राश्चतस्रश्च पुत्रिका जाताः। अथैकदा रोहिण्या सहितो राजा सप्तम्यां भूम्यां गवाक्षे स्थितो लोकपालाख्यं पुत्रमुत्संगे धृत्वा क्रीडयति। तस्मिन् समये नगरे कस्याश्चित् स्त्रियः पुत्रो मृतः। सा स्त्री रुदती विलापांश्च कुर्वती तस्मिन् मार्गे समागता। तां दृष्ट्वा रोहिण्या राज्ञे पृष्टम्–भो महाराज! किमिदं नृत्यम्? राजा जगाद–हे प्रिये! त्वं साहंकारं वचनं मा ब्रूहि, रोहिण्योक्तम्–स्वामिन्नहमहंकारं न करोमि, एवंविधं नृत्यं मया कदापि न दृष्ट-मतोऽहं पृच्छामि। तदा राज्ञोक्तम्–एतस्याः स्त्रियः पुत्रो मृतोऽस्ति, अतएवेयं रोदनं करोति। रोहिण्योक्तम्–स्वामिन्! अस्यै रोदनं केन शिक्षितं भवेत्?, तत् श्रुत्वा राज्ञोक्तम्–त्वामप्यहं रोदनं शिक्षयामि। इत्युक्त्वा रोहिण्युत्संगस्थं तस्या लघीयांसं पुत्रं

वाचानाचार्यवर्यस्य, रामचन्द्रगणेर्मुदा । शिष्येणाऽऽजिमगंजे च चतुर्मासीस्थितेन वै ॥ ४ ॥
पाठकमेदचन्द्रेण, रायमल्लकवेर्मुदा । पठनार्थमिदं रम्यं, कृतं शुभतराशया ॥ ५ ॥ युग्मम् ।

॥ इति श्रीदीपमालिकाव्याख्यानं सम्पूर्णम् ॥ ११ ॥

## अथ रोहिणी व्याख्यानं प्रारभ्यते ॥ १२ ॥



उच्छिट्ठमसुन्दरयं, भत्तं तह पाणियं च जो देइ । साहूणं जाणमाणो, भुत्तं पि न जिज्जए तस्स ॥ १ ॥

व्याख्या—यो जीव उच्छिष्टमसुंदरं च भक्तं तथा पानीयं जानन् सन साधुभ्यो ददाति, तस्य भुक्तमप्यन्नं न जीर्यते, तस्य शरीरेऽजीर्णरोगो भवति, यथा—श्रीवासुपूज्यस्य मघवाभिधपुत्रस्य पुत्रिकाया रोहिण्या जीवः पूर्वभवे दुर्गन्धाभिधाना कुष्ठिनी जाता, साधोः कटुतुंबकाहारदानात् ॥ १ ॥ रोहिणीकथा चेत्थं—

श्रीवासुपूज्यमानम्य, तथा पुण्यप्रकाशकम् । रोहिण्याश्च कथायुक्तं, रोहिणीव्रतमुच्यते ॥ १ ॥

श्रीचंपानगर्यां श्रीवासुपूज्यस्य पुत्रो मघवाभिधो राजा राज्यं करोति, तस्य लक्ष्मी नाम्नी राज्ञी सुशीला सदाचारा च वर्त्तते, तस्या अष्टौ पुत्राः सन्ति, अष्टानां पुत्राणामुपर्येका रोहिणी नाम्नी पुत्री वर्त्तते, सा चतुःषष्टिकलावती रूपलावण्यवती सौभाग्यगुणवती

तद्रात्रौ भावोद्योतो गतः, ततो लोकैरुद्योतकरणार्थं स्वस्वगृहे रत्नमयी दीपपालिका कृता, तद्दिनाद् लोकमध्ये दीपमालिकापर्वणः प्रसिद्धिर्जाता । अथ यद्रात्रौ वीरप्रभुर्मुक्तिं गतः, तदा समस्तसंघ उद्विग्नः स्थितः, संघस्य मुखाब्जं म्लानतां गतम्, तस्मिन् समये गौतमस्वामिनः केवलज्ञानमुत्पन्नं तदा समस्तोऽपि संघो हृष्टो जातः । इन्द्रः प्रभोर्निर्वाणोत्सवं कृत्वा प्रभोर्देहसंस्कारं करोति, ततः केचिद् देवाः प्रभोर्दंष्ट्रां लात्वा गच्छन्ति, केचिद् देवा दन्तान् गृह्णन्ति, केचिद् भस्म गृह्णन्ति, शेषं क्षीरसमुद्रे प्रवाहयंति, पश्चात् प्रातःकाले गौतमस्वामिनः केवलज्ञानमहोत्सवं कृत्वा सर्वे देवाः संभूय नन्दीश्वरद्वीपेऽष्टाह्निकं महोत्सवं कृत्वा स्वस्मिन् स्वस्मिन् स्थाने गच्छन्ति । अथ द्वितीयादिने सुदर्शना भगिनी शोकदूरीकरणार्थं नन्दिवर्धनं स्वगृहे भोजनं कारयति, तस्माद् एषा द्वितीया 'भाईबीज' इति प्रसिद्धिं प्राप्ता । प्रथमं लोकै रत्नमया दीपाः कृताः पश्चाल्लोकै रूप्यमयाः कृताः । अथ पंचमकालप्रभावतो मृत्तिकामया दीपाः कुर्वन्ति । एवमार्यसुहस्तिसूरिर्वक्ति–हे संप्रते ! इदं दीपमालिकापर्व सर्वेषामुत्तमं कथितम्, यथा वृक्षाणां मध्ये कल्पवृक्षः, देवानां मध्ये इन्द्रः, राज्ञां मध्ये चक्रवर्ती, नक्षत्राणां मध्ये चन्द्रमाः, तेजस्विनां मध्ये सूर्यः, सर्वधातूनां मध्ये सुवर्णम्, काष्ठमध्ये चन्दनम्, वनमध्ये नन्दनवनं तथा सर्वपर्वणां मध्ये दीपमालिकापर्व । अस्मिन् दिने श्रीवीरप्रभुर्मुक्तिं गतः, पुनः श्रीगौतमस्य केवलज्ञानमुत्पन्नम् अतो हे राजन् ! इदं दीपमालिकापर्व सिद्धिदायकं भवतु ।

षणन्दवसुचन्द्राब्दे ( १८९६ ), ज्येष्ठमासे सिते दले । चन्द्रघस्रे त्रयोदश्यां, साध्ययोगे हितावहे ॥ १ ॥
दीपालिपर्वणो व्याख्या, गद्यबन्धेन निर्मिता । अपशब्दादिदोषश्चेत्, शोधनीयः सदा बुधैः ॥ २ ॥
स्वच्छे खरतरे गच्छे, श्रीसौभाग्यगणाधिपे । धर्मराज्यं कलावर्ये, प्रकुर्वति सुविस्तरे ॥ ३ ॥

अमावास्यादिने उपवाससहिताः पौषधव्रतमंगीकृतवन्तः तद्रात्रौ भावोद्योततीर्थंकररहितं दृष्ट्वा ते राजाभिः स्वकीयगृहाद् रत्नान्यानाय्य द्रव्योद्योतः कृतः, पौषधः पारितः, यद्रात्रौ तीर्थकरो मुक्तिं गतस्तद्रात्रौ देवानां गमनागमनेन महानुद्योतः संजातः, अस्मिन्नवसरे देवानां मुखाद् वीरप्रभुमोक्षगमनं श्रुत्वा श्रीगौतमस्वामी मनसि चिन्तितवान् " अहो ! भगवता मत्तश्छलं कृतं स्वस्य मुक्तिं ज्ञात्वा अहं दूरीकृतः, ज्ञातं भगवता मम पार्श्वे केवलज्ञानं मार्गयिष्यति, बालवत् कदाग्रहं करिष्यति, वस्त्राञ्चलं गृहीत्वा स्थास्यति, हे स्वामिन् ! मया ईदृग् लोभी त्वं न ज्ञातः, केवलज्ञाने दत्ते तु भवतां किमपि न न्यूनमभविष्यत्, हे स्वामिन् ! तवाहं परमसेवकोऽभूवम्, मां निराशं त्यक्त्वा गतः, हे भगवन् ! महतामेषा वार्ता न युक्ता, हे प्रभो ! बलाद् भवतोऽहं केवलज्ञानं नालप्स्यम् भवता दत्तमेव केवलज्ञानमंगीकरिष्यम्, तथापि हे स्वामिन् ! अस्मिन्नवसरे अन्तसमये स्वसमीपे रक्षणं युक्तमभूद्, अस्मिन्नवसरे मम प्रेषणं तव न युक्तम्, पुनर्हे प्रभो ! मम केवलज्ञानस्य तृष्णा नासीत्, भवतां दर्शनस्य तृष्णा जाताऽभूत्, अधुना तव दर्शनमपि मम दूरीभूतम्, हे स्वामिन् ! अथाहं कस्य वीर ! इति कथयिष्यामि, मम मनःसंदेहं कस्य समीपे पृच्छाविषये करिष्यामि, को मम सन्देहं भंक्ष्यति, हे स्वामिन् ! पुनर्मम हे गौतम ! हे गौतम ! इति कः कथयिष्यति ?" एवं विलापं कुर्वन् मनसि विचारयति-रे जीव ! वराक ! त्वं ग्रथिलो जातः, स तु नीरागी त्वं तु सरागी, वीतरागेण रागकरणं न युक्तम्, एकांगिप्रीतिकरणे दीपे पतंगवद् दुःखी भविष्यति, यस्य नाम वीतरागः स कस्मिन् रागं करोति स भगवान् स्वस्य वीतरागं हि नाम सत्यं कृतवान्, अहमज्ञासिषं भगवान् मम नाम पुनः पुनः ब्रूते तर्हि ममोपरि रागं रक्षति, परमाश्विनमेघाडम्बरवद् अन्तं दत्त्वा गतः स क्व अहं क कस्य कोऽपि नास्ति, एवं मोहनीयं निराकृत्य क्षीणमोहं गुणस्थानकं गत्वा तत्कालमेव श्रीगौतमस्य केवलज्ञानमुत्पन्नम्। अथ यद्रात्रौ प्रभुर्मुक्तिं गतः

पक्षे, उपशमदिने, देवानन्दानाम्न्यां रात्रौ, सर्वार्थसिद्धिमुहूर्ते, नागे करणे, पद्मासने स्थिते तुर्यारकान्ते एतत्समये इन्द्रासनं चकम्पे, अवधिज्ञानेन हरिः प्रभोर्निर्वाणकल्याणसमयं ज्ञात्वा आगच्छति, अत्यन्तमश्रुपूर्णाक्षो विषण्णश्च सन् हस्तौ संयोज्य वक्ति—

गर्भे जन्मनि दीक्षायां, केवले च तव प्रभो ! । हस्तोत्तरं क्षणेऽधुना, तद्गन्ता भस्मको ग्रहः ॥ १ ॥

अतो हे स्वामिन् ! करुणानिधान ! एकक्षणमात्रमायुर्वृद्धिं स्वस्य कुरु, किं कारणम् ? भवतो जन्मराशेरुपरि भस्मग्रह आगतोऽस्ति स द्विसहस्रवर्षं यावत् स्थास्यति, अतो जिनशासनस्य पूजा प्रभावना मन्दा भविष्यति, तेन हेतुना आयुर्दीर्घं कुरुष्व, भवतो दृष्टिपातस्तस्य तेजो निष्फलं यास्यति, तदा भगवान् वक्ति-हे इन्द्र ! एषा वार्ता कदाऽपि नाऽभूत्, न भवति, न चापि भविष्यति, यदायुर्दीर्घतरं भवति, पुनर्भाविपदार्थस्य नाशो नास्ति, तदुत्तीर्णे तु देवा अपि दर्शनं दास्यन्ति, विद्यामन्त्राणि चाल्पेन जापेन प्रभावं दर्शयिष्यन्ति, जातिस्मरणादिभावाः किंचित् प्रकटयिष्यन्ति, तदनन्तरमेकोनविंशतिसहस्रवर्षं यावद् जिनधर्मो वर्तिष्यति, दुःषमकालपर्यन्तम्, एवं कथयित्वा स्थितः, स्वस्य निर्वाणं समीपं ज्ञात्वा पुण्यफलविपाकानि पञ्चपञ्चाशदध्ययनानि तथा पापफलविपाकानि पञ्चपंचाशदध्ययनानि च जगाद, तथा षट्त्रिंशदपृष्ठव्याकरणादि [उत्तराध्ययनसूत्राऽध्ययनानि] चाभिधाय प्रधानं नामाध्ययनं [ मरुदेवाऽध्ययनं ] जगद्गुरुरकथयत्, पुनः स्वामिनो मोक्षं समीपे विज्ञाय आसनप्रकम्पतस्तत्र सुराऽसुरेन्द्राः सपरिच्छदाः सर्वेऽपि ईयुः ॥ अथ प्रभुः शैलेशीकरणं कृत्वा पञ्चह्रस्वाक्षरोच्चारमितकालेन तुर्येण ध्यानेन एरण्डफलवद् बन्धाभावाद् ऊर्ध्वगतिः सन् यथास्वभावऋजुगत्या मोक्षमुपाययौ । तस्मिन् समयेऽनुद्धरिककुन्थुराशिः समुत्पन्ना, तदा बहुसाधुभिर्विचारितम्–'अद्यदिनादारभ्य संयमो दुराराध्यो भविष्यति' इति ज्ञात्वाऽनशनं कृतम्, तस्मिन् दिने नवमल्लकि–नवलेच्छकिजातीयाः काशी–कोशलदेशपतयोऽष्टादश गणराजानः

भविष्यन्ति, एकस्तीर्थंकरः, एकश्चक्रवर्ती, एवं द्वौ चतुर्थारके भविष्यतः, द्वयोश्चतुरशीति-पूर्वलक्षवर्षायुर्भविष्यति, ततः कल्पवृक्षोत्पत्तिर्भविष्यति सर्वे युगलिका भविष्यन्ति. पाश्चात्यचतुर्विंशतितमजिनस्याग्रतनप्रथमजिनस्याष्टादशकोटाकोटिसागरोपमानामन्तरं भविष्यति. उत्सर्पिणी, अवसर्पिणीकाले एकत्रीकृते एकं कालचक्रं भवति, तानि कालचक्राणि अनन्तानि गतानि, पुनरस्मिन् भरतक्षेत्रे अग्रेऽनन्तानि कालचक्राणि भविष्यन्ति, एवं श्रीवर्धमानः प्रभुर्गौतमस्य कालस्वरूपं निरूप्य समवसरणाद् निर्ययौ, हस्तिपालनरेन्द्रस्य शुल्कशालायां च जगाम ॥ स्वामी तद्दिनयामिन्यां आत्मनो मोक्षं विदित्वा दध्यौ-अहो ! गौतमस्य मयि स्नेहोऽधिकः, य एवास्य महात्मनः केवलज्ञानान्तरायः, स छेद्य इति विज्ञाय गौतममिति जगाद्-अपरस्मिन् ग्रामे देवशर्मा द्विजोऽस्ति, स त्वया प्रतिबोधं प्राप्स्यति, तस्मात् तत्र हे गौतम ? त्वं गच्छ. हे स्वामिन् ! आदेशः प्रमाणमित्युक्त्वा प्रणम्य च गौतमस्तत्र गच्छति. अथ प्रभोः परिवारं वदति-स्वहस्तदीक्षिताः साधवश्चतुर्दशसहस्र ( १४००० ) प्रमाणा अभूवन्, षट्त्रिंशत्सहस्र ( ३६००० ) प्रमाणाः साध्व्यश्च संजाताः, एकोनषष्टिसहस्राधिकलक्ष ( १५९००० प्रमाणाः श्राद्धाश्च संजाताः, द्विगुणाः ( ३१८००० ) श्राविका अभूवन्, चतुर्दशाधिकत्रिशत ( ३१४ ) प्रमाणाः चतुर्दश पूर्वधारिणो जाताः, त्रयोदशशत ( १३०० ) प्रमाणा अवधिज्ञानिनो जाताः, सप्तशत ( ७०० ) वैक्रियलब्धिधारिणो मुनयः संजाताः, सप्त शत ( ७०० ) केवलिनः संजाताः, पञ्चशत ( ५०० ) विपुलमतयो संजाताः, चतुःशत मिता ( ४०० ) वादिनः संजाताः, अष्टशत ( ८०० ) मिता अनुत्तरवासिनः । एवं समस्तसाधुसाध्वीसहितः श्रीवीरप्रभुः षष्ठतपोयुक्तः त्रिंशद्वर्षाणि गृहवासे तस्थौ, सार्द्धद्वादशवर्षाणि पक्षाधिकानि छद्मस्थावस्थायां स्थितः, त्रिंशद् वर्षाणि यावत् केवलिपर्याये स्थितः, एवं द्वासप्ततिर्वर्षाणि आयुः प्रपाल्य कार्त्तिकाऽमावास्यानिशायाः पश्चिमे क्षणे स्वातिनक्षत्रे, द्वितीये चन्द्रसंवत्सरे, प्रीतिवर्धन-

पोट्टिलाभिधः ९, दशमो शतकस्य जीवः शतकीर्तिनामा जिनेश्वरः १०, देवकीराज्ञीजीवः एकादशः सुव्रताभिधो जिनो भविष्यति ११, कृष्णवासुदेवस्य जीवः अममाख्योऽर्हन् द्वादशो भविष्यति १२, सत्यकी विद्याधरस्य जीवोऽर्हन् निष्कषायः त्रयोदशः १३, बलभद्रस्य जीवो निष्पुलाकश्चतुर्दशो भविष्यति १४, रोहिणीजीवो निर्ममः पंचदशो जिनः १५, सुलसाश्राविकाया जीवश्चित्रगुप्तो जिनः षोडशो भविष्यति १६, रेवतीश्राविकाया जीवः समाधिनामा सप्तदशो जिनो भविष्यति १७, शतालीश्रावकस्य जीवः अष्टादशोऽर्हन् संवराभिधः १८, द्वीपायनजीवः एकोनविंशोऽर्हन् यशोधरः १९, कपायस्य जीवो विजयो विंशतितमः २०, एकविंशो जिनो मल्लो यः पुरा नारदोऽभवत् २१, अम्बडस्य जीवो द्वाविंशो देव तीर्थंकरः २२, त्रयोविंशः श्राद्धरमस्य जीवोऽनन्तवीर्यो भविष्यति २३, स्वातिजीवश्चतुर्विंशो भद्रकृन्नाम तीर्थंकरो भविष्यति २४, एते आगामिकाले चतुर्विंशति तीर्थंकरा भविष्यन्ति, एषामायुः कल्याणकान्तर–लाञ्छन–वर्णाः पश्चानुपूर्व्या भविष्यन्ति, वर्तमानजिनवत्। अथ भाविनश्चक्रवर्तिनः कथ्यन्ते–दीर्घदन्तः १, गूढदंतः २, शुद्धदंतः ३, श्रीचन्द्र ४, श्रीभूतिः ५, श्रीसोमः ६, पद्मः ७, महापद्मः ८, कुसुमः ९, विमलः १०, विमलवाहनः ११, रिष्टः इत्यपरनामा भरतो द्वादशः १२। अथ वासुदेवानाह–नन्दी १, नन्दमित्रः २, सुन्दरबाहुः ३, महाबाहुः ४, अतिबलः ५, महाबलः ६, बलः ७, द्विपृष्ठः ८, त्रिपृष्ठः ९, इत्यात्मकाः। अथ प्रतिवासुदेवा उच्यन्ते–तिलकः १, लोहजंघः २, वज्रजंघः ३, केशरी ४, बली ५, प्रह्लादः ६, अपराजितः ७, भीमः ८, सुग्रीवः ९, इत्यात्मकाः। अथ बलदेवा उच्यन्ते–जयः १, विजयः २, भद्रः ३, सुप्रभः ४, सुदर्शनः ५, नन्दः ६, नंदनः ७, पद्मः ८, संकर्षणः ९, इत्यात्मकाः। एवमेते त्रिषष्टिशलाकाः * पुरुषा भविष्यन्ति, तेषां मध्ये एकषष्टि शलाकाः पुरुषास्तृतीयारके ॥१११॥

*—प्रत्यंतरे त्रिषष्टिशलाकाः पुरुषा नामांतरेण अपि दृश्यते तत्त्व तु ज्ञानिनो विदन्ति।

पंचत्रिंशतिदिनं यावद् मेघो वर्षिष्यति, तदा वृक्षौषधिलताधान्यप्रमुखाः स्वयं निष्पत्तिं यास्यन्ति. तान् दृष्ट्वा मनुष्या बिलेभ्यो बहिर्निःसरिष्यन्ति, भरतपृथिवी पुष्पफलादियुक्ताभूत्, तदा फलादीनि भक्षिष्यन्ति, अतः परं मांसं न भक्ष्यम्. यथा यथा काल एष्यति तथा तथा रूपसंहननायूंषि धान्यादीनि च भारते वर्धिष्यन्ति, सुखा वाताः ऋतवः सलिलाश्च भविष्यन्ति, तिर्यञ्चो मनुष्याश्च गतरोगाः क्रमेण भविष्यन्ति, द्वितीयारकप्रान्ते मध्यदेशे भरतावन्यां सप्त कुलकरा भविष्यन्ति—तत्र प्रथमो विमलवाहनः, द्वितीयः सुदामः, तृतीयः संगमः, चतुर्थः सुपार्श्वः, पंचमो दत्तः, षष्ठः सुमुखः सप्तमः समुचिः एते सप्त कुलकरा भविष्यन्ति. तत्र जातिस्मृतिपूर्वं विमलवाहनो राज्यहेतवे ग्रामान्, पुरादीनि च निवेशयिष्यति, राजा विमलवाहनो गोऽश्वाहिसंग्रहं करिष्यति, शिल्पानि व्यवहारं लिपिर्गणितानि च व्यञ्जयिष्यति, दुग्धदध्यादौ शस्ये ज्वलने चोत्पन्ने सति हितकामी राजा प्रजानां रन्धनाद्युपदेशं दास्यति, एतत्सर्वं द्वितीयारके भविष्यति । अथ तृतीयारकस्य नवाधिकाशीतिपक्षे गते सति द्वारपुरनगरे समुचिराज्ञो भद्रायां महादेव्यां चतुर्दशस्वप्नसूचितो नन्दनः श्रेणिकजीव आदितीर्थकृत् पद्मनाभाभिधो जन्मादिना महावीरतुल्यो भविष्यति, कथंभूतः पद्मनाभ ? सप्तहस्तशरीरोन्नतः काञ्चनवर्णकायः सिंहलांछनो द्वासप्ततिवर्षायुः प्रथमतीर्थकरो भविष्यति, अतः परं पूर्ववत् प्रातिलोम्येन पूर्वार्हत्समा अमी सर्वे क्रमाद् जिनेश्वरा भविष्यन्ति, तत्र श्रेणिकराज्ञो जीवः पद्मनाभो जिनेश्वरः १, श्रीमहावीरस्वामिनः पितृव्यः सुपार्श्वजीव : सूरदेवो द्वितीयः जिनेश्वरः २, तृतीयो कोणिकनृपपुत्र उदायिनो जीवः सुपार्श्वः ३, पोटिलाऽणगारस्य जीवः चतुर्थः स्वयंप्रभः ४, दृढायुश्रावकस्य जीवः पंचमः सर्वानुभूतिः ५, कार्तिकस्य षष्ठोऽर्हन् देवश्रुताभिधः ६, सप्तमो संवरश्रावकस्य जीव उदयाह्वयः ७, अष्टमः आनंदस्य जीवः पेढाल इति नामा ८, नवम सुनंदस्य जीवः

शिरोऽर्तिप्रमुखा मनुष्याणां महारोगा भविष्यन्ति, अंगारसदृशा भूमिर्भविष्यति, गिरि-नदी-गर्तादिका जलेन समीभविष्यन्ति, जल स्थलचारिणः तिर्यंचो दुःखेन स्थास्यन्ति, क्षेत्र-वनाऽऽराम-लता-तरु-तृणानि क्षयं यास्यन्ति, वैताढ्य-ऋषभकूट-गंगा-सिन्धूर्विमुच्य जलेन सर्वे समा भविष्यन्ति, भरतभूमिः कदाचिद् धूलिबहुला, कदाचिद् सार्द्रकर्दमा भाविष्यति, एकहस्तमानाः, कठोरांगाः, दुष्टवर्णाः निष्ठुरवचनाः, रोगार्ताः, क्रोधिनः, घण्टावच्चिपटनासिकाः, निर्लज्जाः, वस्त्ररहिता नराः स्त्रियश्च भविष्यन्ति, नराणां विंशतिवर्षायुः स्त्रीणां च षोडशवर्षायुर्भविष्यति, षड्वर्षा स्त्री गर्भान् धारयिष्यति दुःप्रसवा च. स्थविरा तु षोडशाब्दा बहुसूतेन मातृका भविष्यति. रथचक्रयोर्मध्ये यत्प्रमाणा धरित्री भवति तत्प्रमाणं गंगासिन्ध्वोः पानीयं वहिष्यति, पुनर्वैताढ्यगिरौ द्वासप्ततिनद्युभयतटभूमिषु बिलानि सन्ति तत्र तिर्यञ्चो मनुष्याश्च बीजमात्रतया भविष्यन्ति मांसाहारनिरताः, निर्घृणाः, निर्विवेकाः तस्मिन् काले मनुष्यादयः समस्ता भविष्यन्ति, बहुमत्स्य-कच्छपादिभिर्व्याप्ते गंगा-सिन्धू भविष्यतः, पुनर्नराद्यास्तत्रैत्य निशायां मत्स्यादीनि कृष्ट्वा स्थले मोक्ष्यन्ति, दिवा सूर्यत्विषा पक्कानि मत्स्यादीनि निशान्तरे खादिष्यन्ति, एवं निरन्तरं भोक्ष्यन्ति, यस्मात् तस्मिन् काले दध्याधिकं नास्ति, न च पुष्पफलादिकं, च चान्नं, न च शय्यासनादिकम्, एवं भरतैरवतेषु दशस्वपि दुःषमकालो भविष्यति। अथाग्रे उत्सर्पिण्यां षष्ठारकसदृशः प्रथमपारको भविष्यति, उत्सर्पिण्यामेकविंशतिसहस्रवर्षप्रमाणे प्रथमारके गते द्वितीयारकोऽपि एतत्प्रमाणो भविष्यति। अथ द्वितीयारकप्रान्ते पुष्करावर्तमेघः सप्ताहोरात्र यावद् वर्षिष्यति तस्मात् पृथिवीतापो यास्यति, द्वितीयः क्षीरोदनामा मेघो वर्षिष्यति तस्माद् धान्यनिष्पत्तेर्योग्या भविष्यति, तृतीयो घृतोदकमेघो वर्षिष्यति तस्मात् पृथिवी सचिक्कणा भविष्यति, चतुर्थः शुद्धोदकमेघो वर्षिष्यति, तस्मादौषधिर्निष्पत्तिं यास्यति, तदा पंचमो रसोदकमेघो वर्षिष्यति, तस्मात् पृथिव्यां रसोत्पत्तिर्भविष्यति. एवं

केचिदाचार्या एवं वदन्ति–पञ्चभरतै-रवतयोः संघस्य प्रमाणं नत्वेकस्य, केचिदाचार्याः पञ्चभरतस्य संघप्रमाणं वदन्ति, केचित् पुनः एकभरते संघप्रमाणं वदन्ति, तत्त्वं तु ज्ञानिगम्यम्. पुनः पञ्चमारकप्रान्ते द्विहस्तशरीरप्रमाणाः स्वर्गात् च्युत्वा गृहवासे द्वादश वर्षाणि, श्रामण्ये चत्वारि वर्षाणि, आचार्यपदे चत्वारि वर्षाणि स्थित्वा विंशतिवर्षायुः प्रपाल्य दुप्पसहसूरयः सौधर्मस्वर्गे गमिष्यंति, कथंभूता दुप्पसहसूरयः ? दशवैकालिक-जितकल्प-आवश्यकाऽनुयोगद्वार-नन्दीसूत्रधारका इन्द्रादिभिर्नताः. षष्ठोग्रतपोधारकाः प्रान्ते कृताष्टमतपसः एकसागरोपमायुः स्वर्गे भुक्त्वा ततो भरतक्षेत्रे जन्मावाप्य मुक्तिं यास्यंति । वीसहजार नवसौ वर्ष, तीनमास, पांच दिन, पांच पहरे, एक घडी, दोपल, ४१ अक्षरोच्चार एतावत्कालप्रमाणो जिनधर्मो भविष्यति, ९० वर्ष, मास ८, दिन २३, प्रहर २, घडी ५॥, पलानि ६७, १९ अक्षरोच्चार एतावन्मध्ये जिनधर्मः स्तोकः स्थास्यति, आरकस्य प्रांते जिनधर्मो विच्छेदं यास्यति, श्रुत-सूरि-संघ-धर्मः पूर्वाह्णे विच्छेदं यास्यति, नृपो विमलवाहनः सुमुखमन्त्री च मध्याह्ने विच्छेदं यास्यतः, अग्निः सन्ध्यायां विच्छेदं यास्यति, पुनः पञ्चमारकान्ते दुप्पसहाख्यः सूरिः, फल्गुश्रीः साध्वी, नागलः श्रावकः, सत्यश्रीः श्राविका, एतदात्मकश्चतुर्विधसंघो भविष्यति, पञ्चमारकस्यार्वाग् धर्मो वर्त्स्यति इत्यनेन धर्मो नास्ति यः पुनर्वदिष्यति स संघतो बहिः कर्तव्यः, एवमेकविंशतिसहस्रप्रमाणः पंचमारको भविष्यति । एतत्प्रमाणो षष्ठारकोपि भविष्यति । अथ षष्ठारकस्य किंचित् स्वरूपं कथ्यते—धर्मतत्त्वं प्रणाशं यास्यति, जनो हाहाभूतो भविष्यति, पशुवद् मातृपित्रादि व्यवस्थावर्जितश्च भविष्यति, बहुधूलिसहिता अतिनिष्ठुरता अनिष्टा वायवो वास्यन्ति, दिशश्च धूम्रं मोक्ष्यन्ति, चन्द्रमा अतिशीतं स्रावयिष्यति, अर्यमा अत्युष्णं तप्स्यति, अतिशीतोष्णव्याप्तो लोकः क्लेशमवाप्स्यति, भस्म-दृषद्-ऽग्निकण-क्षार-विष-मल-विद्युन्मयाः सप्त मेघा वर्षिष्यन्ति, एकैकस्य मेघस्य सप्त सप्त दिनानि यावद् वर्षा भविष्यति, यैः कास-श्वास-शूल-कुष्ट-जलोदर-ज्वर

मिन्द्रः शिक्षयित्वा दत्तनामानं कल्किनः पुत्रं राज्ये स्थापयिष्यति, गुरु संघयोर्नमस्कारं कारयिष्यति, इन्द्रः स्वस्थाने यास्यति, ततो दत्तराजा पितुः पापफलं ज्ञात्वा पुण्ये तत्परो भविष्यति, निरंतरं जिनेश्वराणां चैत्यानि कारयित्वा सर्वपृथ्वीं जिनालयैः शोभायमानां करिष्यति, तदा पुनर्जिनधर्ममहिमा प्रचुरो भविष्यति, । अथाग्रे पञ्चमकाले चतुर्विधश्रावक-श्राविका-साधु-साध्वीनां संख्या कथ्यते— षोडशसहस्राधिका एकादशलक्षा (१११६०००) राजानः पंचमकाले जिनमतभक्ता भविष्यन्ति, एककोटिमिता (१००००००), जिनशासनप्रभावका मन्त्रिणो भविष्यन्ति, पुनः पञ्चमकाले श्रीसुधर्मस्वामिप्रमुखाश्चतुरधिकद्विसहस्रप्रमाणा (२००४) युगप्रधानपद-धारका महोपकारिण आचार्या भविष्यन्ति, तत्रापि सुधर्मजम्बूस्वामिनौ तद्भवे एव मुक्तिं यास्यतः, शेषाः सर्वे एकावतारिणो भविष्यन्ति। ततो युगप्रधानसदृशा आचार्याः प्राणिनां मोहान्धकारे मार्तण्डसदृशाः षोडशाधिकैकादशलक्षैकादशसहस्रमिता (११११०१६) एतावन्तो अन्येऽपि आचार्या-श्चारित्रपालका भविष्यन्ति, पुनः पञ्चमारके तेतीस लाख चालीस हजार चारसौ उन्नीस (३३४०४१९) एतावन्तो मध्यमगुणधारका आचार्या भविष्यन्ति, पुनः पंचावनकोटि पंचावनलक्ष पंचावनसहस्र पंचशत पचवीस (५५५५५५५२५.) अधर्माचार्या भविष्यन्ति, पुनः पंचावनलाखकोटि, पंचावनहजारकोटि चौवनसौ कोटि चउमालीसकोटि एतावन्त उपाध्याया वाचनाचार्या भविष्य-न्ति, पुनः सत्तरलाखकोटि नवहजारकोटि एकसौकोटि एकवीसकोटि एकलाख साठहजार एतावन्तः साधवो भविष्यन्ति, पुनः पञ्च-मारके दशकोटाकोटि द्वादशशतकोटि बाणवेकोटि बत्तीसलाख निनाणवे हजार एकसौ एतत्प्रमाणाः साध्व्यो भविष्यन्ति, पुनः पञ्चमारके सोलाकोटिलाख तीनकोटिहजार तीनसौकोडी सत्तरकोडी चौरासीलाख एतावत्प्रमाणाः श्रावकाः भविष्यन्ति, पुनः पञ्चमारके पैंतीस-कोडिलाख बाणुहजारकोडी पांचसौकोडी बत्तीसकोडी एतावत्यः श्राविका भविष्यन्ति, एतावत् पञ्चमारके संघस्य प्रमाणम्. अत्र

करिष्यति, पुनर्नवीननवीनकरं करिष्यति ततो लोकानां मस्तकेऽसद्भूतानि कलंकानि दत्त्वा धनवतां धनं ग्रहीष्यति, अनेकच्छलं
कृत्वा लोकानां धनापहारं करिष्यति, यदा सर्वे लोका निर्धना भविष्यन्ति रूप्य-सुवर्णादि सर्वं धनं नाशं यास्यति, तदा चर्ममयीं
मुद्रां प्रवर्तयिष्यति, वैश्यापाखण्डिसर्वदर्शनिनां समीपे कल्की करं लास्यति, तस्य राजमध्ये लोकानां गृहे भोजनार्थं धातुमयं भाजनं न
स्थास्यति, तदा वृक्षपत्रमध्ये भोजनं करिष्यन्ति, पुनः कल्की राजा मार्गे गच्छतः साधून् दृष्ट्वा लुब्धः सन् भिक्षायाः षष्ठांशं मार्गयिष्यति,
तदा सर्वे साधवः एकत्रीभूय कायोत्सर्गं करिष्यन्ति शासनदेवतां चाराधयिष्यन्ति, शासनदेवता प्रकटीभूय साधुभिक्षाषष्ठांशं निवारयि-
ष्यति, पुनर्वेषधारिणो वेषं त्याजयिष्यन्ति, एतादृशो महादुरात्मा भविष्यति, पुनः कियति काले गते भिक्षाषष्ठांशस्य स्मरणं करिष्यति,
यदा धनार्थमाचार्यादीन् सर्वसाधून् संमेल्य वाटके क्षेप्स्यति रोधयिष्यति, तदा संविज्ञाचार्यप्रमुखाः ससंघाः शासनदेवताराधनार्थं कायो-
त्सर्गं करिष्यन्ति, संघकायोत्सर्गात् शासन देवता आगमिष्यति युक्तितः कल्किने उपदेशान् दास्यति तथापि स न मानयिष्यति, तस्मिन्
समये इन्द्रस्यासनं कम्पयिष्यति तदा स वृद्धब्राह्मणरूपं कृत्वा यत्र कल्की सिंहासनोपरि स्थितस्तत्रागमिष्यति, ततः कल्किनं कथयि-
ष्यति-अहो राजन् ! एते निरपराधिनः साधवः किं रुद्धाः एभिस्तवापराधः कः कृतः ? तदा कल्की तं वदिष्यति-अहो ब्राह्मण ! सर्व-
दर्शनिभिर्मम करो दत्तः परमेते भिक्षवो भिक्षाषष्ठांशमपि न ददति, ततो मया एते रुद्धाः सन्ति, तत इन्द्रो वदिष्यति-एषां पार्श्वतस्तव
किमपि न मिलिष्यति एषां पार्श्वे किमपि नास्ति पुनर्भिक्षाषष्ठांशमपि तव न दास्यंति एषामयं व्यवहारो नास्ति, पुनस्त्वं भिक्षा भागं मार्गयन्
लज्जां न यासि, एषां साधूनां त्वं त्यागं कुरु, ईतरथा तव महत्कष्टमुत्पत्स्यति, एतादृशमिन्द्रवचनं श्रुत्वाऽपि न त्यक्ष्यति ततो भाद्रपदशुक्ला-
ष्टम्यां ज्येष्ठानक्षत्रे इन्द्रो रोषं गतः सन् चपेटाप्रहारात् कल्किनं मारयिष्यति सर्वायुः षडशीति ८६ वर्ष प्रपाल्य नरकं यास्यति, ततोऽर्हद्धर्म-

स्य राजधानी भविष्यति, अनहल्लपत्तनस्य द्वितीयं नाम विजयपुर भविष्यति, मुंजस्योज्जयिनीदेशं दास्यति, अपराजितस्यान्यमण्डलं दास्यति, कल्किनो राज्यावसरे म्लेच्छक्षत्रिययो रुधिरेण पृथिवी स्नानं करिष्यति, तस्यैकोनकोटिसुवर्णानां कोष्ठागारा भविष्यन्ति, चतुर्दशसहस्रप्रमाणा हस्तिनो भविष्यन्ति, सार्द्धचतुर्दशसहस्राधिकसप्ताशीतिलक्षा ( ८७१४५९०० ) घोटका भविष्यन्ति, पञ्चकोटिप्रमाणाः पदातयो भविष्यन्ति, दासादीना तु बह्वीः संख्या भविष्यन्ति, नभःखलनाम त्रिशूलं भविष्यति, दृषन्मयतुरंगमः आरोहणार्थं वाहनं भविष्यति, दुरात्मा अत्यन्तकषायो भविष्यति, यदा कल्की राज्यं करिष्यति, तदा मथुरामध्ये कृष्ण-बलभद्रयोरायतनं पतिष्यति, बहुडम दुर्भिक्षरोगैर्मनुष्याः पीडां प्राप्स्यन्ति, पञ्चसु स्तुम्भिकासु बहु धनमस्तीति लोकानां मुखात् श्रुत्वा आनन्दराज्ञा निष्पादिताः पञ्च सुवर्णमयीः स्तुम्भिकाः कल्की खनयिष्यति, सर्वनिधानं निष्कासयिष्यति, तत्र गोरूपा लवणदेव्या मूर्तिः दृषन्मयी प्रकटीभविष्यति; तां गृहीत्वा राजादिप्रमुखा सर्वलोकाः संभूय नगरचतुष्पथमध्ये स्थापयिष्यंति, कदाचिदवसरे साधवो गोचर्यर्थं चतुष्पथमध्ये निःसरिष्यन्ति, सा साधून् दृष्ट्वा देवानुभावतः शृंगाग्रेण साधूनां मारणार्थमुद्यमवती भविष्यति, तदा गीतार्थाः सर्वे साधव एकत्रीभूय विचारं करिष्यन्ति, अत्र जलोपसर्गः प्रचुरो भविष्यति इति ज्ञात्वा सुविहितक्रियाधारका ये साधवो भविष्यन्ति ते सर्वे विहारं करिष्यन्ति, ये भक्तपानलोलुपा भविष्यन्ति गीतार्थवचनं नांगीकरिष्यन्ति अविवेकिनः सन्तः तत्र स्थास्यन्ति, ततः सप्तदशाहोरात्रं यावत् वर्षा भविष्यति, अत्यन्तवृष्टया कल्किनो नगरं जलाच्छादितं भविष्यति, गंगाजलं नगरेण सह एकत्री भविष्यति, कल्किनो नगरात् प्रणश्य कुत्रापि उच्चस्थले स्थास्यति, जलोपद्रवनिवर्तनाद् नवीनं नगरं स्थापयिष्यति, जलप्रवाहतो नव नन्दस्य सुवर्णमय्यः डुंगरिकाः प्रकटीभविष्यन्ति, ता दृष्ट्वा प्रचुरलोभी भविष्यति, प्रथमं ये मनुष्याः करं न दत्तवन्तस्तेषामुपरि करं स्थापयिष्यति, ये करं दत्तवन्तस्तेषां मस्तके बहुकरं

न्ति, पुनर्हे गौतम ! म्लेच्छकुले पाटलीपुरपत्तने कलंकी * राजा भविष्यति, पुनः पाटलीनगरस्य रुद्रनाम पुनश्चतुर्मुख इति नाम स्थापयिष्यति । जसनामचाण्डालस्य गृहे भार्या यशोदा तत्कुक्षौ त्रयोदश मासान् यावद् कल्किगर्भः स्थास्यति, चैत्रशुक्लाष्टम्यां जयश्रीदिवसस्य रात्रिसमये मकरलग्नस्य षष्ठांशे वहमाने भौमवासरे चन्द्रेर्कलग्ने स्थिते चन्द्रनामयोगे आगते अश्लेषाप्रथमपादे कलंकिनो जन्म भविष्यति, त्रिहस्तशरीरोन्नतत्वं भविष्यति, कपिलवर्णाः केशा मस्तके भविष्यन्ति, नेत्रे पीते भविष्यतः, तीक्ष्णस्वरो भविष्यति, महाविद्यावान् दीर्घहृदयो गुणरहितश्च भविष्यति, तस्योत्पत्तेरारभ्य पञ्चमे वर्षे उदरपीडा भविष्यति, सप्तमे वर्षेऽग्निपीडा भविष्यति, एकादशे वर्षे तस्य द्रव्यप्राप्तिः भविष्यति, अष्टादशे वर्षे कार्तिकमासे शुक्लपक्षे प्रतिपदि तिथौ शनिवारे तुलाचन्द्रे स्वातिनक्षत्रे नन्दनदिने सिद्धयोगे ववकरणे रावणमुहूर्त्ते राज्याभिषेको भविष्यति, तस्य आनन्दनामा तुरंगमो भविष्यति, दुर्भासकनामा कुन्तो भविष्यति, मृगांकनामा मुकुटो भविष्यति, दैत्यसूदनखड्ग भविष्यति, तस्य कटिप्रदेशे चन्द्रसूर्यौ भविष्यतः, पुनः कल्की विक्रमादित्य संवत्सरमुत्थाप्य अमितसुवर्णदानान् स्वसंवत्सरं स्थापयिष्यति, एकोनविंशतितमे वर्षे निजभुजबलेनार्धभरतत्रिखण्डं साधयिष्यति, सार्धविंशतिवर्षे अर्बुदराज्ञः पुत्रीं परिणेष्यति, अन्यासां बह्वीनां राज्ञीनां पतिर्भविष्यति, एवं ताभिः सह महाभोगे भुंज्यमाने तस्य महापराक्रमधारिणश्चत्वारः पुत्रा भविष्यन्ति, तन्नामान्याह-दत्त १ विजय २ मुंज ३ अपराजिताख्याः ४. कल्किनः पाटलीपुरे राजधानी भविष्यति, तस्य पाटलीपुरस्य कलंकिपुरमिति द्वितीयं नाम भविष्यति, दत्तस्य प्रथमपुत्रस्य राजधानी भविष्यति, तस्य नगरस्य दत्तपुरं नाम भविष्यति, विजयस्यानहलपत्तन-

* पंचमारके धर्मोन्नतिकारका त्रयोविंशतिः उदयाः भविष्यंति तेषु च चतुरधिकद्विसहस्रयुगप्रधाना भविष्यन्ति तथा सम्प्रति तृतीयोदयो वर्तते पर' च अष्टमोदये श्रीप्रभयुगप्रधानसमये कलकी राजा भविष्यति, इति ज्ञेयम् ।

तस्य भविष्यन्ति, अयुतप्रमाणा रथा भविष्यन्ति, एकादश लक्षाणि तुरगाणां भविष्यन्ति, अष्टादश लक्षाः पदातयो भविष्यन्ति, स श्रीकुमारपालराजा कस्मिंश्चित् समये वज्रशाखायां मुनिचन्द्रकुलोत्पन्नं श्रीहेमचन्द्रसूरिं प्रतिवन्दिष्यति, आचार्यमुखाद् धर्मोपदेशं श्रुत्वा सम्यक्त्वसहितं श्रावकद्वादशव्रतमंगीकरिष्यति, देवगुरुप्रणतिं विना भोजनं न करिष्यति, दृढव्रतपालको भविष्यति, पृथिवीं जिनप्रासादमण्डितां करिष्यति, एकस्मिन् प्रस्तावे श्रीहेमाचार्यमुखात् व्याख्याने श्रीतीर्थानां व्याख्यां श्रोष्यति, तत्र जीवितस्वामिमूर्तेः संबंधं श्रुत्वा वीतभयपत्तनमार्गे दुर्गकारापने श्रीजिनप्रतिमां मनुष्येभ्यः प्रकटं कारयिष्यति, तां प्रतिमां पत्तने जिनालये स्थापयिष्यति शुभबुद्धया मानयिष्यति, ततः प्रतिमार्थं यदुदायिराज्ञा ग्रामादिदत्तमभूत् तत् प्रकटीभविष्यति, तावन्तं ग्रामशासनादिकं कुमारपालोऽपि दास्यति, सदैवार्चां करिष्यति, सदैव जिनं वन्दिष्यति, स्वदारसंतोषी भविष्यति, वर्षाकालमध्ये त्रिविधं शीलं पालयिष्यति, कदाचिद् मनसः शीलभंगो भविष्यति तर्हि उपवासादि करिष्यति, पुनरष्टादशदेशेऽमारिपटहं दास्यति, वर्षाकाले सेनासमूहं न करिष्यति, जीवरक्षादक्षो भविष्यति, अर्हन्मतभक्तिमान् भविष्यति, शुद्धसम्यक्त्वव्रतधारको भविष्यति, पंचमकाले श्रीकुमारपालं विना अन्यः को भविष्यति ? । पुनर्हे गौतम ! पञ्चमारके कलहकारका भववृद्धिजनका असमाधिस्थाना अनिर्वेदकारका एतादृशाः श्रमणाः पञ्चभरतैरवते च भविष्यन्ति, पुनस्ते श्रमणा मन्त्रतन्त्रयन्त्रादौ नित्यमुद्यमवन्तो भविष्यन्ति, पुनरागमार्थज्ञाता स्तोका एव स्थास्यंति, सिद्धान्तशास्त्रस्य कश्चिदेवाभ्यासं करिष्यंति, धनलोभार्थं ज्योतिष्कादिकं धारयिष्यति, उपकरणवस्त्रपात्रार्थं वर्षाकाले श्रावकैः सह युद्धं करिष्यति, यथा राजा प्रजापार्श्वे कलहं कृत्वा दण्डं लास्यति तथा तेऽपि साधवः श्रावकपार्श्वे धनादिग्रहणं करिष्यन्ति, बहवो मुण्डा अल्पाः श्रमणाश्च भविष्यन्ति, पुनर्हे गौतम ! पञ्चमकाले म्लेच्छराजानो बलवन्तो भविष्यन्ति, उत्तमराजानो हीनबला भविष्य-

गवर्णने कथिताः । पुनर्हे गौतम ! कलियुगसंबन्धिनां मानवानां मध्ये लज्जा न भविष्यति, निष्कलंककुलजाताः स्तोका भविष्यन्ति, रम्यवस्तूनां धरित्र्यां हानिर्भविष्यति, लघवः सुताः तरुणाश्च मरणं यास्यन्ति, पुनर्मातरः पितरश्च अतिदीर्घायुषो भविष्यन्ति, ब्राह्मणाः शस्त्रधारका भविष्यन्ति, वेदपाठ–षट्कर्मवर्जिताश्च भविष्यन्ति, सुता मातापित्रोर्विनयं न करिष्यन्ति, पुत्रा मातापितृभ्यो दुःखं दास्यन्ति, वध्वः श्वश्रूणां विनयं न करिष्यन्ति, वधूः सर्पिणीतुल्या भविष्यति, श्वश्रूभिः कार्ये कथिते वधू रोषं कृत्वा सर्पिणीवत् प्रत्युत्तरवचनरूपं डंकप्रहारं दास्यति, श्वश्रूश्च कालरात्रीतुल्या वधूं हीलयिष्यति; यथा जनानां कालरात्री दुर्लङ्घ्या भवति तथा श्वश्रूरपि वधूजनानां ताडनातर्जनादि कुर्वती दुर्लंघ्या ज्ञेया, अपूज्यलोकाः पूजां प्राप्स्यन्ति, अर्चायोग्या गुणवन्तो न पूजां प्राप्स्यन्ति, शिष्या गुरूणां विनयं न करिष्यन्ति, पुनर्गुरवोऽपि शिष्याणां हितशिक्षाद्युपदेशं न दास्यंति, पुनर्मन्त्रतन्त्रौषधिज्ञानरत्नविद्याधनायुःफलपुष्परसरूपसौभाग्यसंपत्तिसंहननबलयशःकीर्तिगुणशोभादीनि वस्तूनि पञ्चमारके हानिं यास्यन्ति, ज्ञानादिधर्मो हीनतां यास्यति, वस्तुमानादि विपरीतं जनाः करिष्यन्ति, धर्मे मूर्खत्वं भविष्यति, देवानां मध्ये देवत्वं न भविष्यति, सतीनां मध्ये सतीत्वं न भविष्यति, निःसंगानां मध्ये वैराग्यं न भविष्यति, तपस्विनः स्पृहार्थं तपस्यां करिष्यन्ति, सत्यशौचतपः क्षमादिकानां हानिर्दिने दिने भविष्यति, धरित्र्यामल्पफलादीनि भविष्यन्ति ।

पुनः प्रभुर्वक्ति–हे गौतम ! सौराष्ट्रगुर्जरदेशस्य समीपे अनुक्रमेण अणहिल्लपाटणपुरे मन्निर्वाणात् एकोनसप्तत्यधिकषोडशशतवर्षे (१६६९) व्यतिक्रान्ते श्रीकुमारपालराजा भविष्यति, कीदृशः ? चौलुक्यकुलमध्ये चन्द्रसदृशो महाबलवान् अखण्डजिनाज्ञाधारको भविष्यति, पराक्रमेण, दानेन, कीर्तिगुणेन, न्यायेन, विवेकेन, धैर्येण राज्यलीलया सत्त्वगुणेनाद्वितीयो भविष्यति. उत्तरदिशायां यवनदेशं यावत्, पूर्वदिशि गंगापर्यन्तं, दक्षिणदिशि पश्चिमदिशि च समुद्रपर्यन्तं देशान् साधयिष्यति, एकादशशतानि हस्तिनः

करिष्यन्ति, पुनरग्रे गच्छता वने एकस्यां शकट्यां हस्तिनौ योजितौ दृष्टौ, एकस्यां शकट्यां गर्दभौ योजितौ दृष्टौ परं हस्तिनौ परस्परममिलितौ चलतः गर्दभौ परस्परं मिलितौ चलतः, एतादृशं विचारं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वदति हे राजन्! कलियुगे हस्तिसदृशा उत्तमकुले प्रसूता जनाः परस्परं क्लेशं करिष्यन्ति अन्योऽन्यमीर्ष्यां च करिष्यन्ति, पुनर्गर्दभसदृशा नीचकुलोत्पन्ना नीतिधारका भविष्यन्ति परस्परं स्नेहवन्तो भविष्यन्ति, प्रायेण अन्त्यकुलोत्पन्ना धरित्रीपतयो भविष्यन्ति, पुनर्हंससदृशा उत्तमकुलोत्पन्नाः दासत्वं करिष्यन्ति ॥ अन्यदा पंच पाण्डवा अनुक्रमेण वनवासमध्ये स्थिताः सन्तो युधिष्ठिरराज्ञा भीमादीनां चतुर्णां भ्रातॄणां चतुर्षु प्रहरेषु रात्रौ यामिकत्वेन रक्षिता, अथ प्रथमप्रहरे भीमो जागर्ति चत्वारो भ्रातरः सुप्ताः सन्ति तस्मिन् प्रस्तावे कलिरूपपिशाचस्य वचनं श्रुत्वा भीमः क्रोधभाग् बभूव पिशाचरूपकलेर्मारणार्थं धावितः, कलिना सह भीमो युद्धमकार्षीत्, क्रोधेन रक्तनेत्रे कृत्वा लीलया प्रेतरूपकलिना बलवान् भीमो निर्जितः, द्वितीयप्रहरे युद्धं कृत्वा कलिनाऽर्जुनोऽपि जितः, तृतीयप्रहरे नकुलोऽपि जितः, चतुर्थप्रहरे महदेवोऽपि जितः, अथ चत्वारोऽपि भ्रातरः पराजयं प्राप्ताः सन्तः सुप्ताः सन्ति, अस्मिन्नवसरे पश्चिमरात्रे युधिष्ठिरो जागृतवान् तदा कलिरूपपिशाच आगत्य युधिष्ठिरं वदति, हे राजन्! भवतः पश्यतो भवद्भ्रातरं मारयिष्यामि, एतादृशं प्रेतवचनं श्रुत्वा राजा युधिष्ठिर किंचिन्मात्रमपि क्रोधं न कृतवान्, प्रतिवचनमपि न दत्तवान्, क्षमा कृत्वा स्थितः, क्षमा कीदृशी? सर्वकल्याणकारिका सर्वसत्त्वप्रीतिजनिका सर्वधर्मप्रधाना एतादृशी क्षमा राज्ञामंगीकृता, तदा राज्ञ उपशमं दृष्ट्वा प्रेतः शान्ति गतवान् राज्ञो मुष्टिमध्ये चागतः, भ्रातरः सर्वेऽपि उत्थिताः, तदा रात्रिसंबन्धिनी सर्वाऽपि वार्ता युधिष्ठिरेण भ्रातॄणामग्रे कथिता, राज्ञा मुष्टिमुद्घाट्य प्रेतः स्ववशवर्त्तिभूतो दर्शितः, क्षमाप्रभावतोऽयं वशवर्ती जातः, एतादृशा अष्टोत्तरशतदृष्टान्ता लौकिकपुराणादावपि कलियु-

पुनः राजा युधिष्ठिरोऽग्रे गतः सन् कूपप्रणालिकाजलं कूपे पतत् दृष्ट्वा विस्मयं प्राप्तः सन् पृच्छति, तदा ब्राह्मणो वक्ति—हे राजन् ! कृषिवाणिज्यादिभिर्महाक्लेशात् लोका धनमुपार्जयिष्यन्ति तद्धनं सर्वं राजलोका ग्रहीष्यन्ति, सद्युगे राजानः स्वस्य धनं दत्वा प्रजां पुत्रवत् ज्ञास्यन्ति कलियुगे राजानः प्रत्युत प्रजाया धनं लास्यन्ति इति वैपरीत्यं भविष्यति। राजा-अग्रे गच्छन् वनखण्डमध्ये महाप्रधानचम्पकवृक्षावृतः पार्श्वतः एकः कण्टकवृक्षो दृष्टः, तदवसरे बहवो लोकाः कण्टकवृक्षस्य सुगन्धचोवाचन्दनविलेपनैः पूजां कुर्वन्तो दृष्टाः, चम्पकवृक्षस्तु सुगन्धपुष्पैर्युक्तः शाखाप्रतिशाखाभ्यां शोभमानोऽस्ति, तं त्यक्त्वा कण्टकवृक्षमर्चितं दृष्ट्वा राजा विस्मयं प्राप्तः सन् ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति-हे राजन् ! लोकाः कलियुगे गुणवन्तमुत्तमाचारवन्तं त्यक्त्वा पापीयसो दुर्जनस्य नीचस्य पूजां करिष्यन्ति, एतादृशं श्रुत्वा राजाऽग्रे गतः पुरतः एकां महतीं शिलां बालाग्रे बद्धामाकाशे लम्बायमानां दृष्ट्वा आश्चर्यं प्राप्तः सन् ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति—हे राजन् ! कलियुगे पापरूपां शिलामल्पधर्मरूपबालाग्रेण तरिष्यन्ति, अन्यच्च यदा बालरूपं धर्मं त्रोटयिष्यन्ति तदा समकालं मनुष्या ब्रुडिष्यन्ति। पुनः राजाऽग्रे गतः फलार्थं वृक्षस्य पीडां कुर्वन्तः केचिद् पुरुषा दृष्ट्वा राजा ब्राह्मणं पृच्छति—एतस्य फलं वद, ब्राह्मणो वक्ति-हे राजन् ! कलियुगे पिता वृक्षतुल्यः पुत्रः फलसदृशः—अयमत्र भावार्थः पुत्रफलार्थं वृक्षः पिता कष्टं सहिष्यति, पुनः राजाऽग्रे गतः एकस्मिन् स्वर्णकटाहे उत्तमान्नपाचनयोग्ये मांसं पच्यमानं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वदति-हे राजन् ! आत्महितकारिणं कुटुम्बं जनाः त्यक्ष्यन्ति, अन्यलोकार्थं स्वशीर्षं दास्यन्ति, बह्वीं प्रीतिं करिष्यन्ति उत्तमजनसंगं न करिष्यन्ति, अग्रे गत्वा सर्पस्य पूजां गरुडस्य चापूजां दृष्ट्वा ब्राह्मणं पृच्छति, विप्रोऽवादीत्-हे राजन् ! दयारहितो धर्मिजनः सर्पतुल्यः तस्य बहवो लोका आदरं करिष्यन्ति, सत्कारं च करिष्यन्ति, गरुडसदृशा गुणवन्त उत्तममहाधर्मज्ञास्तेषां निन्दां

लोकाः सर्वे प्रेतसदृशा भविष्यन्ति, राजलोका लुब्धा भविष्यन्ति, पुनरविवेकिनो लोका मूर्खाः कलाहीनाश्च भविष्यन्ति, दातारो दारिद्र्ययुक्ता भविष्यन्ति, लक्ष्मीधराः कृपणा भविष्यन्ति, पापिनो दीर्घजीवा भविष्यन्ति, उत्तमधर्मिणामायुः स्तोकं भविष्यति, राज्ञां कुलानि हीनानि भविष्यन्ति, पुनः सेवका उत्तमकुलवन्तो भविष्यन्ति, सज्जना मनुष्या दुःखिनो भविष्यन्ति, दुर्जना मनुष्याः सुखिनो भविष्यन्ति, एवं हे गौतम ! पंचमकालस्य स्वरूपं त्वं जानीहि ।

पुनर्लोकाः कलियुगस्य स्वरूपमेवं वदन्ति—द्वापरयुगे राजा युधिष्ठिरोऽभूत्, एकस्मिन् दिने स वने गतः, तत्र वने एका बृहती गौः लघुगोस्तनपानं कुर्वती दृष्टा, स्वसमीपे ब्राह्मणमिति पप्रच्छ—इदमाश्चर्यं विपरीतं पश्य, तदा ब्राह्मणो वदति–हे राजन् ! आगामिकाले कलियुगमध्ये हीनसत्त्वा मनुष्या भविष्यन्ति, लक्ष्मीं विना दुःखिनौ सन्तौ मातापितरौ कस्मैचित् धनवते कन्यां दत्त्वा धनं लात्वा ततः पश्चात् स्वनिर्वाहं करिष्यतः, एतादृशमुपनयं श्रुत्वा पुनः राजा युधिष्ठिरोऽग्रे गतः, पुरतः समानश्रेणिबद्धजलभृतानि त्रीणि सरांसि दृष्टानि, तत्र प्रथमैकसरसो जलमुच्छलन्न मध्यस्थं तटाकं त्यक्त्वा तृतीयसरसि पतति, मध्यस्थसरसि एकबिन्दुमात्रमपि न पतति; एतादृशमाश्चर्यं दृष्ट्वा राजा ब्राह्मणं पृच्छति इदं किंकारणम् ? ब्राह्मणो वक्ति–हे राजन् ! त्वं शृणु–आगामिकाले यथा प्रथमसरसो जलं द्वितीयं तटाकं त्यक्त्वा तृतीये पतितं तथा हे राजन् ! स्वस्य संबन्धिनं त्यक्त्वा अन्यलोकैः सह जनाः प्रीतिं करिष्यन्ति, पुनः राजा युधिष्ठिरोऽग्रे गच्छन्नेकमाश्चर्यं पश्यति जलेन क्लिन्नं वालुकासमूहं तस्य बहवो मनुष्याः संभूयरज्जूः कुर्वन्ति परं रज्जूः त्रुटति यत्ने कृतेऽपि न तिष्ठति, एतादृशं व्यतिकरं दृष्ट्वा राजा ब्राह्मणं पृच्छति, ब्राह्मणो वक्ति–हे राजन् ! कृषिकारकलोका बहुभिः क्लेशैः कलियुगे धनमुपार्जयिष्यन्ति, तद् धनं चौराऽग्निराजदंडप्रमुखस्य भयेन मनुष्याणामन्यत्र गमने कृतेऽपि विनाशं यास्यति,

हरिवंशकुलोत्पत्तिः ७, चमरेन्द्रोत्पातः ८, एकस्मिन् समयेऽष्टाधिकशतमुक्तिगमनं ९, असंयतिपूजा १०, एतानि दश वस्तूनि अनन्तकाले गते सति भवन्ति । बहवो लोकाः क्रोधवन्तो भविष्यंति, पुनर्दुःषमकालप्रभावतो लोका मर्यादां त्यक्ष्यन्ति, धर्मबुद्धेर्नाशो भविष्यति, लोका वक्रा मूर्खाश्च भविष्यन्ति, यथा कालहीनता भविष्यति तथा कुतीर्थे मतिं धारयिष्यन्ति, पुनर्लोकाः परोपकार–धर्मवर्जिता भविष्यन्ति, महान्ति नगराणि ग्रामसदृशानि भविष्यन्ति, ग्रामाः श्मशानसदृशा भयंकरा भविष्यन्ति, राजानः प्रजापालने यमसदृशा भविष्यन्ति, पुनर्हे गौतम ! धनवन्तो व्यवहारिणो निर्धना भविष्यन्ति, पुनर्देवा दर्शनं न दास्यन्ति, मनुष्याणां जातिस्मरणज्ञानादीनि न भविष्यन्ति, मनुष्या लज्जामर्यादारहिता भविष्यन्ति, पृथिव्यां दुष्टजीवा बहवो भविष्यन्ति, पुनर्लोकाः परस्परं विघ्नं दृष्ट्वा संतोषं प्राप्स्यन्ति, लोकानां पापकरणे चत्वारो हस्ता भविष्यन्ति, पुनर्धर्मकार्येऽलसाः प्रमादिनश्च भविष्यन्ति, आत्मनः कार्ये लोकानामुदरमध्ये प्रवेशं करिष्यन्ति, पुनर्हे गौतम ! परजीवानामुपद्रवकरणे तत्परा भविष्यन्ति, पुनः पंचमकालसंबन्धिनो जीवा महानिर्दया भविष्यन्ति, महादीर्घरोषधारका भविष्यन्ति, भद्रकजीवान् विप्रतारयिष्यन्ति, धर्ममूर्तिमन्तः स्तोका भविष्यन्ति, पापानामाकराः स्थाने बहवो भविष्यन्ति, अत्यन्त लोभवन्तो भविष्यन्ति, मिथ्यात्विनोऽभिमानिनोऽनाचारिणोऽन्यायिनश्च लोका बहवो भविष्यन्ति, पुनर्हे गौतम ! कुलवध्वो लज्जामर्यादारहिता भविष्यन्ति, वेश्यासमानाश्च भविष्यन्ति, राजा भृत्येभ्यो दण्डं दास्यति, पृथिव्यां तिर्मिंगिलन्यायो भविष्यति, चौरकुले जाताश्चौरा भवन्ति परं राजानोऽपि चौरसदृशा भविष्यन्ति, लोकानां धनमपहरिष्यन्ति, लोकान् दरिद्रिणः करिष्यन्ति, पुनर्हे गौतम ! पंचमकालमध्ये लोकानामग्निवृष्टी पीडां करिष्यति, गोप्रमुखाणां जीवानां बहुवधो भविष्यन्ति, जिनालयाः पतिष्यन्ति, पुनर्दुःखदारिद्र्यपद्रवमलोत्सर्गमारीप्रमुखैः कृत्वा धरित्री शून्या भविष्यति, देशो भंगं यास्यति,

स्वर्णपौरुषादिः सिद्धिं यास्यति, धैर्यादिगुणविख्यातस्य विक्रमादित्यस्य स्थाने स्थाने मनुष्या देवाश्च प्रशंसां करिष्यन्ति, पुनः स राजा सर्वलोकानां दानसन्मानादिकं कृत्वा सर्वाननृणीकरिष्यति, स्वनाम्ना च संवत्सरप्रवृत्तिं करिष्यति, यस्य देवा अपि स्तवनं करिष्यन्ति, महाबलवान् प्रजापालकः परदुःखनिवारकः परस्त्रीसहोदरो राजा विक्रमादित्यो भविष्यति, ततः पंचशतचतुरशीतिवर्षे (५८४) व्यतिक्रान्ते श्रीवज्रस्वामी भविष्यति, ततो दशमपूर्वार्धस्य कीलिकासंहननस्य च विच्छेदो भविष्यति, तदनन्तरं षोडशाधिकषट्शतवर्षे (६१६) पुष्पमित्रेण सार्धं नवमं पूर्वं विच्छेदं यास्यति, पुनर्मम निर्वाणाद् विंशत्यधिकषट्शतवर्षे (६२०) आचार्यादयो ग्राममध्ये स्थास्यन्ति (?), मम निर्वाणाद् नवाधिकषट्शतवर्षे (६०९) रथनूपुरनगराद् दिगम्बरमतोत्पत्तिर्भविष्यति, श्रीविक्रमादित्यात् पंचत्रिंशदधिकशतवर्षे (१३५) गते शाकी राजा शालिवाहनो भविष्यति, पंचाशीत्यधिकपंचशतवर्षे (५८५) गते हरिभद्रसूरिर्भविष्यति अनेकग्रन्थकर्ता महाप्रभावको, मन्निर्वाणात् त्रिनवत्यधिकनवशतवर्षे (९९३) कालिकाचार्यो भविष्यति, यस्येन्द्रो वन्दनां करिष्यति, यः कालकसूरिः पर्युषणापर्व पंचमीतः चतुर्थ्यां कारणादानीतवान्, मन्नि[illegible]णात् सप्तत्यधिकद्वादशशतवर्षे (१२७०) व्यतिक्रान्ते बप्पभट्टिसूरिर्भविष्यति सर्वविद्याविशारदः, तद्वाक्याद् गोपपर्वते आमराजा जिनालयं कारिष्यति, तत्र सार्धत्रिकोटिस्वर्णप्रतिमां स्थापयिष्यति। मन्निर्वाणात् त्रयोदशशतवर्षे (१३००) बहवो मतभेदा भविष्यन्ति, बहुमोहस्य कारणात् दुःषमकालप्रभावतश्चानेकगच्छभेदा भविष्यन्ति, केचित् तपोऽहंकारं कारिष्यन्ति, केचिच्च धर्मक्रियायां शिथिला भविष्यन्ति, क्रियावन्तोऽपि साधवः परस्परं क्लेशं करिष्यन्ति। पुनरस्यामवसर्पिण्यां दश अच्छेरका जाताः तानाह—

समवसरणे उपसर्गः १, गर्भापहारः २, स्त्रीतीर्थंकरः ३, परिषदभावः ४, कृष्णस्यामरकंकागमनं ५, चन्द्रसूर्यमूलविमानागमनं ६,



भ्रूरक

श्रेणिः ५, उपशमश्रेणिः ६, केवलज्ञानम् ७, परिहारविशुद्धि-सूक्ष्मसंपराय-यथाख्यातचारित्राणि ८, सिद्धिगतिः ९, जिनकल्पकः १०, एतानि दश वस्तूनि जम्बूस्वामितो विच्छेदं यास्यन्ति, ततो दुःषमकालप्रभावतश्चतुर्दशपूर्वधारी जम्बूस्वामि प्रतिबोधकः निजपट्टप्रभावकः श्रीप्रभवस्वामी भविष्यति, तत्पट्टे चतुर्दशपूर्वधरः दशवैकालिककर्ता मनक-पिता श्रीशय्यम्भवसूरिः भविष्यति, तत्पट्टे चतुर्दशपूर्वधारी यशोभद्रसूरिर्भविष्यति, तच्छिष्यौ सम्भूतिविजय-भद्रबाहुनामानौ चतुर्दशपूर्वधरौ भविष्यतः, ततो मम निर्वाणात् सप्तत्यधिकशतवर्षे ( १७० ) अनेकशास्त्रकर्ता भद्रबाहुः स्वर्गे यास्यति, ततो मम निर्वाणात् पंचदशाधिकद्विशतवर्षे ( २१५ ) चतुर्दशपूर्वधारी सम्भूतिविजयशिष्यः श्रीस्थूलिभद्रो देवलोकं यास्यति, ततः प्रथमं संहननं वज्रऋषभनाराचाख्यं विच्छेदं यास्यन्ति, ततोऽर्थतः चतुष्पूर्व-सूक्ष्मसंपराय-महाप्राणायामध्यानाख्यानि एतानि विच्छेदं यास्यन्ति, ततः मन्निर्वाणाद् त्रिशतवर्षे ( ३०० ) उज्जयिन्यां नगर्यां सम्प्रति राजा भविष्यति, स च आर्यसुहस्तिसूरिणामुपदेशाद् जातिस्मरणज्ञानमवाप्य जैनधर्ममंगीकरिष्यति, स्वभुजबलात् त्रिखण्डभोक्ता भविष्यति, ज्ञानवान् दानवान् न्यायी धर्मज्ञो विनयवान् पराक्रमी च भविष्यति, मुक्ताफलवद् निर्मलजिनालयैः कृत्वा धरित्रीं देदीप्यमानां करिष्यति, पुनः स राजा अनार्यदेशे लोकानामुपकारार्थं सम्यक्त्वधारिणां जीवाजीवादिनवतत्त्वविदामुपदेशदानार्थं तादृशानां श्रावकाणां धर्मसंयोगं कारयिष्यति, ततो महासंविग्नगीतार्थानां साधूनां म्लेच्छधरित्र्यां विहारं कारयिष्यति, अनया रीत्या तीर्थंकराणां धर्मस्य सर्वदेशे प्रवृत्तिं करिष्यति, एतादृशो महादृढधर्मा अनुक्रमेण स्वर्गं यास्यति. पुनर्मन्निर्वाणात् सप्तत्यधिकचतुःशतवर्षे ( ४७० ) उज्जयिन्यां श्रीविक्रमादित्योराजा भविष्यति, श्रीसिद्धसेनदिवाकराचार्यस्योपदेशं श्रुत्वा जिनशासनस्योपरि भक्तिमान् भविष्यति, सम्यक्त्वं सम्यग्रीत्या पालयिष्यति, तस्य मन्त्रसिद्धा अग्निवेतालाद्यनेकदेवाः साहाय्यं करिष्यन्ति, विद्या

न्तु कुदर्शनस्य पूजादि भविष्यति ८, नवमे शुष्क सरोवरं दृष्टं तेन यत्र यत्र देशे जिनानां कल्याणकानि तत्र तत्र धर्महानिर्भविष्यति ९, दशमे सुवर्णपात्रे क्षीरं भक्षयन् श्वा दृष्टस्तेन उत्तमा लक्ष्मीरधमगृहे गमिष्यति १०, एकादशे गजारूढो वानरो वनचरो दृष्टः तेन सुखारूढा दुर्जना भविष्यन्ति, इक्ष्वाकुवंशीयानां यादवप्रमुखाणां च हानिर्भविष्यति ११, द्वादशे समुद्रो मर्यादां मुंचन् दृष्टः, तेन राजानोऽन्यायकर्तारो भविष्यन्ति, क्षत्रियाश्च कुमार्गगामिनो भविष्यन्ति १२, त्रयोदशे महारथे वत्सा युक्ता दृष्टाः, तेन वृद्धावस्थायां चारित्रं जना न ग्रहीष्यन्ति, परं वत्सतुल्या लघुवयसः साधवो भविष्यन्ति, ये च वैराग्यभावेन चारित्रं ग्रहीष्यन्ति ते च प्रमादिनो भविष्यन्ति १३, चतुर्दशे महार्घ्ये रत्नं तेजोहीनं दृष्टम्. तेन भरते ऐरवते च साधवोऽसमाधिकराः कलहकरा उपद्रवकराश्च भविष्यन्ति, तथा श्रमणा अपि स्तोका भविष्यन्ति १४, पंचदशे राज्ञः कुमारो वृषभारूढो दृष्टः, तेन क्षत्रिया मिथ्यात्ववासिनो भविष्यन्ति १५, षोडशे गजकलभयुगलं युद्धं कुर्वद् दृष्टम् तेन मुनिवरा अल्पस्नेहा अकालव्यसनिनोऽहर्निशं युद्धकराश्च भविष्यन्ति, गुरुशुश्रूषाकरा न भविष्यन्ति १६, एवं श्रुत्वा चन्द्रगुप्तो नाम राजाऽनशनं गृहीत्वा धर्मध्यानेन स्वर्गं गतः। इति षोडशस्वप्नविचारः कथितः। एतादृशं प्रभोर्वाक्यं श्रुत्वा गौतमस्वामी चित्ते विस्मयं विधाय प्रभोर्वन्दनां कृत्वा भाविस्वरूपं पप्रच्छ—अहो स्वामिन्! लोकालोकप्रकाशक! पंचम—षष्ठारकयोः स्वरूपं कथय, प्रभुर्वक्तिस्म—हे गौतम! त्वं सावधानीभूय शृणु—मम निर्वाणात् त्रिवर्षसार्धाष्टमासे व्यतिक्रान्ते चतुर्थारक उत्तरिष्यति, अग्रे च पंचमारक आयास्यति, ततो मम निर्वाणाद् द्वादशवर्षे व्यतिक्रान्ते तव मोक्षो भविष्यति, ततोऽस्मन्निर्वाणाद् विंशतिवर्षे गते सुधर्मस्वामिनो मोक्षो भविष्यति, ततोऽस्मन्निर्वाणाच्चतुष्षष्टिवर्षे गते जम्बूर्मुक्तिं यास्यति, ततो जम्बूस्वामितो दश वस्तूनि विच्छेदं यास्यन्ति, तान्याह—आहारकशरीरं १, मनःपर्यवज्ञानम् २, पुलाकलब्धिः ३, परमावधिज्ञानं ४, क्षपक—

न्ताए वट्टमाणस्स पच्छिमे समये सोलससुमिणा दिट्ठा—तत्थ पढमे सुमिणे कप्परुक्खस्स साहा भग्गा १, बीए अकाले सूरो अत्थमिओ २, तइए चंदो सयच्छिड्डीभूओ ३, चउत्थे भूया नच्चंति ४, पंचमे दुवालसफणो कण्हसप्पो दिट्ठो ५, छट्ठे आगयं विमाणं पडियं दिट्ठं ६, सत्तमे असुइट्ठाणे कमलं संजायं ७, अट्ठमे खज्जोओ उज्जोअं करेइ ८, नवमे महासरोवरं सुक्कं दक्खिणदिसाओ थोवजलं लभन्ति ९, दसमे सुनहो सुवण्णपत्ते पायसं भक्खेइ १०, इक्कारसमे हत्थिआरूढो वणचरो दिट्ठो ११, दुवालसमे सायरं मंजायं मुंचइ १२, तेरसमे महारहे वच्छा जुत्ता दिट्ठा १३, चउदसमे महग्घं रयणं तेअहीणं दिट्ठं १४, पनरसमे रायकुमारो वसहारूढो दिट्ठो १५, सोलसमे गयकलहजुयला जुज्झंता दिट्ठा १६, एएण सुमिणाणुसारेण सासणे किं किं भविस्सइ ? इइ चंदगुत्तस्स रायस्स वयणं सुच्चा भद्दबाहुगणहरो युगप्पहाणो भवोदहितारगो चंदगुत्तस्स संघसमक्खं भणइ—चंदगुत्ता ! सुमिणाणुसारेण अत्थं कहेमि तं जहा''—प्रश्नसूत्रं सुगमत उत्तरसूत्रं व्याख्यायते-षोडशस्वप्नानां मध्ये प्रथमं तावत् चन्द्रगुप्तेन राज्ञा कल्पवृक्षस्य शाखा भग्ना दृष्टा, तस्य फलम् अतः पश्चात् कोऽपि राजा संयमं न ग्रहीष्यति १, द्वितीयस्वप्ने सूर्यस्याकाले एवास्तत्वं दृष्टं तेन केवलज्ञानं विच्छेदं यास्यति २, तृतीये चन्द्रः शतच्छिद्रो दृष्टस्तेन एकस्मिन् धर्मेऽनेके मार्गा भविष्यन्ति ३, चतुर्थे भूता नृत्यन्तो दृष्टास्तेन कुमतिजना भूता इव नर्त्स्यन्ति ४, पंचमे द्वादशफणः कृष्णसर्पो दृष्टस्तेन द्वादश वर्षाणि यावद् दुर्भिक्षं भविष्यति, कालिकसूत्रप्रमुखाणि श्रुतानि विच्छेदं यास्यन्ति, चैत्यद्रव्यधारिणो भिक्षुकाश्च, तत्र ये साधुधर्मकांक्षिणः ते सर्वे दक्षिणस्यां दिशि वलभ्यां गमिष्यन्ति ५, षष्ठे विमानं पतितं दृष्टं तेन जंघाचारणा-विद्याचारणाश्च साधवो भरते ऐरावते च नाऽऽगमिष्यन्ति ६, सप्तमे कचवरधरित्र्यां कमलमुद्गतं दृष्टं तेन धर्मश्चतुर्णां वर्णानां मध्ये वैश्यवर्गमध्ये भविष्यति, सूत्ररुचिश्चाल्पजनानां भविष्यति, ७, अष्टमे खद्योत उद्योतं करोति, तेन जिनधर्मे उदयपूजासत्कारो न भविष्यति पर-

अमात्यं च तथाविधचेष्टारहितं ज्ञात्वा ते ग्रथिलाः सर्वे विचारयन्ति—राजाऽमात्यौ ग्रथिलौ जातौ अतएव अस्माकं कार्यं न कुर्वन्ति, अत एतौ उत्थाप्य अन्यौ राजामात्यौ करिष्यामः, एतादृशं ग्रथिललोकानां विचारं श्रुत्वा अमात्यो राजानं वक्तिस्म, एते सर्वेऽपि लोका आवामुत्थाप्य अन्यौ राजामात्यौ स्थापयिष्यन्ति तदा कमपि उपायं कृत्वा आवयोः रक्षा कार्या, तदा राजा अमात्यं कथयतिस्म, भवता कश्चिदुपायो विधेयो येनाऽऽवयो रक्षा स्याद् , तदा विचार्य अमात्यो वदति स्म–हे राजन् ! अन्यः कश्चिदुपायो नास्ति अत आवामपि ग्रथिलौ भवाव तदा इदं राज्यं स्थास्यति, इति विचार्य राजामात्यौ जानन्तौ अपि ग्रथिलौ भूत्वा, एभिः सार्धम् आत्मराज्यरक्षार्थं मिलितौ, ततः कियति दिने गते सति पुनः सुवृष्टिर्जाता तदा नवीनोदकस्य पाने सति सर्वे लोकाः सावधाना जाताः। एवं दुःषमकाले क्रियावन्तो गीतार्था अपि हीनाचारिभिः सार्धं सदृशीभूय विचरिष्यन्ति। एतादृशं स्वप्नफलविचारं श्रुत्वा गृहस्थावासतः उद्विग्नीभूय श्रीवर्धमानस्वामिसमीपे व्रतमंगीकृत्य पुण्यपालो मोक्षसुखभाग् बभूव। अत्र केचिद् श्रीभद्रबाहुस्वामिना उक्तान् अपि स्वप्नान् व्याख्यायन्ति, तथाहि–"ते णं काले णं, ते णं समए णं पाडलिपुरे नाम नयरे होत्था, जहा णं चंपा तहा भणियव्वा, तत्थ णं पाडलिपुरे नयरे पाडलनामवणसंडे होत्था, तत्थ णं पाडलिपुरे चन्दगुत्ते नाम राया होत्था, ते णं कालेणं ते णं समए णं चन्दगुत्तनामराया समणोवासगो अभिगयजीवाजीवो जाव अट्ठिमिज्जापवयणरागरत्तो, अह अण्णया कयावि पक्खियपोसहम्मि पडिजागरमाणस्स सुहपत्तेसु ओहीरमाणे ओहीरमाणे सोलससुविणा दिट्ठा, पासिता, चिंता समुप्पन्ना, अह कमेण दिवायरे उट्ठिए पोसहं पारेइ। ते णं काले णं, ते णं समए णं संभूयविजयसीस्से भद्दबाहुनाम गणहरे जुगप्पहाणे गामाणुगामं विहरमाणे पंचसयसमणपरिवरिया पाडलिपुरे पाडलिवणसंडे समोसरिए, राया आगओ जहा कोणिए, पंचविहेणं अभिगमेणं वन्दणेणं सोलससुमिणाणं अत्थं पुच्छइ—भयवं ! अज्ज रयणीए मम धम्मचि-

युक्ता नाधमकुले, परन्तु धर्मोत्पत्तिः कालप्रभावतो नोत्तमकुले भविष्यति, इति षष्ठस्वप्नफलम् । यथा कश्चिद् मन्दबुद्धिः कृषिकारो धान्यबीजमूषरक्षेत्रे वपति तथा मूर्खबुद्धिमन्तः पुमांसः पात्रापात्रमनालोक्य पात्रबुद्ध्या कुपात्रे दानं दास्यन्ति, इति सप्तमस्वप्नफलम् । अष्टमस्वप्नफलम्—स्वर्णकलशसदृशा ज्ञानादिगुणयुक्ताः साधवः स्तोका भविष्यन्ति न च तेषा पूजाप्रभावनामपि कोऽपि करिष्यति, परन्तु ये बाह्याऽडम्बरवन्तो ज्ञानक्रियारहिताः साध्वाभासाः तान् लोकाः पूजयिष्यन्ति, गीतार्था अपि साधवो हीनाचारिभिः सह मिलिताः चलिष्यन्ति, यथा बहून् ग्रथिलान् लोकान् दृष्ट्वा सज्जनलोका अपि तेषां मध्ये मिलिताः सन्तः जानन्तोऽपि स्वयमात्मजीवितरक्षार्थं ग्रथिला भविष्यंति तथा । अथ तत्कथा—पृथिवीपुरे नगरे पूर्णभद्रनामा राजा आसीद् , तस्य महाबुद्धिनिधानः चतुरः सकलकार्यकुशलः सुबुद्धिनामा मन्त्रीश्वरोऽभूद् ; अथैकदा प्रस्तावे राजसभामध्ये लोकदेवनामा नैमित्तिकः समागतः, तदा अमात्येन पृष्टं, हे नैमित्तिकचूडामणे ! आगामिकालस्य शुभाशुभवार्तां कांचित् प्रकाशयतु, तदा नैमित्तिकेन निजनिमित्तशास्त्रं सम्यक् पर्यालोच्य स्वज्ञानबलात् कथितम्—हे मन्त्रीश्वर ! अतो दिनाद् एकस्मिन् मासे मेघवृष्टिर्भवियषति, तज्जलपानं च ये करिष्यन्ति ते सर्वे मनुष्या ग्रथिलाः भविष्यन्ति, ततः पश्चात् कियति दिवसे शुभा वृष्टिर्भविष्यति, तज्जलपानाच्च पुनः सर्वे सावधाना भविष्यन्ति; एतादृशं नैमित्तिकस्य वचनं श्रुत्वा राजामात्याभ्यां नगरमध्ये घोषणा कारिता । यत् सर्वैः लोकैः पानीयस्य संग्रहः कर्तव्यः, तदनन्तरं सर्वैरपि राजवचनं श्रुत्वा पानीयस्य संग्रहः कृतः । अथ नैमित्तिककथनानुसारेण वर्षा जाता, तदा सर्वैरपि लोकैः वर्षापानीयस्य पानं न विहितम् , कियति दिवसे गते पूर्वसंगृहीतं जलं यदा सम्पूर्णं जातं तदा राजाऽमात्याभ्यां विना सर्वैः सामन्तादिभिरपि वर्षापानीयं पीतम् , तेन च सर्वग्रामो ग्रथिलः जातः अथ सर्वे लोका एकत्रीभूय नग्नाः सन्तः नृत्यन्ति हसन्ति अन्याश्च कुचेष्टाः कुर्वन्ति, राजामात्याभ्यां विना सर्वे तादृशं कुर्वन्तः राजानम्

हे स्वामिन् ! अद्य रात्रौ मया अष्टौ स्वप्ना दृष्टाः,ताननुक्रमेण भवतामग्रे कथयामि—जीर्णशालायां स्थितो हस्ती दृष्टः १, कपिश्चपलतां कुर्वन् दृष्टः २, क्षीरवृक्षः कण्टकैर्व्याप्तो दृष्टः ३, चतुर्थे च स्वप्ने काको दृष्टः ४, पञ्चमे मृतः सिंहो भयं कुर्वन् दृष्टः ५, षष्ठे स्वप्नेऽशुचिभूमिकायामुत्पन्नमरविन्दं दृष्टम् ६, सप्तमे स्वप्ने ऊषरक्षेत्रे बीजमुप्तं दृष्टम् ७, अष्टमे स्वप्ने स्वर्णकलशो म्लानो दृष्टः ८, इति राज्ञा उक्ते एतेषां च फले पृष्टे प्रभुर्वक्ति–हे राजन् ! एषां फलमेकाग्रचित्तेन शृणु—अस्मिन् पञ्चमारके दुःख-दारिद्र्य-रोग शोक-भयैर्व्याप्तो गृहस्थाश्रमो जीर्णशालासदृशो भविष्यति; यस्मिन् गृहस्थरूपो हस्ती रक्तः सन् स्थास्यति; दुःखं च सुखं कृत्वा मानयिष्यति परमुत्तमसुखदात्रीं व्रतशालां नांगीकरिष्यति, इति प्रथमस्वप्नफलम् । पुनः पञ्चमकाले कपिवत् चपला अल्पसत्त्वा जीवा ज्ञानक्रियायामादरभाजो न भविष्यन्ति, साधवश्च शिथिलाचारा भविष्यन्ति, ये पुनः दृढव्रतधारका धर्मकार्ये शिक्षां दास्यन्ति तेषां हास्यं च करिष्यन्ति, यथा ग्रामीणलोका नगरस्थलोकानां हास्यं कुर्वन्ति; तथा करिष्यन्ति, इति द्वितीयस्वप्नफलम् । तथा ज्ञाने क्रियायां च भक्तिमन्तो जिनशासनोन्नतिकारकाः सप्तक्षेत्रीवित्तव्ययविधायकाः शुभगुणवन्तश्चारित्ररागिणः क्षीरवृक्षतुल्या ये श्रावकास्तान् वेषमात्रधारिणोऽहंकारवन्तो गुणवत्साधुपूजामसहमाना लिंगिनः कण्टकतुल्याः रोधयिष्यन्ति, इति तृतीयस्वप्नफलम् । यथा अतिस्वच्छजलभृतां वापीं दृष्ट्वा काको न तत्र रागं करोति, एवं ज्ञानक्रियायुक्तान् अपि साधून् स्वगच्छे दृष्ट्वाऽपि रागं न साधवः प्राप्स्यन्ति, यथा काकस्य रागं न वापी प्राप्नोति तथा साधवोऽपि गच्छस्य रागं न करिष्यन्ति इत्यर्थः । परन्तु यत्र गच्छे मन्दाऽऽचाराः साधवः तत्र सुन्दरं स्वगच्छं त्यक्त्वा यास्यन्ति आत्मनः पण्डितं मन्यमानाः, इति चतुर्थस्वप्नफलम् । जातिस्मृत्यादिरहितं मृतसिंहतुल्यं जिनदर्शनं न परतीर्थिकात् पराभवं प्राप्स्यति परं परदर्शनानां भयं करिष्यन्ति, इति पञ्चमस्वप्नफलम् । पद्महृदे कमलोत्पत्तिर्युक्ता, न अशुचिभूमौ, एवं धर्मोत्पत्तिरपि उत्तमकुले

आगतः, तत्र बहुलविप्रगृहे परमान्नस्य पारणं चक्रे, तत्र पञ्च दिव्यानि प्रादुर्भूतानि । तत्र च सार्धद्वादशस्वर्णकोटीनां देवैर्वर्षा कृता ।
अनन्तरं क्रमेण विहरतः श्रीवीरप्रभोः गोशालक-चण्डकौशिकसर्प-शूलपाणियक्ष-संगमदेव-कटपूतनाव्यन्तरीप्रमुखैः बहव उपसर्गाः
कृताः, तथापि प्रभुर्ध्यानात् किंचिन्मात्रमपि न चचाल; मेरुवन्निष्प्रकंप आसीत्, श्रीवीरप्रभोः चातुर्मासी षण्मासी-द्विमास्यादि प्रचण्डतपः
क्रियायामुद्यतस्य पक्षाधिकसार्धद्वादशवर्षाणि अतिक्रान्तानि । तस्मिन् समये जृम्भिकग्रामे ऋजुवालुकानदीतीरे श्यामाककुटुम्बिनः
क्षेत्रस्य समीपे शालवृक्षस्याधोभागे गोदोहासनेन स्थितस्य षष्ठतपोयुक्तस्य वैशाखशुक्लदशम्यां तृतीयप्रहरे शुक्लध्याने वर्तमानस्य
श्रीवीरप्रभोश्चतुर्णां घातिकर्मणां क्षये सति केवलज्ञानं केवलदर्शनं च समुत्पन्नम् । तत एकादश्यां मध्यमपापायां महासेनवने तीर्थं
प्रवर्तितम्, शक्रादिदेवैरेकत्रीभूय समवसरणं रचितम्, पश्चाद् इन्द्रभूत्याद्येकादश गणधराः श्रीवीरेण स्थापिताः । अथ प्रभोः चतु-
र्दशसहस्रमिताः साधवः संजाताः, चन्दनबालादिषट्त्रिंशत्सहस्रमिताश्च साध्व्योऽभूवन्, शंख-शतकादि एकोनषष्टिसहस्राधिकलक्ष-
प्रमाणाः श्राद्धाः, सुलसा-रेवतीप्रमुखाष्टादशसहस्राधिकत्रिलक्षप्रमाणाः श्राविकाश्च संजाताः । अथ प्रभोश्चतुर्मासीनां संख्या कथ्यते—
दीक्षाऽनन्तरं प्रथमचतुर्मासी अस्थिग्रामे शूलपाणियक्षगृहे कृता, त्रिचतुर्मासी चम्पानगर्याम्, विशालायां-वाणीयग्रामे द्वादश चतु-
र्मास्यः कृता, राजगृहनगर्यां नालन्दपाटके चतुर्दश चतुर्मास्यः, षट् चतुर्मास्यः मिथिलानगर्यां भगवता कृताः, द्वे चतुर्मास्यौ भद्रिकानगर्यां
कृते, एका चतुर्मासी आलम्भिकानगर्यां कृता, एका चतुर्मासी म्लेच्छभूमिकायां कृता, एका चतुर्मासी श्रावस्तीनगर्यां कृता, एका च मध्यमपा-
पायां हस्तिपालराज्ञः सभायामन्तिमा कृता, तत्र अन्तिमचातुर्मास्यां श्रीवीरप्रभुः स्वस्यायुषोऽन्तं ज्ञात्वा भव्यलोकोपकारार्थं षोडशप्रहरान् या-
वद् देशनां दत्तवान्, तस्मिन्नवसरे पुण्यपालराजा प्रभोर्वन्दनार्थमागतः, श्रीवीरप्रभोर्वन्दनां कृत्वा हस्तद्वयं सम्पुटीकृत्य इति-वक्ष्यमाणं पृष्टवान्-

चतुर्दिक्कुमारीणामासनानि चकम्पिरे, अवधिना प्रभोर्जन्म ज्ञात्वा अत्यन्तप्रमुदिताः सन्त आगत्य जन्मकार्यं कुर्वन्ति। तदनन्तरं-चतुष्षष्ठिसुरेन्द्राणामासनानि चकम्पिरे, ततस्तेऽपि अवधिना विज्ञाय अत्यन्तप्रमुदिताः सन्त आगत्य त्रिःप्रदक्षिणीकृत्य जिनाम्बां जिनं च नत्वा मातरमवस्वापिनीं निद्रां दत्त्वा प्रभुं गृहीत्वा मेरुपर्वतोपरि गत्वा स्नात्रमहोत्सवमहंपूर्विकया चक्रुः। पश्चात् मातुः समीपे स्थापयित्वा मातरवस्वापिनीं निद्रां संहृत्य नमस्कृत्य स्वस्थानं जग्मुः। अथ यस्माद् दिनात् प्रभुर्गर्भे आगतस्तस्माद् दिनाद् राजा धनधान्यैर्वृद्धिमाप, स्वर्णरत्नादीनां च वृद्धिः संजाता. ततो गुणनिष्पन्नं सर्वस्वजनसमक्षं माता-पितृभ्यां द्वादशे दिने वर्धमान-कुमार इति नाम प्रदत्तम् , देवैश्च अनन्तसत्त्वमनन्तधैर्यं दृष्ट्वा महावीर इति नाम विदधे। अथ भोगसमर्थं ज्ञात्वा पित्रा परं प्रमोदतो यशोमतीनाम्न्या राजकन्यया सह पाणिग्रहणं कारितम्। अथ प्रभोः सुपार्श्वनामा पितृव्यः, नन्दिवर्धननामा ज्येष्ठो भ्राता, सुदर्शना-नाम्नी भगिनी, यशोमती नाम्नी पत्नी, प्रियदर्शनानाम्नी च पुत्री आसीद्। श्रीवीरप्रभुः अष्टाविंशतिवर्षाणि यावद् गृहावासे तस्थौ। भगवता पूर्वं गर्भे एवाभिग्रहः कृतोऽभूद्यत् जीवतोः सतोः मातापित्रो मया दीक्षा न गृहीतव्या इति। अथ मातापितृभ्यां देवलोके प्राप्ते अभिग्रहं पूर्णं सञ्जातं ज्ञात्वा प्रभुर्दीक्षां ग्रहीतुं तत्परोऽभूत् , तदा नन्दिवर्धनराज्ञ आग्रहात् पुनरपि वर्षद्वयं गृहस्थावासे तस्थौ; तत्र सांवत्सरिकं दानं दत्तम्। अथ लोकान्तिकदेवा आगत्य जानन्तमपि प्रभुं दीक्षावसरं ज्ञापयन्ति–'अहो स्वामिन् ! धर्मतीर्थ-प्रवृत्तिं कुरु' इति देववचनं श्रुत्वा प्रभुः षष्ठतपसा संयुतः चन्द्रप्रभानाम्नीं शिबिकामारुह्य देवमनुष्यपरिकरेण युतः क्षत्रियकुण्डनगरतो निःसृत्य ज्ञातवनखण्डे आगत्य शिबिकातः उत्तीर्य मार्गशीर्षकृष्णदशम्यामपराह्णे एकाकी एकदेवदूष्येण वस्त्रेण सहितः दीक्षां जग्राह। तस्मिन् समये चतुर्थं मनःपर्यवज्ञानमुत्पन्नम्। अथ दीक्षां गृहीत्वा प्रभुरन्यत्र विजहार। प्रव्रज्यादिनाद् द्वितीये दिने कोल्लाकसन्निवेशग्रामे

प्राणतनामदशमदेवलोकस्य पुष्पोत्तरविमानाच्च्युतः, आषाढशुक्लषष्ठीदिने उत्तराफाल्गुनीनक्षत्रे चन्द्रयोगे आगते सति क्षत्रियकुण्डग्रामनगराधिपतिश्रीसिद्धार्थराज्ञो भार्यायाः त्रिशलायाः कुक्षावुत्पन्नः। यस्यां रात्रौ भगवानुत्पन्नः तस्यां रात्रौ गर्भप्रभावात् त्रिशलाराज्या चतुर्दश स्वप्ना दृष्टाः, तानाह-सिंहः, गजः, वृषभः, लक्ष्मीः, पुष्पमाला, चन्द्रः, सूर्यः, ध्वजः, पूर्णकलशः, पद्मसरः, समुद्रः, देवविमानम्, रत्नराशिः, निर्धूमाग्निश्च । एवमेते स्वप्नाः क्रमेण दृष्टाः ❀ ततः चैत्रशुक्लत्रयोदश्यामर्धरात्रे श्रीवीरप्रभोः जन्म जातम् , तस्मिन् समये पट्पंचा-

*—अत्र सामान्येन नाममात्रेण संक्षिप्तं श्रीवीरचरित्रं दर्शितम् , अतएव देवलोकात् च्युत्वा आषाढशुक्लषष्ठ्यां देवानंदागर्भागमनं तथैव द्व्यशीतिदिनव्यतीते इन्द्रेण त्रिशलागर्भे अवतारितः, ( गर्भापहारः कारितः, इत्यर्थः ) एष च विशेषार्थो न दर्शितः। जैनसिद्धांते विशेषार्थे विद्यमानेऽपि सामान्यव्याख्याऽवसरे विशेषार्थस्य व्याख्यानं न भवति, यथा-कल्प-आवश्यक-आचारांगादौ आगमपंचांगीशास्त्रेषु ' देवानंदागर्भात् द्व्यशीतिदिनव्यतीतेषु सत्सु हरिणेगमेषिदेवेन त्रिशलागर्भे स्थापितः श्रीवीरप्रभुः ' एवद्विशेषव्याख्याविद्यमानेऽपि पंचाशकसूत्रवृत्तौ सामान्यव्याख्याऽवसरे तस्योल्लेखो न कृतः, तेन तस्य तत्र अभावो न भवति , तथैव अत्राऽपि देवानंदागर्भागमने विद्यमानेऽपि तस्योल्लेखो न कृत,, तथापि तस्य अभावो न भवति, अतएव अत्र सामान्यविशेषापेक्षया तद् अवगंतव्यम् । किमुक्तं भवति श्रीवर्द्धमानस्वामिनः विशेषतः षट्सु कल्याणकेषु आगमानुसारेण विद्यमानेषु अपि, अत्र सामान्यापेक्षया त्रिशलागर्भागमन-जन्म-दीक्षादिपंचकल्याणकानि उक्तानि, तथैव पंचाशकसूत्रवृत्तावपि-सर्वजिनेंद्रापेक्षया च्यवन—जन्म-दीक्षादिपंचकल्याणकानि-सामान्येन उक्तानि । परं च कल्प-स्थानांग-आचारांग-आवश्यकनिर्युक्ति-चूर्ण्यादिआगमेषु-महापुरुषचरित्र-वीरचरित्र-त्रिषष्टिशलाकापुरुषचरित्र-कल्पनिरुक्त-टिप्पणकादि प्राचीनशास्त्रेषु च विशेषेण च्यवन गर्भसक्रमण-जन्म-दीक्षादिषट्कल्याणकानि दर्शितानि, तेनात्र विसंवादो न संभाव्यः समवायांगसूत्रवृत्ति-आवश्यकचूर्णि-लोकप्रकाश-दशाश्रुतस्कंधादिशास्त्रानुसारेण श्रीवीरस्य च्यवनद्वयस्य संसिद्धत्वात्, सामान्यविशेषापेक्षया च अस्य विशेषनिर्णयो कल्पद्रुमकलिकाया प्रथमव्याख्यानात् , अस्मत् निर्मितबृहत्पर्युषणानिर्णयस्योत्तरार्धाच्च अवगंतव्य इति मणिसागरः।

विहरन् जीवितस्वामिश्रीमहावीरप्रतिमावन्दनार्थं गतः, एतस्मिन् प्रस्तावे संप्रति राजा राजमार्गे गच्छन् सुस्थितसूरिं दृष्ट्वा जातिस्मरणभाग् बभूव । ततः राजा समीपे आगत्य बहुभक्तिपूर्वकं श्रीगुरुं ननाम । करद्वयं संयोज्य राजा गुरुं प्रति वक्तिस्म–'हे स्वामिन् ! मां जानीथ' इति पृष्टे गुरुराह–हे राजन् ! भवन्तं को नाम न जानाति ?; ततो राजा पुनरुवाच-हे ज्ञानसमुद्र ! ज्ञानविशेषेण भवताऽहमुपलक्षितो न वा ? इति मया पृच्छयते, तदा सूरिश्चमत्कारं प्राप्य श्रुतज्ञानोपयोगं दत्त्वा उवाच–भो राजन् ! त्वं पूर्वभवे संवेगवानस्माकं शिष्यो बभूव, उत्तमदीक्षाप्रभावतो भवान् राजा जातः, एषा च सम्पत् प्राप्ता । एतादृशं गुरोर्वचनं श्रुत्वा आचार्ये प्रीतिमान् राजा वक्ति–हे स्वामिन् ! मया बुभुक्षितेन रंकेन इदं राज्यं प्राप्तं तत्सर्वं युष्माकं प्रसादफलं; इतरथा मम राज्यं कुतः ? तस्मादिदं राज्यं भवद्भिर्ग्राह्यं; यथाऽहमनृणी स्याम्, एतादृशं राज्ञो वाक्यं श्रुत्वा गुरुरुवाच–हे निर्मलबुद्धे राजेन्द्र ! अस्माकं राज्यस्यवाञ्छा नास्ति, वयं तु शरीरेऽपि निःस्पृहाः किं पुनः राज्ये, तस्माद् हे राजेन्द्र ! अस्माकं राज्येन सह किमपि प्रयोजनं नास्ति, इदं राज्यं भवद्भिः पुण्यात् प्राप्तं; ततो हे राजेन्द्र ! पुनः पुण्ये उद्यमः कर्त्तव्यः, निर्मलं सम्यक्त्वं च पालनीयम् । श्रीजिनेश्वरजगन्नाथस्य निरन्तरं पूजां कुरु । पुनः सुसाधूनां निर्ग्रन्थानां पंचसमितिसमितत्रिगुप्तिगुप्तानां सप्तदशभेदसंयमपालकानां द्विचत्वारिंशदाहारदूषणवर्जितानां भव्यजीवोपकारकाणां सेवां कुरु, दानादिचतुर्विधस्य धर्मस्याराधने उद्यमं कुरुष्व, एष धर्मो विशेषेण पर्वसु आराधनीयः, एतादृशं गुरुवाक्यं श्रुत्वा राजा उवाच–हे स्वामिन् ! संवत्सरादि समस्तपर्व जिनशासने प्रसिद्धं वर्तते, तस्य पर्वणो महिमा श्रावकैः बहुतरो मन्यते; परं लोकोत्तरं दीपावलिपर्व कुतः प्रवृत्तं ? अस्मिन् पर्वणि चारुवस्त्रभूषणादीनि मनुष्या धारयन्ति, पुनः वृषभादिशृंगारंजनक्रियां गृहांगणप्रमुखसंस्कारादीनि च कुर्वन्ति, तस्य किं कारणम् ? इति राज्ञा पृष्टे सति गुरुर्वक्तिस्म–हे राजन् ! एतस्य सम्बन्धं त्वमेकाग्रचित्ततया शृणु । श्रीवर्धमानस्वामी

धर्मकर्माणि विधाय तत्पर्वाराधनीयं, येनेह परत्र च सर्वेष्टसिद्धिः ॥

संवद्व्योमरसाष्टरात्रिप्रमिते ( १८६० ), मासे शुचौ शोभने । पक्षे प्रोज्ज्वलतायुते सुविहिते, सम्यग्द्वितीयातिथौ ॥ श्रीपूज्यजिनहर्षसूरिगणभृद्राज्ये मुदाष्टाह्निका—व्याख्यानं सुगमं हितं सुविहितं श्रीजेसलाद्रौ पुरे ॥ १ ॥

श्रीमंतो गुणशालिनः समभवन् , प्रीत्यादिमाः सागरा-स्तच्छिष्याऽमृतधर्मवाचकवरा आसन् स्वधर्मादराः ॥ तच्छिष्यैर्जिनराजराजिचरणांभोजप्रसक्तैः क्षमा-कल्याणाभिधपाठकैः सुमनसां श्रद्धावतां प्रीतये ॥ २ युग्मं ॥

मुनेरुदयरंगस्या-ग्रहाद्व्याख्यानमादरात् ॥ इदं व्यधायि प्राचीनं पद्यबन्धं विलोक्य तत् ॥ ३ ॥

॥ इति पर्युषणाद्यष्टाह्निकाव्याख्यानं सम्पूर्णम् ॥

## अथ दीपमालिकाव्याख्यानम् ॥ ११ ॥





श्रीनेमीशं जिनं नत्वाऽजिमगंजपुरे स्थितम् । दीपोत्सवस्य व्याख्यानं, लिख्यते देवभाषया ॥ १ ॥

अस्मिन् जंबूद्वीपे भरतक्षेत्रस्य मध्यखंडे मालवदेशे अलकातुल्या उज्जयिनी नाम नगरी बभूव । तस्यां सूर्यवत् तेजस्वी भूपगुणसम-न्वितः संप्रतिनामा राजा राज्यं करोतिस्म । अथैकदा उज्जयिन्यां सुस्थितसूरिनामा आचार्यः षट्त्रिंशद्गुणैर्विभ्राजमानो ग्रामानुग्रामं

दार्थमुद्यतो भवति, तावदेव सा तस्य खड्गधारां बबन्ध, न पुनस्तस्य सत्वस्य. ततो राजा खड्गधाराबन्धनाद्विलक्षः सन् कंठनाल-विडंबकं नवं नवं खड्गं गृहीतवान्, यदासौ भूपतिर्मनागपि सत्वान्न चचाल तदा ते स्त्रियौ स्वकीयं रूपं प्रादुःकृत्याऽत्यादराज्जयज-येत्युचतुः, पुनश्च—

जय ! त्वं वृषभस्वामि ! कुलसागरचन्द्रमाः । जय ! सत्ववतां धुर्यः, जय ! चक्रीशनंदनः ! ॥ १ ॥

अहो ! तव धैर्यं ! अहो ते मनसो निश्चयः ! यत्स्वस्य विनाशेऽपि मनाक् स्वव्रतं न त्यक्तवान्. देवेन्द्रः स्वसभायां देवानां पुरस्तवातुलं सत्त्वं विशेषतः प्रशशंस, हे राजन् ! आवाभ्यां अश्रद्दानाभ्यां स्वर्गादागत्य स्वनिश्चयात्त्वं क्षोभयितुमारब्धः, परं त्वां क्षोभयितुं कोऽपि न समर्थः. हे जगत्प्रभुकुलावतंस ! हे वीर ! त्वयैव इयं पृथ्वी रत्नसूरिति सत्यं नाम बिभर्ति, इत्थं तयोः स्तुवत्योस्तत्र देवेंद्र उपागमत् , जयजयशब्दमुच्चरन् पुष्पवृष्टिं च कृतवान् . तदा प्रतिज्ञाभ्रष्टा उर्वशी इन्द्रेण सोपहासं निरीक्षिता सती तत्पुरतो नृपगुणान् जगौ. इन्द्रोऽपि तस्मै वरमुकुटकुंडलांगदहारान् दत्त्वा च ताभ्यां सह स्वर्गं ययौ. सूर्ययशा अपि सत्यप्रतिज्ञः प्रमुदितः सन् सन्नीत्या पृथ्वीं पालयतिस्म. अथ स राजा भरतेशवत् पृथ्वीं जिनगृहमंडितां कुर्वन् श्रीसंघयात्रया जन्म पवित्रयन् श्रीयुगादि-जिनचरणवत् नित्यं चतुर्दश्यष्टमीपर्वं आराधयामास, तथा व्रतधारिणः श्रावकान् स्वगृहे भोजयामास. पूर्वं भारतेन कांकिणीरत्न-रेखाभिः श्रावका अंकिताः, सूर्ययशसा तु सौवर्णोपवीतेन तेन तेंचिताश्चक्रिरे. तस्य राज्ञ उदारचरिता बहवः कुमारा आसन् . यथा ऋषभस्वामिन ईक्ष्वाकुवंशो वव्रुते, तथा सूर्ययशसः सूर्यवंशोऽभवत् ; सोऽप्येकदा पितृवत्स्वरत्नदर्पणे पश्यन् संसारासारतां धारयन् केवलज्ञानं प्राप्य बहून् भव्यान् प्रतिबोध्य मुक्तिं प्राप । इति निजनियमदृढपालने सूर्ययशोनृपकथा ॥ भव्यात्ममिरष्टाह्निकापर्वणीत्थं

करणमंगीकृतमेव, अहमेकदा त्वत्परीक्षार्थं त्वत्तस्तद्याचितवती, त्वं तु इहा स्वल्पेन कार्येण क्रोधवशं गतः, हे नाथ ! अहं शीलादपि सुखादपि उभयस्माद् भ्रष्टा, तस्मान्मम चिताग्निसेवनमेव श्रेयःशरणमस्तु. इति तद्वचः श्रुत्वा तन्मग्नमानसो नृपः स्ववाक्यं स्मरन् जगाद, हे प्रिये ! ताततातेन च यत्कृतं तत्पर्वणो नाशं तत्पुत्रोऽहं कथं कुर्वे ? हे हरिणाक्षि ! मम सकलां पृथ्वीं कोशं गजाश्वादीं च सर्वान् त्वं स्वयं गृहाण; परं येन न सौख्यं, न च धर्मस्तदकृत्यं मां मा कारय ? ततः सापि ईषद्विहस्य कोमलवाण्या प्रोवाच, हे राजन् ! भवादृशां सत्यवचनमेव सद्वृत्तं, यतो येन पापिना स्वांगीकृतविघातः कृतः सोऽशुचिस्तस्य भारात्पृथ्वी अतिपीदति. हे नाथ ! यदि त्वया इदमपि कार्यं न सिद्ध्यति तदा राज्यादिदातृत्वं कथं सेत्स्यति ? त्वदर्थं मया पितुर्विद्याधरैश्वर्यं त्यक्तं मयैतद्राज्यादिना किं कुर्वे ? अथ हे स्वामिन् ! यदि पर्वभंगं न कर्त्ता, तर्हि मत्पुरतो युगादीशप्रासादं पातय ? इति तद्वचनश्रवणमात्रेणैव नृपो वज्राहत इव मूर्छां प्राप्य गतचैतन्यो भुवि पपात. तदैव मंत्रिणा आदेशादाकुलैस्तत्परिकरजनैः शीतलजलादिसंसेकान्नृपो लब्धचैतन्यो विहितः; अथ सूर्ययशा नृपः स्वपुरः स्थितां तां स्त्रियं दृष्ट्वा कुपितो जगाद, रे अधमे ! अयं तवाचारो वाण्या मत्पुरः स्वकुलाधमतां विकिरति, यत उद्गारवदाहारो भवेत्, त्वं विद्याधरपुत्री न, किंतु चांडालपुत्री दृश्यसे, मया मणिभ्रमेणैव काचखंडादरश्चक्रे, यो देवस्त्रैलोक्यनाथस्त्रैलोक्यवंदितस्तत्प्रासादभंगकृत् कोऽपि कथं भवेत् ? तस्मात् हे स्त्रि ! स्वयं स्ववचसा बद्धं मामनृणं कर्तुं धर्मलोपं विनाऽन्यद्याचस्व ? पर्वलोपं चैत्यध्वंसं चाह सर्वथा न करोमि, तत् श्रुत्वा सापि ईषद्विहस्य पुनस्तमुवाच–हे नाथ ! अन्यदन्यदिति च तद्वचो दूरतो याति, यदीदं त्वं नांगीकर्त्ता, तर्हि त्वं स्वयं स्वपुत्रस्य शिरश्छित्वा सद्यो मह्यं देहि ? अथ राजा विमृश्य वदतिस्म, हे सुलोचने ! मत्सुतो मत्तोऽभवत्, तस्मान्मम शिरस्तव करतलस्थमस्तु, इत्युक्त्वा नृपः करेण खड्गं गृहीत्वा यावत् स्वशिरच्छे-

तपश्च कर्त्तव्यं, जिनपूजाश्च विधेया, इत्थमेतानि पर्वाण्याराधयन् जनः पुण्यान्यर्जयति, ततः क्रमेण कर्माणि क्षपयित्वा मुक्तिं याति, अतो हे कान्ते ! सप्तम्यां त्रयोदश्यां च लोकप्रबोधाय अयं पटहोद्घोषो मयादेशात्प्रजायते. अथोर्वशी एतन्नृपवचः श्रुत्वा तस्मिंश्च चमत्कृतापि मायावचनप्रपंचेन जगाद, हे नाथ ! इदं मनुष्यत्वमिदं रूपमिदं राज्यं सर्वं तपःक्लेशादिभिस्त्वया कथं विडंब्यते ? यथेच्छं सुखानि भुंक्ष्व ? पुनर्मानवो भवः क ? राजसद्भोगाश्च क ?

अथ कर्णयोस्तप्तत्रपुतुल्यं तस्यास्तद्वचनं श्रुत्वा नृप उवाच रेरे धर्मनिंदामलिनस्वभावेऽधमे ! इयं तव वाणी मनागपि विद्याधरकुलाचारोचिता न दृश्यते, तव सकलं चातुर्यं धिक्, रूपं वयः कुलं च धिक्, येन त्वं जिनपूजादिकं सद्धर्मकृत्यं निंदसि, पुनर्मनुष्यत्वसद्रूपारोग्यराज्यादीनि तपसा प्राप्यंते, तत्तपः कः कृतज्ञो नाराधयेत् ? यो नाराधयेत् स कृतघ्न एव, धर्माराधनतो हि देहस्य विडंबनं न स्यात्, धर्मं विना केवलं विषयैस्तु विडंबनमेव, तस्माद्यथेच्छं धर्मः कर्त्तव्यः, पुनः पुनर्मानवो भवः क ? व्रतधीः का ? मृगसिंहादिबाला अपि अष्टम्यां पाक्षिके चाहारं न गृह्णंति, तर्हि अहं कथं गृह्णामि ? तेषां ज्ञातृत्वं च धिगस्तु, ये सर्वधर्मकारण पर्वाराधनं न कुर्वंति. श्रीयुगादिजिनोपदिष्टमिदमुत्तमं पर्वास्ति, तदहं तपो विना कंठगतप्राणैरपि पर्व वृथा न कुर्वे, हे स्त्रि ! मम राज्यं प्रयातु, प्राणक्षयोऽस्तु, परं पर्वतपसोऽहं भ्रष्टो न भवामि ! तत इत्थं क्रोधाकुलं नृपवचः श्रुत्वा उर्वशी मोहमायां कुर्वंती पुनरुवाच—स्वामिन् ! भवतः कायक्लेशो माभूदिति प्रेमरसत एव मयैतद्वचः प्रोक्तं, तस्मात्क्रोधावसरोऽत्र नास्ति. पूर्वंतु आवाभ्यां पितृवाक्यविमुखीभ्यां स्वच्छंदचारी नृपतिर्न वृतः, सांप्रतं पूर्वकर्मपरिपाकात् त्वं वरो वृतस्तेनावयोः संसारसौख्यं शीलं च सर्वं नकस्माद्गतं, यदि स्वाधीनपुंस्त्रियोर्योगो भवेत्तदा सांसारिकं सुखं स्यात्, अन्यथा रात्रिदिवसयोगवद्विडंबनमेव, हे स्वामिन् ! पुरा नाभेयजिनाग्रे त्वया तु मद्वाक्य

उवाच, आवां मणिचूड विद्याधरराजस्य पुत्र्यौ, आबाल्यात्कलास्वेवादरवत्यौ अभूताम्, क्रमेण यौवनं प्राप्ते वीक्ष्य अस्मत्पिता वर्चितो कर्तुं लग्नः, आवां स्वमदृशं पतिमलभमाने स्थाने स्थाने अर्हच्चैत्यानां नमस्याभिर्निजं जन्म सफलं कुर्वहे। पुनर्भावी को भवः क्व ? इयम-योध्यापि तीर्थभूतास्ति, अतोऽत्र भरतकारिते चैत्ये आदिजिनं नमस्कर्तुमावयोरागमनमभूत्. एवं कथयंत्योस्तयोर्मंत्री उवाच-अमुना सूर्ययशसा नृपेण सह युवयोः संगमः श्रेष्ठो; यतोऽसौ ऋषभस्वामिनः पौत्रो भरतचक्रिणः पुत्र सर्वकलासंपूर्णः सौम्यः सद्गुणवान् बलवांश्च अस्ति तस्मान्निश्चितं ऋषभस्वामी युवयोस्तुष्टो यदुत अकस्मात्सूर्ययशा वरः प्राप्तः। मंत्रिणि एवं वदति सति ते तमूचतुः आवां हि स्वाधीनं पतिं मुक्त्वान्यं पतिं नैवाश्रयावहे. ततोऽमात्यो नृपाज्ञया-ते इत्यचोवत्, युवयोर्वाक्यमन्यथा कुर्वन्नृपतिर्मया निषे-ध्यः, मंत्रिणा एवमुक्ते सति तदैव श्रीयुगादीशसमक्षं तेषां पाणिग्रहोत्सवः संजातस्ततस्तयोः प्रीतिरसाकृष्टो भूपतिः संमारे तद्भोगमेव मारं मन्यमानोऽहर्निशं ताभ्यां सह विविधान् भोगान् भुंजानो विस्मृतान्यकृत्यः सुखेन कालं निनाय। अथ एकदा संध्यासमये ताभ्यां पत्नीभ्यां युतः सूर्ययशा नृपो गवाक्षं ययौ, तदा भो लोकाः! श्वोऽष्टमीपर्व भावि, ततस्तदाराधने सादरैर्भाव्यमिति पटहोद्घोषणां ताभ्यां कपटस्त्रीभ्यां श्रुत्वा ततोऽवसरं विज्ञाय रंभाऽजानतीव नृपतिं प्रति सादरा सती भंभावादनकारणमपृच्छत्। नृपतिरुवाच हे रंभे! शृणु, ? अस्माकं तातेनोक्तं चतुर्दश्यष्टमीरूपं पर्वास्ति, यथामावास्या पौर्णमासी अष्टाह्निकाद्वयं चातुर्मासत्रियं वार्षिकं पर्युषणाख्यं च पर्व एतानि अन्यान्यपि पर्वाण्युक्तानि संति; ज्ञानाराधनार्थं पंचमी च प्रोक्तास्ति। एतेषु पर्वदिनेषु विहितं पुण्यं स्वर्गमोक्षसुखप्रदं भवेत्. तस्माच्चतुः-पर्व्यामखिलं गृहव्यापारं परित्यज्य शुभं कर्म विधेयं; पुनश्चतुःपर्व्यां स्नान-स्त्रीसंग-कलह-द्यूतक्रीडा-परद्रव्य-मात्सर्य-क्रोधादिकपा-यसंगप्रमादादि न किमपि कर्त्तव्यं, प्रियेष्वपि ममता न विधेया, परमेष्ठिस्मरणादिशुभध्यानवता भाव्यं, सामायिकं पौषधं च षष्ठाष्टमप्रमुखं

कंपते, समुद्रो वा मर्यादां त्यजेत्, कल्पवृक्षो वा निष्फलो भवेत् तथाप्येषा कंठगतैः प्राणैरपि जिनाज्ञावत् स्वकृतं निश्चयं न मुंचति, अथोर्वशींद्रवचः श्रुत्वा किंचिन्मनसि विचार्य प्रत्युत्तरमुवाच–हे स्वामिन्! युक्तायुक्तज्ञस्त्वं मनुष्येषु निश्चयं किं श्लाघसे? यः सप्तधातुनिष्पन्नशरीरोऽन्नजीवकः स देवैरप्यचाल्य इति कः श्रद्धाति? मद्गानरसपूरेण केषां विवेकप्रमुखा गुणा न विलयं यांति? तत्र गत्वा तमप्यहं सद्यो व्रताद् भ्रंशयिष्ये, इति प्रतिज्ञां विधाय रंभया सहिता उर्वशी हस्तेन वीणां दधाना स्वर्गात् भूमिमवतरतिस्म; अयोध्यानिकटोद्याने च श्रीऋषभस्वामिनश्चैत्ये मोहोत्पादकमत्यद्भुतं रूपं कृत्वा गायतिस्म; तद्गानमोहिताः पक्षिमृगसर्पाद्या अपि आलेख्यलिखिता इव पाषाणघटिता इव वा निश्चलनेत्रास्तस्थुः।

इतश्च श्रीसूर्ययशा अश्वं वाहयित्वा पश्चाद्वलमानः पथि तयोरतिमधुरगानध्वनीन् शुश्राव, तदा वाजि-गज-पत्तयः पदमपि यानेऽसमर्था अभूवन्. एतत्स्वरूपं दृष्ट्वा नृपोऽमात्यं प्रति सादरमुवाच–भो मंत्रिन्! संसारे नादसमः सुखदः कोऽपि न दृश्यते. यद्वशात्पशवोऽप्यमी ईदृग्मोहिताः संति। नादेन देव-दानव नृप-कामिन्यादयः सर्वेऽपि प्रायो वशी भवन्ति. ततो वयमपि ऋषभस्वामिनं नमस्कर्तुं तत्र चैत्ये यामस्तत्र गत्वा एतद्गेयस्वादमपि लप्स्यामहे। इत्थमामंत्र्य तद्गानमोहितो भूपालो मंत्रिणा सह जिनचैत्यान्तर्जगाम। तत्र हस्तयोर्वीणां बिभ्रत्यौ, गीतध्वनिं कुर्वत्यौ कामभार्येव दिव्यसौंदर्ये द्वे कुमारिके विलोक्य स्नेहचक्षुर्विमुक्तैः कामबाणैर्हृदि विद्धो नृपश्चिंतयामास. एतयोरिदमत्यद्भुतं रूपं कस्य पुण्यवतो भोगाय भविष्यति? ततो राजा मुहुर्मुहुस्तयोश्चक्षुषी क्षिपन् युगादीशितुः पादौ प्रणम्य चैत्यान्निःसृत्य बहिर्प्रदेशे उपविष्टस्तयोः कुलादिकं ज्ञातुं मंत्रिणे आदिष्टवान्. मंत्र्यपि नृपादेशात्तयोः समीपं गत्वा सुधामधुरया वाचा संभाष्य इत्थमालपत्. हे कन्यके! युवां के? युवयोः पति कः? किमर्थमिहागमनं चैत्येतत्सर्वं वदत. अथ मंत्रिवचः श्रुत्वा तयोरेका

स्मरणं प्राप्य जिनधर्मानुरक्तोऽभूवं, ईदृशोपायं विना मम जैनधर्मप्राप्तिः कुतः ? अनार्यत्वमहापंके निमग्नोऽहं त्वयोद्धृतस्त्वत्प्रसादादेव च मे चारित्रावाप्तिर्जाता, ततः श्रेणिकाभयकुमारादयः सर्वेऽपि लोकास्तमृषिं वंदित्वा तुष्टमनसः स्वस्थानं ययुः; ततो मुनि राजगृहपुराभ्यर्णे समवसृतं श्रीवीरस्वामिनमभिवंद्य तच्चरणकमलसेवया स्वकीयं जन्म सफलीकृत्य क्रमेणायुः क्षये शिवं प्राप ॥ इति श्रीजिनदर्शनमाहात्म्ये आर्द्रकुमारदृष्टांतः ॥

पुनरत्र पर्वणि यत्कर्त्तव्यं तदाह–तपोविधानादि, यथाशक्ति तपसि यत्नो विधेयः, चतुर्थ-षष्ठा-ष्टमादितपः कार्यमित्यर्थः, तत्र यदि कश्चित् स्नेहवशात्तन्निषेधं करोति तथापि तल्लोपबुद्धिर्न धार्या श्रीभरतपुत्रसूर्ययशोनृपवत् , तत्कथा चेयं—

अयोध्यायां नगर्यां सूर्ययशा नृप आसीत् , स च त्रिखंडभूमिस्वामी नीतिवत् अखंडशासनो दुष्टान् वैरिणः स्ववशे नीतवान् , इंद्रेणोपढौकितं मुकुटं शिरसि धृतवान् ; तस्य मुकुटस्यैव माहात्म्याच्च स नृपः सुरसेव्योऽप्यभूत् , तस्य राज्ञो राधावेधपणात् प्राप्ता कनकविद्याधरपुत्री जयश्रीर्नामपट्टराज्ञी बभूव, अन्यान्यपि तस्य बहूनि कलत्राणि आसन् . स राजा चतुःपर्वी विशेषेणाष्टमीं चतुर्दशीं च प्रत्याख्यानपौषधादितपसा आराधयति स्म, जीवितादरवत्पर्वादरोऽस्य चेतसि अतिवल्लभोऽस्ति, तेनासौ जीवितादपि पर्वाणि रक्षति। अथैकदा सौधर्मेन्द्रः सुधर्मासभामाश्रितो ज्ञानात्तन्निश्चयं ज्ञात्वा चमत्कृतिं प्राप, तदोर्वशी देवी विश्ववशीकरणसामर्थ्यं बिभ्राणाऽकस्मात्सुरेंद्रशिरः कंपं दृष्ट्वा प्रोवाच. स्वामिन् सांप्रतं शिरः कंपनकारणं तु न किमपि दृश्यते तत किं निमित्तं तुष्टेन नाथेन शिरःकंपः कृतस्तदा सुरेंद्र उवाच-मयाधुना ज्ञानदृष्ट्या भरतक्षेत्रे ऋषभस्वामिनः पौत्रो भरतचक्रिणः पुत्रोऽयोध्याधिपः सूर्ययशा नाम राजा सात्त्विकानां शिरोमणिर्दृष्टः, स चाष्टमीचतुर्दशीपर्वणस्तपसः कृतबहुयत्नैः सुरैरपि चालयितुं न शक्यते, यदि सूर्यः पूर्वदिशमतिक्रम्य पश्चिमायामभ्युदेति तथा मेरुर्वातैः

यः, एवं स मुनिर्गोशालं निरुत्तरीचक्रे तदा जय जय शब्दं कुर्वद्भिः खेचराद्यैश्च तस्य महामुनेर्बह्वी प्रशंसा कृता ॥

तत आर्द्रकऋषिर्हस्तितापसाश्रमसमीपे आययौ, तत्रस्थास्तापसाश्च एकं महांतं हस्तिनं हत्वा तन्मांसं भुंजाना बहून दिवसान् व्यतीयंति, ते चैवमूचुः, एकस्यैव हस्तिनो हननं वरं, यत एकजीवघातेन भूयान कालोऽतिगम्यते, मृगतित्तिरमत्स्याद्यैर्धान्यैश्च बहुभिरपि न तथा, तस्मात्तद्भक्षणं न युक्तं बहुपापसद्भावात् तदा च ते मिथ्याधर्मनिष्ठास्तपस्विनो मारणार्थं एकं महावत्तं गजं बबंधुः यत्र शृंखलाबद्धः स गज आसीत्तेनैव मार्गेण करुणानिधिः स महर्षिर्जगाम, तदा स हस्ती मुनिपंचशतीयुतं बहुभिर्जनैर्वंद्यमानं तं महर्षिं दृष्ट्वा लघुकर्मत्वादित्यचिंतयत् , अहमप्येनं मुनिं वंदेयं यदि बद्धो न भवेयं, बद्धस्तु किं करवाणि ? एवं चिंतयतस्तस्य महर्षेर्दर्शनात्सद्योऽयः श्रृंखला व्यशीर्यत, अथ स हस्ती निरर्गलः सन् तं मुनिं वंदितुमभ्यागात् , तदा लोका एष मुनिर्हतो हत इति ब्रुवाणाः पलायनं चक्रिरे, मुनिस्तु तथैव तस्थौ, गजोऽपि नम्रीकृतकुंभस्थलः सन् तं मुनिं नमतिस्म, शुंडादण्डं प्रसार्य मुनिपादौ स्पृष्ट्वा स्पृष्ट्वा परमं सुखं प्राप, ततः स गजः समुत्थाय भक्त्या मुनिं पश्यन् अव्याकुलः सन् अरण्यानीं प्रविवेश, तदात्यद्भुतं तत्प्रभावं दृष्ट्वाऽतिकोपं प्राप्तास्ते तापसा अपि आर्द्रकुमारसाधुना प्रत्यबोध्यंत, ततस्तत्प्रेषिताश्चैते श्रीवीरसमवसरणे गत्वा दीक्षां जगृहुः ॥

अथ श्रेणिकराजापि तथा गजमोक्षणं तापसप्रतिबोधं च श्रुत्वाऽभयकुमारयुक्तस्तत्रागात्, मुनिर्भक्त्या वंदमानं राजानं धर्मलाभाशिषं ददौ, अथ शुद्धभूतले आसीनं मुनिं राजा पप्रच्छ हे भगवन् ! हस्तिमोक्षणान्मम महदाश्चर्यं समजनि । मुनिरूचे–हे राजन् ! हस्तिमोक्षणं न दुष्करं, किन्तु आमतंतुपाशमोक्षणं मां दुष्करं प्रतिभासते । राज्ञा पृष्टं स्वामिन् तत्कथं ? तदा स मुनिः सकलामपि स्वां कथां कथयामास । तत आर्द्रकुमारोऽभयं प्रत्यभाषत त्वं मम निष्कारणोपकारी धर्मबांधवोऽभूत् , हे मित्र ! त्वत्प्रेषितार्हत्प्रतिमादर्शनादहं जाति-

अथ प्रतिज्ञापूर्णीभवनानंतरं स वैराग्यपूर्णमानसो रात्रेः पश्चिमे प्रहरे इत्यचिंतयत् , मया प्राग्भवे मनसैवव्रतं भग्नं तेनाहमनार्यत्वं प्राप्तोऽस्मि, अत्र भवे पुनर्व्रतं गृहीत्वा मुक्तमतः का गतिर्मे भविष्यति ? इदानीमपि प्रव्रज्यां गृहीत्वा तपसा आत्मानं शोधयामि, इति विचिंत्य प्रातःकाले श्रीमतीं पत्नीं स्वसुतं च संभाष्य तदनुमतिं च लात्वा साधुलिंगं समादाय निर्ममत्वो गृहान्निर्ययौ । अथ राजगृहं व्रजन् अंतराले चौर्यवृत्तिं कुर्वाणां स्वसामंतपंचशतीं ददर्श, तैरप्युपलक्ष्य भक्त्या वंदितः, स साधुस्तानवादीत् युष्माभिर्महापापहेतुरेषाजीविका किमादृता ? तैरुक्तं हे प्रभो ! अस्मान् वंचयित्वा यदा त्वं पलायिष्टस्तदोदितो लज्जया भूपतेर्मुखं न दर्शयामः, तवैवान्वेषणे लग्नाः पृथ्वीं भ्रमंतश्चौर्यवृत्त्यैव जीवामः, मुनिरुवाच अयुक्ता वृत्तिर्भवद्भिरादृता, केनापि पुण्ययोगेनेदं मानुष्यकं प्राप्य स्वर्गापवर्गप्रदो धर्म एव सेव्यो हिंसाऽसत्यचौर्याब्रह्मपरिग्रहपरित्यागः कर्त्तव्यः, हे भद्रा ! यूयं स्वामिभक्ताः स्थ, प्राग्वदहं युष्माकं स्वामी अतो ममैव मार्गं प्रपद्यध्वं, ततस्ते प्रोचुः पूर्वं त्वमस्माकं स्वाम्येवाभूः, सांप्रतं तु गुरुरप्यसि यतस्त्वयाऽस्मभ्यं धर्मो ज्ञापितोऽथास्मान् दीक्षयानुगृहाण; तत आर्द्रकुमारस्तान् प्रव्राज्य तैः सहितः श्रीमहावीरं वंदितुं राजगृहाभिमुखं ययौ, मार्गे गच्छतस्तस्य गोशालोऽभिमुखो मिलितो विवादं कर्तुं प्रवृत्तः, भूचराः खेचराश्चापि सहस्रश आयाताः कौतुकार्थिनस्तस्थुः ॥

अथ गोशालोऽवदत् भवतां तपःकष्टं वृथैव, यतः शुभाशुभफलानां कारणं नियतिरेवास्ति, ततो मुनिरवादीत् पौरुषमपि कारणं मन्यस्व, यदि सर्वत्र नियतिमेव कारणं मन्यसे तर्हि अभीष्टसिध्यर्थं सर्वाः क्रिया वृथा प्रसज्येरन् , तथाहि–हे नियतिवादिन् ! सर्वदा स्वस्थाने एव किं न तिष्ठसि ? भोजनाद्यर्थं च कथमुद्यमं करोषि ? एवं स्वार्थसिद्धये नियतिवत्पौरुषमपि मान्यमस्ति, अर्थसिद्धौ नियतेरपि पौरुषमाधिक्यं भजते, तथाहि आकाशात्पानीयं पतति, परं भूखननादपि तद्भवेत्, यतो नियतिर्बलीयसी, परं नियतेरपि पौरुषं बली-

यथा प्रतिदिनं यातानायातांश्च सर्वानपि साधून् पश्यामि, श्रेष्ठयुवाच इह पत्तने ये केऽपि महर्षयः समायांति तेभ्यस्त्वं प्रत्यहं स्वयं भिक्षां देहि, येन सर्वेषां दर्शनं स्यात् , ततः सापि प्रत्यहं तथैव चक्रे, तल्लक्षणं दिदृक्षमाणां च मुनीनां चरणानवंदत, अथ द्वादशे वर्षे स महामुनिर्दिग्मूढः सन् तत्रागतस्तल्लक्षणदर्शनात्तयोपलक्षितश्च, तदा श्रीमती तमृपिमुवाच हे नाथ ! तत्र देवकुले तदा यो मया वृतः स मम वरस्त्वमेवासि, मद्भाग्यैरेवाधुनागतोऽसि, अथ मां मुग्धां त्यक्त्वा क्व यास्यसि, यदा त्वं दृष्टनष्टोऽभूः; तद्दिनादारभ्य मम महादुःखेन कालोऽगमत् , तस्मात्प्रसादं विधाय मामंगीकुरु, एवं स्थितेऽपि यदि मामवमन्यसे तर्हि अग्निप्रवेशं कृत्वा तुभ्यं स्त्रीहत्यापातकं दास्ये, तदान्यैरपि तत्पित्रादिभिर्महाजनैर्विवाहाय अभ्यर्थितः स साधुव्रतारंभनिषेधकं तद्देवीवचनं सस्मार, ततस्तद्भोग्यकर्मोदयाद्दणमोक्षमिव कर्तुं तां श्रीमतीं पर्यणपीत् । अथ श्रीमत्या सह चिरं भोगान् भुंजानस्य तस्य क्रमेण पुत्रः संजातः, स च क्रमेण वर्द्धमानो राजशुक इव वक्तुमुल्लसज्जिह्वोऽभवत् , तावति पुत्रे संजाते सति स आर्द्रकुमारो हर्षितः सन् श्रीमतीं प्रोवाच, अतः परं ते पुत्रः सहायोऽस्तु, अहं प्रव्रजामि, तदा बुद्धिनिधिः श्रीमती सुतं प्रत्यवसरं ज्ञापयितुं तूलपूणिकासहितं तर्कुमादाय समुपाविशत् , तदा तूलकर्त्तनक्रियां कुर्वाणां तां विलोक्य स बालकः पप्रच्छ हे अंब ! एतत्पामरलोकोचितं कर्म किं प्रारब्धं ? सा प्रोचे-हे पुत्र ! तव पिता त्वां मां च त्यक्त्वा प्रव्रज्यार्थं गंतुमनो वर्त्तते, गते चास्मिन् पतिहीनाया मे तर्कुरेव शरणं, तदा बालको बाल्यान्मनाक्षरैरुवाच—अहं बद्ध्वा धारयिष्यामि कथं मे पिता यास्यति ? इत्युक्त्वा तन्तुभिः पादौ बबन्ध. आर्द्रकुमारोऽपि तन्मधुरं बालवचोवृदं श्रुत्वा सुतस्नेहादेवमुवाच, हे पुत्र ! यावद्भिस्तंतुभिर्मे पादौ बद्धौ तावंति वर्षाणि पुनर्गृहे स्थास्यामि, गणयित्वा बंधनानि अच्छोटय ? ततो गणिता द्वादशबंधा अभवन्, तेन स द्वादश वर्षाणि पुनर्गृहे स्थास्ये इत्युक्त्वाऽवाहयत् ॥

मुनिस्तीक्ष्णं व्रतं पालयन् भूमंडले विचरन् अन्यदा वसंतपुरपत्तनं प्राप्य कस्मिंश्चिद्देवकुले कायोत्सर्गेण च तस्थौ ॥

इतश्च तस्मिन्नगरे देवदत्तो नाम महाश्रेष्ठ्यभूत्, तस्य धनवती नामा पत्न्यासीत्, अथ बन्धुमतीजीवो देवलोकाच्च्युत्वा श्रीमतीनामा अद्भुतरूपा तयोः पुत्री समजनि, सा च धात्रीभिर्लाल्यमाना क्रमेण रजःक्रीडोचितं वयः प्राप, एकदा तत्र देवकुले पौरकन्याभिर्युक्ता श्रीमतीकन्या पतिवरणक्रीडया रंतुमाययौ, तदा सर्वाः कन्या भर्त्तारं वृणुतेत्यूचुस्तत कयापि कोऽपीत्येवं सर्वाभिः स्वरुचिवरा वृताः, श्रीमत्योक्तं हे सख्यो! मया तु अयं पूज्यो वृतस्तदा साधुवृतमिति देवता प्रोवाच, पुनर्गर्जितं तन्वाना सा एव देवी तत्र रत्नान्यवर्षत्, श्रीमती गर्जिताद्भीता तस्य मुनेः पादेऽलगत्, स मुनिः क्षणमात्रं स्थित्वाऽचिंतयत्, इह तस्थुषो ममानुकूलं उपसर्गोऽभूत्, अतोऽत्र न स्थेयमिति विचिंत्य सोऽन्यत्रागात्. तदा अस्वामिकं धनं राज्ञ एवेति निश्चयं कृत्वा तानि रत्नान्यादातुं राजा तत्राजगाम, राजपुरुषास्तद्द्रव्यस्थानं नागसंकुलं ददृशुः, देवतया चोक्तं एतद् द्रव्यमस्यै कन्यायै मया वरके प्रदत्तमस्ति, इति श्रुत्वा नृपो विलक्षः सन् स्वस्थानं ययौ, ततस्तत्सर्वं धनं श्रीमतीपिता श्रेष्ठी जग्राह। अथ कियता कालेन श्रीमतीं परिणेतुं बहवो वरा अढौकंत, तत्स्वरूपं पित्रा पुत्र्यै उक्तं तदा श्रीमती जगाद–हे तात! यो महर्षिर्मया वृतः स एव मम वरः, तद्वरणे देवता य द्रव्यमदात् तद् द्रव्यं गृह्णता त्वयापि तदनुमतमेव, ततस्तस्मै मां कल्पयित्वान्यस्मै दातुं नार्हसि, उक्तं च—

सकृज्जल्पंति राजानः, सकृज्जल्पंति साधवः ॥ सकृत्कन्याः प्रदायत, त्रीण्येतानि सकृत् सकृत् ॥ १ ॥

एतत् श्रुत्वा श्रेष्ठ्यूचे, स तु भ्रमर इव एकत्र नावतिष्ठतेऽतः कथं प्राप्यते पुनरत्रायास्यति न वा, आयातोऽपि कथं ज्ञायते? किं तस्याभिज्ञानं? तदा श्रीमत्या उक्तं-हे तात! मया तद्दिने गर्जितभीतया तच्चरणे विलग्नयाभिज्ञानं दृष्टमस्ति, तस्मादतः परं तथा कुरु

प्रतिमां पूजयन्नार्द्रकुमारो दिवसानतिवाहयतिस्म, एकदा कुमारो नृपमेवं व्यजिज्ञपत् हे तात ! स्वमित्रमभयकुमारं द्रष्टुमिच्छामि, आर्द्रकनृपोऽवादीत् , हे वत्स त्वया तत्र गमनेच्छा न कर्त्तव्या, अस्माकमपि स्थानस्थितानामेव श्रेणिकेन सह मैत्र्यमस्ति; तदा पित्राज्ञया निबद्धोऽभयसंसर्गं प्रति उत्कंठितआर्द्रकुमारोऽपि न तस्थौ न च जगाम, तथा स आसने शयने याने भोजनेऽन्यक्रियासु च अभयकुमारेणाश्रितां दिशं नेत्रयोरग्रे चकार. पुनः कीदृशो मगधदेशो, राजगृहपुरं च कीदृक्; तत्र गमने कस्को मार्ग इत्थं पार्श्ववर्त्तिनो जनान् पप्रच्छ; तस्मिन्नवसरे आर्द्रकनृपो दध्यौ, कदापि कुमारो मामकथयित्वैव निश्चितमभयसमीपे यास्यत्यतो यत्नः कर्त्तव्यस्ततो नृपः पंचसामंतशतानि इत्यादिशत् , अहो ! अयं कुमारो देशांतरं गच्छन् भवद्भिरक्षणीयस्तदा ते सामंता देहच्छायेव तत्पार्श्वं न त्यजन्ति स्म, कुमारोऽप्यात्मानं देहधृतमिवामंस्त, ततोऽभयसमीपगमनं मनसि अवधार्य प्रत्यहमश्ववाहनभूमौ अश्ववाहनं कर्त्तुमारेभे, ते सामंताश्च अश्वारूढा अंगरक्षकाः संतः पार्श्वे तस्थुः, कुमारोऽश्वं वाहयन् तेभ्यः किंचिदग्रे गत्वा न्यवर्त्तत, एवं चाश्वं वाहयन् सोऽधिकाधिकं ययौ, पुनः पुनर्व्याघुट्य ययौ च, इत्थ तेषां विश्वासमुत्पाद्यान्यदार्द्रकुमारो निजैः प्रतीतिमत्पुरुषैः समुद्रे यानपात्रं प्रगुणं कारयित्वा तच्च रत्नादिभिः प्रपूर्य जिनप्रतिमां च तत्रारोप्य तथैवाश्वं वाहयन् दूरगमनाददृश्यीभूय तद्यानपात्रमारुह्य आर्यदेशं ययौ, ततो यानपात्रादुत्तीर्य तां प्रतिमामभयकुमाराय संप्रेष्य सप्तक्षेत्र्यां धनान्युप्त्वा यतिलिंगं गृहीतवान् , स च यावत्सामायिकमुच्चारयितुमारेभे तावदाकाशस्थितया देवतया उच्चैः स्वरेणोचे-यद्यपि त्वं महासत्त्वस्तथापि सांप्रतं दीक्षां मा ग्रहीः, अद्यापि ते भोगफलं कर्मास्ति तद्भुक्त्वावसरे व्रतं गृह्णीथाः, यतो भोग्यं कर्म तीर्थकृतामप्यवश्यं भोक्तव्यं, तस्मात् हे महात्मन ! तेन व्रतेनालं यद् गृहीतमपि त्यक्ष्यते; यथा तेन भोजनेन किं यद्भुक्तमपि वम्यते; इत्थं बहुधा निषिद्धोऽप्यार्द्रकुमारः स्वपौरुषमंगीकृत्य देवी वाचमनादृत्य स्वयं दीक्षामाददे, स प्रत्येकबुद्धो

शमाचख्यौ. ततः कुमार एकांते स्थित्वा तां पेटामुद्घाट्य तन्मध्यस्थां तमस्युद्योतकारिणीं तां श्रीऋषभस्वामिप्रतिमां दृष्ट्वा स्वचित्ते चिंतयामास, किमिदं किंचिदुत्तमं देहाभरणमस्ति, तत् किं मूर्ध्नि आरोप्यं, कंठे वा हृदये वान्यत्र कुत्रचिदारोप्यं, क्वापीदं दृष्टपूर्वमिव मां प्रतिभासते, परं स्मृतिपथं नायाति, इत्थमत्यर्थं चिंतयत आर्द्रकुमारस्य जातिस्मरणजनिका मूर्च्छा समजनिष्ट, तत उत्पन्नजातिस्मरणः स कुमारः संप्राप्तचेतनः सन् स्वयमेव एवं निजपूर्वभवकथां चिंतयामास, तथाहि—

इतो भवात्तृतीये भवे मगधदेशे वसंतपुरेऽहं सामठिको नाम कुटुम्बी अभूवं; मम बंधुमती भार्याभूत्, एकदा सुस्थिताचार्यसमीपे तया सह अहमर्हद्धर्ममश्रौषं, ततः सभार्योऽपि अहं प्रतिबुद्धो गृहवासविरक्तः सन् तत्पार्श्वे प्रव्रज्यां गृहीतवान्, क्रमेण गुरुणा सह विहरन् एकस्मिन् पत्तनेऽगां, बंधुमती साध्व्यपि अपरसाध्वीसंगता तत्रागात्, एकस्मिन्नह्नि तां पश्यन् पूर्वभोगान् स्मरन् अहं तस्यामनुरक्तोऽभूवं, तच्चान्यसाधवे आख्यां, सोऽपि प्रवर्त्तिन्यै आचख्यौ, सा पुनर्बंधुमत्यै आचख्यौ, तदा बंधुमती विषण्णा सती प्रवर्त्तिनीं प्रोवाच, एष गीतार्थोऽपि यदि मर्यादां लंघेत तदा का गतिः, असौ मां देशांतरं गतामपि यावच्छ्रोष्यति तावन्मोहप्रभावान्मयि रागं न त्यक्षति, तस्मात् हे भगवति ! अहं निश्चित्तं मरणं प्रपत्स्ये, येन नास्य नापि मे शीलखंडनं जायते, इत्युक्त्वा सा साध्वी अनशनं कृत्वा शुद्धभावनया प्राणांस्तत्याज, देवत्वं च प्राप, ततस्तां मृतां श्रुत्वा मया विचिंतितं सा महानुभावा निश्चितं व्रतभंगभयान्मृता, अहं पुनर्भग्नव्रतस्ततो मामपि जीवितेन अलं, तदाहमप्यनशनं कृत्वा विपद्य देवोऽभूवं, ततश्च्युत्वाहमत्रानार्यदेशे धर्महीनः समुत्पन्नोऽस्मि, सांप्रतं यो मम प्रतिबोधकः स मे बंधुः स एव च गुरुरस्ति, केनापि भाग्योदयेनाभयकुमारमंत्रिणाहं बोधितः, परमद्यापि मन्दभाग्योऽस्मि यतस्तं द्रष्टुमसमर्थः, तस्मात् पितरमनुज्ञाप्यार्यदेशं गमिष्यामि, यत्र मे गुरुरभयकुमारोऽस्ति, इत्थं मनोरथं कुर्वन् आदिमार्हतः

मंत्रिणा सार्द्धं राजगृहपुरं गत्वा श्रेणिकाय अभयाय च प्राभृतान्यर्पयामास, तथा नृपपुत्र आर्द्रकुमारस्त्वया सह मैत्र्यं कर्त्तुमिच्छतीत्यभयाय मंत्री संदेशमुवाच । तदा जिनशासने कुशलोऽभयः स्वचेतसि इत्यचिंतयत्; निश्चितं स कुमारो विराधितश्रामण्यत्वादनार्येषु जातोऽस्ति, परं स राजपुत्रो महात्मा नियमादासन्नभव्योऽस्ति, यतोऽभव्यदूरभव्यानां तु कदापि मया सह मैत्र्यभिलाषो न भवेत्, तस्मात्केनाप्युपायेन तं जिनधर्मानुरक्तं विधाय धर्ममार्गे प्रवर्त्तयामि, तत्र चायमुपायोऽस्ति, प्राभृतच्छलेन यदि तत्रार्हत्प्रतिमां प्रेषयामि, तद्दर्शनाच्च यदि तस्य जातिस्मरणज्ञानमुत्पद्यते तदेष्टसिद्धिः स्यादित्युपायं विचिंत्य छत्रसिंहासनादिप्रातिहार्यविराजितां रत्नमयीं प्रथम जिनेन्द्रप्रतिमां * पेटीमध्ये धृत्वा तदग्रे सकलानि धूपघटिकादिदेवपूजोपकरणानि मुमोच, ततस्तद्द्वारे तालकं दत्वाऽभयो निजमुद्रया तां मंजूषां मुद्रयामास. अथ कियद्भिर्वासरैः श्रेणिको नृपस्तमार्द्रकेशपुरुषं प्रियालापपूर्वकं प्रभूतैः प्राभृतैः सह विससर्ज, अभयोऽपि तां पेटां तस्य हस्ते समर्प्य तं सत्कृत्य अमृततुल्यवाण्या इत्युवाच, एषा पेटा आर्द्रकुमारस्य पुरस्तादुपढौकयतां, तथा तस्य मद्बन्धोरिदं वक्तव्यं, त्वया एकांतप्रदेशे एकाकिना स्थित्वा इयं पेटा स्वयमुद्घाट्य तदंतर्गतं वस्तु स्वयं द्रष्टव्यं, अन्यस्य कस्यचिन्न दर्शनीयं, ततोऽभयोक्तं वचोंगीकृत्य स पुमान् स्वपुरं ययौ, तानि च प्राभृतानि स्वस्वामिने स्वामिपुत्राय चार्पयामास, तथार्द्रकुमारायाभयोक्तसंदे-

*अत्रकेऽपि जिनेन्द्रप्रतिमास्थाने रजोहरणमुखवस्त्रिका प्रेषणं वदन्ति तथा प्राचीनजैनशास्त्रे जिनेन्द्रप्रतिमोल्लेखस्याभावं दर्शयन्ति तदसत्य, यत.—जीवाभिगम—भगवती—ज्ञाताधर्मकथा—राजप्रश्नेयावश्यकनिर्युक्त्यागमपंचांगीप्राचीनशास्त्रे स्थाने स्थाने जिनप्रतिमोल्लेखो विस्तरेण दर्शितः, तथा रायप्रश्नेण्यादिषु आगमेषु (धुवं दाऊणं जिणवराणं) इति वचनात् जिनेन्द्र प्रतिमा जिनेन्द्र सदृशत्वेन उक्ता, किंच सूत्रकृदगव्याख्याप्रभृतिषु अभयकुमारेण आर्द्रकुमाराय प्रथम जिनेन्द्र प्रतिमा प्रेषिता इत्येवलिखितमस्ति, अतो रजोहरणमुखवस्त्रिकाप्रेषणस्य कथनं तु अयुक्तमेव, अस्य विशेषनिर्णयः प्रतिमाशतक, सम्यक्त्वशल्योद्धारादिग्रन्थादवगन्तव्यः ॥ इति ॥

जिनदर्शनादेव बहूनां भव्यानां बोधिबीजावाप्तिर्भवत्यार्द्रकुमारवत् , तद्वृत्तांतस्त्वित्थं—

अस्मिन् भरतक्षेत्रे समुद्रतीरे आर्द्रको नाम यवनदेशोऽस्ति, तत्रार्द्रकपुरं नाम नगरं, तत्रार्द्रकनामा राजा बभूव, तस्य चार्द्रका नाम्नी पट्टराज्ञी, तयोरार्द्रकुमारो नाम पुत्रोऽभूत् , स च क्रमेण संप्राप्तयौवनः स्वेच्छया मनोज्ञान् भोगान् भुंजानः सुखेन तिष्ठतिस्म, तस्या चार्द्रकराजस्य श्रेणिकराजेन सह परंपरागता परमप्रीतिरभूत् . एकदा श्रेणिको नृपः प्रचुरं प्राभृतं प्रगुणीकृत्य आर्द्रकराजसमीपे निजामात्यं प्रैषीत् , सोऽमात्योऽपि कियद्भिर्दिनैस्तत्र गतः, आर्द्रकनृपेण बहुमानादरेण संभाष्य तेन मंत्रिणा उपनीतानि प्राभृतानि गृहीतानि, पृष्टं च तस्मै मद्बंधोः श्रेणिकस्य कुशलं वर्त्तते ? ततस्तेनापि तत्रत्यसकलकुशलोदंतनिवेदनेन राज्ञो मनसि परमानंदः संपादितः, तस्मिन्नवसरे आर्द्रकुमारो नृपं पप्रच्छ भो तात ! कः श्रेणिको येन सः तवेदृशी प्रीतिर्वर्त्तते, ? राजा प्रोवाच, मगधदेशस्वामी श्रेणिकनृपो विद्यते, तत्कुले मत्कुले च परंपरागता प्रीतिरस्ति, एतत्पितृवचः श्रुत्वार्द्रकुमारोऽपि मंत्रिणमुवाचः भो मंत्रिन् ! त्वत्स्वामिनः कश्चित्संपूर्णगुणोपेतः पुत्रोऽस्ति ? तेन सहाहमपि मैत्र्यं कर्त्तु मिच्छामि, मंत्र्युवाच श्रेणिकभूपस्य अभयकुमारो नाम पुत्रोऽस्ति, स च सकलकलानिधिः सर्वबुद्धिसमुद्रो मंत्रिपंचशत्या—अधिपो महादयावान् महादाताऽतिदक्षो निर्भयो धर्मज्ञः कृतज्ञश्च विद्यते, किं बहुना ? ते केऽपि जगति गुणा न सन्ति येऽभयकुमारे निवासं न कृतवंतः, इत्थं मंत्रिवचनादभयकुमारगुणान् श्रुत्वार्द्रकुमारः पितुराज्ञां समादाय मंत्रिणं प्रत्युवाच, मामनापृच्छ्य त्वं स्वदेशं मा यासीः, तत्र गच्छता त्वयाऽभयं प्रति स्नेहद्रुमबीजतुल्यं मद्वचः श्रोतव्यमिति, ततो मंत्र्यपि, तद्वचनमंगीकृत्य राज्ञाऽनुसृष्टः सन् वेत्रिणा दर्शितं निवासस्थानं ययौ, अथान्यदार्द्रकनृप प्रवरमौक्तिकादीनि प्राभृतान्यर्पयित्वा स्वपुरुषं तं मंत्रिणं च श्रेणिकपार्श्वे प्रैषीत् , तदार्द्रकुमारोऽपि तस्यैव मंत्रिणा हस्तेऽभयकुमारनिमित्तं विद्रुममौक्तिकादीन्यनुपमवस्तूनि प्रेषितवान् . अथ स पुमान्

मनोवाक्कायशुद्धयाऽत्र पर्वणि पूजास्नात्रादिकं विधेयं, तदवसरे च भगवतः छद्मस्थत्व-केवलित्व-सिद्धत्वरूपमवस्थात्रयं भावनीयं, यदुक्तं—ण्हवणच्चणेहिं छउमत्थ-वत्थपडिहारगेहिं केवलियं ॥ पलियं कुस्सगोहिय । जिणस्स भाविज्ज सिद्धत्तं ॥ १ ॥ द्रव्यपूजासामग्र्यभावे तु भावपूजैव कर्त्तव्या, सा चेत्थं-प्रातः श्रीजिनगृहं गत्वा शुद्धभावेन भगवद्दर्शनं कार्यं, भगवन्मुद्रां विलोक्य च तद्गुणगणस्मरणं विधेयं, तत्फलं यथा-दर्शनाद् दुरितध्वंसी, वंदनाद्वाञ्छितप्रदः । पूजनात्पूरकः श्रीणां, जिनः साक्षात्सुरद्रुमः ॥ १ ॥ पुनः श्री-

शालागृहं पौषधशाला तत्र वा सत् सामायिकं कार्यं श्राद्धैः सदा नोभयसन्ध्यमेवेत्यर्थः । कथं विधिना—खमासमणं दाउं इच्छाकारेण संदिसह भगवन् सामाइय मुहपत्तिं पडिलेहेमित्ति भणिय, बीय खमासमणपुव्वं मुहपत्तिं पडिलेहिय, खमासमणेणं सामाइयं संदिसाविय, बीय खमासमणपुव्वं सामाइय ठामित्ति वुत्तं खमासमणदाणपुव्वं अद्धावणय गत्तो पंचमंगलं कड्ढित्ता "करेमि भन्ते ! सामाइयं सावज्जं जोगं पच्चक्खामि जाव नियमं पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भन्ते ! पडिक्कमामि निन्दामि गरिहामि अप्पाणं वोसिरामि त्ति " सामाइयसुत्तं भणति, तओ पच्छा इरिय पडिक्कमति इत्यादि पूर्वसूरिनिर्दिष्टविधानेन । अत्र च ईर्या प्रतिक्रम्यैव सामायिकोच्चारणं यत्केचिदाचक्षते तत्सिद्धान्तानुत्तीर्णम् , यत उक्तमावश्यकचूर्णि, बृहद्वृत्त्यादौ—" करेमि भन्ते ! सामाइयं सावज्जं जोगं पच्चक्खामि जाव साहू पज्जुवासामि दुविहं तिविहेणमिति, काउण पच्छा इरिआ पडिक्कमइ त्ति " इत्यादि- सर्वमान्यप्राचीनशास्त्रे प्रकटतया प्रथम करेमिभंते उच्चारणानंतरं पश्चाद् ईर्याप्रतिक्रमणं दर्शितं, यथा—उत्तराध्ययन—आवश्यकनिर्युक्त्यादिप्राचीनशास्त्रे षडावश्यकविधिः संक्षिप्तःसामान्येन दर्शितः परं तस्य विशेषार्थः भावपरंपरानुसारेण गुरुपरंपराया, पूर्वाचार्यविरचितविधिवादशास्त्रतो वा ज्ञायते, ततः तदनुसारेणैव विशेषतः संप्रति षडावश्यकविधिः क्रियते । तथैव अत्रापि संक्षिप्तमात्रसामान्येन सामायिकविधिः दर्शितः, परं तस्य विशेषविधिः पूर्वाचार्यविरचितविधिवादशास्त्रतोऽवगतव्यः । तथा उत्तराध्ययनादिगताऽऽवश्यकविधि संक्षिप्तं ज्ञात्वा तस्यानादरकरणे सूत्रार्थोत्थापनदोषप्रसंगः स्यात् , तथैव अत्राऽपि एतद्विधेरनादरकरणे शास्त्रपाठोत्थापनदोषप्रसंगः स्यात् , अतएव तदनुसारेण भव्यात्मभिः समाचरणीय, परं जिनाज्ञाविरुद्धाचरणं न युक्तं " पयमपि असद्दहंतो सुत्तत्थं मिच्छादिट्ठीओ " इति वचनात् । इति । श्रीमत् सुमतिसागरमहोपाध्यायानां लघुशिष्य पं० मुनि-मणिसागरः ।

तस्मात् शुभ आचारो येषां ते शुभाचारास्तैः श्रावकैराश्रव-कषायरोधः कर्त्तव्य इत्युक्तं। अथ पुनरत्र पर्वणि यत्कर्त्तव्यं तदेव श्रावकविशेषणद्वारेणाह-कीदृशैः श्रावकैः, सामायिकजिनपूजातपांसि तेषां विधानं करणं, तदादीनी तत्प्रभृतीनि कृत्यानि-कार्याणि तेषु तत्परैरित्यर्थः, एतावतात्र पर्वणि सुश्रावकैः सामायिकं कार्यं, ❀ सामायिकस्वरूपं चेदं—

समता सर्वभूतेषु, संयमः शुभभावना ॥ आर्त्तरौद्रपरित्याग--स्तद्धि सामायिकं व्रतम् ॥ १ ॥

दिवसे दिवसे लक्खं, देइ सुवण्णस्स खंडि एगो ॥ एगो पुण सामाइयं, करेइ न पहुप्पए तस्स ॥ २ ॥

आदिपदात्पौषधं कार्यं , पौषधफलमिदं—

पोसहि य सुह भावे। असुहाइं खवेइ नत्थि संदेहो ॥ छिंदइ नरयतिरियगइं, पोसहं विहि अप्पमत्तणं ॥ १ ॥

तत्करणसामर्थ्याभावेऽस्मिन् पर्वणि सुश्रावकैर्यथाशक्ति जिनानां द्रव्यपूजा भावपूजा च कर्त्तव्या, पूजाफलमिदं—

सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे। सयसाहस्सिया माला, अणंतं गीयवाइए ॥ १ ॥

---

* --सामायिकविधिविषय आवश्यकचूर्णि-बृहद्वृत्ति-लघुवृत्ति-पञ्चाशकचूर्णि-वृत्ति-योगशास्त्रवृत्ति-श्राद्धदिनकृत्यसूत्र-वृत्ति-श्रावकप्रतिक्रमणचूर्णि-वृत्ति - श्रावकप्रज्ञप्ति-शतपदी-विचारामृतसंग्रहादिगतशास्त्रीयपाठाः विस्तरभयात् नात्र लिख्यन्ते-तथापि सङ्क्षेपतः श्रावकधर्मप्रकरणवृत्तिपाठोऽत्र दर्श्यते तथाहि-अथ यत्र क्रियमाणं श्राद्धानां सामायिकं निष्प्रत्यूहं निर्वहति तत्स्थानमुपदिशति—

चैत्यालये स्वनिशान्ते, साधूनामन्तिकेऽपि वा। कार्यं पौषधशालायां, श्राद्धस्तद्विधिना सदा ॥ १ ॥

चैत्यालये विधिचैत्ये, स्वे निशान्ते स्वगृहेऽपि विजनस्थान इत्यर्थः। पौषो ज्ञानादीनां धीयतेऽनेनेति पौषधं पर्वानुष्ठानम् उपलक्षणात् सर्वधर्मानुष्ठानार्थं,

स एव चौरः समाहूय पृष्टोऽहो कथा तव बहूपकारः कृत ? इति, तेनाप्यभाणि भो महाराज ! 'चतुरोदिनान् यावन्मरणभयभीतेन मया न किंचित्स्नानभोजनादिसुखमज्ञायि, अद्य पंचमेऽहनि अस्याः पंचम्या राज्याः मुखादभयदानाकर्णनेन परमसुखमनुभूयते, अतएव तस्या उपकारः सर्वतो महान्' एतच्चौरवचः श्रुत्वा सर्वैरपि सा प्रशंसिता, पट्टराज्ञी च कृता, अतः सर्वदानानामभयदानं श्रेष्ठमिति ज्ञापितं। ततः सुश्रावकेणात्र पर्वणि खंडन–पेषण–वस्त्रक्षालनाद्यारंभो विवर्जनीयः, तैलिक–लोहकार–भाण्डकर्मकारकादिषु वाचा धनव्ययेन चारंभो निवारणीयः, स्वशक्त्या बंदिमोक्षश्च कार्यः, ग्रामनगरमध्येऽमारीघोषणा कारयितव्या, येन केनापि प्रकारेण जीवरक्षा कार्या ॥

द्वितीयाश्रवपरित्यागे मृषावचनमत्र पर्वणि न वक्तव्यं, गालिप्रदानादिकठिनवाणी न वाच्या, सर्वथा वाक्शुद्धिः कार्या। तृतीयाश्रवपरित्यागे परधनग्रहणं विवर्जनीयं, द्रव्यस्य हि जंतूनां बाह्यप्राणरूपत्वात्, तदपहारस्य च मरणरूपकष्टहेतुत्वात्। चतुर्थाश्रवपरित्यागेऽत्र पर्वणि ब्रह्मचर्यं पालनीयं, स्त्रीसंगो विवर्ज्य इत्यर्थः, परस्त्रीसेवनं तु लोकद्वयविरुद्धत्वात् सुश्रावकेणावश्यमेव वर्ज्यं। पञ्चमाश्रवपरित्यागे धनधान्यादिनवविधपरिग्रहे परिमाणं कार्यं, परिग्रहतृष्णाऽपरिमिता न धार्या, इच्छापरिमाणं विधेयमित्यर्थः। तथा पुनरस्मिन् पर्वणि कषायरोधः कर्त्तव्यः, कषायाश्चत्वारः क्रोध–मान–माया–लोभाख्यास्तेषां परित्यागो विधेयः, क्रोधोदये हि कलहोत्पत्तिश्चिरंतनप्रीतिनाशश्च, मानोदये विनयनाशस्तथा च सद्ध्यानवतामपि मुनीनां केवलावाप्तौ अंतरायः स्यात्, राजर्षिबाहुबलिवत्, एवं मायोदये लोभोदयेऽपि च बहवो दोषा उत्पद्यन्ते, अतश्चत्वारोऽपि कषायास्त्याज्याः, उक्तंच—

कोहो पिइं पणासेइ। माणो विणयनासणो ॥ माया मित्ताणि नासेइ। लोहो सव्वविणासणो ॥ १ ॥

दीयते म्रियमाणस्य, कोटिजीवितमेव च ॥ धनकोटिं न गृह्णीयात्, सर्वो जीवितमिच्छति ॥ १ ॥
अपि च—या दद्यात्कांचनं मेरुं, कृत्स्नां चापि वसुंधराम् ॥ एकस्य जीवितं दद्यान्नहि तुल्यमहिंसया ॥ २ ॥

अतोऽभयदानख्यापनार्थं कथानकमुच्यते--तथाहि--वसंतपुरेऽरिदमनो राजा, तस्य पंच राज्यः, तासु चैका दुर्भगा, चतस्रोऽत्यंतवल्लभाः, एकदा चतुर्वधूसमेतो राजा निजप्रासादगवाक्षस्थो नानाविधक्रीडाविलासं कुर्वंस्तिष्ठति, तस्मिन्नवसरे एकश्चौरो राजमार्गेण नीयमानो राज्ञा सपत्नीकेन दृष्टः, स च कीदृशः ? कंठन्यस्तरक्तकणवीरमालो, रक्तवस्त्रपरिधानो, रक्तचन्दनानुलिप्तगात्रः पुरस्ताद्वाद्यमानवध्यडिंडिमः, इत्थं विविधविडंबनाभिर्विडंब्यमानं तं चौरं दृष्ट्वा राज्ञीभिः पृष्टं, किमकार्यमनेनाकारीति, तदा एकेन राजपुरुषेण तासां पुरः कथितं, परद्रव्यापहारेण राजविरुद्धमनेन कृतमिति, ततः संजातकृपया एकया राज्या विज्ञप्तो राजा, स्वामिन् ! यो भवता मह्यं प्राग्वरः प्रतिपन्नः सोऽधुना दीयतां, येनाहमेकदिनमुपकरोमि चौरं, तदा कथंचिद्राज्ञा प्रतिपन्नं तद्वचः, ततस्तया स्नानादिपुरस्सरं दीनारसहस्रव्ययेन विविधवस्त्रालंकारैरलंकृतः स चौरः, ततो द्वितीयया द्वितीयदिने राजानं विज्ञप्य दीनारदशसहस्रव्ययेन स सत्कृतः, ततस्तृतीयया तृतीयदिने स दीनारलक्षव्ययेन स उपचरितः, ततश्चतुर्थ्या दीनारकोटिव्ययेन चतुर्थो दिवसोऽतिवाहितः, ततः पंचम्या दुर्भगया राज्या पंचमदिने राज्ञः समीपमागत्य विनयेन नम्रया दीनवचसा नृपो विज्ञप्तः, स्वामिन् ! मम दुर्भगाया उपरि भवदीया तादृशी कृपा नास्ति, तेन मया कदापि भवंतो न याचिताः, अधुनाऽस्य चौरस्य जीवितदानं मया त्वां याच्यते, तदा राज्ञापि जीवितप्रदानपूर्वकं चौरः प्रदत्तोऽनया च तं चौरं स्वगृहे नीत्वा सामान्यभोजनेन भोजयित्वा कथितं मया तुभ्यं जीवितं प्रदत्तं, पुनश्चौर्यं मा कार्षीस्ततोऽसौ हृष्टस्तदा सपत्नीभिर्हसितं नास्य त्वया किंचित् सुखकारि कृतं, तासां च परस्परं बहुप्रकारविषये विवादे संजाते राज्ञा

तोरणादिभिरलंकृतानि अतिसुन्दराणि संति, तत्र देवेंद्रा बहुदेवदेवीपरिवृताः प्रवर्द्धमानभावेनाष्टाह्निकमहोत्सवं कुर्वन्ति, जल–चंदन-पुष्प-धूपाद्यष्टद्रव्यैर्जिनबिंबानि पूजयंति, जिनगुणान् गायंति, नाटकं च विदधति, इत्थमष्टदिवसावधि महोत्सवं समाप्य पुनः स्वस्थानं गच्छति. एवं श्रावकैरपि श्रीमत्तीर्थंकरप्रकाशितेऽस्मिन् ✻ पर्वणि समागते धर्मणि यत्नो विधेयः, तथा चास्मिन् पर्वणि श्रावकाणां कृत्यान्याह–

आश्रवकषायरोधः कर्त्तव्यः श्रावकैः शुभाचारैः। सामायिकजिनपूजा–तपोविधानादिकृत्यपरैः ॥ १ ॥

तत्राश्रवाः पंच ते चामी–प्राणातिपात–मृषावादाऽ–दत्तादान-मैथुन-परिग्रहस्तेषां रोधो निरोधः, अर्थात्तत्त्यागः कर्त्तव्यः, एतावता प्रथमं द्वींद्रियादयो ये त्रसजीवास्तेषां विराधनाः श्रावकैर्वर्ज्याः, सर्वदानेषु अभयदानमेवश्रेष्ठं, यदुक्तं सूत्रकृदंगे—'अभयप्पहाणमिति' अन्यत्राप्युक्तं च—

---

✻निशीथभाष्य–चूर्णि-बृहत्कल्पभाष्य चूर्णि-वृत्ति स्थानांगसूत्रवृत्ति-समवायांगसूत्रवृत्ति-कल्पसिद्धान्त-व्याख्यादिशास्त्रानुसारेण जैनटिप्पणकसद्भावे अधिकमास आगते आषाढ-चातुर्मासात् विंशत्या दिनैः पर्युषणाकरणं प्रोक्तं, तथा अधिकमासाऽभावे पचाशतैव दिनैः प्रोक्तं, परं च जैनटिप्पणकाऽभावे संप्रति लौकिकटिप्पणके मासवृद्धिर्भवतु वा मा भवतु तथापि पचाशतैव दिनैः पर्युषणाकरणमर्यादा सर्वगच्छीयपूर्वाचार्यैः प्रमाणीकृता आसीत्, अतएव पंचाशतैव दिनैः द्वितीयश्रावणे प्रथमभाद्रपदे वा पर्युषणाया आराधनं युक्तियुक्तं शास्त्रसम्मतं जिनाज्ञानुसारं च ज्ञेयं, परं न अशीतिदिनैः। अस्य विशेषनिर्णयः कल्पसूत्रस्य कल्पद्रुमकलिकाया नवमव्याख्यानाद् अस्मत् कृतबृहत्पर्युषणानिर्णयग्रंथाच्च अवगतव्यः, इति हस्ताक्षराणि श्रीमत् सुमतिसागरमहोपाध्यायानां लघुशिष्य पं० मुनि-मणिसागरस्य।

## ॥ श्रीपर्युषणाद्यष्टान्हिकाव्याख्यानम् ॥ १० ॥



शांतीशं शांतिकर्त्तारं, नत्वा स्मृत्वा च मानसे। अष्टाह्निकाया व्याख्यानं, लिख्यते गद्यबंधतः ॥ १ ॥

शांतीशं शांतिकर्त्तारं, नत्वा स्मृत्वा च मानसे। अष्टाह्निकाया व्याख्यानं, लिख्यते गद्यबंधतः इह च सकलदुष्कर्मवारिणि विमलधर्मैकर्मकारिणि इह परत्र च कृतप्रभूतशर्मणि श्रीपर्युषणादिपर्वणि सत्रागते सति, सकलसुरासुरेंद्राः
इह च सकलदुष्कर्मवारिणि विमलधर्मकर्मकारिणि इह परत्र च कृतप्रभूतशर्मणि श्रीपर्युषणादिपर्वणि सत्रागते सति, सकलसुरासुरेंद्राः संभूय श्रीनंदीश्वरद्वीपस्य मध्यभागे चतुर्दिक्षु चत्वारोंजनगिरयः संति,
संभूय श्रीनंदीश्वरनामनि * अष्टमद्वीपे धर्ममहिमानं कर्तुं गच्छंति; तत्र तावन्नंदीश्वरद्वीपस्य मध्यभागे चतुर्दिक्षु चत्वारोंजनगिरयः संति, दधिवर्णाः
अंजनवर्णाः पर्वता इत्यर्थः। तेषां प्रत्येकं चतुर्दिक्षु चतस्रो वाप्यः संति, तासां वापिनां मध्यभागेषु दधिमुखाः पर्वताः संति, दधिवर्णाः
श्वेतवर्णा इत्यर्थः। पुनर्द्वयोर्वाप्योरंतरे द्वौ द्वौ रतिकरपर्वतौ वर्त्तेते, रक्तवर्णा इत्यर्थः। एवं चैकैकांजनगिरिः, समंताच्चत्वारो दधिमुखाः,
अष्टौ च रतिकराः संति, संमिलने द्वादश, त्रयोदशश्च स्वयमंजनगिरिः, इत्थं चतुर्दिक्षु चतुर्णामंजनगिरीणां सपरिकराणां मीलने जाता
द्विपंचाशद्गिरयः, ते च पृथग्नामसंख्यया—चत्वारोंजनगिरयः ( ४ ), षोडश दधिमुखाः ( १६ ), द्वात्रिंशद्रतिकरपर्वताः ( ३२ ), तेषा-
मुपर्येकैकं जिनभवनमस्तीति द्विपंचाशज्जिनभवनानि संति, तेषु च जिनचैत्येषु प्रत्येकं चतुर्विंशत्यधिकशतं जिनबिंबानि संति, सर्वेषां
मिलनेऽष्टचत्वारिंशदधिकचतुःषष्टिशतानि ( ६४४८ ) जिनबिंबानि भवंति, तानि च सर्वाण्यपि चैत्यानि चतुर्द्वाराणि शाश्वतानि प्रवर-

*एकलक्षयोजनप्रमाणो जम्बूद्वीपः, द्विलक्षयोजनप्रमाणो लवणसमुद्रः, एवं द्वीप समुद्राणां द्विगुणद्विगुणकरणेन—धातकी पुष्कर-वारुणी-क्षीर घृत-इक्षु-
यावत् षोडशाब्ज-अष्टत्रिंशत् कोटि-चत्वारिंशत् लक्षाः-( १६३८४०००००० ) एतावत् योजनप्रमाणोष्टमनंदीश्वरनामको द्वीपोऽस्ति ॥

स्थानांतरे मोचनं प्रेष्यप्रयोगः २, कंचित् कार्येणाकारयंतं दृष्ट्वा स्वकार्यसाधनार्थं शब्दकरणं शब्दानुपातः, ३, तथैव परं प्रति स्वस्य रूपदर्शनं रूपानुपातः ४, अभिगृहीतदेशाद् बहिः कार्यज्ञापनाय पापाणादिक्षेपणं पुद्गलक्षेपः ५ ॥ एकादशे पौषधव्रते पंचातिचाराः, यथा-अप्रतिलेखितदुःप्रतिलेखितशय्यासंस्तारकासेवनं १. अप्रमार्जितशय्यासंस्तारकासेवनं २, अप्रतिलेखितादिभूमिकासु उच्चारप्रस्त्रवणपरिष्ठापनं ३, अप्रमार्जितादिभूमिकासु उच्चारादिपरिष्ठापनं ४, प्रभातसमये अमुकमाहारं पाचयिष्यामीत्यादिप्रकारचिंतनं ५ ॥ द्वादशे अतिथिसंविभागव्रते पंचातिचाराः, यथा-साधुसमागच्छंतं दृष्ट्वाऽदानबुद्ध्या देयद्रव्यस्य सचित्तोपरिस्थापनं १, सचित्तेन फलादिना देयवस्तुन आच्छादनं २, स्वकीयमपि मोदकादिद्रव्यमन्यदीयमेतदिति कथनं ३, यदि एतेन निःस्वेनापि दानं दत्तं तत्किमहमतोऽपि हीन इति मात्सर्याद्दानं ४, आहारमानीय भुंजानानां भुक्तवतां साधुनां निमंत्रणं, यथा मदीयोऽभिग्रहोऽपि न भज्यते, वस्तवपि एते न गृह्णंतीत्यभिप्रायेणेति ५ ॥ इत्थं द्वादशव्रतानां पञ्चयतिचाराः, सर्वेऽपि मिलिताः ( १२४ ) इति. एषां मध्ये ये केऽप्यतिचारा लग्ना भवेयुस्तेषां मे मिथ्यादुष्कृतमस्तीति संघादिसमक्षं वाच्यं, ततः सर्वेष्टार्थसिद्धिः ॥

इति चातुर्मासिकत्रयव्याख्यानं समाप्तं ॥ ९ ॥



भ्यो दानं ३, कुप्यस्य स्थालादीनां दशकादेः संयोज्य पंचकादिकरणं ४, पूर्वं सामान्यतो नियमं विधाय पश्चात् सगर्भयोर्द्विपदचतुष्पदयोर्ग्रहणं ५ ॥

अथ षष्ठे दिक्परिमाणाख्ये गुणव्रते पंचातिचाराः, यथा–ऊर्ध्वाधस्तिर्यक् ३ प्रमाणातिक्रमेण वस्त्वानयनप्रेषणाभ्यां त्रयोतिचाराः ३, अन्यदिग्योजनानामन्यस्यां दिशि क्षेपणं क्षेत्रवृद्धिः ४, किंचित् स्वयमेव कृतदिक्प्रमाणविस्मरणं स्मृत्यंतर्धानं ५ ॥ सप्तमे भोगोपभोगव्रते पंचातिचाराः, यथा–सचित्तभक्षणकृतनियमस्य कृततत्परिमाणस्य वा पुंक्षो दाडिमादि यत्सचित्तं वस्तु तस्य भक्षणं १, पक्वाम्रफलादिसचित्तप्रतिबद्धं तस्य भक्षणं २, अचालितकणिकादि 'अप्पोल' मित्युच्यते, तस्य भक्षणं ३, पृथुकादि 'दुप्पोल' मित्युच्यते, तस्य भक्षणं ४, अतृप्तिजनका लघुबीजा ओषधयस्तुच्छौषधयस्तासां भक्षणं ५ ॥ अष्टमे अनर्थदण्डविरमणे पंचातिचाराः, यथा–कामोद्दीपकशास्त्राभ्यासः कंदर्पः १, मुखाक्षिभ्रूविकारपूर्विका भंडचेष्टा कौत्कुच्यं २, गाल्याद्यसंबद्धप्रलापित्वं मौखर्यं ३, संयुक्तस्य उदूखलमुशलघरट्टादेर्धारणं संयुक्ताधिकरण ४, स्नानादिसमये अधिकतैलमृत्तिकादिसामग्रीमेलनं,सरोवरादौ स्नानादिकरणेन पृथिव्यप्कायादिविराधनं च भोगोपभोगातिरेकः ५ ॥

अथ नवमे सामायिकव्रते पंचातिचाराः, यथा–मनसि पापव्यापारचिंतनं मनोदुःप्रणिधानं १, विकथाकरणं वाग्दुःप्रणिधानं २, अप्रतिलेखिते स्थाने हस्तादिक्षेपणं कायदुःप्रणिधानं ३, सामायिकं कृत्वा मुहूर्त्तमात्रमपि तदासेवनया अकरणं अनवस्थानं ४, सामायिकं मया कृतं न वेति स्मृतिविहीनता ५ ॥ दशमे देशावकाशिकव्रते पंचातिचाराः, यथा—परं प्रति त्वया इदमानेतव्यमित्युक्त्वाभिग्रहविषयकदेशात्परतो वस्त्वानयनं आनयनप्रयोगः १ त्वयेदं मम वस्तु गृहादौ नेतव्यमित्युक्त्वा स्वपार्श्वस्थाधिकवस्तुनोऽभिगृहीतदेश

अथ द्वादशव्रतानां पञ्चपञ्चातिचारा उच्यंते. तत्र प्रथमं स्थूलप्राणातिपातविरमणव्रते पंचातिचाराः यथा—निर्दयतया पश्वादीनां कशादिभिस्ताडनं वधः १, रज्ज्वादिभिर्गाढबंधनं बन्धः २, शस्त्रेण कर्णादिकर्त्तनं वृषणच्छेदनं च छविच्छेदः, छविः शरीरं तस्य छेद इति व्युत्पत्तेः ३, वृषभादीनां स्कंधे पृष्ठे च सामर्थ्यातिरिक्तभारारोपणमिति भारः ४, वृषभादीनां वेलाप्राप्तावपि अन्नजलघासनिवारणा भक्तपानव्यवच्छेदः ५ ॥ स्थूलमृषावादविरमणव्रते पंचातिचाराः, यथा—त्वं चौरस्त्वं जार इत्यादि परं प्रति अविचार्यभाषणं सहसाभ्याख्यानं १, एकांते स्थितान् कानपि विलोक्य एते राजविरुद्धं चिंतयंतीति प्रकाशनं रहोभ्याख्यानं २, विश्वासिभिः स्वदारैः स्वमित्रैर्वा यत्प्रच्छन्नं कथितं तस्यान्येषामग्रे प्रकाशनं स्वदारमन्त्रभेदः ३, कष्टे पतितस्य कस्यचित् पृच्छतोऽलीकमीदृशं वदेरित्यादिशिक्षणं मृषोपदेशः ४, कूटलेखश्च प्रतीतः ५ ॥ स्थूलादत्तादानविरमणव्रते पंचातिचाराः, यथा—चौराहृतवस्तुग्रहणं स्तेनाहृतं १, चौराणां शंबलादिदानेन साहाय्यकरणं स्तेनप्रयोगः २, घृतादौ तादृशवस्तुनो वशादेर्मीलनं तत्प्रतिरूपक्षेपः ३, विरोधिराज्ये लाभार्थं वस्तुविक्रयणार्थं गमनं विरुद्धगमनं ४, लोकप्रसिद्धतुलामानयोर्न्यूनाधिककरणं कूटतुलाकूटमानं ५ ॥ स्थूलमैथुनविरमणव्रते पंचातिचाराः यथा—वेश्यायां १, विधवायां २, कन्यायां ३ वा गमनं अपरिगृहीतागमनं १, भाटकप्रदानेन स्तोककालं यात्मीया कृता तस्यां गमनं इत्वरीगमनं २, अंगं स्त्रीपुरुषचिह्नं, तदन्यानि अंगानि कुचकक्षोरुवदनादीनि तेषु रमणं अनंगक्रीडा ३, स्वापत्यानामिव अन्यापत्यानां परिणायनं परविवाहकरणं ४, कामभोगेषु गाढाभिलापस्तीव्रानुरागः ५ ॥ स्थूलपरिग्रहपरिमाणव्रते पंचातिचाराः, यथा—गणिम १ धरिम २ मेय ३ परिच्छेद्य ४ भेदाच्चतुर्विधस्य धनस्य शालिगोधूमादेर्धान्यस्य च समर्घस्य सत्यंकारादिना स्वीकृत्य नियमावधिं यावत्तत्रैव व्यवस्थापनं १, क्षेत्रवास्तुनोर्मध्यवर्तिवृत्त्यादिदूरीकरणेन एकीकरणं २, पूर्णेऽवधौ ग्रहीष्यामीति बुद्ध्या रूप्यस्वर्णादेर्भार्यादि-

पंचदश कर्मादानातिचाराः ॥

ज्ञानस्याष्टौ अतिचाराः यथा-अकालवेलायां प्रतिषिद्धदिने वा श्रुताध्ययनं १, गुरोर्ज्ञानोपकरणानां पुस्तकादीनां वा पादादिसंघट्टनेनाऽविनयकरणं २, तथा एषामेव बहुमानस्याऽकरणं ३, उपधानयोगादि विना श्रुताध्ययनं ४, यस्य पार्श्वे श्रुतमधीतं तस्य गुरोर्नाम्नोऽपलपनं ५, देववंदनप्रतिक्रमणादौ शुद्धाक्षराणामपठनं ६, तत्रैव शुद्धार्थस्यापठनं ७, तत्रैवाऽशुद्धयोः सूत्रार्थयोः पठनं ८, इति ज्ञानस्याष्टौ अतिचाराः ॥

दर्शनस्याप्यष्टौ अतिचारास्तथाहि-देवगुरुधर्मविषये शंकाकरणं १, सर्वाण्यपि दर्शनानि शोभनानीति श्रद्धाकरणं २, धर्मस्य फले संदेहकरणं ३, मिथ्यादृष्टीनां महत्त्वं दृष्ट्वा तदुपरि तीव्ररागकरणं ४, साध्वादीनां गुणश्लाघाया अकरणं ५, नवप्रतिबुद्धश्राद्धादेः स्थिरताया अकरणं ६, साधर्मिकाणां वात्सल्याऽकरणं ७, सति सामर्थ्ये जिनशासनस्य प्रभावनाया अकरणं ८, इति दर्शनस्याष्टौ अतिचाराः ॥

तथा पंचानां समितिनामीर्यादीनां ५, तिसृणां च गुप्तीनां मनोगुप्त्यादीनां ३, तथाविधाऽपालने चारित्रस्याष्टौ अतिचाराः । तथा 'अणसणमूणोयरिया' इत्यादि द्वादशतपोभेदानां सम्यगकरणे तपसो द्वादशातिचाराः । तथा मनोवीर्य १ वचनवीर्य २ कायवीर्याणां ३ देववंदन-प्रतिक्रमण-स्वाध्याय-दान-शीलादौ अस्फोरणे वीर्यस्य त्रयोऽतिचाराः । सम्यक्त्वस्य पंचातिचाराः, यथा-श्रीजिनेंद्रोक्तपदार्थेषु सन्देहः शंका १, अन्यान्यदर्शनाभिलाषः कांक्षा २, धर्मफलं प्रति सन्देहो विचिकित्सा, अथवा मलमलिनवपुषः साधून् दृष्ट्वा जुगुप्साकरणं विचिकित्सा ३, मिथ्यादृष्टीनां प्रशंसनं कुलिंगप्रशंसा ४, मिथ्यादृष्टिभिः सह परिचयः कुलिंगसंस्तवः ५ ॥

पत्तेयं २४ ॥ बारस तव १२ विरयतिगं ३ । पण सम्म ५, वयाणं पत्तेयं ६९ ॥ १ ॥ व्याख्या—संलेखनायाः पंचातिचारास्तथाहि— अत्र इतस्तपः प्रभावादहं मनुष्यो राजादिर्भूयासमिति इहलोकाशंसा १, इतोऽनुष्ठानात्परलोके देवो भूयासमिति परलोकाशंसा २, कृतानशनोऽहं लोकैः पूज्योऽस्मि, अतश्चिरं जीयासमिति जीविताशंसा ३, अपूज्यत्वाद्व्याधिपीडितत्वाद्वा शीघ्रं म्रियते चेद्वरमिति यत्प्रार्थनं तन्मरणाशंसा ४, रूपं शब्दश्च कामौ, गंधरसस्पर्शाभोगास्ते मम प्रशस्ता भूयासुरिति या इच्छा सा कामभोगाशंसा ५, संलेखनां कृत्वा यद्येवं चिंतयति तदातिचाराः, एषु च यदि कोऽपि कालयत्रसंबंधी अतिचारो लग्नो भवेत्तदा तस्य मे मिथ्यादुष्कृतमिति संघादिसमक्षं वाच्यं, एवमग्रेऽपि बोध्यम् ।

अथ पंचादश कर्मादानातिचाराः यथा—

आजीविकादिनिमित्तं काष्ठदहनेन अंगाराणां करणं, तद्विक्रयणं, इष्टिकापाचनमित्यादि अंगारकर्म १, वृक्षादेः पत्रपुष्पादेर्वा छेदनविक्रयणादि वनकर्म २, शकटानां तदंगानां च निष्पादनवाहनादि शकटकर्म ३, शकटवृषभादीनां भाटकेनार्पणं भाटककर्म ४, हल-कुद्दालादिभिर्भूमिविदारणं पाषाणादिघटनं यवादिधान्यानां भुंजनादिकरणं च स्फोटककर्म ५, प्रथमत एव म्लेच्छादिभ्यो मूल्यदानेन गजदंताद्यानाय्य विक्रयणं, आकाराद्वा स्वयमानीय विक्रयणं दंतवाणिज्यं ६, लाक्षा—नीली—मनःशिलादेः सुलितधान्यादेश्च विक्रयो लाक्षावाणिज्यं ७, घृत—तैलादि रसविक्रयो रसवाणिज्यं ८, यस्मिन् भक्षिते प्राणी म्रियते तद्विषं, तस्य वाणिज्यं ९, द्विपद—चतुष्पदादि विक्रयः केशवाणिज्यं १०, तिलेक्ष्वादीनां यंत्रैः पीडनं यंत्रपीलनं ११, वृषभादेर्वृषणकर्णादिच्छेदनं निर्लांछनकर्म १२, क्षेत्रादौ वह्नेर्ज्वालनं दवदानं १३, गोधूमादेः पोक्षः ( पार्थः ) सरोहृदादिशोषश्च प्रसिद्धः १४, असत्यो दुःशीला दास्यादयस्तासां पोषणमसतीपोषः १५ ॥ इति

तथा तपो हि दुष्टाष्टकर्मविनाशकं सकललब्धिजनकं बाह्याभ्यंतरभेदतो द्वादशविधं दृढप्रहारिवद्भव्यात्मभिः समाचरणीयं । तपोमुखा-
नीत्यत्र मुखशब्द आद्यर्थस्तेन भावनादिपरिग्रहः, इति व्याख्यातं ब्रह्मक्रियादिपदं यत्र । किंचात्रधर्मार्थिनात्मनिंदा कर्त्तव्या, न पर-
निंदा, तत्र चित्रकृत्पुत्रीदृष्टांतः, स चैवं–कांचनपुराधीशेन जितशत्रुराजेन स्वस्य नवीनसभायां कनकमंजरी नामचित्रकरसुतानिर्मितं
चित्रमयूरं साक्षान्मयूरमिव दृष्ट्वा तच्चातुर्यगुणरंजितेन सा परिणीता, तया च स्वबुद्ध्या प्रत्यहं नवनवकथाकथनेन नृपः षण्मासान्
यावत् स्ववासे आनीतः, तदा राज्ञा बहु मन्यमानापि सा प्रतिदिनं स्वगृहे एकांतदेशे उपविश्य पितृगृहसंबंधिसामान्यवेषं परिधाय
हे आत्मन् ! राजमान्यत्वमस्थिरमस्ति, अतोऽहंकृतिर्न विधेया, तव पितृगृहसंबंधिनी त्वियं ऋद्धिरस्तीत्यादिवचनैरात्मानं निंदति
स्म. अथ छलं पश्यंतीभिः सपत्नीभिस्तथाकुर्वाणां तां विलोक्य नृपायोक्तं, एषा तु भवतां कार्मणं करोति, ततो राज्ञा परीक्षार्थमेकदा–
कस्मादागत्य तामात्मनिंदां कुर्वाणां दृष्ट्वा तुष्टेन पट्टराज्ञी कृता, अपराश्चापमानिताः, एवं धर्मार्थिभिरात्मनिंदा कार्येति ॥

अन्यच्च चातुर्मासिकपर्वाराधयितुकामैर्भव्यात्मभिरस्मिन् दिने स्वे स्वेऽतिचारा आलोचनीयाः, गुर्वादिसमक्षं च तेषां मिथ्यादुष्कृतं च वाच्यं,
तत्र साधूनां चरणसप्तति(७०), करणसप्तति (७०) मिलनाच्चत्वारिंशदधिकशत (१४०) मतिचारा भवंति, ते च ग्रन्थगौरवभयान्न लिख्यंते.
❀ । श्रावकाणां तु चतुर्विंशदधिकशतमतिचाराः ( १२४ ) स्युस्ते संक्षेपतो दर्श्यंते—पण संलेहण ५ पन्नरस–कम्म १५, नाणाइ अट्ठ

* संक्षेपतो गाथाद्वयं यथा–वय ( ५ ) समणधम्मं ( १० ) संजमं ( १७ ) वेयावच्चं च ( १० ) बंभगुत्तीओ ( ९ ) ॥ नाणाइ तिअं ( ३ ) तव ( १२ ), कोह निग्गओ ( ४ ) होइ चरणमेयं ॥ १ ॥ पिंड विसोही ( ४ ) समिई ( ५ ) भावणा ( १२ ), पडिमा य ( १२ ) इंदिय निरोहो (५)॥ पडिलेहण ( २५ ) गुत्तीओ ( ३ ), अभिग्गहो ( ४ ) चेव करणं तु ॥ २ ॥

अथ देवार्चनस्नात्रविलेपनानि व्याख्यायन्ते—देवस्य श्रीजिनेंद्रस्य तत्प्रतिमायाश्च अर्चनं वासादिना, स्नात्रं जलादिना, विलेपनं च चन्दनादिना कर्त्तव्यमेतत्पदत्रयेण सर्वोऽपि पूजाप्रकारः सूचितः । पूजाफलं चेदं—सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे ॥ सयसाहस्सिया माला, अणंतं गीयवाइयं ॥ १ ॥ इत्यादि, अत्र दृष्टांताः स्वयं वाच्याः । अथ ब्रह्मक्रिया १ दान २ तपोमुखानि ३ व्याख्यायंते, तत्र ब्रह्मक्रिया-ब्रह्मचर्यं सुदर्शनश्रेष्ठ्यादिवत् शीलव्रतपालनमित्यर्थः, तत्फलं यथा—जो देइ कणयकोडिं, अहवा करेइ कणयजिणभवणं ॥ तस्स न तत्तिय पुन्नं, जत्तिय बंभव्वए धरिए ॥ १ ॥ ॥ इति । तथा दानं हि अभयं १ सुपात्रा-२ नुकंपो ३ चित ४ कीर्त्ति ५ भेदात्पंचविधं, तत्र द्वाभ्यां मोक्षः, त्रिभिश्च भोगप्राप्तिः, इहाभयदाने दृष्टांतो यथा—

राजगृहे सभास्थितेन श्रेणिकनृपेण प्रोक्तं, संप्रति नगरे किं वस्तु सुलभं स्वादु चास्ति ? क्षत्रियाः प्रोचुर्मांसं समर्घं स्वादु चास्ति, तदा अभयकुमारेण चिंतितं, एते निर्दयाः, अथ यथा पुनरप्येवं न जल्पेयुस्तथा कुर्यां, ततो रात्रौ सर्वक्षत्रियगृहेषु पृथक्पृथग्गत्वाऽभय एवमवादीत्—भो क्षत्रियाः ! राजपुत्रशरीरे महाव्याधिरुत्पन्नोऽस्ति, यदि मनुष्यसत्कं कालेयमांसं टंकद्वयमितं दीयते तदा स जीवति नान्यथेति वैद्यैरुक्तमस्ति. ततो यूयं राज्ञो ग्रासजीविनो भवद्भिरेवैतत्कार्यं कर्त्तव्यं. तदा एकेनोक्तं दीनारसहस्रं गृहाण ? परं मां मुंच ? अन्यत्र गच्छ ? अभयेन तद् गृहीतं, एवं रात्रौ प्रतिगृहं परिभ्रम्य तैर्दत्तानि बहूनि दीनारलक्षाण्यादाय प्रभाते नृपसभायां तद्धनं क्षत्रियेभ्यो दर्शितं, प्रोक्तं च अहो गतदिने यूयमेव वदथ यन्मांसं सुभलमिति. अद्य तु एतावता द्रव्येणापि तन्मांसं न प्राप्तं, ततो लज्जितास्तेऽभयेन हक्किताः, ततो मांसभक्षणनियमं प्रापिताश्च, अत्रार्थे श्लोकः—स्वमांसं दुर्लभं लोके, लक्षेणापि न लभ्यते ॥ अल्पमूल्येन लभ्यते । पलं परशरीरजं ॥ १ ॥ एवमन्यैरप्यभयदानबुद्धिर्धार्येति ॥

अथावश्यकपदं व्याख्यायते, तत्रोभयकालं यदवश्यं कर्त्तव्यं तदावश्यकं प्रतिक्रमणमित्यर्थः, तत्फलं चेदं–आवस्सएण एएण । सावओ जइवि बहुरओ होइ ॥ दुक्खाणमंतकिरियं । काही अचिरेण कालेण ॥ १ ॥ व्याख्या—श्रावको यद्यपि बहुरजस्को बहुपापयुक्तो भवति तथाप्येतेनावश्यकेन कृत्वा स्तोकेन कालेन दुःखानामंतक्रियां विनाशं करिष्यतीति, किंच— आवस्सअं उभयकालं, ओसहमिवं जे करंति उज्जुत्ता ॥ जिणविज्जकहियविहाणा, अकम्मरोगा य ते हुंति ॥ २ ॥ व्याख्या—श्रावका उपयोगयुक्ताः संतः प्रभातसंध्याकालयोर्जिनवैद्यकथितविधिना सम्यक्प्रकारेण औषधमिवावश्यकं कुर्वंति ते कर्मरोगरहिता भवंतीति. प्रतिक्रमणनियमे साजणसिंहदृष्टांतः । स चैवं—साजणसिंहनामा श्रेष्ठी द्विसंध्यं कालवेलायां प्रतिक्रमणं विना भोजनं न कार्यमिति नियमवान् बभूव. एकदा पीरोजपातसाहेन केनचिदपराधेन स कारागारे क्षिप्तस्तदा तत्र स्थितेनापि तेनारक्षकपुरुषेभ्यः पंचाशत्पंचाशन्मितान् सुवर्णनिष्कान् दत्त्वा प्रत्यहं प्रतिक्रमणं कृतं, अन्यदा रत्नद्वयपरीक्षणव्यतिकरे तृतीयं रत्नं जगन्मध्ये त्वमिति वचनात्प्रसन्नेन सुरत्राणेन स मुक्तः सन्मानितश्च. तदा तैर्भीतैरारक्षकैर्निष्कास्तस्य पश्चात्प्रदत्तास्ततः श्रेष्ठिना ते निष्कास्तेभ्य एव दत्ताः, प्रोक्तं च अहो एतद्धनं कियत् ! यतोऽमूल्यं प्रतिक्रमणं मया कृतं भवत्साहाय्यादिति दृष्टांतः ॥

अथ पौषधं व्याख्यायते— धर्मस्य पोषं पुष्टिं दत्ते तत्पौषधं, तच्चाहार १ शरीरसत्कार २ गृहव्यापार ३ अब्रह्म ४ निवृत्तिरूपं बोध्यं, तत्फलं चेदं—पोसहि य सुहे भावे । असुहाइ खवेइ नत्थि संदेहो ॥ छिंदेइ निरयतिरिगइं । पोसह विहिअप्पमत्तेणं ॥ १ ॥ पौषधव्रतस्थिरत्वे कामदेवदृष्टांतः—यथा कामदेवश्रावकः पौषधे स्थितः सन् निशायां मिथ्यात्विदेवेन–दुष्टगज १ नाग २ पिचाश ३ रूपैर्बहुधा क्षोभितोऽपि मनोवाक्कायैर्मनागपि न क्षुभित इति.

नर्त्तकीनिमग्नचित्तोऽपि तयोर्निर्विकारभावदर्शनात् सद्यः संप्राप्तवैराग्योऽनित्यादिभावनां भावयन् केवलज्ञानं प्राप, देवैर्महोत्सवो विहितो, वंश एव च सिंहासनं बभूव, तत्स्वरूपदर्शनान्नृपादयोऽपि प्रतिबुद्धाः ॥ इति ॥ परिज्ञायामिलापुत्रदृष्टांतः ॥७॥ अथ परिहरणीयवस्तुत्यागे तेतलिपुत्रदृष्टांतो यथा—तेतलिपुरे कनककेतुर्नामराजा, स च राज्यलोभाज्जातमात्रान् स्वपुत्रान् विनाशयति. तस्य राज्ञस्तेतलिपुत्रनामामात्यस्तस्य पोट्टिलानाम भार्या, सा च प्रथमं मंत्रिणोऽतिवल्लभासीत् , पश्चात्कथंचिदनिष्टा जाता. एकदा तस्या गृहे आहारार्थमेका साध्वी समुपागता, मंत्रिपत्न्या तां प्रति प्रणम्य भर्तृवशीकरणोपायः पृष्टः, साध्व्या प्रोक्तं धर्मः सेव्यो येन सर्वेष्टार्थाः सिद्ध्यंति, ततः सा संसाराद्विरक्ता सती दीक्षाग्रहणार्थं पतिं पप्रच्छ, मंत्रिणोक्तं दीक्षां गृहाण, परं यदि त्वं देवपदं प्राप्नुयास्तर्हि मां प्रतिबोधयः, तयापि तद्वचोंगीकृत्य दीक्षामादाय आयुःक्षये समाधिना मृत्वा देवपदं प्राप्तं, अथ मंत्रिणा राज्ञ एकः पुत्रो जातमात्र एव प्रच्छन्नं गृहीत्वा स्वगृहे वार्द्धित आसीत् . एकदा कनककेतुनृपे परलोकं गते सति मंत्रिणा स कनकध्वजकुमारो राज्ये स्थापितः, राजकार्यममात्याधीनं कृतं, ततो मंत्री अहर्निशं राजकार्ये मग्नः सन् कदापि धर्मकृत्यं न कृतवान्. तस्मिन्नवसरे देवपदं प्राप्तया पोट्टिलया मंत्रिणस्तत्स्वरूपं दृष्ट्वा तत्प्रतिबोधाय नृपादयः सर्वेऽपि लोकास्तत्पराङ्मुखा विहिताः, ततो नृपस्थानं गतेन मंत्रिणा क्वाप्यादरमलभमानेन सद्यो गृहमागत्यात्मनः कुमरणाशंकया स्वहस्तेनैवानेके मरणप्रयोगाः कृताः, परं देवेन सर्वेऽपि वैयर्थ्यं नीताः, ततो विलक्षीभूय स्थितं मंत्रिणं प्रति देवः प्रादुर्भूय उवाच, भो मंत्रिन् ! ईदृक्संसारस्वरूपं विद्यते, तत्त्वतो न कोऽपि कस्यापि स्वजनोऽस्ति. इत्यादिवचनैर्मंत्रिणं प्रतिबोध्य देवः स्वस्थानं ययौ, मंत्र्यपि सर्वं विभवं परित्यज्य सद्यो दीक्षां जग्राह। इति प्रत्याख्याने तेतलिपुत्रदृष्टांतः ॥ इति सामायिकपदं व्याख्यातम् ॥

सर्वजीवैः सह क्षामणां कृत्वा तत्र स्थितः सन् स्वयमेव तत्कटुकतुंबिकाशाकं भुक्तवान् , न पुनः परप्राणि वधभिया परिष्ठापितवान्.
ततः सद्यो मृत्वा स सद्गतिं प्राप्तः ॥ इति ॥ निष्पापाचरणे धर्मरुचिर्दृष्टांतः ॥ ६ ॥ अथ पापत्यागेन यद्वस्तुतत्त्वज्ञानं, तत्र इलापुत्रदृष्टां-
तो यथा--इलानगरे धनदत्तश्रेष्ठी, तस्य इलादेवीसेवनात् इलापुत्रोनाम पुत्रो जातः, स चैकदा तत्रागतानां विदेशिनटानां नृत्यं पश्य-
न् अतिसुन्दररूपां नर्त्तकपुत्रीं विलोक्य प्राग्भवस्नेहात्तस्यामत्यन्तानुरक्तो बभूव, ततः सद्यो गृहमागत्य पितरं प्रति उवाच-भो तात !
मां प्रति नर्त्तकपुत्रीं परिणायस्व, नोचेद् मरणमेव शरणीकरिष्ये, परमपरकन्यापाणिग्रहणं सर्वथा न विधास्ये, तदा पित्रा तस्यात्याग्रहं
विज्ञाय कथमपि निषेद्धुमशक्नुवता वृद्धनटसमीपं गत्वा तस्य पुत्री मार्गिता. नटेनोक्तं यद्ययमस्मत्कलां शिक्षयित्वा बहुधनं चोपार्ज्य
अस्मज्ज्ञातिं पोषयेत् तर्हि-अस्मत्पुत्र्याः पाणिग्रहणं कुर्यात्. श्रेष्ठिना तद्वचः श्रुत्वा इलापुत्रं प्रति सर्वोऽपि वृत्तांतः प्रोक्तः, इलापुत्रस्तु
तदप्यंगीकृत्य हठेन गृहान्निर्गत्य नटेषु संमिलितः, ततः कियता कालेन तेषां सर्वकलासु निपुणो भूत्वा वेन्नातटनगरं प्राप्तः, तत्र राज्ञे
स्वकलादर्शनाय स्वयं वंशमारुह्य रमतेस्म. सा नटपुत्री च वंशपार्श्वे स्थिता गानं करोतिस्म, तदा तां नटपुत्रीं विलोक्य राजा चलचित्तः
सन् चिंतयतिस्म, यद्येष इलापुत्रो वंशान्निपत्य म्रियते तर्हि एनां कन्यामहं गृह्णामि. अथ इलापुत्रः सर्वा एव कलाः कृत्वा वंशादुत्तीर्य
दानग्रहणेच्छया नृपपुर स्थितः, राज्ञोक्तं व्यग्रतया मया नृत्य न दृष्टं, ततः पुनः कुरु ? तदा तेन धनलिप्सया पुनर्नृत्यं कृतं, परं
राज्ञा तन्मरणमिच्छता पुनस्तथैवोक्तं. ततः सतृतीयवारं पुनः- वंशमारुह्य रमतेस्म. तस्मिन्नवसरे एकभाग्यवतः श्रेष्ठिनो गृहे एकः सा
धुराहारार्थं गतस्तदा सर्वालंकारविभूषिताऽतिसुन्दरांगी श्रेष्ठिपत्नी सद्यः समुत्थाय सानंदं वंदनां विधाय मोदकैः स्थालं भृत्वा साधुं
प्रतिलाभयति, साधुरप्यधोदृष्टिः सन् 'इत्थं इत्थमिति' शब्दमुच्चरन्नाहारं गृह्णाति. एतत्स्वरूपं वंशारूढेन इलापुत्रेण दृष्टं, तदासौ स्वयं

तत्प्राप्त्यर्थं समपरिणामं दधानः, करस्थं खड्गादि तत्रैव परित्यज्य तन्मुनिस्थाने एव कायोत्सर्गेण तस्थौ. तदानीं हि रुधिरगन्धादुपागतेन कीटिकागणेन तच्छरीरं सच्छिद्रं कृतं, परं स मनागपि न चचाल, तृतीयदिने तत्रैव कालं कृत्वा स्वर्गं प्राप्तः ॥ इति ॥ समाप्ते चिलातीपुत्रदृष्टांतः ॥४॥ अथ स्तोकाक्षरैर्महार्थकथने लौकिकः पंडितचतुष्टयदृष्टान्तो यथा—वसन्तपुरे जितशत्रुराजा, तस्यैकदा शास्त्रश्रवणेच्छासीत्, तदा चतुर्भिः पंडितैः श्लोकलक्षप्रमितमेकैकं ग्रंथं विधाय नृपाय निवेदितं, नृपेणोक्तं—एते ग्रंथा अतिमहांतो मया स्तोककालेन श्रोतुं न शक्यंते, तस्मात्स्वल्पाक्षरैरेवैतेषां सारं वदत, तदा चतुर्भिः पंडितैः सारभूतमेकं श्लोकं निष्पाद्य नृपाग्रे प्रोक्तं, तथाहि—जीर्णे भोजनमात्रेयः, कपिलः प्राणिनां दया ॥ बृहस्पतिरविश्वासः, पंचालः स्त्रीषु मार्दवं ॥१॥ व्याख्या—आत्रेयनामा विद्वान् वक्ति—प्रथमं भुक्ते आहारे जीर्णे सति पुनः भोजनं कार्यमिति वैद्यग्रंथपरमार्थः १, कपिलपंडितः प्राह—सर्वेषां प्राणिनां दया कार्येति धर्मशास्त्रपरमार्थः २, बृहस्पतिनामा विद्वान् वदति—कस्यापि विश्वासो न कार्य इति नीतिशास्त्रसारः ३, पंचालो विद्वान् ब्रुते—स्त्रीषु मृदुता धार्या परं तासामंतो न ग्राह्य इति कामशास्त्ररहस्यं ४, एवं स्तोकाक्षरैर्बहर्थकथनं द्वादशांगीरूपं संक्षेपसामायिकं बोध्यं ॥५॥ अथ निष्पापाचरणे धर्मरुचिसाधुदृष्टांतो यथा—धर्मघोषाचार्यस्य शिष्यो धर्मरुचिनामा साधुर्नगरे आहारार्थं भ्रमन् रोहिणीनामब्राह्मण्या गृहे भिक्षार्थं प्रविष्टः, तया कुटुम्बनिमित्तं मिष्टभ्रान्त्या निष्पादितं कटुकतुंबिका शाकं विषप्रायं विज्ञाय दुष्टबुद्धया साधवे दत्तं, साधुना तु सरलस्वभावेन तद् गृहीत्वा स्वस्थाने आगत्य गुरुभ्यस्तद्दर्शितं. गुरुभिस्तद् दृष्ट्वा प्रोक्तं भो महानुभाव! इदं शाकं विषप्रायमस्ति. तस्मान्निरवद्यस्थंडिले गत्वा परिष्ठापय । तदा धर्मरुचिसाधुर्गुर्वाज्ञया निर्वद्यभूमौ गत्वा यावत्तच्छाकं परिष्ठापयितुं लग्नस्तावत्तन्मध्यात्पतितबिंदुमात्रे एव तद्गन्धाकृष्टा बहुधः कीटिकाः संमिलितास्तद्गन्धग्रहणेनैव च मृताः, अथैवं बहुकीटिकामरणं दृष्ट्वा पापभीरुः साधुर्जीवदया चिंतयन्

भटैर्निरुद्ध्य निजगृहं चागत्य प्रच्छन्नं स्थितः, ततः स दत्तो मतिमोहात्सप्तममपि दिनमष्टमं मन्वानोऽद्याचार्यप्राणैः शांतिकं कुर्वे इति विचिंत्य गृहान्निर्गतः, तदा एको मालिकः पुर्यां प्रविशन् कार्याकुलत्वात् राजमार्गे एव मलोत्सर्गं कृत्वा तत्पुष्पैराच्छादयामास, तावत्तत्रैव मार्गे गच्छतो दत्तस्याश्वखुरोत्क्षिप्ता सा विष्टा मुखे पतिता. तदा स विष्टास्वादाच्चमत्कृतः सन् पश्चान्निवृत्तस्तदैतस्य बहुविधदुराचारेण खिन्नैर्मूलमंत्रिभिर्जितशत्रुनृपः पंजरान्निष्कास्य राज्ये स्थापितः, दत्तस्तु छलाद् बद्ध्वा राज्ञे समर्पितः; राज्ञा च स कुंभ्यां प्रक्षिप्य अधश्चाग्निं प्रज्वाल्य श्वानान् ( शुनो ) विमुच्य स कदर्थितः सन् मृत्वा नरकं गतः आचार्यास्तु बहुधा सन्मानिताः, इति सत्योक्तौ कालिकाचार्यदृष्टांतः ॥३॥ अथ स्तोकाक्षरैर्महातत्त्वज्ञाने चिलातीपुत्रदृष्टांतो यथा—राजगृहनगर्यां धनदत्तनामा व्यवहारी, तस्य चत्वारः पुत्राः, सुसमानामपुत्री, चिलातीपुत्रनामैको दासश्चासन्. एकदा श्रेष्ठी तं दासं दुराचारिणं विज्ञाय गृहाद् बहिर्निष्कासितवान्. सोऽपि ततो निःसृत्य चौरपल्ल्यां गत्वा स्थितः। अथान्यदा स चिलातीपुत्रो बहुचौरान् संमेलयित्वा राजगृहनगर्यामागतः, तत्र स्वयं च तस्य श्रेष्ठिनो गृहे प्रविश्य सुसमानामकन्यां चादाय सद्यो गृहान्निर्गतः, तावत् श्रेष्ठ्यपि कन्यानयनार्थं चतुष्पुत्रसहितस्तत्पृष्ठे चलितः एवं च कियति मार्गेऽतिक्रान्ते श्रेष्ठिनमत्यासन्नमागतं वीक्ष्य भीतश्चिलातीपुत्रः सुसमाया मस्तकं छित्त्वा करे च तद् गृहीत्वा, द्वितीयकरे च रुधिरलिप्तं खड्गमुत्पाट्य पर्वतोपर्यारुरोह, श्रेष्ठी तु तत्स्वरूपं दृष्ट्वा विषण्णः सन् पश्चाद्वलितः, अथ चिलातीपुत्र एतादृशभयंकररूपेणाग्रे चलन् मार्गे कायोत्सर्गस्थं साधुं च विलोक्य इत्थमुवाच, भो मुंड ! धर्मं कथय ? नोचेदनेन खड्गेन तवापि शिरश्छेत्स्यामि, साधुना तत्स्वरूपं वीक्ष्य झटिति 'णमो अरिहंताणं' इति पदमुच्चार्य आकाशे चोड्डिय उपशम १ विवेक २, संवरेति ३ पदत्रयात्मकं धर्मं तदग्रे उक्त्वाऽन्यत्र जग्मे. अथ चिलातीपुत्रस्तमर्थं विचारयन् आत्मनि तन्मध्यगमेकमपि गुणमपश्यन्

मेतार्यमुनिः प्राग्भवाचरितदुरितवशाद्राजगृहनगर्यां चांडालकुले समुत्पन्नः, चांडालया च जन्मसमय एव मृतवत्सायै धनदत्तश्रेष्ठिपत्न्यै स प्रच्छन्नमर्पितस्तद्गृहे स वृद्धिं प्राप्तः, क्रमेण यौवने प्राग्भवमित्रदेवसाहाय्याद्दष्टौ श्रेष्ठिकन्या एकां च श्रेणिकनृपपुत्रीं स परिणीतवान् . ततो द्वादशवर्षांते देववचनात् श्रीवीरप्रभुसमीपे प्रव्रज्यामादाय बहुदेशेषु विहरन् एकदा राजगृहनगर्यां स्वर्णकारगृहे भिक्षार्थं प्रविष्टः, तत्र स्वर्णकारे भिक्षानयनार्थं गृहांतः प्रविष्टे सति पश्चात् श्रेणिकनृपस्य देवपूजानिमित्तं तत्कृता अष्टोत्तरशतप्रमिताः स्वर्णयवाः क्रौंचपक्षिणा भक्षितास्ततश्चोड्डीय स भित्युपरि स्थितः, तावत् स सुवर्णकारः शुद्धाहारमानीय बहिः समागतः, स्वर्णकारस्तत्र स्वर्णयवानपश्यन् तं साधुमेव तच्चौरं विचिन्तयन् जगाद–भो साधो ! इहस्था यवाः केन गृहीताः ? तदा साधुना चिंतितं यदि पक्षिणा भक्षिता इति वक्ष्ये तर्हि मद्वचनादसौ एनं क्रौंचं हनिश्यति एवं विचिंत्य तेन मौनमाश्रितं, ततोऽतिरुष्टेन स्वर्णकारेण साधोर्मस्तकमार्द्रवार्धेण बद्धं, तदा साधोश्चक्षूषी निःसृत्य पतिते, महती वेदना समुत्पन्ना, ततः स साधुरन्तकृत्केवली भूत्वा मुक्तिं प्राप्तः । इत्थं प्राणांतोपसर्गेपि तेन मेतार्यमुनिना जीवदयैव मनसि धृता, न किमप्यन्यच्चिंतितं, एवमन्यैरप्याचरणीयम् । इति । समयिके मेतार्यदृष्टांतः ॥ २ ॥ अथ सत्यवादे कालिकाचार्यदृष्टांतो यथा–तुरीमिणीनगर्यां कालिकाचार्याणां भागिनेयेन दत्तनाम्ना पुरोहितेन छलात्स्वामिनृपं कारागारे निक्षिप्य स्वयं च राज्यभारं बिभ्रता अन्यदा च मातुः प्रेरणयाऽऽचार्यसमीपं गतेन तेन उन्मत्ततया धर्मेर्ष्यया च सक्रोधं श्रीगुरुभ्यो यज्ञफले पृष्टे सति गुरुभिर्धैर्यमवलम्ब्य तस्याग्रे यज्ञो हिंसारूपो हिंसायाः फलं च नरक इति सत्यमेव वचः प्रोक्तं, न पुनरन्यथा. ततः कोऽत्र प्रत्यय इति तेन पृष्टे सति गुरुणोक्तं, तस्मिन्नेव दिने तव मुखेऽकस्माद्विष्टा पतिष्यति. ततोऽतिक्रुद्धेन दत्तेनोक्तं त्वं कथं मरिष्यसि ? गुरुणोक्तमहं समाधिना मर्तास्मि, मृतोऽपि च स्वर्गं गतास्मि । तदा दत्तः साहंकृतिः सन् तत उत्थाय सूरिं च स्व-

रागद्वेषभयादिपरिहारेण यथास्थितकथनं ३, समासः-स्तोकाक्षरैः कर्मनाशकस्तत्त्वबोधः ४, संक्षेपः-स्तोकाक्षरा महार्थी द्वादशांगी ५, अनवद्यं-निःपापाचरणं ६, परिज्ञा-पापत्यागेन समंताद्वस्तुतत्त्वज्ञानं ७, प्रत्याख्यानं-परिहरणीयवस्तुत्यागः ८ इत्यष्टौ नामानि. अथैषां क्रमेणाष्टौ दृष्टांता दर्श्यंते, तत्रादौ दमदन्तदृष्टांतो यथा—

हस्तिशीर्षनगरे दमदंतो राजा, तस्य चैकदा हस्तिनागपुरस्वामिभिः पांडवैः कौरवैश्च सह सीमानिमित्तं महान् विवादः संजातः, तदनंतरं क्रियद्भिर्दिनैर्दमदंते जरासंधनृपसेवार्थं गते सति पांडवकौरवैश्च तद्देशो भग्नस्तां वार्त्तां श्रुत्वा क्रुद्धो दमदंतः सद्यो बहुसैन्यमादाय हस्तिनागपुरोपरि समागतस्तत्र चोभयेषां परस्परं महद्युद्धं संजातं, परं दैववशात्पांडवाः कौरवाश्च भग्नाः; दमदंतस्तु विजयं प्राप्य स्वस्थानमायातः, तत एकदा स नृपः संध्यायां पंचवर्णवार्दलस्वरूपं दृष्ट्वा संप्राप्तवैराग्यः संसारमपि तादृशमेवासारं विभावयन् प्रत्येकबुद्धतया प्रव्रजितः, ततः प्रतिग्रामं विहरन् अन्यदा हस्तिनागपुरे प्रतोल्या बहिर्देशे कायोत्सर्गेण स तस्थौ, तदा राजवाटिकां गच्छद्भिः पांडवैर्मार्गे तं मुनिं विलोक्य लोकमुखाच्च तं दमदंतराजर्षिं विज्ञाय सद्योऽश्वेभ्य उत्तीर्य विधिनाभिवन्द्य तस्य द्विविधमपि बलं प्रशंस्य अग्रे चलितं, ततः कौरवाः समेतास्तेषु वृद्धेन दुर्योधनेन तथैव तं दमदंतं विज्ञाय बहुभिर्दुर्वाक्यैस्तिरस्कृत्य साधुसमीपं च बीजपूरफलं प्रक्षिप्य अग्रे चलितं, ततो 'यथा राजा तथा प्रजेति' न्यायात्तदनुगच्छद्भिः सर्वैरपि सैनिकैः काष्ठपाषाणादेर्निःक्षेपाद् समन्तादुच्चैस्तरं चत्वरमिव विदधे. अथ पश्चाद्वलमानाः पांडवा मुनिस्थाने तन्महच्चत्वरं दृष्ट्वा लोकेभ्यः प्रश्नपूर्वकं तत्सर्वं कौरवकृतं दुश्चेष्टितं ज्ञात्वा सद्यस्तत्रागत्य पाषाणादिदूरीकरणपूर्वकं तं दमदंतं प्रणम्य स्वस्थानं गताः, एवं पांडवैः सन्मानितः कौरवैश्चापमानितोऽपि स मुनिः उभयत्र समभावं बभार, मनागपि रागद्वेषौ न कृतवान्। इति समभावे दमदंतदृष्टांतः ॥ १ ॥ अथ दयापूर्वकवृत्तौ मेतार्यदृष्टांतो यथा—

माराध्यं, एतावता सम्यग्दृष्टिभिर्मिथ्यात्वपरिहारेण देवपूजन-गुरुसेवन-जैनागमश्रवण-धर्मक्रियानुमोदन-तीर्थयात्राकरण-जिनकल्याणकभूमिस्पर्शनादिभिः सततं सम्यक्त्वं निर्मलं कार्यमिति, उक्तं च—

जम्मं दिक्खा नाणं, तित्थयराणं महाणुभावाणं ॥ जत्थ य कयनिव्वाणं अगाढं दंसणं होइ ॥१॥इति॥ प्रसंगत उक्तं,

अथ प्रथमं सामायिकस्वरूपमुच्यते, समस्य-रागद्वेषरहितस्य सतो-जीवस्य आयो-ज्ञानादीनां लाभ प्रशमसुखरूपः समायः, स एव-सामायिकं, मनोवाक्कायचेष्टापरिहारेण मुहूर्त्तं यावत् सर्ववस्तुषु समपरिणाम इत्यर्थः, उक्तं च, निंदपसंसासु समो, समो य माणावमाणकारीसु । समसयणपरियणमणो । सामाइयं संगओ जीवो ॥ १ ॥ जो समो सव्वभूएसु, तसेसु थावरेसु य ॥ तस्स सामाइयं होइ, इमं केवलिभासियं ॥ २ ॥ तथा सामायिकस्थितः श्रावको गृहस्थोऽपि यतितुल्यो भवति, यतः—सामाइयंमि उ कए, समणो इव सावओ हवइ जम्हा ॥ एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥ १ ॥ अत एव सामायिकस्थस्य देवस्नात्रपूजनादावप्यधिकारो नास्ति; सामायिकरूपे भावस्तवे प्राप्ते सति द्रव्यस्तवकरणानौचित्यात् । सामायिकस्य दुर्लभता कथितास्ति, यथा—सामाइयसामग्गिं, देवावि चिंतंति हियमज्झंमि ॥ जइ हुइ मुहुत्तमेगं, ता अम्ह देवत्तणं सहलं ॥ १ ॥ इति ॥ इह सामायिककर्त्ता श्रद्धालुर्द्विविधः ऋद्धिमान् अनृद्धिकश्च; तत्र य ऋद्धिरहितः स साधुसमीपे जिनगृहे पौषधशालायां स्वगृहे वा निर्विघ्ने स्थाने सामायिकं कुरुते, यस्तु राजादिर्महर्द्धिकस्तस्य सामायिकविधानं महताडंबरेणोपाश्रयमागत्योचितं भवति, यत ईदृशा अपि सामायिकं कुर्वंतीति लोके जिनशासनस्य महाप्रभावना संजायते इति.

अथ सामायिकस्याष्टौ नामानि उच्यंते—सामाइयं १ समइयं २ सम्मवाओ ३ समास ४ संखेवो ५ । अणवज्जं च ६ परिण्णा ७, पच्चक्खाणे य ८ ते अट्ठ ॥ १ ॥ व्याख्या—सामायिक-समभावः १. समयिकं-सम्यग्दयापूर्वक सर्वजीवेषु प्रवर्त्तनं २, सम्यग् वा

तरसं चिर्भटिकादिफलं जीवाश्रयत्वाद्वर्जनीयं, पुनः सच्छिद्रमपरिपक्वं फलमपि अंतर्जीवसद्भावात्त्याज्यं, एवमन्यदपि अज्ञातफलादियद्-भक्ष्यवस्तु तत्सर्वं परिवर्ज्यं, उक्तं च—

अज्ञातकं फलमशोधितपत्रशाकं, पूगीफलानि सकलानि च हट्टचूर्णं ॥
मालिन्यसर्पिरपरीक्षकमानुषाणा-मेते भवंति नितरां किल मांसदोषाः ॥ १ ॥

पुनर्यद् द्रव्यं ग्रीष्मादिकाले शीघ्रविनाशि भवति तत्तत्सोपयोगेन सता निरवद्यमेव सेव्यमिति ॥

अथ विशेषतोऽस्मिन्पर्वणि कृत्यं दर्शयति—

सामायिकावश्यक-पौषधानि, देवार्चन-स्नात्र-विलेपनानि। ब्रह्मक्रिया-दान-तपोमुखानि, भव्याश्चतुर्मासिकमंडनानि॥१॥

व्याख्या--भो भव्या ! एतानि सामायिकादिधर्मकृत्यानि चातुर्मासिकस्य मंडनानि-अलंकारभूतानि विद्यंते, ततो भवद्भिस्तानि सेव्यानीति ज्ञेयं, यद्यपि चातुर्मासिकत्रयमस्ति तथापि यदुद्दिश्य व्याख्यानं विधीयते तन्नाम ग्राह्यं, तत्र न कोऽपि दोषः, अत्र हि कश्चित्पुमान् सामायिकं करोति, कश्चित्प्रतिक्रमणं, कश्चित्पौषधमित्यादि योज्यं, यथाशक्ति एतानि कर्त्तव्यानीति न कश्चिद्विरोध इति, इह प्रथमं तिथयो विलोक्याः, ते च त्रिधा तथाहि-"चाउद्दसट्ठ-मुद्दिट्ठपुण्णमासिणीत्ति" सिद्धांते उक्तत्वात्, मासमध्ये द्वे चतुर्दश्यौ, द्वे अष्टम्यौ, आमावास्या, पूर्णिमा च, षट् चारित्रतिथयः, आसु चारित्रमाराध्यं. शीलांगाचार्यादि-गीतार्थैरादृत्वात्, उद्दिष्टशब्देन जिनकल्याणकतिथयः पर्युषणातिथिरपि च ग्राह्या, द्वितीयापंचम्येकादश्यो ज्ञानतिथयः, एषु ज्ञानमाराध्यं, अन्ये दर्शनतिथयस्तेषु दर्शन-

# अथ श्रीचातुर्मासिकव्याख्यानं प्रारभ्यते ॥ ९ ॥

स्मारं स्मारं स्फुरज्ज्ञानं, धाम जैनं जगन्मतम् ॥ कारं कारं क्रमांभोजे, गौरवे प्रणतिं पुनः ॥ १ ॥
निषद्धां प्राक्तनप्राज्ञैर्वीक्ष्य व्याख्यानपद्धतिम् ॥ लिख्यते लेशतो व्याख्या, चातुर्मासिकपर्वणः ॥ २ ॥ युग्मम् ॥

इहाषाढ २ कार्तिक २ फाल्गुन ३ चातुर्मासिकानामन्यतमे चातुर्मासिकपर्वणि समागते सति अन्योऽन्यसापेक्षव्यवहारनिश्चयाभ्यां युक्तं श्रीजिनशासनं विज्ञायैकांतवादनिराकरणेन आवश्यकग्रंथोक्त-समाहिताक्षर- शुद्धटंकरूप्यलक्षणचतुर्थ-भंगतुल्यं द्रव्यभावलिंगं संयुक्तमिच्छद्भिः स्याद्वादरुचिभिर्धर्मार्थिभिः प्राणिभिः सम्यग्धर्मकृत्यं कर्त्तव्यम् । अत्र हि चत्वारो भंगाः प्रोक्ताः संति, तथाहि—अशुद्धं रूप्यमशुद्धमुद्रं १, अशुद्धं रूप्यं शुद्धमुद्रं २, शुद्धं रूप्यमशुद्धं मुद्रं ३, शुद्धं रूप्यं शुद्धं मुद्रं ४. तत्र प्रथमे भंगे चरकपरिव्राजकादयः १, द्वितीये पार्श्वस्थादयः २, तृतीये प्रत्येकबुद्धा अंतर्मुहूर्त्तकालमगृहीतद्रव्यलिंगाः ३, चतुर्थे साधवो द्रव्यतो भावतश्च शुद्धिभाजः ४. एतेषु चतुर्थभंग एव शुद्धत्वादुपादेय इति । अथ श्राद्धानां प्रथमतः सामान्येन किंचिन्नित्यकर्त्तव्यमुच्यते । एतद्दुरंतानंतभवभ्रमणभीरुभिर्जैनमार्गानुसारिभिः श्रद्धालुभिः सर्वदा बहुमावद्यव्यापाराः वर्जनीयाः, विशेषतः फाल्गुनादिमासेषु तिलादिधान्यं न रक्षणीयं बहुत्रसजीवोत्पत्तिविनाशसंभवात् , तथा संधानमाम्रफलादीनां यदि संसक्तं भवेत्तदा त्याज्यं, जंतुभिर्मिश्रं फलं मधुकबिल्वादि, पुष्पमरणिशिग्रूमधुकादि त्याज्यं, वर्षाकाले तंदुलीयादिपत्रशाकं न भक्षणीयं, बहुसूक्ष्मत्रसजीवमिश्रत्वादिति, योगशास्त्रे हेमाचार्यैर्गुर्जरादौ महाजनप्रसिद्धैरुक्तमस्ति, फाल्गुनपूर्णिमात आरभ्य कार्तिकपूर्णिमां यावत् प्रायेण पत्रशाकं न भक्ष्यमिति । तथातिपक्वं श्लथीभूतं चलि-

रिसहेस समं पत्तं, निरवज्जं इक्खुरससमं दाणं ॥ सेयांससमो भावो, हविज्ज जई मग्गिय हुज्जा ॥४॥ इयं गाथा स्पष्टार्था। ननु त्रैलोक्यपूज्यस्यापि भगवतः कथमेतावान्—अन्तरायोऽजनिष्ट ? तत्रोच्यते—प्राक्कृतकर्मोदयाद्, तथाहि—कस्मिंश्चित् प्राग्भवे ऋषभस्वामिजीवेन पथि व्रजता धान्यखले धान्यं भक्षयतो बलीवर्दान् तोदनेन कर्षुकैस्ताडयमानान् विलोक्य चिन्तितमेते मूढाः वृषभमुखेषु शिक्यबन्धनं न जानते, तस्मिन् क्षणे स्वयं तत्र स्थित्वा स्वहस्तेन वृषभमुखेषु तद्बन्धनोपदेशश्चक्रे, तदानीं च बलीवर्दैः निःश्वासानां षष्ट्यधिकत्रिशती मुमुचे, तस्मिन् कर्मणि उदिते सति भगवानत्र भवे वर्षमेकं यावद् आहारविघ्नं लेभे, तस्मिन् कर्मणि क्षयोपशमं च प्रापिते श्रेयांसदत्तमाहारं लब्धवान्, श्रेयांसश्च तद्दानफलेन मुक्तिसुखभाग् बभूव, तद्दिनादेव साधुभ्यः प्रासुकाहारदानविधिः सर्वैरपि लोकैरज्ञायि। ततश्च भगवान् ऋषभदेवो वर्षाणामेकसहस्रं यावत् छाद्मस्थ्येन विहृत्य तपस्तप्त्वा घातिकर्मचतुष्टयं क्षपयित्वा केवलज्ञानं प्राप्य वर्षसहस्रोनपूर्वलक्षं यावदार्यक्षेत्रेषु विहृत्य बहुभव्यान् प्रतिबोध्य अष्टापदपर्वतोपरिदशसहस्रमुनिसहितेन मोक्षं जगाम. इति श्रुत्वा भो भव्याः ! रत्नत्रयात्मके मोक्षमार्गे बह्वादरेण यतध्वम् इति श्रेयः ॥

अक्षयादितृतीयाया, व्याख्यानं वीक्ष्य प्राक्तनम्। अलेखि सुगमं कृत्वा, क्षमाकल्याणपाठकैः ॥ १ ॥

॥ इति श्री अक्षयतृतीयाव्याख्यानं सम्पूर्णम् ॥ ८ ॥



एतच्च भगवतः पारणकं श्रेयांसगृहे वैशाखशुक्लतृतीयायामभूद् , तद्दानस्य अक्षयसुखजनकत्वेन तद्दिनस्याक्षयतृतीया, इति प्रसिद्धिर्बभूव, शेषाणामजितादित्रयोविंशतितीर्थंकराणाममृतरससदृशोपममृतरसतुल्यं परमान्नं घृतखण्डमिश्रितक्षैरेयीरूपं भोजनकं पारणके आसीद् इति प्रथमगाथार्थः । अथ पंचदिव्यानि एव आह—

घुट्ठं च अहो दाणं, दिव्वाणि य आहयाणि तूराणि । देवा वि सन्निवइया, वसुहारा चेव वुट्ठा य ॥ २ ॥

गाथार्थः—यदा श्रेयांसगृहे भगवता पारणकं कृतं तदा देवैः, 'अहोदानमहोदानमिति' घुष्टम्—उद्घोषणा कृता, तथा देववृन्देन दिव्यानि तूर्याणि वादित्राणि आहतानि—वादितानि, आकाशे बधिरितदिक्चक्रा देवदुन्दुभयो नेदुरित्यर्थः, तथा देवाः—तिर्यग्जृम्भकादयोऽपि सन्निपतिताः—आगताः, तथा वसुधारा च वृष्टा—सार्धद्वादशकोटिमितसौवर्णिकादिवृष्टिरभूदित्यर्थः । उपलक्षणात् सुगन्धिजलवृष्टिः सुगन्धपुष्पवृष्टिश्चाभूदिति ज्ञेयम् , एतदेव स्पष्टयति—

भवणं धणेण भुवणं, जसेण भयवं रसेण पडिहत्थो । अप्पा निरुवमसुखं, सुपत्तदाणं महग्घवियम् ॥३॥ इति ।

गाथार्थः—दानावसरे भवनं—श्रेयांसगृहं धनेन—स्वर्णरत्नादिमयेन भृतमिति शेषः, भुवनं—स्वर्ग-मृत्यु-पाताल-लोकरूपं यशसा भृतम्—अहो ! श्रेयांसकुमारेण त्रिजगत्पतये केनाऽप्यदत्तपूर्वं दानं दत्तमिति त्रिलोकिव्यापिनी तस्य कीर्तिरभूदिति भावः, भगवान् ऋषभस्वामी इक्षुरसेन प्रतिहस्तः—लाभभागभूद् संयमलाभस्य इक्षुरसाहारपूर्वकत्वाद्; आत्मा—श्रेयांसजीवो निरुपमं सुखं प्राप्तवान्, अतः सुपात्रदानं महाप्रशस्यम् ।

कानर्थमूलकारणं परमाणुमात्रमपि परिग्रहं न वांछति; किं पुनः मणिस्वर्णकन्याश्वगजमौक्तिकादिकमिति सम्यग् विचार्य गवाक्षादुत्तीर्य यत्र श्रीऋषभदेवस्तत्र समागत्य हर्षभरेण पुलकितशरीरो भगवन्तं त्रिःप्रदक्षिणीकृत्य वन्दयित्वा उवाच-हे भगवन् ! प्रसन्नो भव, अष्टादशकोटाकोटिसागरोपमानि यावद् विच्छिन्नस्य प्रासुकाहारदानविधेः सम्यक् प्रदर्शनेन भव्यजन्तून् निस्तारय, गृहाण च मद्गृहे प्राभृतार्थं समागतान् शतसंख्यान् इक्षुघटान् इति । अथ स्वामिनाऽपि चतुर्ज्ञानयुक्तेन द्रव्यक्षेत्रादिसामग्रीं सम्यग् ज्ञात्वा इक्षुरसग्रहणाय करद्वयं प्रसारितम्, तदा श्रेयांसो रत्नपात्रतुल्याय श्रीमद्भगवते त्रिकरणशुद्धया इक्षुरसरूपं निर्दुष्टमाहारं ददानो हर्षभरेण स्वचित्ते शरीरे च न ममौ*, आत्मानं धन्यं मन्यमानः त्रिजगत्पूज्येन भगवता आहारग्रहणेनानुगृहीतोऽहमिति चिन्तयन् यावत् स्वहस्तेन इक्षुरसभृतैर्घटैर्भगवन्तं प्रीणयन् तिष्ठति, तावद् देवैर्हर्षभरेणाकाशे पंच दिव्यानि प्रकटीकृतानि, एतदेवाह श्रुतकेवली भगवान् भद्रबाहुः-'उसभस्स उ पारणए' इत्यादि, गाथा पूर्वं दर्शिता । अथ गाथार्थः—ऋषभस्य लोकनाथस्य प्रथमतीर्थंकरस्य प्रथमपारणके इक्षुरस आसीद्,

*आनंदाश्रुणि रोमांचो, बहुमानं प्रियंवचः । किंचानुमोदना पात्र-दानभूषणपंचकम् ॥ १ ॥
अनादरो विलंबश्च वैमुख्यमप्रियंवचः । पश्चात्तापश्च सदाने, स्मृतं दूषणपंचकम् ॥ २ ॥
दानं ख्यातिकरं सदा हितकरं, संसारसौख्यंकरं । नृणां प्रीतिकरं गुणाकरकरं, लक्ष्मीकरं किंकरं ।
स्वर्गावासकरं गतिक्षयकरं, निर्वाणसंपत्करं । वर्णायुर्बलबुद्धिवर्धनकरं, दानं प्रदेयं बुधैः ॥ ३ ॥

इहादौ श्रीऋषभस्वामिसम्बन्ध उच्यते, श्रीऋषभस्वामी सर्वार्थसिद्धविमानात् च्युत्वा आषाढकृष्णचतुर्थ्यां श्रीमरुदेवाकुक्षावुत्पन्नः, नवमासान् चतुर्दिनाधिकान् गर्भे स्थित्वा चैत्रकृष्णाष्टम्यामर्धरात्रे जन्म संप्राप्तः, विंशतिपूर्वलक्षाणि कुमारपदं भुक्त्वा त्रिषष्टिपूर्ववर्षं राज्यं प्रपाल्य चैत्रकृष्णाष्टम्यां दीक्षां जग्राह. तदा हस्तिनागपुरे श्रीबाहुबलिपुत्रस्य श्रीसोमयशोनृपस्य पुत्रः श्रेयांस आसीद् । अथ भगवान् प्राक्तनकर्मोदयाद् वर्षं यावद् आहारालाभाद् निराहारो विहरन् हस्तिनागपुरे समाययौ, तस्यां रात्रौ श्रेयांसादिभिः त्रिभिस्त्रयः स्वप्ना लब्धाः, तथाहि—श्यामीभूतं मेरुममृतघटैः प्रक्षाल्याहमुज्ज्वलमकार्षमिति श्रेयांसो लब्धवान् १, तथा सूर्यबिम्बात् च्युतं किरण-सहस्रं श्रेयांसेन सूर्यबिम्बे स्थापितमिति स्वप्नं सुबुद्धिनामा श्रेष्ठी लब्धवान् २, तथा एकः शूरो बहुभिर्वैरिभिः रुद्धः, श्रेयांससाहा-य्याद् जयं प्राप्तवान्, इति स्वप्नं च सोमयशाः राजा लब्धवान् ३, प्रातः सभायां सर्वेऽपि मिलिताः स्वं स्वं स्वप्नमुक्तवन्तश्च, ततः स्वप्नविचारं कृत्वा नृपादिभिः सर्वैरपि उक्तम्—अद्य श्रेयांसस्य कश्चिदपूर्वो महान् लाभो भविष्यतीति । तदा भगवान् भिक्षार्थं इतस्ततो भ्रमन् श्रेयांसगृहसमीपमाययौ, श्रेयांसः स्वामिनं दृष्ट्वा हर्षं प्राप्तः, लोकास्तु पूर्वं साधुमुद्राया अदर्शनेन अन्नदानविधेरज्ञानाद् भगवन्तं मणि-स्वर्णगजाश्वादिभिर्निमन्त्रयामासुः, भगवांस्तु तैर्दीयमानं वस्तु किमपि न गृह्णातिस्म, तदा भगवानस्माकमुपरि अतीव रुष्टोऽस्ति, येनास्माकं किमपि वस्तु न गृह्णाति इति ते लोकाः कोलाहलं चक्रुः । एवमेकः संवत्सरो व्यतिक्रान्तः, तस्मिन्नवसरे श्रेयांसो भगवन्मुद्रां विलोक्य 'अहो दृष्टं मया ईदृक्रूपं कदाचिद्' इति ऊहापोहं कुर्वाणो जातिस्मरणं ज्ञानं प्राप्य भगवता सह स्वस्याष्टभवसंबन्धं च ज्ञात्वा प्राक् स्वयमनुभूतं साधुभावं स्मृत्वा चिन्तयतिस्म—अहो ! अज्ञानविजृम्भितमेतत् संसारिजीवानां, येनैते एवं कुर्वन्ति—यतः त्रैलोक्यराज्यं तृणाय मन्यमानो भगवान् विषयतृष्णां त्यक्त्वा सांसारिकसुखं च किंपाकफलतुल्यं गणयन् साधुत्वमंगीकृत्य मोक्षसुखार्थं यतमानोऽने-

चले बालिनामा महामुनिर्मोक्षं प्राप्तः। श्रीकृष्णपुत्रौ शाम्ब-प्रद्युम्ननामानौ मुनी सिद्धिं गतौ। दशरथपुत्रो भरतोऽपि तत्रैव शिवं प्राप्तः। शुकनामा मुनिः, शैलकाचार्य-पन्थको च मुक्तिं प्राप्तौ। राम-भरत-द्राविडनरपतिनारदाद्या मुनयोऽप्यत्रैव मुक्तिं प्राप्ताः, पाण्डवप्रमुखाः सत्पुरुषा अपि श्रीसिद्धाचले मुक्तिं प्रापुः। चैत्रीपूर्णिमादिने उपवासं कृत्वा श्रीसिद्धाचलतीर्थे गत्वा पूजाध्यानदानादीन् ये प्राणिनः कुर्वन्ति ते नरकतिर्यग्गतिविच्छेदं कुर्वन्ति, इत्यादि पर्वाराधनस्वरूपं प्रोक्तम्। तद्दिने श्रीगुरुपार्श्वाद् मन्त्राक्षरपूतं स्नात्रजलं गृहीत्वा गृहादौ सेचनीयम्, तेन मरकोपद्रवादि भयं याति, सदाऽऽनन्दश्च भवति, ऋद्धिं वृद्धिं सुखं च जनः प्राप्नोति। अस्मिन् पर्वणि समागते केचिद् दानं ददति, केऽपि शीलं पालयन्ति, केचिद् भावं भावयन्ति, वक्तॄणां श्रोतॄणां च सदाश्रेयो भवतु।

नन्दे-रसे-सिद्धिचन्द्रे (१८६९,) प्रमिते वत्सरे वरे। इयं व्याख्या गुणग्राह्या, चैत्रशुक्लाष्टमीतिथौ ॥ १ ॥
दुर्गे जेसलमेरौ च, कृतावासेन धीमता। गणिनाऽमरचन्द्रेण, वाचकेन सुसाधुना ॥ २ ॥
ताच्छिष्यजीवराजेन, कृता व्याख्या मनोरमा। चैत्रशुक्लपूर्णिमायाः, कीर्तिरत्नसहायतः ॥ ३ ॥

इति चैत्रशुक्लपूर्णिमाव्याख्यानं समाप्तम् ॥ ७ ॥

## अथ अक्षयतृतीयाव्याख्यानम् ॥ ८ ॥

प्रणिपत्य प्रभुं पार्श्वं, श्रीचिन्तामणिसंज्ञकम्। अक्षयादितृतीयाया, व्याख्यानं लिख्यते मया ॥ १ ॥
उसभस्सयपारणए, इक्खुरसो आसि लोगनाहस्स। सेसाणं परमन्नं, अमियरससरिसोवमं आसी ॥ २ ॥

शुद्धभावेनोपवासं कृत्वा श्रीजिनालये स्नात्रपूजामहोत्सवादि करणीयम्, सर्वजिनानां पूजा विधेया, सद्गुरुमुखाच्च तस्मिन् दिने चैत्री व्याख्यानश्रवणं कार्यं, दीनहीनजनेभ्यो दानं देयं; शीलं च पालनीयं; जीवरक्षा विधेया, विधिपूर्वकं विमलगिरिपट्टं उच्चैः स्थापयित्वा मुक्ताफलैस्तन्दुलादिभिश्च महतीं पूजां विधाय गुरुसमक्षं पंचशक्रस्तवादिभिर्देवान् वन्दित्वा शुभध्यानेन दिनरात्रीकृत्यं विधाय पारणवेलायां मुनिभ्यो दानं दत्त्वा पारणकं विधेयम्, पंचदशवर्षाणि यावदेवं प्रतिवर्षं व्रतमाराधनीयम्, पश्चादुद्यापनं यथाशक्ति समाचरणीयम्, तेन निर्धनो धनी भवेद्, पुत्र-कलत्र-सौभाग्य-कीर्त्ति-देवसुखं शिवपदप्राप्तिश्च भवेत्, तथा स्त्रीणां पतिवियोगो न भवति, रोग-शोक-वैधव्य-दौर्भाग्य-मृतवत्सात्व पारवश्यादि सर्वं कर्मफलं नश्यति। अस्या आराधने स्त्री पतिवल्लभा भवति, विषकन्या भूत-प्रेत-शाकिन्यादिग्रहादिकष्टं विलयं याति, बहुनां किं भावेनाऽऽराधिता चैत्रीपूर्णिमा मुक्तिं ददाति, इति गणधरमुखात् श्रुत्वा सा बाला हर्षं प्राप, उक्तवती चाहं एतद् व्रतं करिष्यामि। तदा जनन्या सह सा बाला गुरुं नत्वा गृहे गत्वाऽवसरे चैत्रीपूर्णिमाऽऽराधनं कृतवती, तदा सा सुखिता जाता, विषयविकारस्यापि शान्तिः संजाता, परमपदे मनोऽभूद्, प्रति वर्षं व्रतं कुर्वत्या पूर्णे व्रते शुभभावेनोद्यापनं कृतम्, पुण्डरीकगणधरध्यानेन श्रीसिद्धाचलयात्राकरणेन श्रीऋषभदेवस्य जापेन प्रान्तेऽनशनं विधाय कालं कृत्वा सौधर्मदेवलोके देवत्वेनोत्पन्नाः, तत्र देवसंबन्धिनो भोगान् भुक्त्वा महाविदेहे क्षेत्रे सुकच्छविजये वसन्तपुरे नरचन्द्रस्य राज्ञो राज्ये ताराचन्द्र-श्रेष्ठिनो गृहे तारानाम्न्या भार्यायाः कुक्षौ पुत्रत्वेन स जीव उत्पन्नः, नाम्ना पूर्णचन्द्रो, द्वासप्ततिकलाकुशलो जातः, पंचदशकोटिद्रव्यं, पंचदश भार्याः, पंचदश पुत्रा, इत्यादि सर्वं सुखं प्राप्तवान्, तद्भवे पुनः स चैत्रशुक्लपूर्णिमाऽऽराधनं कृत्वा, प्रान्ते श्रीजयसमुद्रगुरुपार्श्वे दीक्षां गृहीत्वा, तत्र च शुभध्यानेन केवलज्ञानं प्राप्य मुक्तिं गतः। एवं चैत्र्याराधने बहवो जनाः परमानन्दं प्राप्ताः, पुनरपि विमला-

भर्तुः समीपे समागता, तदा भर्त्रा प्रोक्तम्-अद्य वारकं तव नास्ति कथं त्वया मर्यादा लंघिता ?, सा कामविह्वला भर्तारं प्रत्युवाच-केयं मर्यादा ?, तदा भर्त्रा प्रोक्तम्-कुलोद्भवानां मर्यादोल्लंघनं न युक्तं; समुद्रोऽपि मर्यादां न मुंचति; सत्पुरुषः स्वमर्यादया न चलति । ततः सा संतोषरहिता कलुषवदना मित्रश्रियं प्रति द्वेषमुद्वहन्ती स्वगृहे समागता, सपत्न्या सह पतिसंबन्धवियोगमिच्छन्ती कनकश्रीः (चन्द्रश्रीः) विषयप्रमादव्याकुला सती मन्त्रतन्त्रयन्त्रोपायकार्मणादिसामग्रीं विधाय तस्याः शरीरे भूत-प्रेत-शाकिनी-डाकिनीप्रवेशं कारितवती, साऽपि कर्मयोगात् पारवश्यं प्राप्ता । अथ कनकश्रीः सपत्नीशरीरं कुचेष्टितं ज्ञात्वा जहर्ष, पुनः स्ववशीकरणबलेन भर्तारं स्ववशी चक्रे, भर्ताऽपि लघुपत्नीं दृष्ट्वा पूर्वकर्मफलं विचिन्त्य तत्याज । कनकश्रीर्हर्षिता, धनावहश्रेष्ठी कनकश्रिया सह विषयसुखं भुंजानः सन् कालं निनाय । कियति काले गते सति सा कनकश्रीर्मृता त्वत्पुत्री जाता, सपत्नीपतिवियोगकरणेन विषकन्या कर्मविपाकं पतिविरह-पीडापीडितं भोगसुखरहितं कर्मोपार्जितं, तेन कारणेन तव पुत्री महादुःखेन दुःखिताऽस्ति, कर्मणां विचित्रा गतिरस्ति । तदा तज्जननी प्राह-हे गुरो ! इयं पतिविरहेण पीडिता वृक्षशाखायां पाशं बद्ध्वा मरणाय समुद्यता, तावन् मया एतत्स्वरूपं दृष्ट्वा पाशं छित्त्वा भवत्समीपे समानीता भवद्भिर्दीक्षा प्रदीयताम्, तदा गणधरः प्राह-हे भद्रे ! एषा तव पुत्री दीक्षायोग्या नास्ति, नितरां चंचलस्वभावा बाला वर्तते, इति गुरुवचनं श्रुत्वा तन्माता प्राह-अस्या योग्यं धर्मकृत्यं कथ्यतां येन दुष्टकर्मविपाको दूरीभवेद् । गुरुरपि ज्ञानबलेन तस्या योग्यं व्रतं कथयतिस्म-हे भद्रे ! चैत्रशुक्लपूर्णिमाऽऽराधनं कुरु, तस्या आराधनेऽस्याः पूर्वकर्मविनाशो भविष्यति, इति श्रुत्वा तस्याः कन्याया अपि गुरुज्ञानयोगाद् रुचिः समुत्पन्ना, तदा सा सावधानीभूय गुरुवाणीमश्रृणोद्, तदा गणधरेणोक्तम्-श्रीसिद्धाचलतीर्थं शाश्वतमस्ति, तत्रानन्तानन्तकालेनानन्ता जीवाः सिद्धाः, सकलतीर्थेषु मुख्यम्, तस्य चैकविंशतिर्नामानि सन्ति, तैर्ध्यानं विधेयम्, चैत्रीपूर्णिमादिने

उत्तरश्रेण्यां च गगनवल्लभप्रमुखाणि षष्टिर्नगराणि वासयित्वा प्रदत्तानि; तत्र विद्याबलेन लोकान् वासयित्वा यावन्ति नगराणि तावंतो देशान् संस्थाप्य तौ पृथक् पृथग् नमिविनमी तत्र राज्यं पालयामासतुः। तौ चिरकालं राज्यसुखमनुभूय प्रान्ते सर्वसंगं परित्यज्य दीक्षां गृहीत्वा श्रीविमलाचले समागत्य श्रीदेवाधिदेवं युगादिदेवं भावेनाऽभिनम्य तत्रैव तीर्थे मुक्तिं प्रापतुः, इति नमिविनमिसम्बन्धः।

अथ श्रीऋषभदेवस्य प्रथमगणधरः पुण्डरीकनामाऽत्रैव मुक्तिं प्राप्तस्तत्सम्बन्धश्चायम्।

श्रीआदिनाथपुत्रो भरतः, तस्य पुत्रः पुण्डरीकः, श्रीप्रभोः पार्श्वे धर्मं श्रुत्वा प्रतिबुद्धः सन् दीक्षां गृहीत्वा प्रथमगणधरो जातः, पञ्चकोटिसाधुपरिवृतः गणधरो ग्रामानुग्रामं विहरन् सौराष्ट्रदेशे समागतः तदागमनं श्रुत्वाऽनेकभूपमण्डलीकसामन्तश्रेष्ठि-नरनारीगणा वन्दनार्थमाययुः, गुरुरपि यथायोग्यं धर्मदेशनां ददाति स्म। तस्मिन्नवसरे एका सबाष्पजला सशोका चिन्तासागरसंप्रविष्टा दीना महिला समागता, तया सार्धं विधवा दौर्भाग्ययुक्ता एका कन्याऽपि समागता। श्रीपुण्डरीकगणधरं नमस्कृत्यावसरं प्राप्य कन्यया सह सा स्त्री इति पप्रच्छ-हे भगवन्! अनया कन्यया पूर्वभवे किं पापं कृतं, येन विवाहसमये करमोचनवेलायामेवास्याः पतिर्मरणं प्राप्तः? इति प्रश्ने कृते सति गणधरः प्राह-हे भद्रे! अशुभकर्मणोऽशुभमेव फलम्, तथाहि-जम्बूद्वीपे पूर्वमहाविदेहे मनोरमं विश्वविख्यातं कैलासपर्वताकारतुंगप्राकारवेष्टितं नानादेशोद्भवजनाकुलं विशालशालगृहैर्मण्डितं चन्द्रकान्तनामकं नगरं बभूव। तत्र श्रियो धाम सकलकलागुणगणग्रामो जगति प्रसिद्धः समरसिंहो नाम महीपतिरभूत्। तस्य शीलालंकारधारिणी धारिणीनाम्नी वल्लभा बभूव। तत्र नगरे महाधनाढ्यः परमश्राद्धो जिनभक्तिरतोऽनेकगुणसागरो धनावहनामा श्रेष्ठी बभूव। तस्य कर्मयोगाद् द्वे भार्ये बभूवतुः, एका कनकश्रीः द्वितीया मित्रश्रीस्ताभ्यां भार्याभ्यां सह स श्रेष्ठी सुखेन कालं गमयतिस्म। अथैकदा मदनपरवशात् कनकश्रीर्मित्रश्रियो वारकं समुल्लंघ्य

## अथ चैत्रीपूर्णिमाव्याख्यानम् ॥ ७ ॥

तीर्थराजं नमस्कृत्य, श्रीसिद्धाचलसंज्ञकम् । चैत्रशुक्लपूर्णिमाया, व्याख्यानं क्रियते मया ॥ १ ॥

सिद्धो विज्झायरचक्की, नमिविनमिमुणी, पुण्डरीओ मुणिन्दो । वालीपज्जुम्नसंबो, भरहसुगमुणी, सेलगो पंथगो य ॥ रामो कोडीपंच, दविडनरवई, नारओ पण्डुपुत्ता ॥ मुत्ता एवं अणेगे, विमलगिरिमहं, तित्थमेयं नमामि ॥ १ ॥

व्याख्या–अहमेतत् तीर्थं नमामि यत्रानेक प्राणिनः सिद्धा बभूवुः, ते के ? तानाह–यत्र विमलाचले विद्याधरादिचक्रवर्तिनः सिद्धाः–मुक्तिं प्राप्ताः, पुनर्युगादिदेवस्य पौत्रकपुत्रौ नमिविनमिनामानौ मुक्तिं गतौ, तत्सम्बन्धोऽयम्-अयोध्यायां नगर्यां भगवान् ऋषभदेवः स्वज्येष्ठपुत्राय भरताय राज्यं दत्त्वाऽन्येषामपि यथायोग्यं देशं विभज्य स्वयं दीक्षां गृहीतवान्, तदा नमिविनमिनामानौ कस्मैचित् कार्याय कुत्रचित् प्रदेशे गतावभूताम्, भगवता तु राज्यविभागावसरे तौ विस्मृतौ, दीक्षाग्रहणानन्तरमयोध्यायां समागतौ भरतं पप्रच्छतुः–ऋषभदेवोऽस्माकं पिता क्वास्ति ?, भरतेनोक्तं–स्वामिना दीक्षा गृहीता, युवाभ्यां मम सेवा कर्तव्या, अहं युवाभ्यां देशग्रामं दास्यामि, तदा तौ भरतमवमान्य राज्यार्थं स्वामिसमीपे आगत्य विहारं कुर्वतो भगवतोऽग्रे कण्टकादिकं मार्गाद् निवारयन्तौ कायोत्सर्गे स्थितस्य भगवतो दंशमशकादीन् उड्डापयन्तौ प्रातर्वन्दनापूर्वकं 'स्वामिन् ! राज्यप्रदो भव' इत्युक्तवन्तौ नित्यं तिष्ठतः स्म । एकदा वन्दनार्थमागतेन धरणेन्द्रेण तयोरुपरि महतीं कृपां विधाय भगवद्रूपं कृत्वा ताभ्यामष्टचत्वारिंशत्सहस्रपठितसिद्धविद्याः प्रदत्ताः, षोडशविद्यादेव्याः समाराधनं च दत्तम्, वैताढ्यपर्वते दक्षिणश्रेण्यां रथनूपुरचक्रवालप्रमुखाणि पञ्चाशन्नगराणि,

तस्य दश उपवासाः प्रायश्चित्तम्, एककलशप्रमाणजलप्रक्षेपणे शतमुपवासानां प्रायश्चित्तम्, मूत्रप्रक्षेपणे पंचाशदुपवासाः, छगणप्रक्षेपणे पंचविंशतिरुपवासाः, एकगालिप्रदाने पंचदशोपवासाः, गीतगानेऽसभ्यगाने सार्धशतमुपवासाः, तत्संबन्धिवादित्रताडने सप्ततिरुपवासाः, एककरीषप्रक्षेपणे विंशतिरुपवासाः, छगणहारप्रक्षेपणे जन्मान्तरे शतं वाराः स्वस्य भस्मीभवनं भवति, श्रीफलप्रक्षेपणे सहस्रशो भस्मीभवनं भवति, एकपूगीफलप्रक्षेपे पंचाशद् वाराः, धूलिप्रक्षेपे पंचविंशतिर्वाराः, होलिकागर्तखनने शतं वाराः, होलिकायां काष्ठप्रक्षेपे सहस्रशो भस्मीभवनं भवति । होलिकादाहकरणे सहस्रशश्चाण्डालकुलोत्पत्तिः, होलिकाव्रतकारकस्य सहस्रशो म्लेच्छकुले उत्पत्तिर्भवति, एवं पापं विज्ञाय श्रेयोऽर्थिभिरात्महितेच्छुभिः द्रव्यहोलिकां त्यक्त्वा भावहोलिकां एवं आराध्यते, तेनैवात्र जगति इष्टार्थः प्राप्यते, इति ।

संवद्बाणकृशानुसिद्धिवसुधा, (१८३५) संख्ये नभस्येऽसिते ॥ पक्षे पावनपञ्चमीसुदिवसे पाटोधिसंज्ञे पुरे ।
श्रीमच्छ्रीजिनलाभसूरिगणभृत्तुल्यप्रतापोद्धुरे ॥ कान्ते श्रीजिनचन्द्रसूरिमुनिपे धर्मेशतां बिभ्रति ॥ १ ॥
श्रीमन्तो गुणशालिनः समभवन्, प्रीत्यादिमाः सागरा-स्तच्छिष्याऽमृतधर्मवाचकवराः, सन्ति स्वधर्मादराः ॥
तत्पादाम्बुजरेणुराप्तवचनस्मर्ता विपश्चित्क्षमा-कल्याणः कृतवानिदं सुविशदं व्याख्यानमाख्यानभृद् ॥ २ ॥

इति होलिकाव्याख्यानं समाप्तम् ॥ ६ ॥

सह पौषधप्रतिक्रमणसामायिकादिधर्मकृत्यं करोतिस्म, यथाशक्ति व्रतनियमपालनमपि करोति । अथ तस्या गृहसमीपे मिथ्यात्वि-
लोका वसन्ति, तेषां मिथ्यात्विनां पुत्रीभिः सह सा तिष्ठति, उत्तिष्ठति, भ्रमति, ब्राह्मणाः कथां यत्र वाचयन्ति तत्र गत्वा कदापि कथां
अपि शृणोतिस्म । यद्यपि सा जैनं धर्मं पालयति, तथापि संगतिवशाद् मिथ्यात्वस्याप्यादरं कृतवती, यथा—ज्येष्ठ-श्रावणमासयोः
गणगोरपूजनात् सुन्दरवरप्राप्तिः धनधान्यप्राप्तिः एतादृश्यो वार्तास्तस्यै रोचन्ते । अथैकदा कुमारी मनसि व्यचिन्तयत्-यद् जैनधर्मे
वीतरागो देवोऽस्ति, स च न कमपि सुन्दरमसुन्दरं करोति; सांख्यादिदर्शने तु ब्रह्मा जगतः कर्ताऽस्ति, विष्णुः रक्षणं करोति, शिवः
संहारं करोति, ततो यदि ईश्वर—पार्वत्योः पूजा विधीयते तौ च तुष्टौ स्यातां तदा मनोवाञ्छितसांसारिकसुखस्य लाभो भवेत् । एवं
विचार्य गणगोरप्रभृतिमिथ्यात्विपर्वसु आदरवती अभूत् । अथ तस्या मातापितरौ बहुनिषेधं कृतवन्तौ-यत् त्वं हे पुत्रि ! मिथ्यात्वि-
पर्वण आराधनां मा कुरु, चिन्तामणिसमानं जैनं धर्मं प्रक्षीय काचशकलतुल्यमन्यं धर्मं मा गृहाण, अमृतस्वादं त्यक्त्वा विषस्वादं मा
स्वीकुरु, विषपानेन दुःखिता भविष्यसि; इत्यादि बहु कथितं परन्तु मिथ्यात्विपरिचयवशाद् तया किंचिदपि न मेने, मिथ्यात्विप-
र्वाराधनां कर्तुं लग्ना, यथा यथा मिथ्यात्विजनाः प्रशंसन्ति तथा तथा साऽऽनन्दं दधार । अथ मातापितृभ्यां सा परिणायिता, अल्प-
कालेनैव मृत्वा मनोरथश्रेष्ठिनः पुत्री संजाता, कथावाचकव्यासस्य पुत्री यया सह बाल्यावस्थात एव होलिकादिमिथ्यात्विनां व्रत-
मकरोद्; सा मृत्वा ढुण्ढा संजाता, कथावाचकश्च कामपालः संजातः, पूर्वत्र संबन्धाद् ढुण्ढा कामपालस्य होलिकया सह समागमं कृत-
वती । इत्थं वृथैव संभूतं होलिका पर्व विज्ञाय सुधीभिः भव्यात्मभिः शुभार्थं तन्न कर्तव्यम्, किन्तु तस्मिन् दिने प्रतिक्रमण-व्रत-
जिनपूजादिधर्मकार्यं विधेयम्, होलिकासंबन्धि किमपि कार्यं न विधेयम् । यो हि होलिकाज्वालायां गुलालस्यैकां मुष्टिं प्रक्षिपति

गृहात्तु, ततः कुमारेण सा तत्राऽऽनीता, तां दृष्ट्वाऽसौ मम पुत्रीति श्रेष्ठिनोक्तम्, तदा कामपाल उवाच—हे सरलश्रेष्ठिन् ! त्वं निजपुत्रीं वह्निदग्धां किं न जानासि ?, पूर्वं सूर्यदेवगृहे त्वत्पुत्र्यां मम भार्याभ्रमोऽभूद्; अधुना मद्भार्यायां तव निजपुत्रीभ्रमो जातः, द्वयोः रूपस्य परस्परसादृश्याद् अपरं कारणं नास्ति. तत एवं श्रुत्वा हर्षितः श्रेष्ठी तं जजल्प—इतः प्रभृति त्वद्भार्या मम पुत्रीस्थाने भवतु, इयमेव हि मत्पुत्रीति तद्दिनादारभ्य श्रेष्ठी प्रीत्या तस्यै वस्त्रालंकारभोजनादिकं सर्वमपि पूरयामास। अथ सा ढुण्ढा परिव्राजिका मृता पिशाची बभूव, पूर्वभवं स्मृत्वा तया ज्ञातम्-दुष्टा एतन्नगरवासिनो लोकाः, ये मह्यं भिक्षामपि न ददुः, ततः सा कोपचित्ता लोकचूरणाय तन्नगरोपरि महतीं शिलां चक्रे, पुनः प्रबलभाग्ययुक्तां होलिकां प्रतिहन्तुं न समर्था बभूव, ततो भीताः पौरलोकाः बलिं चक्रुः, तदा पिशाची कस्यचिच्छरीरेऽवतीर्य उवाच-भो लोकाः ! पूर्वं कुलद्वयवत्सलाहं भण्डान् भरडांश्च त्यक्त्वाऽन्यान् सर्वलोकान् हनिष्यामि, ततो लोका मरणाद् भीताः सन्तोऽन्यं जीवितोपायमलभमानाः स्वयमपि भण्डभावमाश्रित्य स्वजीवितकृते मुक्तलज्जनमर्यादा असत्यवचनभाषिणो दुष्टवादित्रवादिनः, एवं भण्डा जाताः, पुनर्भस्मधूलिकर्दमादिभिर्मलिनदेहा भरडाप्राया बभूवुः। ततः प्रतिवर्षं होलिकादिनाद् द्वितीयदिने धूलिहरिकापर्व प्रवृत्तं, ततः सा प्रसन्नीभूय स्वस्थानं गता।

## अथ होलिकापूर्वभवः कथ्यते।

पाटलीपुरनगरे ऋषभदत्तनामा श्रेष्ठी निवासमकरोद्, तस्य चन्द्राननानाम्नी पत्नी। अथ तयोर्द्वयोः पुत्रयोरुपरि देवीनाम्नी पुत्री || ३७ ||
जाता, सा च रूपलावण्यादिगुणैरतीव शोभिताऽऽसीद्। सा च अष्टवर्षीया जाता ततः पितृभ्यां पाठिता, ततः सा कन्या स्वमात्रा

जिकया सा होलिका पृष्टा-हे पुत्रि ! कथय ते मनोगत चिन्ताम् ? तदा कथितस्तया तदग्रे स्वाभिप्रायः, ततः परिव्राजिकया प्रोक्तम्-
हे पुत्रि ! रविदिने पूजामिषात् सूर्यदेवगृहे त्वमागच्छेः, तत्राहं तव कुमारसंगं कारयिष्यामि, यतो जन्ययात्राजागरिकोत्सवेषु दुर्लभस्या-
पि जनस्य संगमः स्यात्, यथेप्सितव्यभिचारसिद्धिर्भवेद्, इति लोकोक्तिरस्ति। ततो रविदिने होलिका तत्र गता, कुमारोऽपि तपस्वि-
न्याः संकेतितस्तत्रायातः ततः सा विधिना सूर्यमूर्तिं प्रपूज्य यावत् प्रतिचचाल तावत् कुमारस्तामालिलिंग, तदा तया कुमारपृष्टे हस्त-
प्रहारं दत्त्वा पूत्कारः कृतः, अहं परपुरुषस्पर्शसंजातपातकस्य शुध्यर्थमग्निप्रवेशं करोमि, तदा तां मरणाभिमुखीं गूढदम्भां पुत्रीं वीक्ष्य बला-
जनको गृहमानीतवान्, ततः फाल्गुनपूर्णिमारात्रौ तपस्विनी पुनः तयोः संगमं कारयामास, स्वयं च तत्समीपे गृहे सुप्ता, सिद्धकार्य-
त्वाद् गाढनिद्रां प्राप्ता।

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णो न भिद्यते। द्विकर्णस्य च मन्त्रस्य ब्रह्माऽप्यन्तं न गच्छति ॥ १ ॥

इति वाक्यं विचार्य होलिका निजगृहे सुप्तां तापसीं गृहं च दग्ध्वा शीघ्रं कुमारसहिता तत्स्थानान्नष्टाऽन्यत्र स्थिता। प्रभाते पुत्रीं
दग्धां ज्ञात्वा श्रेष्ठी बहु विललाप, तदा लोकास्तां सतीं ज्ञात्वा तदीयभस्म प्रणमंतिस्म, तत्प्रभृति सर्वत्र प्रतिवर्ष तद्दिने होलिकापर्व
प्रवृत्तं, तदधुनाऽपि परमार्थशून्या लोकाः कुर्वन्ति। अथ कतिषु दिनेषु गतेषु स कुमारो होलिकां प्रोचे-अधुना धनं नास्ति तेन धनार्ज-
नाय विदेशं व्रजामि, ततस्तयोक्तम्-स्वामिन् ! मदुक्तमुपायं कुरु यतो धनप्राप्तिः स्याद्, त्वं हि मत्पितृहट्टे याहि, तस्मान्मूल्येन
शाटिकामानय, ततस्तेन तत्र गत्वा तथैव सानीता, भार्यया प्रोक्तं न एषा मम योग्या, अन्यामानय, ततः पुनस्तेन तत्र गत्वा सा पश्चाद्
दत्ता अपराऽऽनीता, साप्ययोग्या उक्ता पश्चाद् दत्ता, तदा श्रेष्ठिना उक्तम्—तव पत्नी स्वयमागत्य सम्यक् परीक्ष्य विशिष्टशाटिकां

## अथ होलिकाव्याख्यानम् ॥ ६ ॥

**होलिका फाल्गुने मासे, द्विविधा द्रव्य–भावतः । तत्राद्या धर्महीनानां: द्वितीया धर्मिणां मता ॥ १ ॥**

लोके हि इदं पर्व होलिकेति वदन्ति, होलिका तु द्विविधा द्रव्यतो भावतश्च, तत्र येऽज्ञानिनः सदसद्विवेकविकलाः प्राकृतलोकप्रवाहवताः श्रीजिनधर्मविमुखा गतानुगतिकाः लोकास्ते काष्ठच्छगणादिना वह्निमयीं द्रव्यहोलिकां कुर्वन्ति, धर्मपर्व विराधयन्ति, अपरदिने च धूलिक्रीडनाऽवाच्यजल्पन–मलमूत्रजलाच्छोटन–स्त्र्यादिवस्त्राकर्षण–रासभारोपितनरपीडानादिकं कुर्वन्ति । सर्वमपीदमनर्थदण्डं विज्ञाय धार्मिकैः परिहर्तव्यम् । ये पुनः धर्मिणस्ते तपोरूपजाग्रद्वह्निना कर्मदलच्छगणभस्मीकरणरूपां भावहोलिकां कुर्वन्ति सद्ध्यानरूपिजलखेलनादिकं च कुर्वन्ति । ननु कुत इदं लौकिकं रजः पर्व प्रवृत्तमिति ? प्रश्नमाशंक्य सम्प्रदायगम्यं तत्कथानकमुच्यते–पूर्वदेशे जेतपुरं नाम नगरमस्ति, तत्र च जयवर्मा राजा, मदनसेना च तत्पट्टराज्ञी, अमात्यो मतिचन्द्रनामा । तत्रैव मनोरथनामा श्रेष्ठी, तस्य चत्वारः पुत्राः, तेषामुपरि अतीव रूपवती होलिकानाम्नी पुत्री, सा च पित्रा महोत्सवेन विवाहिता, परं कर्मवशाद् विधवा जाता, सा सदा पितृगृहे तिष्ठति, अन्यदा गवाक्षस्थिता सा बंगदेशस्वामिभुवनपालभूपस्य पुत्रं कामपालनामानं विलोक्य कामाकुला जाता, सोऽपि तां दृष्ट्वाऽत्यर्थं कामव्याप्तः संजातः, तदा श्रेष्ठी तां पुत्रीं गुप्तपीडापीडितां दृष्ट्वा विषादं प्राप्तः, इतश्च तत्र पुरे एका परिव्राजिका वसतिस्म, सा च द्विजकुलोत्पन्न–चंडरुद्रभाण्डस्य पुत्री, अचलभूतिनाम भरडकस्य पत्नी 'ढुंढा' इति नाम्ना विख्याता, कूटकपटकारिणी लोकानां भूतकर्मादिकं करोतिस्म, तथा सा क्षुधातुरा कृशांगी भिक्षार्थं दिने दिने गृहं गृहं प्रतिभ्रमतिस्म, पर लाभान्तरायवशात् क्वापि भिक्षां न लभते, ततः सा लोकेभ्यः कोपं चकार । अथ मनोरथश्रेष्ठिना सा सत्कृत्य याचिता, हे मातर्मम सुतां पट्वीं कुरु, ततो रहसि परिव्रा–

बभूव । ततः क्रमेण कर्माणि क्षपयन् द्वादशगुणस्थानान्त्यसमये घातिकर्मचतुष्टयं शुक्लध्यानेन क्षपयित्वा त्रयोदशगुणस्थानप्रथमसमये केवलज्ञानं प्राप्य बहून् भव्यान् प्रतिबोधयन् पृथिव्यां विजहार । ततः द्विसप्ततिपूर्वलक्षाणि सर्वायुः प्रपाल्य चतुर्दशे गुणस्थाने पंचहस्वाक्षरोच्चारणकालमाने योगनिरोधं कृत्वा शेषकर्मचतुष्टयं क्षपयित्वा मुक्तिं प्राप्तः । इह शरीरं त्यक्त्वा पूर्वप्रयोगबन्धनच्छेदादिना सिद्धशिलोपरि योजनान्ते सिद्धक्षेत्रे एकस्मिन् समये गत्वा साद्यनन्तस्थित्या स्थितवान् । इत्थं पिंगलरायतो मेरुत्रयोदश्या महिमा प्रवृत्तः । पूर्वं रत्नमया मेरवो ढौकिताः, पश्चात् कियत्कालं यावत् स्वर्णमयाः, ततः पश्चाद् रूप्यमयाः, अस्मिन् काले घृतमया मेरवः प्रवृत्ताः सन्ति, इत्थं मेरुत्रयोदश्याः महिमानं श्रुत्वा भो भव्याः ! शुद्धभावेन विधिना एतद् व्रतं कर्तव्यम्, येन इह परत्र च सर्वप्रकारसुखसंपत्तिः प्रादुर्भवेदिति ॥

सम्वद्व्योमरसाष्टेन्दु ( १८६० ) मिते फाल्गुनमासके ॥ असितैकादशीतिथ्यां बीकानेराख्यसत्पुरे ॥ १ ॥
व्याख्यानं प्राक्तनं वीक्ष्य निबद्धं लोकभाषया ॥ अलेखि संस्कृतीकृत्य क्षमाकल्याणपाठकैः ॥ २ ॥
संविग्नवाचनाचार्यपदस्थानं सुधीमताम् । श्रीयुक्तामृतधर्माणां शिष्यैरामोदतस्त्वदः ॥ ३ ॥ त्रिभिर्विशेषकम्,

॥ इति मेरुत्रयोदशीव्याख्यानं सम्पूर्णम् ॥ ५ ॥

रत्नमयं मेरुपञ्चकं श्रीजिनाग्रे ढौकनीयम्–मध्ये एको महान् मेरुः, चतुर्दिक्षु चत्वारो लघवः, तदग्रे चतुर्दिक्षु चत्वारो नन्द्यावर्ताः कर्तव्याः। दीपधूपादिपूर्वकं बहुविधाः पूजाः कर्तव्याः। एवं मासत्रयोदशकं यावत्, अथवा वर्षत्रयोदशकं यावत् कर्तव्यम्। तथा 'ॐ ह्रीँ श्रीऋषभदेवपारंगताय नमः' एतत् पदं द्विसहस्रप्रमाणं जपनीयम्, एवं प्रतिमासं कुर्वतः सकलरोगक्षयो भवति, इह परत्र च सुखं संपद्यते। यदि त्रयोदश्यां पौषधं कुर्यात् तर्हि प्रागुक्तं कर्तव्यं सर्वं पारणकदिने कृत्वा गुरुं प्रति अतिथिसंविभागं विधाय पारणकं कुर्यात्। इत्थं गुरुवचः श्रुत्वाऽनन्तवीर्यो राजा व्रतं अंगीकृत्य गुरून् नत्वा स्वस्थानं ययौ। अथ पिंगलरायकुमारः प्रथम–माघकृष्णत्रयोदश्यां प्रथमं व्रतं कृतवान् तावता चरणांकुरौ प्रादुर्भूतौ, एवं त्रयोदशमासान् यावत् कुर्वतः सुन्दररूपौ–पादौ प्रकटी–भूतौ। राजाऽतीव हर्षं प्राप्तः, धर्मस्य महिमानं विलोक्य उल्लसितः सन् विशेषतो धर्मं कर्तुं प्रवृत्तः। ततः षोडशवर्षे कुमारेण गुण–सुन्दरी परिणीता, अन्यासामपि बहूनां राजकन्यानां पाणिग्रहणं चक्रे। ततोऽनन्तवीर्येण राज्ञा कुमाराय राज्यं दत्त्वा गांगिलमुनिपार्श्वे चारित्रं गृहीत्वा निरतिचारं तत् प्रतिपाल्य श्रीशत्रुंजयेऽनशनं कृत्वा शिवपदं प्राप्तम्। ततः पिंगलरायनृपः मन्त्रीत्या प्रजां पालयन् पुनः—त्रयोदशवर्षाणि यावद् मेरुत्रयोदशीमाराध्य प्रान्ते उद्यापनं चकार। तत्र त्रयोदशजिनगृहाणि कारयामास, त्रयोदश स्वर्ण–मयीः प्रतिमाः, त्रयोदश रूप्यमयीः त्रयोदश रत्नमयीश्च निर्मापयामास। त्रयोदशविधैः रत्नैर्मेरुपञ्चकं निर्माप्य ढौकयामास। त्रयोदश–वारान् श्रीसंघेन सह तीर्थयात्रां चकार। त्रयोदशसाधर्मिकवात्सल्यान् कृतवान्, एवं बहुधा ज्ञानभक्तिमपि चकार। ततः कियन्ति पूर्वाणि व्रतसहितं राज्यं प्रपाल्य स्वकीय-महसेनकुमाराय राज्यं दत्त्वा श्रीसुव्रताचार्यसमीपे बहुभिरन्यपुरुषैः सह दीक्षां जग्राह। द्वादश–शांगीमधीत्य चतुर्दशपूर्वधरः संजातः, क्रमेण आचार्यपदं च संप्राप्तः, ततः क्षपकश्रेण्यारोहार्थमष्टमगुणस्थाने शुक्लध्यानं ध्यातुमुद्यतो

पुत्रमादाय उपरि गत्वा सूर्यकुंडजलेन पुत्रं स्नपयामास । परं तज्जलं देवताऽधिष्ठितमस्ति स्वयंप्रभस्य च न तत्कर्माद्यापि क्षीणं तेन तज्जलं पादौ न स्पृशति । तद् दृष्ट्वा सर्वेऽपि संघलोकाः विस्मिता जाताः, तदा सर्वैरपि मुनीश्वरः पृष्टः-स्वामिन् ! किमत्र कारणम् ? मुनिरुचे--अनेन बहुभवेभ्यः प्राग् देवद्रव्यं भक्षितमस्ति. तथा एकस्या मृग्याश्चत्वारोऽपि पादाश्छिन्नाः तत्कर्म बहु क्षीणं किंचिदद्यापि अवशिष्टं वर्तते, तेन तीर्थजलं न स्पृशति तीव्रकर्मणां भुक्तिं विना क्षयाभावात् । एतद् मुनिवचनं श्रुत्वा माता, पिता, पुत्रश्च त्रयोऽपि वैराग्यं प्राप्ताः, ततः श्रीऋषभदेवचरणान् अभिवन्द्य गृहमागत्य धर्मकरणोद्यता बभूवुः । इत्थं षोडशसहस्रवर्षाणि कुष्ठरोगादिपीडामनुभूय तत्कर्मालोच्य कालं कृत्वा प्रथमदेवलोके देवत्वेनोत्पन्नः, ततश्च्युत्वा हे राजन् ! अनन्तवीर्योऽयं तव पुत्रः पिंगलरायनामा संजातः । इत्थं गांगिलमुनिः कुमारस्य प्राग्भवमुक्त्वा पुनरुवाच—

मद्यपानाद् यथा जीवो, न जानाति हिताऽहिते ॥ धर्माधर्मौ न जानाति, तथा मिथ्यात्वमोहितः ॥१॥

मिथ्यात्वेनालीढचित्ता नितान्तं, तत्त्वातत्त्वं जानते नैव जीवाः ।

किं जात्यन्धाः कुत्र चिद्वस्तुजाते, रम्यारम्यव्यक्तिमासादयेयुः ? ॥२॥

अभव्याश्रितमिथ्यात्वेऽनाद्यनन्ता स्थितिर्भवेद् ॥ सा भव्याश्रितमिथ्यात्वेऽनादिसान्ता पुनर्मता ॥३॥

ईदृग्-मिथ्यात्वोदयाद् जीवाः कर्माणि बध्नन्ति, तत्पुत्रेणापीत्थमेव दुष्कर्मोपार्जितं तेन पङ्गुर्जातः । एतद् मुनिवचः श्रुत्वा राजा उवाच-हे स्वामिन् ! एतत् कर्म केन पुण्येन नश्यति ? मुनिना उक्तम्-हे राजन् ! तृतीयारकप्रान्ते सार्धाष्टमासयुक्तवर्षत्रये शेषे सति माघकृष्णत्रयोदश्यां श्रीऋषभदेवस्वामिनो निर्वाणकल्याणकमभूत्, तेन तद्दिनं श्रेष्ठमास्ते । तद्दिने चतुर्विधाहारत्यागेन उपवासं कृत्वा

एकदा प्रमोच्छ्वासाभरणानि गृहीत्वा कश्चित् अनाचारं सेवितवान्, तदा श्रेष्ठिना तत्स्वरूपं ज्ञात्वा गृहाद् बहिर्निष्कासितः। ततो वनमध्ये भ्रमन् आखेटकसंगेन बहून् मृग-शशकादीन् जन्तून् विनाशयन्नुदरपूर्तिं चकार। अथ तत्रैव वने तापसाश्रमो विद्यते तत्र बहवस्तापसास्तपस्यां कुर्वन्ति, मृगा अपि तत्राऽऽगत्य उपविशन्ति। एकदा एका सगर्भा मृगी तत्राऽऽगच्छन्ती तेन सामन्तसिंहेन तीक्ष्णशस्त्रेण पादेषु प्रहृता तस्याश्चत्वारोऽपि पादाश्छिन्नाः, सा अधः पतिता तापसैर्दृष्टा, ततस्तैः सद्यस्तत्राऽऽगत्य धर्मः श्रावितः सा मृत्वा सद्गतिं प्राप्ता। ततस्तापसाः सामन्तसिंहं प्रत्येवमुक्तवन्तः—रे दुष्ट ! यथा त्वयाऽस्माकं मृग्याः पादाश्छिन्नास्तथा त्वमपि परत्र पंगुत्वं प्राप्नुयाः। इत्थं शापं दत्त्वा ते स्वाश्रमं जग्मुः। सामन्तसिंहोऽपि तापसान् क्रुद्धान् दृष्ट्वा भीतः सन् नष्ट्वा वनं गतः, दुष्कर्मयोगात् संमुखं सिंहो मिलितः, सद्यस्तेन सिंहेन हतः, स मृत्वा नरकं गतः। ततश्च्युत्वाऽसंख्येयान् तिर्यङ्नरकादिभवान् कृत्वाऽकामनिर्जरया बहूनि कर्माणि क्षपयित्वा महाविदेहे कुसुमपुरनगरे विशालकीर्त्तिनृपस्य गृहे शिवानामदास्याः पुत्रत्वेनोत्पन्नः। तया वज्र इति स्थापितं नाम, क्रमेण तरुणो जातः। नृपसेवां करोतिस्म, परं प्राक्कृतकर्मोदयात् तच्छरीरे गलत्कुष्ठरोग उत्पन्नः। हस्तौ, पादौ च गलित्वा पतितौ पङ्गुर्जातः। अथ मरणसमये शिवादास्या नमस्कारमन्त्रः श्रावितः, ततः समाधिना मृत्वा व्यन्तरो जातः, ततश्च्युत्वा जम्बूद्वीपे भरतक्षेत्रे सौहार्दपुरनगरे सूरदासश्रेष्ठिगृहे वसन्ततिलकाभार्यायाः स्वयंप्रभो नाम पुत्रो जातः, । स च गुणवान्, विवेकवान्, परं चरणे व्रणरोगयुक्त एवोत्पन्नस्तेन चलितुं न शशाक। क्रमेण अष्टवर्षवया अभूत्, एकपुत्रत्वात् पितरौ तद्दुःखदुःखितावभूताम्। तस्मिन् समये श्रीशत्रुंजयतीर्थयात्रार्थं संघोऽगमद्, तदा तत् श्रुत्वा श्रेष्ठी अपि सरोगपुत्रसहितः संघमध्ये चचाल। क्रमेण सिद्धक्षेत्रे संघः समागतः, ततो विधिना गिरिमारुह्य श्रीऋषभदेवभक्तिं चकार, तदा सूरदासश्रेष्ठी अपि सभार्यः

तथा धर्मस्य मूलं दया, पापस्य मूलं हिंसा, एको हिंसां करोति, अन्यः कारयति, अपरोऽनुमन्यते एते त्रयोऽपि सदृशपापभाजः, पुनर्यो हिंसां कुर्वन् मनसि श्रामं न प्राप्नोति तस्य हृदये दया नास्ति, यो जीवो निर्दयः सन् बहून् एकेन्द्रियान् विनाशयति स परभवे वातपित्तादिरोगभाग् भवति । यः पुनर्द्वीन्द्रियान् विनाशयति स परत्र मूकः, मुखरोगी दुर्गन्धनिःश्वासश्च भवति, यश्च त्रीन्द्रियाणां विनाशकः स नासिकारोगी भवेत् । चतुरिन्द्रियविनाशकस्तु अक्ष्णा काणः अन्धो वा, क्लिन्ननेत्रो वा भवेत् । यस्तु पचेन्द्रियविनाशकः स परत्र बधिरो भवति, यः पुनः पंचप्रकारानपि जीवान् विनाशयति स भवान्तरे पंचापीन्द्रियाणि पटूनि न प्राप्नोति, तस्मात् भो भव्याः ! हिंसाऽनृतादिकं सर्वथा त्याज्यमित्यादिधर्मोपदेशं श्रुत्वा राजा पप्रच्छ—स्वामिन् ! मत्पुत्रः केन कर्मणा पंगुर्जातः ? तदा गांगिलमुनिरुवाच—अस्य प्राग्भवं शृणु, अस्मिन् जम्बूद्वीपे ऐरवतक्षेत्रे अचलपुरनाम्नि नगरे महेन्द्रध्वजो नाम राजा, उमया पट्टराज्ञी तयोः सामन्तसिंहो नाम पुत्रोऽभूत् । स च लेखनशालायां पठनार्थं गच्छन् धूर्तसंगात् द्यूतं शिक्षितवान्, क्रमेण सप्तव्यसनसेवनतत्परोऽभूत् । राज्ञा बहुधा निषिद्धोऽपि यदा व्यसनसप्तकं न तत्याज, तदा अयोग्यं ज्ञात्वा स्वदेशाद् बहिर्निष्कासितवान् । ततोऽपि व्यसनमत्यजन् देशाटनं कुर्वन् सुरपुरनगरे समागतः, तत्र चम्पक श्रेष्ठिना सुन्दराकारं विलोक्य उत्तमपुरुषोऽयमिति ज्ञात्वा सुकुमारोयम्, अस्मात् कार्यान्तरं न भविष्यतीति च विचिन्त्य स्वगृहपार्श्ववर्तिजिनगृहरक्षार्थं स सामन्तसिंहः स्वगृहे स्थापितः । अथ स दुष्टात्मा जिनाग्रे ढौकितानि तन्दुलपूगीफलादीनि प्रच्छन्नं गृहीत्वा द्यूतक्रीडार्थं ययौ । कियद्भिर्दिनैः श्रेष्ठिना तद् ज्ञात्वा तस्मै उक्तम्—हे भद्र ! यः पुमान् देवद्रव्यादिकं भुंक्ते सोऽनन्तकालं संसारपरिभ्रमणं करोति, तस्मात् त्वया अतः परमेतत् कार्यं न कर्तव्यम् । इत्थं बहुधोपदेशो दत्तस्तथापि स दुष्टो मिथ्यात्वाज्ञानतीव्रकर्मोदयात् न ततोऽपि विरमतिस्म ।

कुमारः सत्वरं प्रेषणीयः, इति श्रुत्वा राजा उद्विग्नचित्तः संजातः, ततः सद्य उत्थाय स्वमन्दिरे एकान्तदेशे गत्वा राज्याः, प्रधानस्य चाग्रे इत्थमुवाच—अथ किं कर्तव्यम् ? पुत्रस्तु पंगुर्वर्तते एतस्य कथं भविष्यति ? पंगवे कः स्वकन्यां प्रदास्यति ? तदा प्रधानमंत्री किंचिद् विचार्य तान् सेवकान् आहूय इत्युवाच—साम्प्रतमिह कुमारो नास्ति तन्मातुलगृहे वर्तते । मातुलगृहं तु इतो द्विशतयोजनेषु मुहनीपत्तने समस्ति तेन सांप्रतं लग्नं न भवेत्, पश्चाद् ज्ञास्यते । एतत् श्रुत्वा सेवकाः प्रोचुः—हे स्वामिन् ! पन्था दूरे वर्तते, अतो लग्नं निर्धार्य देयं, स्वयमपि लग्नोपरि शीघ्रं समागन्तव्यम् । एतत् सेवकवचनं श्रुत्वा मासषोडशकानन्तरं लग्नं भविष्यति, इति निर्धारितम् । ततो लग्नं गृहीत्वा सेवका मलयदेशं गताः । अथ राजा अनन्तवीर्यश्चिन्तातुरः सन्नुवाच—अथाऽत्र क उपायः कर्तव्यः ? षोडशमासास्तु सत्वरमेव यास्यन्ति । तदा नृप-राज्ञी-प्रधानैर्बह्वी चिन्ता कृता परं कोऽप्युपायो न लब्धः । अस्मिन्नवसरे नगर्युद्याने साधुपंचशतीपरिवृतश्चतुर्ज्ञानधरो गांगिलनामा साधुः समवसृतः, वनपालकेन अतिपत्तिं कृत्वा नगरमध्ये गत्वाऽनन्तवीर्यराजाय वर्धापनिका दत्ता । राजा तन्मुखात् साध्वागमनं श्रुत्वा तं संतोष्य हस्त्यश्वादिबहुऋद्धिसमेतो वन्दनार्थं निस्सृतः । क्रमेण तत्र गत्वा विधिना मुनीन् अभिवन्द्याग्रे उपविष्टः, पर्षद् मीलिता, मुनिरुपदेशं ददौ । स च इत्थम्—

जीवदयाइ रमिज्जइ, इन्दियवग्गो दमिज्जइ सयावि ॥ सच्चं चेव वदिज्जइ, धम्मस्स रहस्सं इणमेव ॥१॥
जयणा उ धम्मजणणी, जयणा धम्मस्स पालिणी चेव ॥ तह बुड्ढिकरी जयणा, एगंतसुहावहा जयणा ॥२॥
आरंभे नत्थि दया, महिलासंगेण नासए बंभं ॥ संकाए सम्मत्तं, पवज्जा अत्थगहणेणं ॥३॥
जे बम्भचेरभट्ठा, पाए पाडंति बम्भयारीणं ॥ ते हुंति टुंटमुंटा, बोहिवि पुण दुल्लहा तेसिं ॥४॥

कृतवान्। ततस्तमन्तःपुरे एव ररक्षतुः बहिर्न प्रकटी चक्रतुः। यदा पुनः लोकाः पप्रच्छुस्तदा एवमूचतुः-कुमारस्य रूपमत्यद्भुतं
वर्तते, मा कदाचिद् दृष्टिदोषो भवेद् इति न प्रादुष्क्रियते। तदा सर्वस्मिन्नपि नगरे एषा प्रवृत्तिः प्रादुर्भूता। यदुत पिंगलरायकुमार-
तुल्यः पृथिव्यामपरः कोऽपि रूपसौन्दर्यवान् नास्तीति। अथैवं क्रमेण कुमारो वृद्धिं प्राप्तः। अस्मिन्नवसरे अयोध्यानगरीतः सपा-
दशत (१२५) योजनेषु मलयनामा देशोऽस्ति, तत्र ब्रह्मपुरं नाम नगरम्, तत्र च इक्ष्वाकुवंश्यः काश्यपगोत्रीयः शतरथो नाम
राजा तस्य च इन्दुमती नाम्नी पट्टराज्ञी। तत्कुक्षिसंभवा गुणसुन्दरी नाम पुत्री, सा चातिशयरूपलावण्यसौभाग्यादिगुणयु-
क्ताऽभूत्। तस्य राज्ञः पुत्रो नास्ति सैवैका पुत्री आसीद्, अतस्तेन मातापित्रोरतिवल्लभा आसीद्। अथ पुत्रीं वरयोग्यां ज्ञात्वा
तद्योग्यवरालाभाच्च राजा तद्विवाहचिन्तातुरो बभूव। तस्मिन्नवसरे तन्नगरवासिव्यापारिणः शकटेषु विविधानि क्रयाणकानि भृत्वा
देशान्तरं चलितास्तदा राज्ञा तेभ्य उक्तम्-देशान्तरे भ्रमद्भिर्भवद्भिर्गुणसुन्दरीयोग्यवरप्राप्तौ सत्यां विवाहसम्बन्धः कार्यः, इति नृप-
वचनं श्रुत्वा तथेति प्रतिपद्य ते चलिताः। क्रमेण बहूनि नगराणि विलोकयन्तोऽयोध्यां नगरीं प्राप्ताः, तत्र च क्रयाणकानि सर्वा-
ण्यपि विक्रीतानि भूयान् लाभः संजातः, अपराणि तत्रत्यानि क्रयाणकानि संगृहीतानि। यदा ते चलनार्थमुद्यता जातास्तदा स्व-
नृपवचनं संस्मृत्य तन्नगरवासिलोकानां मुखात् कुमारस्याद्भुतं रूपं श्रुत्वा नृपसमीपे गत्वा कुमारेण सह गुणसुन्दर्या विवाहसम्बन्धं
चक्रुः, राज्ञाऽपि शुल्क (कर) मोचनादिना तेषां बह्वादरश्चक्रे, ततस्ते हर्षिताः सन्तः स्वदेशं प्रति चेलुः, क्रमेण स्वनगरं गत्वा
राज्ञोऽग्रे सर्वं वृत्तान्तं कथयामासुः, राजापि कुमारस्याद्भुतरूपसौभाग्यादिगुणान् श्रुत्वा संतोषं प्राप्तः। अथ यदा कन्या वरयोग्या
जाता तदा कुमारस्य आकारणार्थं राज्ञा स्वसेवकाः प्रेषिताः, तेऽपि अयोध्यां गत्वा अनन्तवीर्यं नृपं प्रोचुः—हे महाराज! विवाहार्थं

## अथ मेरुत्रयोदशी व्याख्यानम् ॥ ५ ॥

मारुदेवं जिनं नत्वा, स्मृत्वा सद्गुरुभारतीम् । मेरुत्रयोदशीपर्व-व्याख्यानं लिख्यते मया ॥ १ ॥

इहाष्टमहाप्रातिहार्यविराजितेन जगद्गुरुणा श्रीवर्धमानस्वामिना श्रीगौतमादीनामग्रे यथा माघकृष्णत्रयोदश्या माहात्म्यमुक्तं, तथा-परंपरयाऽऽयातमस्माभिरुच्यते, श्रीऋषभदेवाऽजितनाथयोरन्तरे पञ्चाशल्लक्षकोटिसागरोपमानि व्यतिक्रान्तानि, तन्मध्ये अयोध्यायां नगर्यां इक्ष्वाकुवंश्यः काश्यपगोत्रीयोऽनन्तवीर्यो नाम राजा बभूव, स च बहुलहस्त्यश्वरथपदात्यादिसेनानायकः । तस्य च-राज्ञः पञ्चशतानि राज्य आसन् , तन्मध्ये प्रियमती नाम पट्टराज्ञी बभूव, धनजयो नाम चतुर्बुद्धिनिधिर्महामात्यश्च आसीत् । सुखेन राज्यं पालयतो राज्ञ एकदा मनसि महाचिन्ता समुत्पन्ना-यदुत्तमो ममैकोऽपि पुत्रो नास्ति, क एतद्राज्यस्य भोक्ता भविष्यति ? पुत्रं विना गृहं शून्यप्रायमिति । ततो राज्ञा अनेके उपायाः कृताः परं पुत्रोत्पत्तिर्न जाता । तस्मिन्नवसरे एकदा एकः कोणकनामा साधुराहारार्थं राज्ञो गृहे समागतः, तदा नृपराज्ञ्यौ उत्थाय विधिना वन्दित्वा शुद्धाहारेण प्रतिलाभ्य करद्वयं संयोज्य मुनिं पप्रच्छतुः-स्वामिन् ! अस्माकं पुत्रो नास्ति स कदापि भविष्यति न वा ? मुनिरुवाच-ज्योतिष्कनिमित्तादिकं मुनिर्न भाषते, तदा नृपराज्ञीभ्यां पुनः पुनः प्रार्थनायां कृतायां मनसि दयां धृत्वा मुनिना उक्तम्-हे राजन् ! तव पुत्रस्तु भावी परं पङ्गुर्भविष्यति, एतदुक्त्वा मुनिर्गतः, तदा भूपराज्ञीभ्यां चिन्तितम्-अस्माकं पङ्गुरपि पुत्रस्तु भावी । क्रमेण राज्ञी सगर्भा जाता, पूर्णे काले पंगुं पुत्रं प्रासूत । राजा पुत्रजन्मं श्रुत्वा हर्षितः सन् महोत्सवं चकार, द्वादशे दिवसे सर्वमपि कुटुम्बं भोजयित्वा कुमारस्य पिंगलराय इति नाम

विम्बानि कारितानि पश्चात् कतिपयदिने वैराग्यवासितः श्रेष्ठी गृहभारं सुन्दरनाम्नि ज्येष्ठे पुत्रे नियोज्य सर्वानाहूय कथयति-स्म-हे पुत्राः! यूयं दशमीदिने सप्तदशप्रकारेण वामेयमर्चित्वा व्याख्यानं श्रुत्वा गृहे समागत्य साधून् प्रतिलाभ्य एकासनेन भोजनं कृत्वा चतुर्विधाहारनियमो ग्राह्यः, पारणकदिने स्वामिवात्सल्यं कर्तव्यम्, एवं विधिना वयं सुखिनो जाताः, भवद्भिरपि एवं कर्तव्यम्, येन सुखिनो भविष्यन्ति। एवं पुत्राणां शिक्षां दत्वा गुरुपार्श्वे गत्वा एवं वदति-स्वामिन्! ममोपरि कृपां विधाय चारित्रं देहि येन स्वर्गाऽपवर्गौ प्राप्नोमि, तदा गुरुणा कथितं-यथा रुचिस्तथा कुरु। एवं श्रुत्वा गुरुणां पार्श्वे चारित्रं गृहीतम्। विविधानि षष्ठाष्टमादीनि तपांसि कुर्वाणो द्वादशवर्षप्रान्ते पञ्चदशदिनानि अनशनं विधाय अष्टादशदोषरहितः समाधिना मृत्वा दशमे देवलोके विंशतिसागरोपमायुर्देवत्वेनोत्पन्नः, अनुक्रमेण देवसुखं भुक्त्वा प्राणतकल्पात् च्युत्वा इहैव जम्बूद्वीपे महाविदेहे पुष्कलावतीविजये मंगलावत्यां नगर्यां सिंहसेनराजस्य गुणसुन्दरीभार्यायाः कुक्षिसरोवरे मरालवत् पुत्रो जयसेननाम्ना प्रकटिष्यति। तत्र संसारसुखं भुक्त्वा पश्चात् चारित्रं ग्रहीष्यति, एकादश अंगानि द्वादशोपांगानि पठिष्यति। एकाकी विहारं कुर्वन्नेकदा कायोत्सर्गे स्थास्यति, तत्रोपवनाधिष्ठायको देवो मिथ्यात्ववासितः तस्य श्रमणस्यैकविंशत्युपसर्गान् नकुल-वृश्चिक-पन्नग-गज-सिंह-व्याघ्र-पिशाच-राक्षस-खेचर-वेताल-प्रमुखान् करिष्यति। मुनिस्तु शमदमगुणेन, शुभध्यानेन चतस्रघातिकर्मणां क्षयं कृत्वा केवलं प्राप्स्यति। शीलवत्यपि चारित्रं गृहीत्वा प्रतिपाल्य देवलोकं गत्वा महाविदेहे सेत्स्यति, एवं श्रीवर्धमानस्वामिना गौतमाग्रे निरूपितम्, तद् हे भव्याः! इदं व्रतमवश्यं कर्तव्यं येन सुखं स्यात्। अस्य चारित्रस्य श्रवणमात्रेण इह भवे धनधान्यादिकं परभवे स्वर्गापवर्गसुखं जनः प्राप्नोति॥

इति श्रीपूर्वाचार्यहेमचन्द्रसूरिकृतसपादलक्षग्रन्थमध्यादिमं पौष-दशम्या-व्याख्यानं समाप्तम्॥ ४॥

श्रीणिदिनेषु एकभक्तकरणम्, भूमिशयनम्, ब्रह्मव्रतपालनम्, द्वयोः टंकयोरावश्यकम्, देववन्दनम्, जिनालये स्नात्रादिमहोत्सवविधानम्,

'ॐ ह्रीँ श्रीपार्श्वनाथाय अर्हते नमः' इति द्विसहस्रवारं गुणनीयं। पारणान्ते च स्वामिवात्सल्यं, एवं दिग्वर्ष (१०) यावद् विधिना कर्तव्यम्। एवमाराधनेनेहलोके धनधान्यसौभाग्यादिकम्, परलोके च स्वर्गसुखं, क्रमेण च मोक्षसुखं भविष्यति। एवं श्रुत्वा हर्षोत्कर्षप्रफुल्ललोचनः श्रेष्ठी जैनं धर्मं गृहीत्वा गुरुं वन्दित्वा स्वगृहं गतः, आचार्यश्चान्यत्र विहृतवान्। श्रेष्ठिना दशमी आराधितुमारब्धा, दशमासेषु गतेषु कालकूटद्वीपाद् पोताः समागताः तदनुचरमुखात् श्रुत्वा श्रेष्ठी न श्रद्दधौ, तदा तत्प्रियया शीलवत्योक्तम्-स्वामिन्! तत् सत्यमेव जानातु, माऽसत्यं मन्यताम्। यतोऽद्य निजगृहे निधानं प्रकटं भविष्यति तदा तु सत्यमित्युक्त्वा निधानस्थाने निधिदर्शनार्थं गतवन्तौ, तदा ताभ्यां निधानानि विलोकितानि। श्रेष्ठी स्वप्रियामुवाच-हे प्रिये! जैनशासन-प्रभावात् प्रवहणवर्धापिका समागता, एकादशस्वर्णकोटिमानो निधिरपि प्रादुर्भूतः। वामेयजिनप्रसादात्, श्रीगुरूणामुपदेशादहं श्रीमान् जातः। अथ जैनधर्मवासनया सुखेन कालो गच्छति, श्रेष्ठिपदमपि पुनः प्राप्तम्, श्रेष्ठिनो दशपुत्राः संजाताः राज्ञा संमान्य निजसमीपे स्थापितः। पुनरेकदा श्रीदेवेन्द्रसूरिर्विहरन् तत्रैवोपवने समवसृतः, तत् श्रुत्वा श्रेष्ठी वन्दनार्थं गतः वन्दित्वा यथास्थानं स्थितः, गुरुणा देशना दत्ता, देशनान्ते श्रेष्ठी पप्रच्छ-हे स्वामिन्! दशम्या उद्यापनं किं कर्तव्यम्? गुरुणा प्रोक्तम्-हे श्रेष्ठिन्! प्रष्टकानि दशपुस्तक-दशलेखनानि, दशपुस्तकबन्धनानि, दशस्थापनाचार्यासनानि (ठवणी), दश जपमालाः, दश चन्द्रोदयाः दशजिनालयानि दश जिनबिम्बानि, दीवि, आरति, एवं सर्वं दश-दशसंख्याकं कर्तव्यम्। एवं श्रुत्वा श्रेष्ठिनोद्यापनिकां कृत्वा प्रणिधानानि जिन-

संसारात्मा तथा जीवः, परमात्मा द्विधा मतः ॥ २ ॥
चेतना लक्षणश्चात्मा, सामान्येन बुधैः स्मृतः ॥ संसारात्मा तथा जीवः, परमात्मा द्विधा मतः ॥ ३ ॥
संसारात्मा सदा दुःखी, जन्म-मरण-शोकभाक् ॥ चतुरशीतिलक्षासु, योनिषु भ्राम्यते सदा ॥ ४ ॥
न सा जातिर्न सा योनिर्न तत् क्षेत्रं न तत् कुलम् ॥ यत्र कर्मवशादात्मा नोत्पन्नोऽयमनेकधा ॥ ५ ॥
एगया देवलोएसु, नरएसु वि एगया ॥ एगया असुरं कायं, जहा कम्मेहिं गच्छइ ॥ ६ ॥
एगया खत्तिओ होइ, तओ चण्डाल-वुक्कसो ॥ तओ कीड-पयंगो य, तओ कुन्थु-पीपिलिया ॥ ७ ॥
सुभगो दुर्भगः श्रीमान, रूपवान् रूपवर्जितः ॥ स एव सेवकः स्वामी, नरो नारी नपुंसकः ॥ ८ ॥
संसारी कर्मसम्बन्धात्, नटवत् परिभ्राम्यति । अनन्तकालपर्यन्तं, जीवः संसारवर्त्मनि ॥ ९ ॥
भव्यजीवे दयादानं, धर्मकल्पतरूपमम् । दानशीलतपोभवं, शाखा मुक्तिसुखं फलम् ॥ १० ॥
धर्मादेव कुले जन्म, धर्माद्धि विपुलं यशः ॥ धर्माद् धनं सुखं रूपं, धर्मः स्वर्गाऽपवर्गदः ॥ १ ॥
धर्म पंथ साधन विना, नर तिर्यंच समान ॥ १ ॥

दोहा—धर्म करत संसारसुख, धर्म करत निर्वाण । धर्म पंथ साधन विना, नर तिर्यंच समान ॥ १ ॥
धर्म प्रधान कहे सब कोई, अर्थ काम धर्म हित होई ॥ २ ॥
सुपुरुष तीन पदार्थ साधे, धर्म विशेष जानी आराधे । धर्म प्रधान कहे सब कोई, अर्थ काम धर्म हित होई ॥ २ ॥
इत्यादिधर्मकथां श्रुत्वा श्रेष्ठी जीवाऽजीवादि नवपदार्थयुक्त सम्यक्त्वरत्नं प्राप्तः, पुनः पप्रच्छ—हे भगवन् ! एवं किमपि तपस्याफलमुपदिश्यतां येन मम गृहे निधानं प्रकटयति । तदा मुनिना प्रोक्तम्—भोः श्रेष्ठिन् ! पौषकृष्णद-शम्यां व्रतं गृहाण, तद्दिने श्रीपार्श्वनाथस्य जन्मकल्याणकमासीत्, नवमीदिने, दशमीदिने, एकादशीदिने एवं

धनमर्जय काकुत्स्थ !, धनमूलमिदं जगत् । अन्तरं नैव पश्यामि, निर्धनस्य शवस्य च ॥ १ ॥

दुहा—बाप कहे मेरे पूत सपूता, बेन कहे मेरा भइया ॥ घर जोरू भी लेत बलैयां, सोई बडो जांकी गांठ रुपैया ॥ १ ॥

अथ श्रेष्ठी निर्धनत्वेन दुःखेन कालं गमयतिस्म । कतिपयदिने तस्य नगरे श्रीदेवेन्द्रसूरिः समवसृतः, तद्वर्धापनिका वनपालेन राज्ञे निवेदिता । राज्ञा वनपालो बहुद्रव्यदानेन तोषितो विसृष्टः, पश्चाद् राजा, श्रेष्ठिवर्गः, सुरेन्द्रश्रेष्ठी, सर्वनगरलोकश्च वन्दनार्थं निर्ययौ । मुनिसमीपे आगत्य मुनिं वन्दित्वा सर्वे यथास्थानं निषण्णाः, मुनिभिर्देशना प्रारब्धा—भो भव्याः ! संसारे सारं धर्मपदार्थः श्रेयान् । यतः—

धर्मतः सकलमंगलावलि-र्धर्मतः सकलसौख्यसंपदः ॥ धर्मतः स्फुरति निर्मलं यशो, धर्म एव तदहो ! विधीयताम् ॥१॥

विवेकः परमो धर्मो, विवेकः परमं तपः ॥ विवेकः परमं ज्ञानं, विवेको मुक्तिसाधनम् ॥ २ ॥

भक्ष्याऽभक्ष्यविचारः स्याद्, गम्यागम्यविभेदकृत् ॥ मार्गाऽमार्गपरिज्ञानं, गुणाऽगुणविचारणा ॥ ३ ॥

निद्राऽऽहारो रतिर्भीतिः, पशूनां च नृणां समम् । विवेकोऽन्तरमत्रास्ति, तं विना पशवः स्मृताः ॥ ४ ॥

एक उत्पद्यते जन्तुर्यात्येकश्च भवान्तरम् । एको दुःखी सुखी चैकस्तथैकः सिद्धिसौख्यभाक् ॥ ५ ॥

इत्यादिदेशनां श्रुत्वा पर्षद्याः स्वं स्वं स्थानं जग्मुः, तदा सूरश्रेष्ठी पप्रच्छ—हे भगवन् ! जीवस्य किं लक्षणम् ?

तदा मुनिनोक्तम्-हे श्रेष्ठिन् ! ज्ञान-दर्शन-चारित्रयुक्त-तपो-वीर्योपयोगवान् स जीवः यतः—

नाणं च दंसणं चेव, चरित्तं च तवो तहा ॥ वीरियं उवयोगो य, एयं जीवस्स लक्खणम् ॥ १ ॥

परलोके देवादिऋद्धिमनुभूय परम्परया निर्वाणं प्राप्नोति, एवं भगवता उक्ते श्रीगौतमस्वामी प्राह–हे भगवन् ! पुरा केनेयं समाराधिता ? तत् कथ्यताम् । भगवानुवाच–हे गौतम ! श्रीवामेयं मां चान्तरा सूरदत्तश्रेष्ठिना सम्यगाराधिता, तथाहि—जम्बूद्वीपे भरतक्षेत्रे सूरेन्द्र-पुरनाम नगरमस्ति, तत्र नरसिंहो नाम राजा राज्यं करोतिस्म, तस्य चतुरा गुणवती शीलालंकारयुता गुणसुन्दर्यभिधाना पट्टराज्ञी विराजतेस्म । तस्य नगरे सूरदत्तश्रेष्ठी परिवसतिस्म । तस्य शीलालंकारधारिणी पतिव्रता शीलवतीनाम्नी पत्नी आसीद् । यद्यपि धनदवद् महाधनाढ्यो यशस्वी च स श्रेष्ठी, परं मिथ्यात्ववासितः सांख्यमतावलम्बी त्रिदण्डिभक्तः शैवधर्माराधनतत्परः जैनधर्मं न जानाति, यतः—

न देवं नाऽदेवं न शुभगुरुमेवं न कुगुरुं ॥ न धर्मं नाऽधर्मं न गुणपरिणद्धं न विगुणम् ॥
न कृत्यं नाकृत्यं न हितमहितं नापि निपुणं ॥ विलोकन्ते लोका जिनवचनचक्षुर्विरहिताः ॥ १ ॥

स कदापि जिनवचनं न शृणोति मिथ्यात्वेन ग्रसितो राहुणा विधुवत् जीवशरीरमेकं मन्यते । परं राजमान्यो नगरे बहुमान्यः श्रेष्ठिपदे आसीद्, एवं काले याते एकदा सार्धं द्वयशतप्रमितानां प्रवहणानां चतुर्विधं क्रयाणकं भृत्वा भृत्यान् रत्नद्वीपे प्राहिणोद् । तत्र गत्वा क्रयविक्रयं कृत्वा पुनः नवीनं क्रयाणकं भृत्वा मध्यसमुद्रे आगतास्तावद् पूर्वकृतकर्मोदयेन उल्कापातप्रचण्डपवनवेगेन ते प्रवहणाः कालकूटद्वीपे गताः गृहे नागताः । पुनश्च श्रेष्ठिगृहे एकादशस्वर्णकोटिद्रव्यं भूमिगृहे स्थापितमासीद्, तत् पन्नगवृश्चिकांऽगारकरूपेण जातम् यानि च ग्रामान्तरात् पंचशतानि आगच्छन्ति शकटानि तेषामुपरि भिल्लधाटिः पतिता तान्यपि गतानि । ततश्च श्रेष्ठी निर्द्रव्यो जातः श्रेष्ठिपदं च गतं महादरिद्रश्च संजातः, ततो लोके सन्मानमपि गतम् । यतः—

॥ इति श्रीमौनेकादश्या माहात्म्यं [ व्याख्यानं ] सम्पूर्णम् ॥ ३ ॥

## अथ श्रीपौषदशमी व्याख्यानं प्रारभ्यते ॥ ४ ॥

प्रणम्य पार्श्वनाथांघ्रिपंकजं सर्वसौख्यदम् । समस्तमंगलश्रेणिलतापल्लवताऽम्बुदम् ॥ १ ॥
भव्यजीवप्रबोधार्थं, जन्तूनां च सुखाप्तये । पौषकृष्णदशम्याश्च, माहात्म्यं कथ्यतेऽधुना ॥ २ ॥

इह जम्बूद्वीपे भरतक्षेत्रे मगधजनपदे चम्पानाम्नी सुमनोहरा नगरी चाऽस्ति, तस्याः समीपे पूर्णभद्राख्ययक्षाश्रिते उपवने श्रीचरमतीर्थाधिपतिमहावीरस्वामी एकदा समवसृतः । तदुपदेशश्रवणार्थं वन्दनार्थं च श्रीमगधाधिपतिः समागतः । स च भगवन्तं त्रिःप्रदक्षिणीकृत्य यथास्थाने समुपविष्टः । तदा स्वामी संसारसागरनिमज्जतामुद्धारकारिणीं देशनां प्रारेभे—

जीवदया रक्खिज्जइ, इन्दियवग्गो दमिज्जइ सयावि । सच्चं चेव वदिज्जइ, धम्मस्स रहस्समिणमेव ॥ १ ॥

इत्यादिदेशनां श्रुत्वा केचिद् भद्रकतां प्राप्ताः केचिद् श्राद्धधर्मं केचिच्च साधुधर्ममंगीकृतवन्तः, तदानीं श्रीगौतमस्वामी श्रीवीरं वन्दित्वा पप्रच्छ—हे स्वामिन् ! पौषदशमीमाहात्म्यं कथ्यताम्, ? एवं श्रुत्वा, वर्धमानस्वामी कथयति-हे इन्द्रभूते ! पौषदशम्यां श्रीवामेयजिनजन्मकल्याणकं वर्तते, तद्दिने द्विसन्ध्यमावश्यकं कर्तव्यम् । देववन्दनां भूशयनं ब्रह्मचर्यपालन जिनालयेऽष्टविध-मष्टदशविधस्नात्रमहोत्सवादिकं त्रिविधाऽऽडम्बरेण जिनापूजां च विधाय गुरुसमीपे गत्वा उपदेशः श्रोतव्यः । पश्चाद् गृहं गत्वा एकासनेन भोजनं कृत्वा चतुर्विधाऽऽहारनियमो ग्राह्यः, नवम्यामेकादश्यां चापि एकवारमेव भोक्तव्यं, एतद्विधिना दश वर्षाणि यावत् क्रियमाणे साऽराधिता भवति । मनोवाक्कायेन त्रिकरणशुद्ध्या अस्या आराधक इह भवे धनधान्य-पुत्रकलत्रादिसौख्य प्राप्य

जानीते द्वे शते षष्ठे, अष्टामानां शतं तथा । चतुष्टयं चतुर्मास्या, एकं षाण्मासिकं तपः ॥ १ ॥

स मौनैकादशीतिथ्यास्तपस्तपन् विशेषतः । पाठको द्वादशांगीनां शुद्धां दीक्षामपालयत् ॥ २ ॥ इति

अथैकदा एकादश्यां मौनमास्थाय तपः कुर्वति सुव्रते तत्परीक्षार्थं कश्चिद् मिथ्यादृष्टि देवः कस्यचित् साधोः कर्णयोः महतीं वेदनामकारयत्, तस्य वेदना महति उपचारे कृतेऽपि न शाम्यति, तदा तेन देवेन साधुना पुरत उक्तम्—अस्य वेदना सुव्रतमुनेः भेषज्यात् क्षयं यास्यति, यदि स एव स्वस्थानाद् बहिरागत्य उपचारं करिष्यति इति, तत् श्रुत्वा ते साधवः तत्रागत्य उपचारार्थं सुव्रतमभ्यर्थयन्, सुव्रतोऽपि मौनी रात्रौ न स्वस्थानाद् बहिर्याति, ततः देवानुभावतः स वेदनार्तो मुनिः सुव्रतं मस्तके मारयति ततः सुव्रतस्यातीववेदना संभूता परन्तु स मुनिश्चिन्तयति—

अर्हन्तो भगवन्तो ये, साधवो गणधारिणः । इन्द्राश्चन्द्रा दिनेन्द्राश्च, नागेन्द्रा व्यन्तरेन्द्रकाः ॥ १ ॥

सचक्रवर्तिनो वासुदेवाः प्रतिनारायणाः । बलदेवा नराधीशा, मानवा अपरेऽपि च ॥ २ ॥

कर्मणा पापिनाऽनेन, ते सर्वेऽपि विडम्बिताः । कियन्मात्रो वराकोऽहं, पुरस्तात् तस्य कर्मणः ॥ ३ ॥

अरे जीव ! क्षमस्व त्वमुदितं कर्म तेऽस्ति यत् । तद् भोगेन विना नैव, प्रक्षीयेत कदाचन ॥ ४ ॥

लद्धं अलद्धं पुव्वं-जिणवयण सुभासिअं अमियभूयं । गहिउं सग्गइमग्गो-नाहं मरणाउ बीहेमि ॥ ५ ॥

तपस्तीव्रं घरट्टोऽयं, क्षमामर्करिकान्वितः । धृतिहस्तो मनःकीलः, कर्मधान्यानि चूर्णयेत् ॥६॥ इति

अथ विभंगज्ञानेन मुनिमक्षुभितं मत्वा देवः विशेषेणोपसर्गान् अकरोद्, मुनिस्तु क्षपकश्रेणिमारूढः केवलज्ञानं प्राप्तवान् भव्यान्

स्याच्च: इति इदानीं दीक्षां चेत् सुगुरुयोगतो गृह्णामि तदा वरम्, इति चिन्तयतस्तस्य प्रातःकालः सञ्जातः, उद्याने च तरणतारणसमर्थाः चतुर्ज्ञानधरा गुणसुन्दरसूरयः समागताः, तान् वन्दनार्थं सर्वोऽपि लोको गतः, निजतनूज-स्त्रीपरिवारेण संयुतः श्रेष्ठी अपि गतवान् यावत् वन्दित्वा सर्वे स्थिता तावद् गुरुभिः देशना प्रारब्धा-यो यतीनां केवलिप्रज्ञप्तः अहिंसालक्षणः सप्तदशविधः विनयमूलः क्षान्तिप्रधानः महाव्रतपुरस्सरो धर्मः तेन पवनवद् द्रुतं मोक्षं व्रजेत्, यस्तु द्वादशव्रतात्मकः श्रावकधर्मस्तेन तुरंगवेगवद् व्रजेत, इति अल्पकालेनैव सर्वदुःखान्तकरः साधुधर्मः द्रुतं मोक्षगमनाय सेव्यः । यदुक्तम्—

चारित्ररत्नान्न परं हि रत्नं, चारित्रवित्तान्न परं हि वित्तम् । चारित्रलाभान्न परो हि लाभश्चारित्रयोगान्न परो हि योगः ॥ १ ॥
दीक्षा गृहीता दिनमेकमेव, येनोग्रचित्तेन शिवं स याति । न तत् कदाचित्तदवश्यमेव, वैमानिकः स्यात् त्रिदशप्रधानः ॥ २ ॥

इत्यादि देशनां श्रुत्वा सुव्रतोऽब्रवीत्—हे तारक ! अहं संसारकान्तारादुद्विग्नोऽस्मि इति गृहभारं पुत्रे समारोप्य श्रीमतां समीपे दीक्षां ग्रहीष्यामि, इति श्रुत्वा गुरुः उवाच—यथासुखं प्रवर्तस्व प्रतिबन्धं मा विधेहि । ततः श्रेष्ठी गृहं गत्वा कुटुम्बं भोजयित्वा स्वजनपुत्राणामग्रे दीक्षाऽऽदेशममार्गयत् । तैरनुमतः सुव्रतः एकादशभिः स्त्रीभिः सह प्रवव्राज । शीघ्रमेव तपोविशेषात् कायबलं क्षयीकृत्य मासिकेनाऽनशनेन तस्य एकादशपत्न्योऽपि केवलं प्राप्य शिवं गताः । अथ सुव्रतः मुनिर्ग्रहणासेवनाशिक्षां पठित्वा साधुधर्मं चरति । यदुक्तम्—

जयं चरे जयं चिट्ठे, जयमासे जयं सुए । जयं भुंजंतो भासंतो, पावकम्मं न बंधई ॥ १ ॥

एवं पवित्रं चारित्रं पालयामास तथा विशेषतः षष्ठाष्टमादितपः कृतवान् तस्य संख्या लिख्यते—

बहुप्राभृतपूर्वं सुव्रतः पादयोर्लग्नः, राज्ञाऽपि व्यतिकरः पृष्टः, सुव्रतेन कथितः वृत्तान्तः पुनः धर्मोपदेशं दत्त्वा राजा तोषितः, राज्ञा उक्तम्-वरं वृणु, तदा सुव्रतेन उक्तं-अवध्याश्चौरा इति । राज्ञा तथा स्वीकृते शासनदेव्या तलारक्षकाः चौराश्च मुक्ताः । श्रेष्ठिनाऽपि पारणकं कृतम् । पुनरपि एकदा दावानल इव समग्रं पुरं ज्वालनाय अग्निरुत्थितः, तदा नगरस्थः सर्वलोक इतस्ततः नष्टः किन्तु गृहीतपौषधः श्रेष्ठी स्वव्रतरक्षार्थं न कुत्रापि गतः, सर्वनगरमरण्यमिव ज्वलितं परन्तु सुव्रत श्रेष्ठिनो हट्ट-गृहादि किमपि न अज्वलत् । प्रातः काले समुद्रे द्वीप इव तस्य हट्टगृहादि वीक्ष्य सर्वेऽपि पौराः सुव्रतं प्रशंसयामासुः, यथा--

सत्त्वेन धार्यते पृथ्वी, सत्त्वेन तपते रविः । सत्त्वेन वायवो वान्ति, सर्वं सत्त्वे प्रतिष्ठितम् ॥१॥

अहो धर्मस्य माहात्म्यमस्याहो दृढता व्रते । पालयेद् व्रतमेवं यो, द्विधाऽप्यस्य शिवं भवेत् ॥२॥

यतः-धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं ॥ धर्म्मेणैव भवंति निर्मलयशो विद्यार्थसंपत्तयः ॥

कांताराच्च महाभयाच्च सततं धर्मः परित्रायते ॥ धर्मः सम्यगुपासितो हि भवति स्वर्गाऽपवर्गप्रदः ॥३॥

अथ एकादशीव्रते पूर्णे जाते श्रेष्ठी उद्यापनाय मुक्ताफलानि रत्नानि शंखः प्रवालकानि स्वर्णानि कलधौतानि ताम्राणि पित्तलानि त्रपूणि कांस्यानि पट्टकुलानि, बहुविधानि धान्यानि पक्वान्नानि, नालिकेर-द्राक्षासहकारादीनां फलानि, स्वर्ण-रूप्यकानां पुष्पाणि अशोकादीनां पुष्पाणि, इत्यादीनि अनेकानि वस्तूनि एकादशसंख्यया जिनेन्द्राग्रे ढौकयामास । एवं विस्तारेण उद्यापनं कृत्वा संघ-पूजनं साधर्मिकवात्सल्यादीनि सप्तक्षेत्र्यां धनवपनं च विधाय मानुषं जन्म कृतार्थं कृतवान् । अथैकदा वृद्धावस्थायां रात्रौ मनसि श्रेष्ठी चिन्तयति-मया जन्मपर्यन्तं श्रावकव्रतं पालितं मौनैकादशीतपोऽपि तदुद्यापनादिना पूर्णं कृतम्, अथ असारः संसारः पूर्वं पश्चाद् वा

विज्ञाय पुनरपि गुरुसमीपे आजन्म यावत् मौनैकादशीतपः उच्चचार। गुरुणा उक्तम्—एकादशांगानामाराधना कर्तव्या, सम्यक् तपः कार्यम्, पूर्वभवे एकादशीव्रतं कृत्वा निर्मलज्ञानमाप्तवान्, तदुद्यापनवशाच्च अत्र एकादशस्वर्णकोटयः प्राप्ताः, निर्मलं यशः, लोके प्रभुत्वम्, अधिकारित्वम्, नगरश्रेष्ठित्वम् च प्राप्तम्, अतएव तपसि उद्यमो विधेयः। एवमुक्त्वा धर्मलाभाशिषं दत्त्वा गुरवोऽन्यत्र विहृताः। अथ सुखेन सह कुटुम्बेन श्रेष्ठी एकादशीदिवसे प्रहराष्टकं आहारादित्यागरूपं पौषधं विदधाति। लोकेऽपि मौनैकादशीपर्वणः प्रसिद्धिर्मान्यता च जाता, यतः वृद्धमान्यं सर्वे मानयन्ति यथा महादेवेन भाले स्थापितत्वात् तत्कलामात्रमपि चन्द्रं द्वितीयादिने लोकाः पूजयंति एवं च अनेके लोका मौनैकादशीमाराधयन्ति। अथ एकदा सकुटुंबेन तेन श्रेष्ठिना मौनैकादशीतिथ्याम् अहोरात्रपौषधः कृतः पौषधग्राहिभिः सर्वैरपि रात्रौ कायोत्सर्गः कृतः। अथैकदा चौरैर्ज्ञातम् मौनैकादश्यां सुव्रतःश्रेष्ठी न ब्रूते अपह्रियमाणमपि वस्तु न पश्यति इति विचार्य चौरधाटी तद्गृहे प्रविष्टा उद्योतं (दीपकं) विधाय चौरा यावत् पश्यन्ति तावत् सर्वत्र पदे पदे स्वर्णराशिमेव पश्यन्ति, यावता गृण्हन्ति तावता शासनदेव्या सर्वे चौराः स्तम्भिताः, अतएव शासनदेवी पूज्यते कायोत्सर्गेणाऽऽराध्यते*। अथ प्रातःकाले स्तम्भितान् सायुधान् परद्रव्यहरणोतान् चौरान् दृष्ट्वा लोकाः मीलिताः। तलारक्षकाश्च तान् वेष्टयित्वा स्थिताः। अथ सकुटुम्बः सुव्रतः स्थापनाचार्यसमीपे पौषधं प्रपाल्य उपाश्रयं गत्वा गुरून् नत्वा धर्मं श्रुत्वा गृहे समागतः, तत्र चौरान् दृष्ट्वा मा राजा चौरान् मारयतु इति बुद्ध्या श्रेष्ठिना मौनं कृतम्, ततः तलारक्षका अपि शासनदेव्या स्तंभिताः, अथ मध्यान्हे समागतो राजा,

* तान् स्तम्भितान् प्रातः तलारक्षको दृष्ट्वा भूपालसमीपे निनाय, राज्ञा वधाय आदिष्टाः, प्रातः श्रेष्ठी पौषधं पारयित्वा प्राभृतं लात्वा राज्ञः पार्श्वे गत्वा सर्वान् अमोचयत् इत्याद्यपि समुपलभ्यते पाठः।

रूपलावण्यसंयुक्ता, नरा जात्यादिसंभवः। विद्याहीना न राजन्ते, ततोऽमुं पाठयाम्यहम् ॥१॥

इति चिन्तयित्वा महामहैः पितरौ उपाध्यायसमीपे द्वासप्ततिकलाभ्यासं कर्तुं मुमुचतुः। अनायासेन सकला अपि कला अल्पकाले एव पपाठ। षड्विधावश्यकसूत्रादिकं श्रावकाचारमपि पपाठ, प्राप्तयौवनस्य तस्य पिता—श्रीकान्ता, पद्मा, लक्ष्मीः पद्मलता, तारा, रम्भा, पद्मिनी, गौरी, गांगेया, रतिः, इतिनाम्न्योः महर्द्धिकव्यवहारिणां एकादशकन्याः पारिणायिताः, ताभिः रूपलावण्यशालिनीभिः सह भोगान् भुञ्जानः दोगुन्दकसुर इवाभवत्। तदनंतरं तस्मिन् गृहभारं समारोप्य स श्रेष्ठी प्रव्रज्यां गृहीत्वा सम्यक्प्रपाल्य प्रान्तेऽनशनं विधाय मृतः स्वर्गं च प्राप्तः। अथ गृहस्वामी सुव्रतः श्रेष्ठी पूर्वजन्मनि एकादशीमाराधितवान् तत एकादशस्वर्णकोटिनां नायको जातः। तथा एकादशस्वर्णकोटीश्वरो दाता भोक्ता नगरश्रेष्ठिसुवर्णपट्टालंकृतभालो राजमान्यः सत्यवादी सर्वत्र विश्रुतो अतिप्रतापी सज्जनश्रेष्ठः व्यापारिकशिरोरत्नं सुखेन कालं निनाय। अथ कालान्तरेण एकादशस्त्रीणामेकैकः पुत्रो जातः, एवमेकादश पुत्राः, तत्परिवारोऽपि विपुलो जातः, अथान्येद्युः उद्याने धर्मघोषो मुनीश्वरः सपरिवारः समवसृतः, राजादयः सुव्रतश्च वन्दितुं गताः गुरुणाऽपि तदानीं तपो महिमा व्याख्यातः—

यद् दूरं यद् दुराराध्यं, यच्च दूरे व्यवस्थितम्। तत् सर्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥ १ ॥

तत्रापि पचमीतपसा ज्ञानपञ्चकस्यावाप्तिः, अष्टमीतपसाऽष्टकर्मनिषूदनम्, एकादशीतपसा एकादशांगानां सुखागमनम्, चतुर्दशीतपसा चतुर्दशानां पूर्वाणामागमनम्, पौर्णमासीतपसा संपूर्णागमनं एवं श्रुत्वा सुव्रतो मूर्च्छामापन्नो जातिस्मृत्या पूर्वभवं मौनैकादशीतपोविधानं

धातकीखण्डे इषुकारपूर्वतात् पश्चिमे दिग्विभागे विजयं नाम पत्तनमस्ति, तत्र पृथ्वीपालो नाम राजाऽभूत्, तस्य च औदार्यचातुर्य-शीलादिगुणशालिनी चन्द्रवती नाम प्रिया, तत्र च व्यवहारिशिरोमणिः प्रबलव्यापारोपार्जितबहुधनः षड्विधावश्यकरतः सत्पुत्रयुतो जिनभक्तिकारकः सूरनामा श्रेष्ठी। स च वृद्धावस्थायामेकदा गुरुसमीपमागत्य भक्त्या प्रणम्य उवाच–भगवान्! ईदृग्विधं धर्मं कथय येन स्वल्पेनाऽपि कर्मक्षयः स्यात्, गुरुणा एकादशीव्रतमादिष्टम्, अथ स गुर्वाज्ञया गृहमागत्य एकादशवर्षैकादशमासपर्यंतं* यावत् तपश्चकार, समाप्ते च व्रते तेन विधिपूर्वमस्या उद्यापनमपि कृतम्, अथ उद्यापनदिवसात् पञ्चदशे दिवसे आकस्मिकेन उदरशूलेन मृत्वा एकादशे आरण्ये देवलोके एकविंशतिसागरपरिमितायुः देवो जातः। देवलोकसुखमनुभूय ततश्च्युत्वा सौर्यपुरे समृद्धिदत्तव्यवहारिक-गृहे प्रीतिमतीप्रियाकुक्षौ पुत्रत्वेनोत्पन्नः, तस्य नालस्थापनार्थं यदा गर्तं खनितुमारब्धं तदा गर्तखननस्थाने निधिर्निर्गतः, तद्वर्धा-पनिका सर्वत्र जाता, जाताऽऽह्लादः श्रेष्ठी महीयांसं जन्मोत्सवं दशदिवसपर्यन्तं कृतवान्। निवृत्तेऽशुचिकर्मणि प्राप्ते च द्वादशे दिवसे ज्ञातिबांधवान् भोजयित्वा गर्भस्थेऽस्मिन् मातुर्व्रतेच्छाऽभूदिति गुणनिष्पन्नं सुव्रत इति नाम कृतवान् पिता। न पुनर्मंगला-दिवन्निरर्थकम्। उक्तं च–

भौमं मंगल वृष्टिनाम करणे, भद्रा कणानां क्षये॥ वृद्धिः शीतलकाचतुष्टापिटके, राजारजः पर्वणि॥
मिष्टत्वं लवणे विषे मधुरता, दग्धे गृहे शीतलं॥ पात्रत्वं च पणाङ्गनासु गदितं नाम्ना परं नार्थकम्॥१॥

अथ पञ्चभिः धात्रीभिः लाल्यमानोऽसौ अवर्धत, अनुक्रमेणायम् अष्टवार्षिकः संजातः, तं पुत्रं वीक्ष्य तत्पित्रा चिंतितम्–

* स्वविष्ठं मौनैकादशीव्रतमेकाद शमासपर्यन्तं मौनेन कृतवान् इत्यापि पाठः।

दिवसयोरेकभक्तं (एकवारं भोजनम्) कर्त्तव्यम्, पारणकदिवसे जिनगृहे गन्तव्यम्, जिनस्याग्रे फलानि उपढौक्य भावतः जिनार्चा कर्तव्या, ततो गुरुसमीपे गत्वा नत्वा ज्ञानपूजां विधाय साधूनां संविभागं कृत्वा पारणा कर्त्तव्या, एकादशवर्षैकादशमासपर्यन्तं यावत् व्रतं कर्त्तव्यम्, द्वादशे वर्षे व्रते पूर्णे पौषधं पारयित्वा गुरूनभिवन्द्य जिनदेवस्याग्रे एकादश पक्वान्नानि एकादश फलानि एकादशविधानि धान्यानि एवं सुन्दरं वस्तु एकादशसंख्यया उपढौकनीयम्, जघन्यतोऽपि एकादशश्रावकवात्सल्यम्, संघपूजा, एकादशांगपुस्तकलेखनम्, इत्यादि उद्यापनं कर्त्तव्यम्—अत्र कथानकम्—

एकदा ग्रामानुग्रामं विहरन् सर्वज्ञो भगवान् नेमिनाथो द्वारिकायां समवासरत् तं वन्दनार्थं श्रीकृष्णः समागतवान्, वान्दित्वा कृष्णोऽवोचत्--स्वामिन् ! षष्ठ्यधिकशतत्रयदिनमध्ये एकं सारं वासरं कृपां कृत्वा मम निवेदय यमाराध्य दानशीलतपोव्रतशक्तिहीनोऽप्यहम् निस्तीर्णो भवामि. भगवान् उवाच-यद्येवं तर्हि त्वं मार्गशीर्षशुक्लैकादशीमाराधय यतः—

अपि मिथ्यादृशां मान्या, सा मौनैकादशी तिथिः। मार्गशीर्षाख्यमासस्य, शुक्लपक्षे प्रकीर्तिता ॥१॥
तत्र पुण्यं कृतं स्वल्पमपि प्रौढफलं भवेत्। तस्मादाराधनीया सा, विशेषेण विशारदैः ॥२॥
सर्वेभ्योऽपि च पर्वेभ्यः, पर्व पर्युषणाह्वयम्। दिनेभ्योऽप्यखिलेभ्योऽयं, तथा मुख्योऽस्ति वासरः ॥३॥
श्रमणैः श्रमणीभिश्च, श्रावकैः श्राविकादिभिः। धर्मकर्म विधातव्यमस्मिन् दिने विशेषतः ॥४॥

इति श्रुत्वा श्री कृष्ण उवाच-विभो ! पूर्वं केनाऽपि एकादशीव्रतमाचीर्णम् ? तस्य च कीदृशी फलप्राप्तिर्जाता ? स्वामी प्राह—

सन्मुखं गत्वा महताऽऽडम्बरेण श्रीयुगादिजिनबिम्बं रथे संस्थाप्य पूजास्नात्रमहोत्सवादिकरणेन महाकर्मराशिः दूरीक्रियते, महती पुण्यवृद्धिश्च भवति, तेनाऽस्मिन् पर्वदिने पूजापौषधादिकरणेन दिवसः सफलः क्रियते ।

त्रिमुनिश्चाष्टभूवर्षे, [१८७३] दुर्गे च जेसलाभिधे ॥ गणिना जयसारेण, व्यलेखि शिष्यहेतवे ॥१॥

इति श्रीकार्त्तिकपूर्णिमायाः व्याख्यानं सम्पूर्णम् ॥२॥

## अथ मौनैकादशी व्याख्यानम् ॥ ३ ॥

अरस्य प्रव्रज्या नमिजिनपतेर्ज्ञानमतुलं, तथा मल्लेर्जन्म व्रतमपमलं केवलमलम् ।
वलक्षैकादश्यां सहसि लसदुद्दाममहसि, क्षितौ कल्याणानां क्षिपतु विपदः पञ्चकमिदम् ॥१॥

अर्थः—अरस्य-अरजिनस्य प्रव्रज्या-दीक्षा, नमिजिनपतेः-नमिनाथस्य अलतुम्-अनुपमं ज्ञानम्, तथा मल्लेः-मल्लिजिनस्य जन्म, अपमलम्-मलरहितं व्रतम्--दीक्षा, अलम्--सर्वद्रव्यगुणपर्यायप्रेक्षणे समर्थम्, केवलम्-केवलज्ञानं च; लसदुद्दाममहसि तेजोवति, सहसि--मार्गशीर्षमासे वलक्ष्यैकादश्यां-शुक्लैकादश्यां सञ्जातं कल्याणानां इमं पञ्चकं क्षितौ विपदः क्षिपतु ।

यथाऽस्मिन् भरते कल्याणानां पञ्चकं सञ्जातमेवं पञ्चसु भरतेषु पञ्चसु च ऐरवतेषु--क्षेत्रेषु मीलित्वा जातं पञ्चाशत् (५०) कल्याणानाम् । एवं भूतभाविवर्त्तमानकालाऽपेक्षया जातं सार्धशतं (१५०) । एकोपवासेऽपि सार्धशतोपवासफलं भवति । अस्मिन् दिने उपवासं कृत्वा मौनमाधाय अहोरात्रं पौषधं विधाय स्थेयम्, भणनं गुणनं विना नाऽन्यत् किमपि वक्तव्यम् । पारणकोत्तर- 

श्रीसिद्धशैले शिवपुरं गतौ, पुनः नमिविनमिराज्ञोः द्विद्विकोटिपरिवारेण परिवृतौ फाल्गुनशुक्लदशम्यां नमिविनमी विद्याधरराजर्षी श्रीसिद्धशैले शिवपुरं गतौ, पुनः नमिविनमिराज्ञोः पुत्र्यश्चतुष्षष्टिः त्रिमलगिरौ चैत्रशुक्लचतुर्दश्यामनशनं कृत्वा शिवपुरीं प्राप्ताः, तेन शिवमन्दिरारोहणे सोपानसदृशो वाच्यः, पुनः पापमलपरिहरणे नीरवद् ज्ञेयः, तेन विमलगिरिरिति कथ्यते, पुनः पापारिगञ्जनेऽतीव शूरवद् ज्ञेयः। पुनर्येन नरभवं प्राप्य शत्रुञ्जये गत्वाऽऽदिजिनभक्तिपूर्वकं द्रव्यभावाऽर्चनं न कृतं तेन नरत्वं पशुरिव हारितम्, यस्तीर्थबुद्धया स्वहृदये संप्रधार्य श्रीशत्रुञ्जये गत्वा आदिजिनं नमति तस्य जीवितं सफलं स्यात्, स्तोककालमध्ये शिवसुखं प्राप्नोति। एवं गुरुमुखात् सिद्धगिरेर्महान्तं महिमानं श्रुत्वा सिद्धशैलपर्वतवन्दनार्थं पञ्चपञ्चकोटिमुनिपरिवारपरिवृतौ द्राविडवारिखिल्लौ वल्कलचीवरधारिणौ तापसौ स्वगुरोराज्ञां गृहीत्वा श्रीशत्रुञ्जयं प्रति चेलतुः, गुरुरपि अन्यत्र स्थाने विजहार। अथ द्राविडवारिखिल्लौ क्रमेण सपरिवारौ श्रीशत्रुञ्जयगिरौ आरोहणसमये एतादृशमवग्रहं जग्राह–यदाऽऽवयोः कर्मक्षयो भविष्यति तदाऽऽहारं ग्रहीष्यावः, एवं द्राविडवारिखिल्लौ चातुर्मासकालावग्रहमभिगृह्य श्रीशत्रुंजये चातुर्मास्यां तस्थतुः, भावतः साधुधर्ममंगीचक्रतुः, आत्मानं भावानुसारिणं प्रवर्तयन्तौ तपः तप्तवन्तौ, शुभध्यानयोगेन कर्मराशिदूरीकरणेन चातुर्मासीप्रान्तदिवसे प्रवर्तमाने कार्तिकशुक्लपौर्णमासीदिने क्षीणमोहेन त्रयोदशगुणस्थानकारोहणेन शुक्लध्यानेन ध्यायमानेन घनघातिचतुष्कर्मराशिक्षपणेन केवलज्ञानं केवलदर्शनं च तयोरुत्पन्नम्। चतुर्दशरज्जुलोकं दृष्टवन्तौ। बहुभव्यजीवान् प्रतिबोध्याऽऽयुष्कादिचतुष्कर्मराशिं क्षपयित्वा द्राविड–वारिखिल्लराजर्षी दशकोटिमुनिभिः सह मुक्तिपुरीं प्राप्तः, अचलाक्षयगतिं शिवं निरुपद्रवं पदं लब्धम्। तेन कार्तिकशुक्लपूर्णिमाऽतीवोत्तमा वर्तते, तस्माद् अद्य दिवसे श्रीशत्रुञ्जय-

कतुः, कन्दमूलाद्याहारं कुर्वन्तौ वल्कलचीवरं धारयतः, तपः करणेन कृशतनू जातौ । एवं बहुकालो गतः । अथास्मिन्नवसरे केचित् साधवस्तीर्थयात्राकरणार्थं मार्गे तत्रैव वने आगताः, द्राविडवारिखिल्लावपि तान् साधूनवलोक्य बह्वादरं दत्तवन्तौ, साधवोऽपि गमनागमनमालोच्य भूमिं प्रमार्ज्य तरोस्तले स्थिताः, द्राविडवारिखिल्लावपि मुखाग्रे उपविष्टौ, तस्मिन्नवसरे तरुशाखात एकश्चटको मुखाग्रे पतितः, तं चटकं स्तोकायुषं ज्ञात्वा मुनिना करुणां विचार्य नमस्कारः सुश्रावितः, विमलगिरेर्महिमा कथितः, तेन चटकेन मनसि धर्मोपदेशो दधे, तद्धर्मप्रभावात् प्रथमकल्पे देवो जातः, स देवः साधिकमुहूर्तान्तरे मुनीनां पार्श्वे आगत्य मुनीनां चरणानानम्य मुनीनामग्रे उपविष्टः, तस्मिन्नवसरे देवस्य महर्द्धि रूपं चावलोक्य द्राविडवारिखिल्लौ मुनिं प्रति पप्रच्छतुः, हे स्वामिन् ! अयमत्यन्तरूपकान्तिधारकः कः सुरोऽस्ति ? तदा मुनिराह अयं चटको मृत्वा एतत्स्थानात् सुर उत्पन्नोऽस्ति, नमस्कारश्रवणेन तीर्थराजशत्रुञ्जयोज्ज्वलभावधारणेन चास्मिन् समये तीर्थराजमानम्य अत्रागतोऽस्ति । एतद्गुरुमुखान्निशम्य तौ पुनः पप्रच्छतुः—हे स्वामिन् ! स विमलगिरिः कीदृशोऽस्ति, किञ्च तन्माहात्म्यमित्यावयोरुपरि कृपां कृत्वा सुश्रावय, तदा मुनिराह—अस्मिन् जम्बूद्वीपे दक्षिणार्धभरते श्रीशत्रुञ्जयगिरिरष्टोत्तरशतनाम्नाऽलंकृतं महातीर्थमस्ति, पुनः शत्रुञ्जयः १ पुण्डरीकः २ सिद्धगिरिः ३ विमलगिरिः ४ सुरगिरिः ५ इत्यादिभिः एकविंशतिनामभिः लोके प्रसिद्धोऽस्ति, एष गिरिर्नामनिक्षेपेण निश्चलोऽस्ति, अनन्तकालापेक्षया सिद्धशैलोपरि अनन्ता मुनयो मुक्तिं गताः, पूर्वमपि सम्प्रति नाम्नश्चतुर्विंशतितमजिनस्य प्रथमगणधरः कादम्बगिरिनामा मुक्तिं गतः, इहैव वर्तमानकाले प्रथमजिनस्य प्रथमगणधरः पुण्डरीकनामा चैत्रशुक्लपूर्णिमायां पञ्चकोटिमुनिभिः सह श्रीशत्रुञ्जये शिवपुरीं गतः । तेन पुण्डरीकगिरिरिति कथ्यते, पुनः

न्यमादाय सन्मुखं चचाल स्वस्वदेशसीमां च रुरोध। क्रमेणोभयभ्रातृबहुसेनासमुदायेन द्वादशवर्षं यावत् महायुद्धकरणे बहवो गजा अश्वा-
मनुजा भूमौ पतिताः, रुधिरसरितः प्रचलिताः, एतादृशः संग्रामो जायते, तस्मिन् समये द्राविडराजा वनक्रीडाकरणार्थं वने जगाम, तद्
वनमनेकाम्रनिम्बकदम्बादिगुल्मलतापत्रपुष्पफलवनद्धर्या विभ्राजमानं सरोनिर्झरणैः शोभितमेतादृशं वनं द्राविडराजा पश्यति, तस्मि-
न्नेव वनमध्यभागे तापसगणास्तपः कुर्वन्ति, ते परिव्राजका राज्ञा ददृशिरे। अश्वादुत्तीर्य तत्र पार्श्वे गत्वाऽभिवन्द्य स्वोचितस्थाने
तस्थौ। तस्मिन्नवसरे एकेन तापसेन धर्मोपदेशो दत्तः, तन्मध्ये संसारासारताऽपि दर्शिता तदुक्तम्-

गयकन्नचंचलाए अपरिचित्ताए रायलच्छीए। जीवा सकम्मकलमलभरिय भारतो पडन्ति अहे ॥ १ ॥

इत्यादिधर्मोपदेशं श्रुत्वा संसारमसारं ज्ञात्वा क्रोधं त्यक्त्वा एवं मनसि चिन्तयति-अहो! मम जीवितं धिक्, एक एव मद्भ्राता तेन सहाहं युयुधे द्वादश वर्षाणि संजातानि, एतदनिष्टं कार्यं कृतं, स्तोकजीवनोपरि एतद् वैरं किं क्रियते? राज्यलोभाद् एतदनिष्टं कृतम्, एवं विचार्य द्राविडस्तापसाश्रमादुत्थाय स्वसहोदरापराधक्षामणार्थं वारिखिल्लसेनामध्ये आयाति तावद् वारिखिल्लो वृद्धभ्रातुरागमनवृत्तान्तं श्रुत्वा सन्मुखमागत्य चरणयोर्निरपतत्, स च द्राविडो बाष्पपूर्णनयनः स्नेहार्द्रहृदयस्तमुत्थाप्य इति जजल्प-हे भ्रातः! एतद् सर्वमपि राज्यं त्वं गृहाण अहं तापसीं दीक्षां ग्रहीष्यामि, तदा वारिखिल्ल इत्युवाच-अहमपि राज्यपदं न ग्रहीष्यामि, एतद्वचनपरस्परालापनां कृत्वा स्वस्वपुत्राभ्यामर्धार्धं राज्यं विभज्य दत्त्वा स्वस्वापत्यं स्वस्वस्थाने प्रेषितवन्तौ, तौ पुत्रावपि स्वं स्वं राज्यं बुभुजाते। अथ द्राविडवारिखिल्लावपि पञ्चपञ्चकोटिक्षत्रियपरिवारेण परिवृतौ तापसाश्रमे गत्वा तापसपार्श्वे तापसीं दीक्षां जगृहतुः, आतापनां च-

लक्षपूर्वाणि व्यतीतानि तदा स्वामी राज्यमोक्ता जातः क्रमेण त्रिषष्टिपूर्वलक्षवर्षं राज्यं प्रपाल्य दीक्षाऽवसरं ज्ञात्वा भरताय स्वमूलराज्य विनीता दत्ता बाहुबलाय तक्षशिला च प्रदत्ता, एवं क्रमेण शतपुत्रेभ्यो राज्यं वासयित्वा स्वस्वनाम्ना देशाः प्रदत्ताः । तन्मध्ये एको 'द्रविड' इत्यभिधानः, तस्य द्रविडदेशं कञ्चनपुरनगरं च वासयित्वा ददौ । स्वामी दीक्षां ललौ । क्रमेण कर्मक्षये केवलज्ञानमुत्पन्नम् । अथ भगवाननेककोटाकोटीदेवपरिवारेण परिवृतः साधुसाध्वीसमुदायेन सह देशेषु विहृत्य धर्मवृद्धिं चकार । अथ द्रविडराजाऽपि पितृदत्तं राज्यं बुभुजे, स्वनार्याभिः सार्धं विषयसुखमनुभवतस्तस्य क्रमेण द्वौ पुत्रौ बभूवतुः, बृहत्पुत्रो द्राविडः अपरो वारिखिल्लो लघिष्ठः, क्रमेण भोगसमर्थौ ज्ञात्वा उभयपुत्रौ प्रति भार्याः विवाहिताः । तावपि विषयसुखं बुभुजाते, तत्तद्भार्ययाऽपि पुत्राः प्रसूताः, तेऽपि चन्द्रकलेव वव्रुधिरे, एवं द्रविडराजा स्वराज्यं सुखेन प्रपालयति स्म । अथ तस्मिन्नवसरे भरतेन स्वाज्ञापालनार्थमष्टनवतिभ्रातृपार्श्वे दूतो मुमुचे, तदा द्रविडराजा दूतमुखात् सर्वं भरतस्य चक्रवर्तिपदस्वरूपं ज्ञात्वा एवं सर्वेऽपि संमील्य स्वस्वपुत्रं राज्यं ददौ, तदा द्रविडराजापि द्राविडबृहत्पुत्राय राज्यं प्रददौ । कनिष्ठाय वारिखिल्लाय च एकलक्षग्रामान् पृथग् ददौ, स्वयञ्च संसारवासनां परित्यज्य दीक्षां गृहीत्वा यथेच्छं पर्यटन् श्रीऋषभदेवजिनपार्श्वे तपस्तप्त्वा कैवल्यं प्राप । अथ द्राविडः पित्रा दत्तं स्वराज्यं वारिखिल्लोऽपि पितृदत्तस्वराज्यं लक्षग्रामान् प्रपालयति स्म । कानिचिद् वर्षाणि गतानि । तस्मिन्नवसरे द्राविडराजा स्वमनसि एवं चिन्तयति स्म, मत्पित्रा दीक्षावसरे मल्लघुभ्रातरं प्रति लक्षग्रामं दत्तं तद्भव्यं न कृतम्, मद्राज्यन्यूनता कृता, परमहमेतद्राज्यमुद्दाल्य ग्रहीष्यामि । एतद् विचिन्त्य स्वसैन्यं सम्मील्य युद्धार्थं चचाल । तदा वारिखिल्लोऽपि भ्रातुरागमनवृत्तान्तं श्रुत्वा स्वसै-

## अथ कार्तिकपूर्णिमायाः व्याख्यानम् ॥ २ ॥

श्रीसिद्धाचलतीर्थेशं, नत्वा श्रीऋषभं प्रभुम् । कार्तिकी पूर्णिमायाश्च, व्याख्यानं वक्ष्यते मया ॥ १ ॥
सिज्झो विज्जायरचक्की नमी विनमी मुणि पुंडरिओ मुर्णिदो । वाली पज्जुन्नसंबो भरहसुगमुनि सेलगो पंथगो य ।
रामो कोडी पंच दविडनरवई नारदो पण्डुपुत्ता । मुत्ता एवं अणेगे विमलगिरिमइं तित्थमेयं नमामि ॥ २ ॥

व्याख्या—भो भव्याः ! एतादृशं पापकर्ममलपरिहारकं श्रीविमलाचलतीर्थं मनोवाक्कायैर्नमामि, तद् विमलाचल तीर्थं कीदृशम् ? यद् यस्मिन् तीर्थोपरि विद्याधरः चक्री-भरतः-नमी-विनमी-शुक-शैलक-पंथक-रामचन्द्र-द्राविड—वारिखिल्ल-नवनारद-पाण्डव-पुण्डरीकाद्या अनशनं विधाय, अष्ट कर्मारीन् हत्वा मुक्तिं गताः, एतादृशं सिद्धशैलं तीर्थं मनोवाक्काययोगेन नमामि । पुनरस्मिन् कार्तिकपूर्णिमाऽऽगमने श्रीशत्रुञ्जयगिरिसन्मुखदिशं गत्वा चैत्यवन्दनकरणे महती धर्मवृद्धिर्भवति, पुनरस्मिन् कार्तिकपूर्णिमाया दिने श्रीसिद्धशैले द्राविड-वारिखिलौ आरोहणेन शिवपुरीं प्राप्तौ, तद् दृष्टान्तो यथा—

अस्मिन् जम्बूद्वीपे दक्षिणभरतार्द्धस्य मध्यखण्डे इक्ष्वाकुभूम्यामस्मिन्नवसर्पिण्यां पूर्वं सप्तमः कुलकरो नाभिनामा बभूव, तद्भार्या मरुदेवी, तस्या उदरकन्दरायां श्रीप्रथमतीर्थंकरश्रीऋषभजिनः उत्पन्नः स षट्पूर्वलक्षाणिकुमारपदे स्थितः तदनन्तरमिन्द्रेण सुनन्दा सुमङ्गला परिणायिते, स्वामिनः संसारव्यवहारो वर्तते स्म, क्रमेण भरतबाहुबल्याद्याः शतं पुत्राः द्वेपुत्र्यौ अभूवन्, यदा विंशतिल-

स्वयं-वर्ण्यते—तस्यास्तपः प्रभावात् सर्वेऽपि रोगा दूरं गताः, अद्भुतं रूपं जज्ञे, सा च जिनचन्द्रेण परिणीता, करमोचनवेलायां पित्रा बहुधनं दत्तम्, चिरकालं गृहसौख्यं भुक्त्वा यावज्जीवं पञ्चमीतपः कृत्वा प्रान्ते चारित्रमग्रहीत्, तौ गुणमञ्जरी-वरदत्तौ जिनोदितं चारित्रं प्रपाल्य कालं कृत्वा वैजयन्तविमाने सुरोत्तमौ जातौ । ततश्च्युत्वा वरदत्तजीवो महाविदेहे पुण्डरीकिण्यां नगर्याममरसेन राज्ञः स्त्री गुणावती, तस्याः पुत्रत्वेन समुत्पन्नः । शुभेऽन्हि तस्य शूरसेन इति पित्रा नाम कृतम् । क्रमेण यौवनं प्राप्तः कन्यकानां शतमुपयेमे, पित्रा स्वराज्ये स्थापितः । एकदा श्रीसीमन्धरस्वामी विहरन्तस्तत्र समागतः । अर्हदागमनं श्रुत्वा शूरसेनो वन्दनार्थमगमत् । भगवता धर्मदेशना प्रारब्धा, तत्र सौभाग्यपञ्चम्यास्तपसः फलं प्रकाशितम्, ततो राज्ञा पृष्टम्-भगवन् ! केनाऽपि तपसः फलं प्राप्तम् ? तदा भगवता वरदत्तनृपदृष्टान्तः कथितः, तत् श्रुत्वा जातजातिस्मृतिः सन् पूर्वभवं ददर्श, पुनः तद्व्रतं जग्राह, दशसहस्रवर्षं राज्ये स्थित्वा तीर्थंकरपार्श्वे संयममग्रहीत्, वर्षसहस्रं दीक्षां प्रपाल्य केवलज्ञानं प्राप्य मोक्षं प्राप । अथ गुणमञ्जरीजीवो सुखं भुक्त्वा रमणीयाख्ये विजये शुभायां नगर्याममरसिंहाभिधनृपपत्न्या अमरावत्याः कुक्षौ पुत्रत्वेन समुत्पन्नः, समये जाते च पित्रा सुग्रीव इति नामस्थापनं कृतं, क्रमेण यौवनं प्राप्तो बहूनां कन्यानां पाणिग्रहणं च चकार, विंशतितमे वर्षे पित्रा राज्यं दत्वा स्वयं दीक्षा गृहीता, सुग्रीवो राजा बहूनि वर्षाणि राज्यं प्रपाल्य अन्ते गुरुपार्श्वे दीक्षां गृहीत्वा पूर्वलक्षं चारित्रं प्रपाल्य केवलमुत्पाद्य मोक्षं जगाम ।

जायन्तेऽधिकसौख्यानि, पञ्चम्याराधनात् नृणाम् । इत्यस्या अभिधा जज्ञे, लोके सौभाग्यपञ्चमी ॥ १ ॥
एवं विभाव्य भो भव्याः ! पञ्चम्याराधनोद्यमः । भवभीतिविभेदाय, कार्यो युष्माभिरद्भुतः ॥ २ ॥

इति कार्तिकसौभाग्यपञ्चमीमाहात्म्यविषये वरदत्त-गुणमञ्जरी कथानकं सम्पूर्णम् ॥ १ ॥

पर्वकथा संग्रहः ॥ ६ ॥

हृदि चिंतयामास–कृतपुण्यो मम बृहद्भ्राता मूर्खत्वात् तस्मै प्रष्टुं कोऽपि न याति, स्वैरं भुङ्क्ते भाषते शेते च, अत एव मूर्खे बहवो
गुणाः सन्ति, यतः—

मूर्खत्वं हि सखे! ममापि रुचितं तस्मिन् यदष्टौ गुणाः। निश्चिन्तो बहु भोजनोऽ१ त्रपमना २ नक्तं दिवा शायकः।
कार्याऽकार्यविचारणान्धबधिरो मानापमाने समः। प्रायेणाऽऽ३ मयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥१॥

इति । अतः परं न कस्मै पदमात्रमपि कथयिष्यामि नवं पदं च न पाठयिष्यामि इति विचार्य शरीरे रोगाऽऽक्रान्तो द्वादश दिव-
सान् मौनेन निनाय । तत्पातकमनालोच्य आर्तध्यानपरो मृत्वा, राजन्! तव सुतो जातः पूर्वोपार्जितेन कर्मणा अतीव मूर्खः कुष्ठादि-
रोगाऽऽक्रान्ततनुश्च बभूव । एतद् गुरोर्वचनं श्रुत्वा वरदत्तो जातिस्मृत्या निजपूर्वभवं दृष्ट्वा मूर्च्छां प्राप, क्षणान्तरे स्वस्थीभूय सर्वं
सत्यमिति गुरुं प्रति–उवाच। पुनरपि नृपो बभाण–भगवन्! स देहरोगः कथं कदा व्रजिष्यति ? । गुरुणा उक्तम्–कार्त्तिकशुक्लपञ्चमी
तपः आराध्या। पूर्वोक्तः सर्वोपि विधिः कथितः, प्रतिपन्नं कुमारेण पञ्चमीतपः, गुरुं प्रणम्य सर्वेऽपि स्वस्वस्थानं जग्मुः, अनन्तरं सम्यक् तत्तपः
कुर्वतो तपः प्रभावात् वरदत्तस्य सर्वेऽपि रोगाः क्षयं प्रापुः, स्वयंवरसमेतानां वरभूपोद्भवानां सहस्रकन्योत्तमानां स महोत्सवं पाणिग्रहणं
चकार। शिक्षिताशेषसत्कलाय वरदत्ताय राज्यं दत्त्वा नृपो गुरुसन्निधौ चारित्रमग्रहीत् । वरदत्तो राज्यं पालयन् वर्षे वर्षे महाभक्त्या
पञ्चम्या विधिं विदधे । अखण्डाऽऽज्ञो राज्यं प्रपाल्य भुक्तभोगः स्वसूनवे राज्यं दत्त्वा स्वयं दीक्षामग्रहीत् । अथ–गुणमञ्जर्यास्तपोवार्ता–

१ लज्जारहितमानस । २ रात्री । ३ रोग रहित ।

सौभाग्य पंचमी क्या०१ ॥ ६ ॥

धूपोत्क्षेपपूर्वकं पञ्चवर्णानि धान्यानि पञ्चपक्वान्नानि पञ्चफलानि च ढौक्यन्ते । ततो गुरोरग्रे गत्वा भक्त्याऽभिवन्द्य यथाविधि उपवासस्य प्रत्याख्यानं क्रियते । तस्मिन् दिने 'नमो नाणस्स' इति पदमेकसहस्रसंख्या * उत्तराभिमुखेन गुण्यते । चेत् पौषधः क्रियते तदा तद्दिने अयं विधिर्न भवेत् तस्मात् पारणकादिने विधिः कार्यः, यथाशक्ति उद्यापनादि अपि विधेयम् । ततो गुणमञ्जर्या तत् तपः प्रतिपन्नम् । अस्मिन्नवसरे राजा पृच्छति–हे साधुपुरन्दर ! मत्सूनोः वरदत्तस्य कुष्ठरोगः कथमभवत् ? पठनं च किं नाऽऽयाति ? तस्य किं कारणम् ? गुरुर्जगाद–अस्यापि पूर्वभवं शृणु—जम्बूद्वीपे भरतक्षेत्रे श्रीपुरं नाम नगरम्, तत्र वसुनामा श्रेष्ठी वसति स्म, तस्य वसुसार–वसुदेवौ पुत्रौ, तौ एकदा क्रीडार्थं वने जग्मतुः, तत्र वने मुनिसुन्दरनामानः सूरयो दृष्टाः वन्दिताश्च । गुरुभिर्धर्मदेशना प्रारब्धा—

यत्प्रातः संस्कृतं धान्यं, मध्याह्ने तद् विनश्यति ॥ तदीयरसनिष्पन्ने, काये का नाम सारता ॥ १ ॥

इत्यादिदेशनां श्रुत्वा तातमापृच्छ्य वैराग्यात् तौ व्रतं जगृहतुः । लघुना वसुदेवेन चारित्रं बिभ्रता सिद्धान्तसारः सर्वेऽपि अधीतः, गुरुणा वसुदेवाय सूरिपदं दत्तम्, स च पंचशतसाधुभ्यो वाचनां ददाति । एकदा वसुदेवसूरीश्वरो रुजाऽऽक्रान्तः संस्तारके सुप्तः तं कोऽपिसाधुरागमार्थं पृच्छति, गुरुर्व्याख्यायति, तस्मिन् गते द्वितीयो मुनिः समागतः तस्मै वाचना दत्ता, एवं भूयस्तु समागत्य समागत्य गतेषु किञ्चिन्निद्रायमाणः केनाऽपि साधुना पृष्टो भगवन् ! अग्रेतनं पदं वाच्यं पदस्यार्थोऽपि वाच्यः । तदा सूरिः कुविकल्पान्

* अष्टोत्तरैकसहस्रसंख्या इत्यापि क्वापि क्वापि उपलभ्यते पाठः, तत्त्वतस्तु अयमेव श्रेयान् प्रतिभाति । क्वापि च द्विसहस्राष्टोत्तरशतमित्यपि ।

मूर्खा एव रक्षिताः, अतः कोऽपि कन्यां न ददाति, सा उवाच—तव पिता पापिष्ठः येनैवं मूढमतिना शिक्षितोऽसि यतः—

आः ! किं सुन्दरि ! सुन्दरं न कुरुषे ?, किं नो करोषि स्वयं ?, आः ! पापे ! प्रतिजल्पसि प्रतिपदं ?, पापस्त्वदीयः पिता।
धिक् त्वां क्रोधमुखीमलीकमुखरीं त्वत्तोऽपि कः कोपनो, दम्पत्योरिति नित्यदंतकलहक्लेशार्तयोः किं सुखम् ? ॥१॥

एतद्वचनमाकर्ण्य रुष्टेन जिनदेवेन उपलेन सा शिरो मर्मणि जघ्ने। तदा सा मृता, सा च तव-पुत्री समजायत, अनया ज्ञानस्याऽऽशातना पूर्वभवे चक्रे, तेन रोगोत्पत्तिर्जज्ञे, यतः—

कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥ १ ॥

इति गुरोर्वचनं श्रुत्वा सा गुणमञ्जरी जातजातिस्मृत्या पूर्वभवं ददर्श। ततो गुरुं प्रति सा सत्यमिति प्रोवाच। श्रेष्ठिना गुरुः पृष्टः— भगवन् ! अस्या रोगाः कथं प्रयास्यन्ति ?। गुरुणाऽभाणि—श्रेष्ठिन् ! ज्ञानस्याऽऽराधनतः सर्वं सुखं सम्पद्यते दुःखं च विलयं याति। ज्ञानस्य आराधनमित्थम्—विधिना शुक्लपञ्चमीदिने उपवासो विधीयते, पुस्तिकां पट्टे संस्थाप्य पुरः स्वस्तिकः क्रियते, पञ्चवर्तिमयो दीपश्च क्रियते, पञ्चफलानि पञ्चवर्णकं च धान्यं ढौकयन्ते, पञ्चवर्षाणि पञ्चमासान् यावत् पञ्चमी अनया रीत्या मनोवाक्कायशुद्धया समाराधनीया। यदि मासे मासे कर्तुं न शक्यते तदा कार्तिकमासस्य शुक्लपञ्चमी यावज्जीवमाराधनीया। सा सम्यगाराधिता सर्वं सुखं दत्ते, इति गुरुवचनं श्रुत्वा जिनदेवोऽब्रवीत्—भगवन् ! मम तनयायास्तपस्या-शक्तिर्न विद्यते, अतः कार्तिकपञ्चम्या विधिरादिश्यताम् वाचंयमः प्रोचे—कार्तिकशुक्लपञ्चमीदिने पुस्तकं पट्टे संस्थाप्य सुगंधपुष्पैः संपूज्य

इत्यादिदेशना श्रुत्वा सिंहदासश्रेष्ठी मुनिं जगौ-भगवन् ! केन कर्मणा मम सुतातनौ रोगा जाताः ? । गुरुणा ऊचे-महाभाग ! कर्मणा किं न संभवेत ? । अत्र श्रेष्ठिन् ! अस्याः पूर्वभवः श्रूयताम्—धातकीखण्डमध्यस्थभरते खेटकनामनगरम्, तत्र जिनदेवनामा श्रेष्ठी, सुन्दरीनाम्नी च तस्य गेहिनी, तयोः पञ्च पुत्राः-आम्रपालः, तेजपालः, गुणपालः, धर्मपालः, धनसार इतिनामानोऽभुवन् । तथा-लीलावती, शीलावती, रङ्गावती, मंगावती, इतिनाम्न्यश्चतस्रश्च पुत्र्योऽभूवन् । अथैकदा जिनदेवेन पञ्चापि तनयाः पण्डित-समीपे विद्याकलाग्रहणार्थं स्थापिताः । ते च चापल्यं कुर्वन्ते परन्तु अध्ययनं न कुर्वन्ति, यदा पण्डितस्तान् कम्बया ताडयति तदा ते रुदन्तो गृहमागत्य मातुः समीपे दुःखं निवेदयन्ति, माता-उवाच-पठनेन किं प्रयोजनम् ? यतः-

पठितेनाऽपि मर्तव्यं, शठेनाऽपि तथैव च । उभयोर्मरणं दृष्ट्वा, कण्ठशोषं करोति कः ? ॥ १ ॥

पण्डितस्यापि उपालम्भं दत्ते ईर्ष्यया च पुस्तिकां प्रज्वालयामास । पुत्रान् वक्ति, पठनार्थं भवद्भिर्न गन्तव्यम् । श्रेष्ठी एतद्व्य-तिकरं ज्ञात्वा प्रोवाच—हे भद्रे ! जडेभ्यः पुत्रेभ्यः कः कन्याः प्रदास्यति ? कथं चैते व्यवसायं करिष्यन्ति ? यतः-

माता वैरी पिता शत्रुर्बालो येन न पाठितः । न शोभते सभामध्ये, हंसमध्ये बको यथा ॥ १ ॥

विद्वत्त्वं च नृपत्वं च, नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते ॥ २ ॥

इति श्रेष्ठिवचनं श्रुत्वा सा प्रोवाच-यूयं किं न पाठयथ ? अत्र मम को दोषः ? इत्युक्ते श्रेष्ठी हक्किकतः सन् मौनं चकार । अथ अनु-क्रमेण ते पंचापि तयोः पुत्राः यौवनं प्रापुः, परं न कोऽपि तेभ्यो कन्या दत्ते मूर्खत्वात्, ततः श्रेष्ठी स्त्रीं ति जगौ-पापिष्ठे ! त्वया पुत्रा

सोऽष्टवर्षप्रमाणः पित्रा बुधान्तिके विद्याग्रहणहेतवे स्थापितः । परमक्षरमात्रं तस्य
तयोः रूपलावण्यशोभनो वरदत्तनामा पुत्रो बभूव । मुखे न चटति, अध्यापकस्योद्यमो निष्फलोऽभूत् । स यौवनं प्राप्तः पूर्वकर्मोदयात् कुष्टेन विनष्टदेहत्वात् कुत्रापि रतिं न प्राप । इतश्च
तत्रैव पुरे सप्तकोटिसुवर्णाधीशो जिनधर्मरतः प्रसिद्धिभाक् सिंहदासो नाम श्रेष्ठी, तस्य गृहे गुणोचिता कर्पूरतिलका-नाम्नी भार्या,
तयोः पुत्री गुणमञ्जरी आजन्मतो रोगैरुपद्रुता वचनेन मूकतां प्राप्ता बभूव । विविधैरौषधैरपि तस्या रोगशान्तिर्न जायते न च यौवने
तां कोऽप्युद्वहति । तस्याः षोडशवार्षिक्या दुःखेन मातापित्रादिः सकलस्वजनो दुःखितः समजायत । तत्रैव पुरे एकदा श्रीविजयसेन-
सूरयश्चतुर्ज्ञानधरा गुरवः समाजग्मुः । तदा सर्वेऽपि नागरिकलोकः, सपुत्रो भूपतिः, सकुटुम्बः सिंहदासश्रेष्ठी सर्वे वन्दनार्थमुप-
गताः, गुरुणा च धर्मदेशना प्रारब्धा— भव्यैर्विधेयः सततं, निर्वाणपदमिच्छुभिः ॥ १ ॥

ज्ञानस्याराधने यत्नोऽध्ययनश्रवणादिभिः । नराः स्युः शून्यमनसो, विवेकपरिवर्जिताः ॥ २ ॥
विराधयन्ति ये ज्ञानं, मनसा ते भवान्तरे । मूकत्वमुखरोगित्वदोषास्तेषामसंशयम् ॥ ३ ॥
विराधयन्ति ये ज्ञानं, वचसापि हि दुर्धियः । दुष्टकुष्टादिरोगाः स्युस्तेषां देहे विगर्हिते ॥ ४ ॥
विराधयन्ति ये ज्ञानं, कायेनायत्नवर्तिना । कुर्वन्ते मूढमतयः, कारयन्ति परानपि ॥ ५ ॥
मनोवाक्काययोगैर्ये, ज्ञानस्याऽऽशातनां सदा । धनधान्यविनाशश्च तथाऽऽधिव्याधिसंभवः ॥ ६ ॥ युग्मम् ॥
तेषां परभवे पुत्रकलत्रसुहृदां क्षयः ।

ॐ श्रीपंचपरमेष्ठिभ्यो नमः ।

श्रीमत्क्षमाकल्याणकोपाध्यायादिविरचितः—

# श्रीसौभाग्यपंचम्यादि-पर्वकथा-संग्रहः ।

अथ ज्ञानपञ्चमीव्याख्यानम् ॥ १ ॥

श्रीमत्पार्श्वजिनाधीशं,सुराऽसुरनमस्कृतम् । प्रणम्य परया भक्त्या, सर्वाभीष्टार्थसाधकम् ॥ १ ॥
कार्तिकशुक्लपञ्चम्या, माहात्म्यं वर्ण्यते मया । भव्यानामुपकाराय, यथोक्तं पूर्वसूरिभिः ॥ २ ॥ युग्मम् ॥
भुवने हि परं ज्ञानं, ज्ञानं सर्वार्थसाधकम् । अनिष्टवस्तुविस्तारवारकं ज्ञानमीरितम् ॥ ३ ॥
ज्ञानादासाद्यते मुक्तिर्ज्ञानात् स्वर्गोद्भवं सुखम् ॥ लभन्ते प्राणिनो यस्मात्, तज्ज्ञानं स्वर्द्रुमोपमम् ॥ ४ ॥
भव्यैरासाद्यते ज्ञानं, पञ्चम्याराधनाद् ध्रुवम् । अतः प्रमादमुत्सृज्याऽऽराध्या सा विधिना तथा ॥ ५ ॥
मञ्जरीवरदत्ताभ्यां, यथैवाराधिता किल । पञ्चमी भावतोऽथात्र दृष्टान्तः प्रोच्यते तयोः ॥ ६ ॥ युग्मम् ॥

अस्त्यत्र जम्बूद्वीपे दक्षिणार्धभरतक्षेत्रे पद्मपुराभिधं नगरम्, तत्र भुवि विश्रुतोऽजितसेनो नृपो बभूव, तस्य च यशोमती पट्टराज्ञी,

## अनुक्रमणिका

श्रीसुमति साहित्य माला–१६

पाठकावतंसश्रीमत्क्षमाकल्याणोपाध्यायादिविरचितः

# श्रीसौभाग्य-पञ्चम्यादि-पर्वकथा-संग्रहः ।

संशोधकः—मुनि-विनयसागर साहित्यरत्न

प्रकाशकः—

श्री हिन्दी जैनागम प्रकाशक सुमति कार्यालय कोटा.

वीर सं० २४७५ ] मूल्यम् २॥) सार्द्धरौप्यकम् [ वि० सं० २००६